# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२९ ।

स्वकृताद्वैतात्मप्रबोधाख्यव्याख्यासंवलिता मोडकोपाह्व-
श्रीमदच्युतरायप्रणीता

# बोधैक्यसिद्धिः ।

तत्र समन्वयोत्सवाख्यः पूर्वार्धरूपः ( प्रथमो भागः )

एतत्पुस्तकं

वे. शा. सं. रा. शंकरशास्त्री मारुलकर, इत्येवैः संशोधितम् ।

तच्च

रावबहादुर इत्युपपदधारिभिः
' गंगाधर बापूराव काळे '

इत्येतैः

पुण्याख्यपत्तने

## श्रीमन् ' महादेव चिमणाजी आपटे '

इत्यभिधेयमहाभागप्रतिष्ठापिते

## आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८७२ ।

खिस्ताब्दाः १९५१ ।



मूल्यं रूप्यकषट्कम् ( ६-०-० ) ।

# प्रकाशकनिवेदनम् ।

अयि महाभागा आनन्दाश्रमसंस्कृतग्रन्थावलिप्रकाशितग्रन्थप्रणयिनः । उत्कण्ठतेतरां नश्चेतः, एकोनत्रिंशदुत्तरशततमं( क. १२९ )बोधैक्यसिद्धिनामानं सटीकं ग्रन्थं तत्रभवतां भवतां हस्ते सादरं समर्पयितुम् । सोऽयं ग्रन्थो जनस्थाननिवासिभिर्मोडकोपाह्वैरच्युतरायशर्मभिः पण्डितवरैः श्लोकरूपेण लिखित्वा तदुपरि तैरेव स्वयं टीकाऽपि विरचिता । आनन्दाश्रमस्थसंस्कृतपुस्तकसंग्रहालयसंगृहीतोऽप्ययमद्यावधि अमुद्रित एवाऽऽसीत् । अस्य प्रत्यन्तरं क्वापि नोपलभ्यते नापि श्रूयते । अथापि आनन्दाश्रमस्थप्रधानपण्डित—मारुलकरोपाह्वशंकरशास्त्रिभिर्महता परिश्रमेण सूक्ष्मेक्षिकया संशोध्य सुपरिशुद्धिं प्रापितोऽस्ति । तस्यायं पूर्वार्धरूपः प्रथमो भागः संप्रति संमुद्र्य प्रकाश्यते । उत्तरार्धरूपो द्वितीयो भागस्त्वचिरादेव प्राकाश्यं नीयेतेति विश्वसिमि । सटीकेयमद्वैतसिद्धिः शतात्संवत्सरेभ्यः प्रागच्युतरायैर्लिखितेति स्थूलमानतोऽवगम्यते । अद्वैतवेदान्तसिद्धान्तभूताः सर्वेऽर्था ब्रह्मसूत्रभाष्यादिषु प्राचीनपण्डितैर्विवृता अपि गभीरशास्त्रीयभाषासंदब्धत्वान्न तदध्ययनमन्तरा वाचकानां मनस्यनायासेनाऽऽरोहन्तीत्यालोच्य सुगमया काव्यात्मकसंस्कृतवाङ्मयभाषया लिखिता । तेन च मध्यमाधिकारिणां वाचकानां मनसि ते तेऽर्थाः स्फुटं बुद्ध्यारूढा भवेयुर्न तत्र कश्चित्प्रतिबन्धो भवेदिति तर्कयामि । अतो विज्ञाप्यन्ते ग्राहकमहाशयाः, यदानन्दाश्रमसंस्थायां पूर्ववत्प्रेमातिशयं धृत्वाऽन्यत्र क्वाप्युपलभ्यस्यास्य बोधैक्यसिद्धिग्रन्थरत्नस्य संग्रहेणैकवारमपि वाचनेन चाऽऽजिघ्रन्तु अद्वैतात्मप्रबोधामोदं सुखयन्तु च चिराय स्वात्मानमिति निवेदयति—

प्रकाशकः—

रावबहादुर—गङ्गाधर बापुराव काळे,

मॅनेजिंग ट्रस्टी—आनन्दाश्रम, पुणें,

॥ ॐ ॥

# प्रास्ताविकं किंचित् ।

पायादपायाज्जगदीश्वरो नः ।

सुप्रथितमेवैतद्भारतवर्षीयाणां तत्रभवतां विद्यैकप्रवणानां विपश्चिताम् । यत्सुप्रभाते महापातकनाशकत्वेन स्मर्यमाणा अहल्यादयः पञ्च कन्याः प्रसिद्धाः । तदुक्तं पुराणे—अहल्या द्रौपदी कुन्ती तारा मन्दोदरी तथा । पञ्च कन्याः स्मरेन्नित्यं महापातकनाशनम् ॥ इति । कुन्तीत्यत्र सीतेत्यपि पाठः श्रूयते । तद्वन्महाज्ञाननाशनार्थं पठ्यमाना अद्वैतसिद्धिः—नैष्कर्म्यसिद्धिः—आत्मैक्यसिद्धिः—स्वाराज्यसिद्धिः, इत्येवं चतस्र एव सिद्धिकन्याः कियन्तमपि कालं यावत्प्रथिता आसन्नो पञ्चमीति तामेतां न्यूनतां दूरीकर्तुमिव 'बोधैक्यसिद्धि' नाम्नी पञ्चमी कन्या अद्वैतवेदान्तक्षेत्रे समुद्गात् ।

बोधैक्यसिद्धिरूपा कन्या कान्तमन्वेषयन्ती अद्वैतात्मप्रबोधं वरं वव्रे इति ग्रन्थकृता स्वयमेव स्वकृतटीकायामुक्तं तद्यथा—कन्या बोधैक्यसिद्धिः समभवदतुलन्यायरत्नप्रभूषा श्रुत्यन्तेक्षाभिरामाऽनुपमरसवती कान्तमन्वेषयन्ती । अद्वैतात्मप्रबोधं वरमिममधुना चारु वव्रे प्रमोदादात्मक्रीडादिलब्ध्यै शुचिसितसुमनःस्रग्वराऽथाऽऽलिलिङ्ग ॥ इति । अत एव बोधैक्यसिद्धिः पञ्चमी कन्येति मयोक्तम् । न स्वेच्छया । अस्याः पञ्चमीत्वसिद्ध्यर्थं चतस्रः पूर्वोक्ताः सिद्धयोऽपि कन्यात्वेन निरूपिता इति ध्येयम् ।

बोधैक्यसिद्धिरिति नाम्नैवास्या अद्वैतवेदान्तविषयकत्वमवगम्यते । तथाहि—बोधो नाम ब्रह्मात्मैक्यविषयकसाक्षात्कारः । तस्य यदैक्यं स्वरूपफलाभ्यामैकरूप्यं तस्य सिद्धिः, तद्विषयकप्रमितिसंपत्तिर्यत्रेति तदर्थात् । सेयं पूर्वार्धोत्तरार्धरूपभागद्वयात्मिकैका । अत्र चत्वार उत्सवाः । तत्र पूर्वार्धे समन्वयाख्य एक एवोत्सवः । एतस्मिन्नाद्य उत्सवे श्रवणादिविधिमतैक्योपपत्तिरित्यादीनि चतुर्दश प्रकरणानि, संकलनेनैकसप्तत्युत्तरपञ्चशतानि च श्लोकाः । उत्तरार्धस्तु अविरोध—साधन—फलाख्योत्सवत्रयात्मकः । तत्राविरोधाख्य उत्सवे प्रत्यक्षविरोधपरिहार इत्यादीनि सप्त प्रकरणानि, मिलित्वा श्लोकाश्च पञ्चोत्तरं शतम् । साधनाख्य उत्सवे कर्मोपयोगविचार इत्यादीनि त्रीणि प्रकरणानि, संकलिता श्लोकानां संख्या च नवतिः । चतुर्थे फलोत्सवेऽविद्यालेशतोजीवन्मुक्तिरित्यादयोऽनेके वादा विवरीताः, श्लोकाश्च चतुस्त्रिंशत् । पूर्वार्धोत्तरार्धगतश्लोकानां संकलनेनाष्टशती संख्या संपद्यते ।

एवं ग्रन्थस्वरूपे श्रुते को वाऽस्य ग्रन्थस्य प्रणेता कं वा देशं वंशं वा स्वजनुषाऽलमकार्षीदित्यादिजिज्ञासा साहजिकतयैव प्रादुर्भवति। तदर्थं प्रयतमानोऽहं ग्रन्थकुल्लेखादेव यावदलप्सि तावल्लिखामि—गोदावरीतीरविराजमाननाशिकपञ्चवटीक्षेत्रनिवासिनो मोडकोपाभिधश्रीमदच्युतरायाः पण्डितवर्या अस्य ग्रन्थस्य प्रणेतारः। श्लोकात्मकस्यास्य ग्रन्थस्य पठितृणामनायासेनार्थबोधो भवत्विति लोकानुजिघृक्षया स्वयमेवैते पण्डितवर्याः स्वग्रन्थोपरि अद्वैतात्मप्रबोधाख्यां व्याख्यां व्यधासिषुः। पण्डितवर्याश्चैते वासिष्ठगोत्रोद्भवा हिरण्यकेशीयाश्चेत्यर्थादेवावगम्यते।

एतेषां पण्डितमूर्धन्याच्युतरायाणां हरहरिचतुराननावतारीभूतं गुरुत्रयमासीदिति तदीयलेखादवगम्यते। स च लेखो यथा—श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानन्देन्द्रसरस्वतीपादपद्म——श्रीमत्स्वरूपानन्दाख्याच्युताश्रमपादसरोज—श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणश्रीमत्षट्सुपनामकजनस्थानक्षेत्रगोदावरीतीरवसतिश्रीमन्नारायणशास्त्रिहरहरिचतुराननावतारीभूतसद्गुरुत्रयशिष्येणाच्युतशर्मणा विद्यार्थिनेत्यादिः। तत्र साठे इत्युपनामकनारायणशास्त्रिणां चतुराननावतारित्वेन रूपणाच्चतुःशास्त्राध्यापकत्वं सूचितम्। तथा चैते श्रीमन्नारायणशास्त्रिणोऽच्युतरायपण्डितानां चतुःशास्त्राध्यापकाः साक्षाद्गुरवः। हर्यवतारित्वेनोक्ताः स्वरूपानन्दाख्याच्युताश्रमाः पण्डितरायाणां परमगुरवः। हरावतारित्वेनोक्तास्तु सच्चिदानन्देन्द्रसरस्वत्यः परात्परगुरव इत्यनुमीयते। एतद्गुरुत्रयमध्ये परात्परगुरवः परमगुरवश्चेत्येतौ द्वौ गृहीतसंन्यासदीक्षावित्यवगम्यते। व्यावहारिकनामोपनामोल्लेखाभावपुरःसरं सच्चिदानन्देन्द्रसरस्वतीत्यादिचतुर्थाश्रमीयनामोल्लेखकरणात्। साक्षाद्गुरवस्तु गृहस्थाश्रमिण एव, न चतुर्थाश्रमदीक्षिता इति व्यावहारिकनामोपनामोट्टङ्कनादवसीयते।

एभिरच्युतरायपण्डितैः अद्वैतजलजातम्, अवैदिकधिक्कृतिः, अद्वैतविद्याविनोदः, एतत्प्रभृतयो बहवः स्वतन्त्रग्रन्थाः प्रणीतास्तथाऽन्यकृतग्रन्थोपरि व्याख्याश्च पुष्कला विरचिता इति श्रूयते। तत्र जीवन्मुक्तिविवेकटीका शंकरदिग्विजयकाव्यटीका पञ्चदशीटीका—'पूर्णानन्देन्दुकौमुदी, एतद्व्याख्यात्रयं मुद्रितं प्रत्यक्षमवलोकितं च। तत्र प्राथमिकं टीकाद्वयमस्यामेवाऽऽनन्दाश्रमसंस्थायां मुद्रितम्। सांप्रतं सटीका बोधैक्यसिद्धिः, आनन्दाश्रमसंस्थायां समुद्रय प्रकाश्यते। तत्र बोधैक्यसिद्धेः सटीकायाः पूर्वार्धः शाके १७५५ मिते विजयनाम्नि संवत्सरे वैशाखशुक्लदशम्यां मध्याह्नकाले समाप्तोऽभूदिति 'शाके बाणे

युवाजी( १७५५ )न्दुमितविजयनाम्न्यब्दे एवं प्रयत्नाद्विशाखीयाद्यपक्षस्थित-शशिदशमीद्विव्यमध्याह्नकाले, इति पूर्वार्धटीकासमाप्त्यवसरे ग्रन्थकृतैवोक्तत्वा-दवगम्यते । उत्तरार्धस्तु श. १७५६ मिते वत्सरे समापित इति तेनैव तत्रैवो-क्तम् । तद्यथा—शाके षट्पञ्चसप्तैक ( १७५६ ) मितजयसमाख्येऽब्दे एवाऽऽ-द्यमासे शुक्लद्वादश्यहर्पत्यहनि रविगुरुभौमद्यत्कन्युते । आद्ये लग्ने तृतीये तमसि शुचिरुचौ पञ्चमेऽर्के च षष्ठे भौमेऽप्येकादशेऽभूदियमतिसुभगा साधुबोधैक्य-सिद्धिः ' इति । तथा च सप्तदशोत्तरशताद्वत्सरेभ्य प्रागयं ग्रन्थो निरमाय्यच्यु-तरायपण्डितैरिति फलति । अच्युतरायाणां समाप्तिकालः श. १७६१ संव-त्सरे शुचौ मास इति तद्वंशीयेभ्यः श्रुतमिति पञ्चदशीटीकायाः पूर्णानन्देन्दु-कौमुद्याः प्रस्तावनायां प्रस्तावनालेखित्रोक्तं, तादृशार्थकमेकं त्रुटितं पद्यमपि तत्रोद्धृतं, तद्यथा——शाके चन्द्ररसर्षिभू( १७६१ )परिमिते ह्याषाढशुक्ले शुभे तारानायकवासरे शिवतिथौ सूर्ये स्वमध्यस्थिते । श्रीमदच्चिदनन्तनित्यविमला-नन्दप्रकाशात्मकः प्रत्यग्ब्रह्मसरस्वती स्वमगमद्रूपं ग......इति । एतेनाच्युतरायै-रपि चतुर्थाश्रमदीक्षा गृहीताऽऽसीदिति स्पष्टमेव सिध्यति । तत्र कियद्धायने वयसि वर्तमानैस्तैः संन्यासदीक्षाऽङ्गीकृतेति जिज्ञासायां बोधैक्यसिद्धिग्रन्थस-माप्तिकालः श. १७५६ मित' इति तैरेवोद्घोषितः । तत्र च मोडकोपनाम्नाऽ-च्युतशर्मणा विद्यार्थिनेत्येवं गृहस्थाश्रमयिनामोपनामोट्टङ्कनान्न तदानीं भगव-ल्लिङ्गधारणदीक्षाऽऽसीदिति निःसंदिग्धमनुमीयते । अर्थात्तदूर्ध्वं श. १७५६ वैशाखमारभ्य श. १७६१ ज्येष्ठपर्यन्ते तन्मध्यवर्तिन्यां पञ्चाब्द्यां यस्मिन्कस्मि-न्नपि वत्सरेऽच्युतरायैः संन्यासदीक्षा परिगृहीतेति स्थूलमानतः सिध्यतीति युक्त-मुत्पश्यामः । तदेवं महाविदुषा निर्मितस्यात एव प्रौढतामापन्नस्यास्य ग्रन्थस्य संशोधने प्रवृत्तस्य मम पदे पदे स्खलनानि संजातान्येवेति निश्चितम् । अथापि दयालुभिर्विद्वद्भिस्तानि क्षन्तव्यानि—'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः। हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ' इति न्यायादिति प्रार्थयते—

आनन्दाश्रमस्थः प्रधानपण्डितः—**मारुलकरोपाह्वः शंकरशास्त्री**—भारद्वाजः ।

मि. ज्ये. शु. १० शुक्रवासरः श. १८७३ ।

ॐ तत्सद्ब्रह्मणे नमः ।

स्वकृताद्वैतात्मप्रबोधाख्यव्याख्यासंवलिता

मोडकोपाह्वश्रीमदच्युतरायप्रणीता

# बोधैक्यसिद्धिः ।

## ( तत्र पूर्वार्धे प्रथमः परिच्छेदः ) ।

सत्यचिदानन्दाय द्वैतासितिभावभासशून्याय ।
ब्रह्मात्मानन्ताय श्रीमद्रघुवीरसुगुरुपदाय नमः ॥ १ ॥

कन्या बोधैक्यसिद्धिः समभवदतुलन्यायरत्नप्रभूषा
श्रुत्यन्वेक्षाभिरामाऽनुपमरसवती कान्तमन्वेषयन्ती ।
अद्वैतात्मप्रबोधं वरमिममधुना चारु वव्रे प्रमोदा-
दात्मक्रीडादिलब्ध्यै शुचिसितसुमनःस्रग्धराऽथाऽऽलिलिङ्ग ॥ २ ॥

नमामि नारायणशास्त्रिपादयोः परागराजिं निजमार्गसूचिकाम् ।
अद्वैतशास्त्रामृतवारिधौ यया तृप्तो मनोलिः समभूत्सदच्युतः ॥ ३ ॥

भाष्याब्ध्यद्वैतशास्त्रामृतनिधिमधुना श्रीगुरूणां प्रसादै-
र्निर्मथ्यैवाच्युतोऽयं सदमितममृतं यच्चिरादुद्दधार ।
अद्वैतात्मप्रबोधात्मकमिह विबुधास्तन्निपीयातितृप्ता-
स्तुच्छी कुर्वन्तु रम्भाधररुचिरसुधामाधुरीमप्यशुद्धाम् ॥ ४ ॥

इह यद्रमणीयतामुपेयात्स गुरोरव कृपालवो ममान्यत् ।
अमृतांशुगतं कलङ्कमार्याः किमु जल्पन्त्यमृतांशकं कदाऽपि ॥ ५ ॥

अथ मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते शास्त्राणि इत्यादिमहा-भाष्यस्मृत्यनुमितश्रुतिविहितं तप आलोचन इति धातुसूत्रसिद्धसंकोचकवैधुर्यप्रयुक्ताद्वैतब्रह्मात्मैक्यानुसंधानमात्रपर्यवसन्नालोचनवाचकतपःपदघटिततपःस्वाध्यायेत्यादिमहारामायणारम्भवाक्योच्चारकश्रीमद्वाल्मीक्यादिसकलशिष्टाचारसांप्रदायिकं चिकीर्षितप्रकरणरचनसंभावितप्रत्यूहीभूतनिरसनयोग्यतावच्छेदकावच्छिन्नयावद्दुरदृष्टविनष्ट्येकफलकं स्वाद्वैतानन्दस्वयंप्रभब्रह्मचिन्मात्रानुसंधानात्मकं मङ्गलं ग्रन्थकृदाचरन्नन्तेवास्यनुशास्यसंप्रदायसंसूचनार्थमर्थतोऽस्य सकलप्रेक्षावत्प्रवृत्तिप्रयोजकानुबन्धचतुष्टयवैशिष्ट्यध्वननार्थं ग्रथ्यमानरचनायाः सार्वांशिकमालिनीत्वं द्योतयितुं तदभिधवृत्तेनैव तद्ग्रन्थादावपि संग्रथ्नाति--

जडेत्यादि............॥ १ ॥

यत्र किमपि वस्तु जयति इत्येवान्वयः । किमपि निरुपमम् । तेन सादृश्योपल-

क्षितमाबद्धमेवैधुर्ये तत्र उच्यते । तर्हि किं कदाऽप्याऽऽकाशकवलनलक्षणो निरुपमः स्वप्नो दृष्टस्तथा निरुपमोऽयमैन्द्रजालिकस्य प्रासादनिगरणलक्षणो व्यापार इत्यादिव्यवहाराद्गौणमेव तत्प्रकृतेऽपि निरुपमत्वादिकमिति प्रत्याह—वस्त्विति । अबाधितं पारमार्थिकसत्यमिति यावत् । एतेन व्यावहारिकसत्यस्याऽऽकाशादेः प्रातिभासिकसत्यस्य शुक्तिरजतादेश्च व्युदासः सूचितः । अत एव जयति संपूर्णं स्वारोपितत्वेन बाधितं दृश्यं प्रति त्रैकालिकास्पर्शित्वलक्षणेन सर्वोत्कर्षेण वर्तत इत्यर्थः । एवेनेह यथोत्तरमुनिप्रामाण्यपरिभाषेष्टवार्तिककृत्संमताभासवाद एव वक्ष्यमाणाखिलाद्वैतमतप्रक्रियान्तर्भवनार्हत्वेन सकलैकस्वैकमत्यघटनपाटवादभीष्टतम इति स्पष्टीकृतः । तेन त्वत्तोऽहं सर्वात्मनाऽपहृत इति कायिकादिक्रियाव्यक्तयं निरतिशयप्रह्वीभावरूपनमस्क्रियात्मकसात्त्विकतममकृतप्रकरणार्हं मङ्गलमपि । ननु सन्घट इति प्रत्यक्षेण गृहीतसत्ताकस्य घटस्य पटादिसत्ताबाधकत्वं न क्वापि क्लृप्तम् । न च तत्र घटाद्युपहितसत्त्वस्य तथात्वेऽपि निर्धर्मकस्य तस्यातथात्वादित्युचितमेवोक्तबाधध्वननमिति वाच्यम् । तादृशसत्त्वे प्रमाणाभावात् । नापि श्रुतिस्तत्र मानं प्रत्यक्षोपजीविन्यास्तस्यास्तद्विरुद्धार्थबोधने पूर्वोत्तरमीमांसकाभ्यामप्यादित्यो यूप इत्यादौ भाक्तत्वस्यैवोररीकृतत्वेन प्रकृतेऽपि सत्यं ज्ञानमित्यादिरूपायास्तस्या भाक्तत्वस्यैव वक्तुमुचितत्वात् । सकललोकप्रत्यक्षप्रतिक्षेपापेक्षया त्यजेदेकं कुलस्यार्थे इति न्यायेन बह्वनुग्रहस्य न्याय्यतयैकस्याः श्रुतेरेवानादरार्हत्वाच्चेति चेन्न । प्रत्यक्षविरोधादेरग्रे निरसिष्यमाणत्वेन निर्धर्मकपारमार्थिकसत्यवस्तु[ नि ]समुदाहृतश्रुतेरेव प्रमाणत्वात् । प्रत्यक्षस्यापि सत्ताव्यतिरेकेण गगनप्रसूनायमानत्वेन तदेकोपजीव्यत्वाच्चेत्याशयेन तद्विशिनष्टि—जडेत्यादिना । जडत्वं प्रकाशविषयत्वम् । परिमितत्वं चतुर्विधान्यतमाभावप्रतियोगित्वम् । मिथ्यात्वं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् । अनात्मत्वं व्यभिचारित्वम् । दुःखत्वं निरुपचरितरत्यनास्पदत्वम् । एतानि यत्र न सहत इति । तथा तेजस्तिमिरन्यायेन जडाद्यात्मकसकलप्रपञ्चविरुद्धमित्यर्थः । तथा चाऽऽमनन्ति तैत्तिरीयकाथर्वणिककाण्वादयः क्रमात् । सत्यं ज्ञानमनन्तं ब्रह्म । आत्मा ब्रह्म । विज्ञानमानन्दं ब्रह्मेति च । एवं चाद्वैतस्वप्रकाशापरिच्छिन्नाबाधितप्रत्यगानन्दैकरसं ब्रह्मैवाद्वैतशास्त्रवृत्तप्रकरणस्यास्यापि विषय इति द्योतितम् । एतादृशस्य वस्तुनो यतः प्रत्यक्षाद्यगम्यत्वमत एव तत्र प्राक्प्रतिज्ञातश्रुतिमात्रप्रमाणकत्वेऽपि प्रयाजादिवदवान्तरतात्पर्यविषयत्वं व्युदसितुं पुनर्विशिनष्टि—श्रुतीत्यादिद्वितीयपादेन । श्रुतिः स्त्री वेद आम्नायस्त्रयीत्यमरान्निखिलवेदवाणीत्यर्थः । ननु श्रुतिलिङ्गादिपारदौर्बल्याधिकरणप्रसिद्धतदेकदेशविशेषः । तथात्वे निरपेक्षो रवः श्रुतिरिति वचनलक्षितस्य

मद्वैतं ब्रह्मेत्यर्थः पर्यवस्यति । तथा च श्रुतयः—माया च तमोरूपाऽनुभूतेस्तदेतं जडम् । यद्रूपं तन्मर्त्यम् । चित्रभित्तिरिव मिथ्यामनोरमम् । नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव नाल्पे सुखमस्तीत्याद्याः । एवं च सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिप्रागुदाहृतश्रुतिष्वयमेवार्थः संपद्यते । तथा चाऽऽहुर्भगवद्वार्तिककारचरणाः—सत्यादिलक्षणाज्ज्ञानोत्थाऽसत्याद्यर्थनिषेधधीवर्त्मनैवाऽऽप्तमाप्नोति केवलाज्ञानहानत इति तैत्तिरीयवार्तिके निरुक्तश्रुतिव्याख्यानावसर एव । अस्यायमर्थः—सत्यादिपदानां सत्यत्वानिरुक्ततत्पदीयलक्ष्यार्थभूताद्वैतब्रह्मविषयकं यदज्ञानं तस्मादुत्तिष्ठन्तीति तदुत्थाः, एतादृशा येऽसत्यादिरूपा अनृतजडपरिच्छिन्नाद्यात्मकाः सकलदृश्यरूपाविद्यातद्व्याप्यजीवेश्वरतद्भेदाविद्याचिद्योगतत्कार्याकाशाद्यखिलप्रपञ्चलक्षणा येऽर्था व्यावहारिकादयः पदार्थास्तेषां या निषेधविषयिणी धीर्द्वैतबाधबुद्धिस्तल्लक्षणं यद्वर्त्माद्वैतात्मप्राप्तिमार्गस्तेनैव नतूपासनादिना केवलाज्ञानहानतः शुद्धतत्त्वंपदार्थैक्यमात्रविषयकमूलाज्ञानमात्रोच्छेदद्वाराऽऽप्तं कण्ठचामीकरवत्प्राप्तमेवाधिकार्यौ(?)प्नोति प्राप्तमिव मनुत इति । शिष्टं तु पूर्वार्धे विवृतमेव । नन्वेवं यद्यखिलाम्नायतात्पर्यपरमावधिभूतं निरुक्तलक्षणमद्वैतात्मवस्तु तथा तदप्रतिबद्धाबाधितसाक्षात्कारैकायत्ताविद्यातदधीनद्वैतध्वंसोपलक्षितस्वस्वरूपपारमार्थिकसत्यस्वप्रकाशाखण्डानन्ताद्वैतानन्दात्मककैवल्यसिद्धिरपि चेत्तर्हि किमिति ब्रह्मचर्य एवाधिगतसाङ्गस्वाध्यायाध्ययनाः सर्वेऽपि न जीवन्मुक्ताः सन्तीत्याशङ्क्याधिकारिणः प्रमितिजनको वेद इति नियमाद्व्युत्पन्नस्य हि बुद्धिजन्म सहसावाक्यश्रुतौ दृश्यत इति संक्षेपशारीरकोक्तेश्च तदानीं तत्त्वप्रमोदयसंभवेऽपि विषयवासनाप्रमाणासंभावनाप्रमेयासंभावनासाधनविपरीतभावनाफलविपरीतभावनाभिधपञ्चविधवार्तमानिकादिप्रतिबन्धैर्लोके मणिमन्त्रादिभिर्वह्निवत्प्रतिबद्धा सत्यसावविद्यादिध्वंसलक्षणं कार्यं दाह्यदहनवत्कर्तुं नैव शक्नोतीत्यतः संत्यक्तसकलेष्टविषयतत्साधनत्वान्नित्यानित्यवस्तुविवेकादिवक्ष्यमाणसाधनचतुष्टयपरिपुष्टिविशिष्टः परमहंसपरिव्राजकशिष्ट एव तादृशश्रोत्रियब्रह्मनिष्ठमाचार्यमुपसृत्य विधिवद्वक्ष्यमाणचतुर्लक्षण्यभिधोत्तरमीमांसात्मकाद्वैतशास्त्रप्रस्थानत्रयादिश्रवणादिनिरस्तनिखिलप्रतिबन्धः सन्नुक्ताचार्योपदिष्टस्वशाखोपनिषन्महावाक्यादेव जायमानोक्तसाक्षात्कारादेवोक्तफलमनुभवतीत्यभिसंधाय पुनस्तद्विशिनष्टि—विकसितेत्यादिना । सुष्ट्वनन्तजन्मस्वन्तर्याम्येकार्पणबुद्ध्या समनुष्ठितकर्तृत्वाभिमानफलाभिसंधिशून्ययावत्काम्यनिषिद्धवर्जनपूर्वकस्ववर्णाश्रमादिविहितनित्यनैमित्तिकप्रायश्चित्ताख्यकर्मभिराभिभूतानिरुक्ततत्त्वज्ञानोदयप्रतिबन्धीभूतसंचितदुरितमूलकसकलरजस्तमःसंस्कारं मनोऽन्तःकरणं येषां ते तथा । अत एव विकसिता विशिष्टाधिकारगुर्वादिलाभेन परमहृष्टाः किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इत्यादिश्रुतिदर्शितकावषेयर्षिहर्षवद्धर्षेणैव त्यक्तलोकतोककन-

कावेषणा इत्यर्थः । ते च ते चेति पुनः कर्मधारयविग्रहः । तैरुक्तलक्षणमुमुक्षुभि-रिति यावत् । सेवितं परिशीलितं निरुक्तलक्षणगुरूपसदनपूर्वकं विधिवच्छ्रद्धादिनि-खिलसाधनैरुक्तरूपाद्वैतशास्त्रश्रवणमननादिष्वभ्यस्तमित्यर्थः । तथा च नैवोक्तशङ्काव-काश इत्याशयः । पक्षे धम्मिल्लसंगुम्फितसंफुल्लमल्लिकाभिः सुवासितमिति यावत् । यद्यपि नासाभरणादिभूषणस्यैतदसंभव एव तथाऽपि चूडामण्याख्यस्य तदौचित्यात्त-स्यापि नासाभरणादिवत् सौभाग्यसर्वस्वीभूतत्वेन सतीजीवितभूतत्वाच्छ्रुतिशिरःशब्दि-तोपनिषद्भागान्तर्गतमहावाक्यार्थभूताद्वैतब्रह्मात्मैक्योपमानार्हत्वस्य तत्रैव साकल्यपौ-ष्कल्याभ्यामत्युचितमेवेदमिति भावः । एतेनैतत्प्रकरणस्य विशिष्टाधिकारिणोऽनुबन्धोऽपि ध्वनितः । एवं चाद्वैतशास्त्रीयैकानुबन्धचतुष्टयवैशिष्ट्यात्प्रेक्षावच्छिष्टैरिदं प्रकरणमा-दरणीयमेवेति सिद्धम् । नन्वेवं प्रत्येकप्रतिबोध्यं ब्रह्मेति फलितं तत्त्वनुचितम् । गौः शुक्लश्चलो डित्थ इति शब्दानां चतुष्टयी प्रवृत्तिरिति महाभाष्योक्तेः प्रकृते तत्प्रवृत्ति-निमित्तजात्याद्यभावान्निर्धर्मके तस्मिन्सामान्यतोऽभिधेयत्वस्यैव शक्यतावच्छेदकधर्मवै-धुर्येणासंभवाच्च । न च लक्षणयैवास्तु तत्र तथात्वमिति वाच्यम् । निर्धर्मकत्वादेव तत्र लक्ष्यतावच्छेदकधर्मस्यापि गगनप्रसूनायमानत्वाच्चेति चेद्बाढम् । इष्टापत्तेः । न चैवं तर्हि कथं तज्ज्ञानं तदभावे कथं तदज्ञानध्वंस इति सांप्रतम् । स्वप्रकाशत्वेन तस्य नित्यनिरस्तावरणत्वेऽपि माणिक्यवन्मन्दान्धकारे द्रष्टृदृशाऽध्यस्तवह्निवदनाद्य-ज्ञानसंभवेन तदुपस्थापकस्वप्नादिभ्रमसंभवात् । प्रपञ्चितेदं स्वप्नदृष्टान्तेन मदीयाद्वैत-जलजाते कल्पितासंसर्गकगम्यनिर्धर्मकाद्वैतात्मकैवल्यम् । अत एव श्रूयते यतो वाचो निवर्तन्ते । यद्वाचाऽनभ्युदितम् । न चक्षुषा गृह्यते नापि वाचेत्यादि । श्रीमद्भगव-त्पूज्यपादपादारविन्दपारगा अप्याहुर्दशश्लोक्यां कथं सर्ववेदान्तसिद्धं ब्रवीमीति । विवृतं चेदं मधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ । तर्ह्येतादृश आत्माऽङ्गुलिनिर्देशेन प्रतिपाद्यतामिति नेत्याह- कथं ब्रवीमीति । किमाक्षेपे । अद्वैतत्वेन वागाद्यविषयत्वा-दित्याशयेन पुनरपि तद्विशिनष्टि--वागवेद्यमिति । नन्वथापि सर्ववेदान्तसिद्धत्वं तत्रत्यं कथमुपपद्यत इत्याशङ्क्य पुनर्विशिनष्टि--ब्रह्मेत्यादिशेषेण । ब्रह्मेतिशब्दो बृह बृहि वृद्धावितिस्मरणाद्बृंहति त्रिविधपरिच्छेदशून्यत्वरूपां निरतिशयवृद्धिं प्राप्नोतीति योग-वृत्त्याऽद्वैतवस्तुप्रतिबोधकः । प्रज्ञानं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्म, एकमेवाद्वितीयं ब्रह्म, अयमात्मा ब्रह्मेत्यादिश्रुतिष्वथातो ब्रह्मजिज्ञासा इति सूत्रे निर्दोषं हि समं ब्रह्मेत्यादिस्मृ-तिषु च प्रसिद्धस्तेन एकं केवलं लक्ष्यं लक्षितुं जहदजहत्स्वार्थलक्षणावृत्त्याऽऽकाशादि-

शब्दवन्निर्धर्मकेऽपि वस्तुनि कूपखननन्यायेन श्रोतृमनोवृत्तेर्निर्विकल्पकतदाकारतामात्रता-संपादनात्तद्विषयकाज्ञानमात्रविध्वंसद्वारा नित्यस्वात्मप्रकाशे तस्मिन्प्रचण्डप्रभाकरे प्रदीपप्रभावद्वृत्त्यवच्छिन्नचिदाभासाख्यव्यावहारिकज्ञाननिष्ठप्रकाशकतापरपर्यायीभूतविषयितानिरूपितप्रकाश्यतापराभिधज्ञानकर्मताख्यविषयतासंपादनं विनैव प्रतिबोधयितुमिव योग्यमित्यर्थः । न चैवमपि लक्ष्यतावच्छेदकमन्तरा लक्षणानुपपत्तितादवस्थ्यमेवेति सांप्रतम् । निरुक्तनियमस्य सविकल्पकशाब्दबोधैकविषयकत्वात् । तथा चोक्तं सिद्धान्तबिन्दौ--सविकल्पकवाक्यार्थबोधे च सविकल्पकपदार्थोपस्थितिरङ्गम् । प्रकृते च निर्विकल्पको वाक्यार्थबोधस्तस्यैव प्रमात्वेनाज्ञाननिवृत्तिसामर्थ्यात् । अतो न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिरिति । ननु ब्रह्मपदे सिद्धान्ते शक्तिरेव । तदुक्तं संक्षेपशारीरके—

विश्वोद्भवस्थितिलयप्रकृतित्वमस्य चिद्वस्तुनो यदसहायपरिग्रहस्य ।

तद्वर्णनीयमुपलक्षणमेव कस्मात्ब्रह्मेतिलक्ष्यपदशक्त्यविरोधहेतोरिति ।

त्वया तत्र लक्षणां स्वीकुर्वता कथं न तद्विरोधः साधित इति चेन्न । तत्तात्पर्यस्यानवबोधात् । तथा हि—तत्र तावदनादिदृश्यपञ्चकेतरदृश्यप्रतियोगिकाभिन्ननिमित्तोपादानकारणत्वं जन्मादिसूत्रे वर्णितं ब्रह्मणस्तटस्थापरपर्यायमुपलक्षणमेव वाच्यमिति प्रतिज्ञाय तत्र हेत्वाकाङ्क्षायां ब्रह्मेति लक्ष्यपदशक्त्यविरोधहेतोरिति तत्पूरणं कृतमिति तु निर्विवादमेव । तत्राथातो ब्रह्मजिज्ञासेति पूर्वसूत्रे विचार्यत्वेन प्रतिज्ञातवस्तुनः प्रकृतलक्षणलक्ष्यस्य वाचकं यद्ब्रह्मपदं तदीयया बृंहतीत्यादिव्युत्पत्त्या पूर्वोक्ता या शक्तिनिरतिशयवृद्ध्यवच्छिन्नचैतन्यविषयिणी योगवृत्तिरित्येवावश्यं व्याख्यानं वाच्यम् । अत एवोक्तं मधुसूदनसरस्वतीभिरेतद्व्याख्याने यावल्लक्ष्यस्वरूपं तद्धर्मो भूत्वा यल्लक्षयति तदेव विशेषणलक्षणम् । जगत्कारणत्वमपि यावल्लक्ष्यभावि चेद्ब्रह्म परिच्छिन्नं स्यादिति तत्पदशक्तिर्वक्ष्यमाणा बाध्येत तत्परिहारायोपलक्षणत्वमेवास्य युक्तम् । एवं च तल्लक्ष्यमखण्डं सिध्यतीत्याशयेनाऽऽह—ब्रह्मेतत्युक्तहेत्ववतरणम् । सा च शक्तिरग्रे मूल एवोक्ता । ब्रह्मेति लक्ष्यविषयं च पदं समर्थं भूमानमेव वदितुं नतु मर्त्यमल्पमिति । एवं च निरुक्तकारणत्वरूपोपलक्षणलक्ष्यमेव न तु तद्विशेष्यं ब्रह्मपदशक्यं परिच्छिन्नत्वापत्तेर्यथा तथा निरतिशयमहत्त्वावच्छिन्नचैतन्यत्वलक्षणब्रह्मपदशक्यतावच्छेदकावच्छिन्ने तस्मिन् सधर्मकत्वेन मोक्षहेतुशुद्धाद्वैतात्मैक्यप्रमाप्रयोजकविचारविषयकत्वानुपपत्तेर्निर्धर्मकत्वार्थं ब्रह्मपलक्ष्यत्वमेवावश्यं वक्तव्यमिति । न चतुर्थं कल्पने तत्स्वरसभङ्गः । तत्रैवोत्तरग्रन्थस्येत्थमेव तात्पर्यात् । तद्यथा--आद्ये सूत्रे त्वंपदस्योदितत्वादवृत्तेरस्मिंस्तत्पदस्योच्यमाना ।

वृत्तिर्ज्ञेया तत्पदार्थेऽद्वितीये प्रत्यङ्मात्रे त्वंपदस्योदितैवेत्यग्रे तत्त्वमसीतिमहावाक्यीयतत्पदार्थेऽद्वितीये तत्पदस्य वृत्तिरुच्यमाना ज्ञेयेति वदद्भिराचार्यैः कण्ठत एव ब्रह्मपदे लक्षणैवेति ज्ञापितम् । नो चेज्जन्मादिसूत्रविचारिते यतो वा इमानीत्यारभ्य तद्ब्रह्मेतीति सत्यं ज्ञानमनन्तं ब्रह्मेति च वाक्ये ब्रह्मपदे लक्षणाभावे तत्पदलक्ष्याद्वितीयचिन्मात्रत्वं न स्यात् । तस्मादुक्तातिरिक्तसूत्रादिषु ब्रह्मपदेऽपि लक्षणैवेति दिक् । नन्वथापि परिमितासहिष्णुपदेन साकं ब्रह्मशब्दस्य प्रकृतस्यार्थभेदात्तथैतन्मूलीभूतानन्तपदेन सह ब्रह्मपदस्यापि पौनरुक्त्यमेवेति चेद्गाढम् । अतद्व्यावृत्तिसाक्षाद्विधिमुखत्वलक्षणप्रकारभेदेन तत्परिहारात् । तथा चोक्तमभियुक्तैः-

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदान्तानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषितमिति ।

एवं वागवेद्यमिति ब्रह्मशब्दैकलक्ष्यमिति च विशेषणद्वयं भूषणपक्षेऽपि यतो विकासितसुमनोभिः सेवितमतो विचित्रशोभावहत्वाद्वागवेद्यं भगवत्या सरस्वत्याऽपि वर्णयितुमगोचरत्वमाप्तं यतो भेदशून्यमतः प्राणाधिकप्रियत्वाद्ब्रह्मशब्दैकलक्ष्यं सर्वस्वत्वेन परं ब्रह्मैवमभेदमिति व्यवहारार्हमिति च योज्यम् । यद्येवमपि समाप्तपुनरात्तत्वाख्यो वाक्यदोषोऽत्र स्फुट एव । स च सोदाहरणं लक्षितोऽस्मदीयसाहित्यसारे--

समाप्तपुनरात्तं तत्पूर्णे यद्गृह्यतेऽन्वये ।
चन्द्रार्धशेखरः शंभुर्मां पातु गिरिजाधिप इति ।

शब्दान्तरेणेति शेषः । स त्वत्र वस्त्वित्यन्तमेवान्वयस्य पूर्णत्वेऽपि तदेकान्वितब्रह्मपदेन गृह्यमाणवाक्यत्वात्स्पष्ट एव । न चायमपोदितत्वादनित्यदोष एव । तदप्युक्तं तत्रैव गुणरत्ने-

समाप्तपुनरात्तं स्याद् गुणो वाक्यान्तरोदये ।
रामाऽपि स्यादुपादेया महागुणवती सतीति ।

स चेह नन्वथापि सर्ववेदान्तेत्यादिप्रागुक्ताकाङ्क्षापूरकत्वाद्वर्तत एवेति वाच्यम् । तत्र सर्ववेदान्तसिद्धत्वस्य प्राक्तनश्रुतिपदेनैव संपन्नत्वाच्चदीयशक्त्यादिवृत्तिमात्र एवाऽऽकाङ्क्षायाः सत्त्वेन वाक्यान्तरोदयस्य क्लिष्टत्वाच्च । तस्मात्सहृदयहृदये सोऽवश्यमिहाऽऽयास्यत्येवेति चेद्विभाव्यते तर्हि स्त्वेतद्ब्रह्मेत्यादिपदमुभयपक्षेऽपि क्रियाविशेषणमेव । एवं च जडेत्यादिविशेषणविशिष्टं वस्तु ब्रह्मशब्दैकलक्ष्यं यथा स्यात्तथा जयतीति योजना । तथा चाविद्यातदधीनयावद्द्वयबाधरूपमुक्तेरपि ब्रह्मस्वरूपानतिरेकाद्ब्रह्मशब्दैकलक्ष्यत्वं सर्वोत्कटत्वं च स्वप्रकाशाद्वैतप्रत्यगानन्दरूपत्वाच्चोपपद्यत एव । तदेवमत्रापि पूर्वार्धेन निरुक्तानन्दरूपस्यैव शोभि-

ततत्पदार्थस्य तृतीयचरणेन तादृशस्य शोधितत्वंपदार्थस्य चरमचरणेन च तादृशस्यैव तयोरखण्डैकरसलक्षणैक्यरूपासिपदलक्ष्यस्यापि सूचनं यावच्छब्दब्रह्मरहस्यभूतमप्यावेदितं भवति । नन्वसिपदे लक्षणा तु न कुत्रापि श्रुतपूर्वेत्यसांप्रदायिकमेवेदमत्र तत्कथनमिति चेन्न । तत्राद्वितीयस्वप्रकाशनिरतिशयानन्दरूपयोर्जीवब्रह्मस्वरूपयोरैक्यमुक्तानन्दरूपं बोधयदहंब्रह्मास्मीत्यादि वेदान्तमहावाक्यं द्वितीयविषयकप्रत्यक्षादिसर्वप्रमाणबाधकमिति न्यायरत्नवल्यां वदता ब्रह्मानन्दाचार्येणैक्यस्याप्युक्तानन्दरूपत्वोक्त्यन्यथानुपपत्त्यैव तत्र तथात्वसिद्धेः । नहि जीवब्रह्मैक्यबोधकेऽस्यादिपदे लक्षणां विना तस्योक्तानन्दरूपत्वं सिध्यति । शक्यार्थस्तु तस्यैकसंबोध्यचेतनसंबन्धिवर्तमानिकसत्त्वं । तस्यास्तूक्तानन्दरूपत्वाभावः सुप्रसिद्ध एव । तस्मान्नैवेदमसांप्रदायिकमित्यलं पल्लवितेन । अत्र श्रुतेः स्वकीयत्वात्स्त्रीगुणविशिष्टरमणीरूपकेण सा यथा स्वनायकं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमित्यादिश्रुत्युक्तरीत्याऽरुन्धत्यादिवद्विधिवत्स्वपाणिग्रहकर्तृत्वात्सुखयत्येवं निखिलत्रयीरूपा तत्त्वमस्यादिमहावाक्यरूपा वा श्रुतिरपि विधिवत्स्वैकसत्त्वेन स्वोपभोक्तारं ब्राह्मणं करकलितामलकवदर्थापरोक्ष्येण स्वपाणिग्रहणकर्तृत्वात् सुखयिष्यत्येवेत्यवश्यमेवैषा सेवनीयेति संभोगशृङ्गाराभिधानुभयोक्तिरूपकालंकाराभ्यां ध्वन्यते । इह मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति वृत्तरत्नाकरोक्तेः ( १० )। तदारम्भे नगणान्नो नाग आयुस्त्विल इति वचनादेतत्पठित्रादीनामायुर्वृद्धिरिति शिवम् ॥ १ ॥

एवं प्रकरणप्रतिपाद्यं द्वैतमिथ्यात्वपूर्वकमद्वैतब्रह्मात्मैक्यरूपमर्थमधिकारिसंबन्धप्रयोजनाभिधानुबन्धान्तरैः सहितं वस्तुनिर्देशलक्षणेन मङ्गलेन ग्रथितं मालिनीवृत्तेन संगृह्याथ—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।

इति श्रुतेरीश्वरगुर्वभेदभक्तेः परमपरिपाकस्यैव सकलशास्त्रार्थोपस्थितिकारणत्वादीश्वराभेदेनैव स्वसद्गुरुं स्तुवन्क्रमात्ससकाण्डरामायणरहस्यं संगृह्णाति—

**बाल्येऽप्याशु स्मरारेरपि धनुरतुलं येन भङ्क्त्वाऽऽत्तमोदा**
**वैदेही भूमिपुत्री पितृवचनवशाद्दण्डकान्यः प्रतस्थे ।**
**हत्वा यो दूषणादीन्कपिवरमपि च प्राप्य शुद्धिं प्रियायाः**
**सद्यः प्रध्वंसितारिर्भाति सह तया तं रघूत्तममीडे ॥ २ ॥**

बाल्येऽपीति। येन बाल्येऽपि कैशोरे वयस्यपि न तु यौवने। तेन तात्कालिकसाधारणसामर्थ्यस्याप्यभावो वक्ष्यमाणाद्भुतरसकारणत्वेन व्यज्यते। तत्राप्याशु शीघ्रं न तु देवताद्याराधनतत्प्रसादायत्ताचिन्त्यशक्त्यवाप्त्यर्थं किंचित्कालविलम्बेनेत्यर्थः। एतेन विश्वामित्राज्ञाव्यवहितोत्तरक्षणजन्यत्वमपि तथाविधं ध्वन्यते। तत्रापि किं कस्याचित्सामान्यवरिस्य धनुर्नेत्याह—स्मरेति। स्मरस्य स्मर्यत इति व्युत्पत्त्या स्मृतिमात्रप्रकटरूपत्वेनातिदुर्जयत्वाज्जगदेकवीरस्य मन्मथस्यापि योऽरिः स्वभाललोचनज्वलनेनैव भस्मीकरणाच्छत्रुः शिवस्तस्यापीत्यर्थः। अपिना वक्ष्यमाणधनुषि महत्तरसारवत्त्वं द्योत्यते। अत एवातुलं निरुपमं मेर्वाद्यपेक्षयाऽपि सारवत्तरमिति यावत्। एतादृशं धनुः कार्मुकम्। तत्राप्यञ्जसा साक्षादेव न तु सहायादिद्वारा। भङ्क्त्वा विखण्डय गुणमारोप्याऽऽकर्षणक्षणे प्रविभज्येत्यर्थः। अत एव वैदेही विदेहस्य निमेर्गोत्रापत्यं सीरध्वजाभिधजनककन्येत्यर्थः। तत्किमूर्मिला नेत्याह—भूमीति। भूमेः पृथ्व्याः पुत्री सीतेति यावत्। एतावन्मात्रोक्त्यैवेष्टसिद्धावपि तत्र जडत्वापत्तिं व्युदसितुं प्राक्तनम्। एतेन तस्यामयोनिजत्वं ब्रह्मवित्पालितत्वादिना जगन्मातृभूतसाक्षाल्लक्ष्म्यवतारत्वं व्यज्यते। ऊढा विधिवदुद्वाहिता। सेति संबन्धः। एवं च बालकाण्डार्थोऽद्भुतरसश्च सूचितः। तथा यः पित्रिति। ताताज्ञाधीनत्वात्। दण्डकान्दण्डकारण्यप्रदेशान्प्रत्यपीत्यर्थः। प्रतस्थे प्रस्थितवानित्यन्वयः। तथा च तद्वचनस्य सर्वथाऽनुलङ्घनीयत्वात्सीतालक्ष्मणाभ्यां सह यो दण्यकारण्यमपि चतुर्दशवर्षनिवसनार्थमाजगामेति भावः। तेनात्रायोध्याकाण्डार्थः करुणरसश्च व्यज्यते। एवं यः, दूषणादीन्। आदिना खरत्रिशिरःप्रभृतिजनस्थानस्थितांश्चतुर्दशसहस्रराक्षसानित्यर्थः। हत्वा तथा कपिवरमपि च वानरराजं वालिनमिति यावत्। श्रीरामम्। ईडे स्तौमीति योजना। अहमित्यार्थिकम्। तेन स्वस्मिंस्तोतृत्वाभिमानाभावो व्यज्यते। अत एवोक्तमस्मदीये कृष्णलीलामृते—

न कल्पमाकल्पमपि प्रकल्पितुं विकल्पहीनोऽल्पमपीह यद्यशः।

क्व कल्पते तत्र तु मादृशोऽल्पकः सुनिर्विकल्पस्य गुणानुजल्पनः॥ इति।

एवं चोत्तरार्धेऽत्र हत्वा यो दूषणादीनिति अरण्यकाण्डार्थो वीररसश्च कपिवरमपि चेति किष्किन्धाकाण्डार्थः क्रमादर्थद्वयेऽपि बीभत्सभयानकरसद्वयं च प्राप्य शुद्धिं प्रियाया इति सुन्दरकाण्डार्थो हास्यरसश्च सद्यः प्रध्वंसितारिरिति युद्धकाण्डार्थो रौद्ररसश्च लसति सह तयेति उत्तरकाण्डार्थः शृङ्गाररसश्च शेषेण भक्तिरसोऽपि द्योत्यते। तेनेह सप्तकाण्डरामायणार्थग्रथनं नवरससूचनं च सिद्धम्।

श्रीगुरुपक्षे तु—येन वक्ष्यमाणगुणकेन श्रीगुरुणा बाल्येऽपि पूर्ववयस्यपि न तु वार्धक एव । वयसि गते कः कामविकार इति वचनात्तत्र तत्प्राबल्याभावस्य स्वभावसिद्धत्वात्पुरुषार्थत्वाभावाच्च । तत्राप्याशु शीघ्रमनायासेनैव । तत्रापि स्मरेति । स्मर एवारिस्तस्य स्मृतिमात्रजन्मनो मन्मथाख्यशत्रोरपीत्यर्थः । अत एवातुलं निरुपमं पौष्पाख्यं तमालमञ्जर्याकारसुन्दरीभ्रूरूपं वा धनुः शरासनमित्यर्थः । अञ्जसा साक्षाद्वामदेवादिवत्स्वयंप्रभातात्मतत्त्वेन स्वयमेव न तु गुरुशास्त्रोपदिष्टविशिष्टविचारपरिपुष्टिद्वारेत्यर्थः । भङ्क्त्वा—

केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरमिति, ॥

मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता ॥

श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ इति ।

जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिकेत्यादि ।

योगवासिष्ठादिशास्त्रप्रसिद्धस्त्रीनिन्दानुसंधानेन तुच्छीकृत्येति यावत् । एतेनाङ्गनोपलक्षितयावदैहिकादीष्टविषयाविषयकावश्यनश्वरत्वताकृतदुःखैकफलकत्वमूलकसार्वदिकानादरदार्ढ्यं ध्वन्यते । ततः किं कृतं किं जडवत्फलपर्यन्तविचारवैधुर्येण तूष्णीमेवावस्थितमुत स्ववर्णाश्रमधर्मजातमनुष्ठितम् । आद्ये भोगमोक्षोभयाभावेन ब्राह्मणवैफल्यापत्तिरन्त्ये दारपरिग्रहपूर्वकाग्निहोत्राख्यसकलवर्णाश्रमधर्ममूलीभूतपूर्वतन्त्रप्रसिद्धप्रधानधर्मत्यागेनाप्रधानाम्नायावर्तनाद्यनुष्ठानात्पिण्डमुत्सृज्य करं लेढीति न्यायेनातिमौढ्यापत्तिरिति विप्रतिपत्तिं प्रत्याह—ऊढेत्यादिना । वैदेही विगतो नष्टो देहस्तदुपलक्षितयावद्दृश्यप्रपञ्चो यस्मिन्स विदेहः । कोऽपि तस्य मृगजलादिवदधिष्ठानदृष्ट्या त्रैकालिकसत्ताविरहाद्ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यत इति वार्तिकोक्तेश्च कालत्रयादृष्टदृश्यः शुद्धाद्वैतचिन्मात्रः परमात्मा तस्येयं तत्प्रापकत्वात्तत्संबन्धिनीति तथेत्यर्थः । एतेनाद्वैतस्वप्रकाशकैवल्यात्मामन्दरूपपरमपुमर्थमात्रसाधननिष्ठत्वैकपरायणत्वादत्र नैवोक्तशङ्कावकाश इत्याशयः सूचितः । एतादृशी केत्यत आह—भूमीति । पुत्री कन्या । एतादृशी या भूमिः सा तथा । मयूरव्यंसकादिवत्समासः । तस्याऽऽकृतिगणत्वात्तेन प्रकृते वक्ष्य-

माणार्थविशेषलाभाच्चेह तदाश्रयणम् । अयमभिप्रायः—

ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात्तृतीया तनुमानसा ।
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थभाविनी षष्ठी सप्तमी तुर्यगा स्मृतेति ।

योगवासिष्ठप्रसिद्धं मोक्षसाधनीभूतं भूमिकासप्तकं तावदेकस्या एव मुमुक्ष्वन्तःकरणस्थितेः स्त्रीव्यक्तेः—

अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी ।
दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला ॥

इत्युद्वाहपरमावधिप्राक्कालिकमवस्थात्रयं मुग्धामध्याप्रगल्भाभेदेन तदौत्तरकालिकं चावस्थाचतुष्टयं प्रसिद्धमेव । लोकादाविति मिलित्वाऽवस्थासप्तकं यथा भवति कामाख्यपुरुषार्थसाधकं तद्वच्छुभेच्छादि तुर्यगान्तोक्तावस्थासप्तकमिदं मोक्षाख्यविलक्षणपुरुषार्थसाधकमतो युक्तमेवेदं शुभेच्छाभिधप्रथमभूमेः कन्यापरनामकपुत्रीतौल्यात्पुत्रीत्वमिति । ऊढा विधिवद्विवाहिताऽऽसीदित्यन्वयः । एतासां भूमिकानां प्रायो निगदव्याख्यातत्वमेवाथापि विस्तराकाङ्क्षा चेन्मत्कृतायां पूर्णानन्देन्दुकौमुद्याख्यायां जीवन्मुक्तिविवेकटीकायां वासिष्ठतट्टीकादेर्व्याख्यातत्वेन द्रष्टव्योऽसौ । एवं च श्रीमदाचार्ये लोकसंग्रहेतराफलकनिसर्गसिद्धशुभेच्छाभिधप्रथमभूमिकावत्त्वं ब्रह्मचर्यवत्त्वमुग्धत्वं च सूचितम् । अथ विचारणाभिधद्वितीयभूमिकावत्त्वं व्यनक्ति—पित्रित्याद्युत्तरार्धपूर्वग्रन्थेन । यः प्रागुक्तवक्ष्यमाणगुणकः श्रीगुरुः । पित्रिति । पाति रक्षति मूलाज्ञानाविद्यातभयात्स्वजन्यप्रमाद्वारेति पिता वेदस्तस्य यद्वचनमीशावास्येत्यादिकाण्वमन्त्रोपनिषद्भाष्ये संन्यासं प्रकृत्य लिखितमरण्यमियादिति च पदं ततो न पुनरियादिति वाक्यं तस्य यो वशः श्रद्धादार्ढ्येन तदुक्तार्थावश्यानुष्ठेयत्वौत्कण्ठ्यं तस्माद्धेतोरित्यर्थः । एतेन लोकदृशा वेदतदर्थज्ञानाभावेऽपि स्वभावसिद्धत्वं तत्र ध्वन्यते । दण्डकान् दण्डकारण्यवर्तिजनस्थानादिप्रदेशान् प्रतीति यावत् । प्रतस्थे समाजगामेति योजना । सह्याद्रिनिकटस्थितमलापहारिणीतीरपरिसरवर्त्यशोकपुराख्यस्वाविर्भावस्थानतः प्रस्थाय काशीमुद्दिश्याऽऽम्नायाध्ययनार्थं गच्छञ्जनस्थान एवावस्थाय स्ववर्णाश्रमधर्मानुष्ठानपरतया भैक्षमाचरन्सांगस्वशाखाध्ययनं गुरुकुले लोकदृशाऽऽचचारेत्यभिप्रायः । एतेनाऽऽत्मदृशाऽस्य विचारणाख्यद्वितीयभूमिवत्त्वं द्योत्यते । ततस्तनुमानसाख्यतृतीयभूमिवत्त्वं तत्र क्रमाद्द्योतयति—हत्वेत्याद्युत्तरार्धेन । यः श्रीगुरुः । दूषणादीन्दूषयतीति दूषणादीन्मनोधर्मानित्यर्थः । उपलक्षणमिदं कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्हीर्धीर्भीरित्येतत्सर्वं

मन एवेत्याम्नायात्कामादियावन्मनोधर्माणामपि । तेन सर्वधर्मशून्यत्वान्निर्विकल्पतया धर्मिमात्रस्य तस्यावस्थानलक्षणः सकलसाधनशिरोमणिरसंप्रज्ञातसमाधिस्तत्र सिद्धस्तनुमानसाभिधतृतीयभूमिकाऽपि । तथा च कठाः समामनन्ति—

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणामिति ।

श्रीमद्भगवद्गीतास्वप्युक्तं—

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितमिति ।

भगवता पतञ्जलिनाऽपि—योगश्चित्तवृत्तिनिरोध इति । एवं तत्त्वप्रमासाधनीभूतं श्रवणमनननिदिध्यासनात्मकं तत्र भूमिकात्रयमुक्त्वा तत्फलीभूतां सत्त्वापत्तिसंज्ञिकां ब्रह्मविद्यात्मिकां चतुर्थीं भूमिकामपि व्यनक्ति—कपीत्यादिना । कमद्वैतात्मरूपं सुखं पिबन्त्यावरणविक्षेपाभ्यां विनष्टमिव कुर्वन्ति ते कपयः । अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा इति पातञ्जलसूत्रात्पञ्चक्लेशास्तेषां मध्ये वरः सर्वभ्रमकारणत्वान्मूलीभूतोऽत एव प्रथमनिर्दिष्टो योऽविद्याख्यः श्रेष्ठः क्लेशस्तमपि च हत्वा वामदेवादिन्यायेन गुरुशास्त्रादिसामग्रीं विनैव स्वयमेवाऽऽविर्भूताहंब्रह्मास्मीत्यद्वैतात्मविषयकसाक्षात्कारेण क्षपयित्वेत्यर्थः । अथासंसक्तिनामिकां पञ्चमीं भूमिकामपि तत्राऽऽह- प्राप्येत्यादिना । ब्रह्मविदां हि यावद्दृश्यावभासस्य मिथ्यात्वेन मृगजलायमानत्वात्प्रीतिविषयीभूता तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति श्रुतेः,

सर्वे यदर्थमिह वस्तु यदस्ति किंचित्पारार्थ्यमुज्झति च यन्निजसत्त्वयैव ।
तद्वर्णयन्ति हि सुखं सुखलक्षणज्ञास्तत्प्रत्यगात्मनि समं सुखताऽस्य तस्मात् ।
प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ।
प्रेयः श्रुतेरपि ततः सुखतानुमानं नैयायिकोऽपि न दृगात्मनि निह्नुवीतेति ।

श्रीमत्सर्वज्ञात्ममुनीश्वरचरणवचनाच्चाद्वैतात्मानुसंधानलक्षणा स्वतःसाधनपौष्कल्या-त्संपद्यमाना चतुर्थ्यादित्रिभूमिका जीवन्मुक्तिरेव । तस्या इत्यर्थः । सृष्टिम् । संशयविपर्ययसंस्कारवशाद्गगने नीलिमाभासवदवभासमानमलिनिम्नः सर्वदा

' तच्चिन्तनं तत्कथनमन्योऽन्यं तत्प्रबोधनम् ।

एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥

इत्यभियुक्तोक्ततत्त्वज्ञानाभ्यासात् ।

न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मैवास्ति निरामयम् ।

नैकमस्ति न च द्वित्वं संविदेव विजृम्भते ॥

एष एव मनोनाशस्त्वविद्यानाश एव च ।

इत्युक्तरूपमनोनाशेन क्वापि स्वतोदृश्यसत्यत्वादिसंस्कारोदयेनाद्वैतात्मविषयक-संशयसंस्कारोदयस्यापि कदाचित्संभवात्स्वतो व्युत्थानवतीं पञ्चमीं भूमिकामेव वैमल्यावस्थामित्यर्थः । प्राप्य लब्ध्वा । अत एव तत्र षष्ठीं पदार्थाभाविन्याख्यामपि भूमिकां स्फुटयति--सद्य इत्यादिना ।

आत्माऽसङ्गस्ततोऽन्यत्स्यादिन्द्रजालमिदं जगत् ।

इत्यचञ्चलनिर्णीतिः कुतो मनसि वासना ॥

इत्युक्तरीत्या तत्कालमेव । प्रध्वंसतेति । निर्मूलितत्वलक्षणेन प्रकर्षेण ध्वंसिताः प्रणाशिता अरयः प्रपञ्चः सत्यः कार्यकारित्वात् । व्यतिरेके वन्ध्या-पुत्रवदित्यादिपरोक्षानुमानाभासेन क्षणं व्युत्थानसंभवेऽपि स्वसत्तवभावादि-पर्यवस्य द्वैतसत्यत्वरूपस्य संस्कारा एवारिवत्दुःखदत्वाद्येन स तथेत्यर्थः । एतादृशः सन् । अथोभयव्युत्थानाभावरूपां तुर्याख्यां तत्र सप्तमीं भूमिकामपि प्रकटयति—लसतीत्यादिना । तथा निरुक्तजीवन्मुक्त्या विभवेन सह लसति संशयविपर्ययोभयविधसंस्काराणामपि प्रागुक्तब्रह्माभ्यासजन्यमनोनाशवासनाक्षययोः प्रोक्तरूपयोः संपत्त्याऽनुदयात्स्वतः परतो वा व्युत्थानासंभवाद्विलसतीति यावत् । अत एव निखिलशुकादिजीवन्मुक्तशिरोमणितया तं प्रागुक्तगुणविशिष्टम् । रघूत्तंसम् ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।

श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति वचनान्नाथपदस्थाने उत्तंसपदं प्रयुक्तं बोध्यम् । रलयोः सावर्ण्या-द्रघूत्परमाणुतुल्ययेऽल्पताकानन्यस्मदादीन् कृपालवापाङ्गपातमात्रेणैवोचसयत्वद्वैता-त्मप्रबोधेन श्रुतिशिरःशेखरी करोतीति तथा तं परमकरुणामृतार्णवं श्रीगुरु-

मित्यर्थः । ईडे स्तौमीति संबन्धः । एवं चाग्रिमः सर्वोऽपीतः परं लिख्यमानो ग्रन्थः श्रीमत्सद्गुरुस्वरूप एवेति भावः । अहमिति कर्त्रध्याहारेण त्वेतत्कर्तृत्वमपि तदेकप्रसादायत्तमेव न तु मयि स्वतः किमपीति द्योत्यते । इह धीरोदात्तलक्षितो नायकः । शान्त एव शृङ्गारानुप्राणितो रसः । रूपकादयोऽलंकाराः । स्रग्धरामिधवृत्तलक्षणं तूक्तं वृत्तरत्नाकर एव—

म्रौ भ्नौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति ।

भूमिपुत्र्यपि स्वयंवरे तथेति तत्त्वम् ॥ २ ॥

एवमीश्वराभिन्नश्रीगुरोः स्वैकरूपवक्ष्यमाणाद्वैतशास्त्रीयप्रकरणस्य श्रुतिभारतीप्रत्यगद्वैतात्मानुभूतिमसादैकसाध्यत्वात्ख्यातिमात्ररूपत्वेन तास्तिकोऽप्यभिन्ना एवानुसंदधानोऽखिलापाविच्छनोदनं प्रार्थयते सौवर्णाङ्गीत्यादिमन्दाक्रान्तावृत्तेन—

**सौवर्णाङ्गी सुघनचिकुरा प्रोल्लसल्लोचनाब्जा**

**मुक्तोद्दामिश्रुतिरनुपमभ्राजदङ्गाऽन्वनङ्गा ।**

**दोषास्पृष्टा सगुणसुरमाऽलंकृतिश्चारुवाचिः**

**सौभाग्याढ्या विशदवमना भारती मां पुनातु ॥ ३ ॥**

सुष्ठु 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' इति श्रुतेर्वेदवर्णानामीश्वरैकाविर्भूतत्वाद्भ्रमप्रमादविप्रलिप्साभाषादकपौरुषेयत्वदोषशून्या इत्यर्थः । ननु श्रुतेरपौरुषेयत्वे श्रुतिमेव प्रमाणयता भवता कथं नाऽऽत्माश्रयोऽप्यनुसंहित इति चेन्न । 'सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति तैत्तिरीयकश्रुतेर्यत्प्रसादेन सूर्यस्यापि सर्वानुभवसिद्धं स्वपरप्रकाशकत्वरूपं स्वयंप्रकाशत्वं सूर्यमण्डलवर्तिहिरण्मयपुरुषाकारायास्तस्यास्त्रय्याख्यायास्वस्य कैमुतिकन्यायसिद्धत्वात् । तथा चोक्तं सायणाचार्यविरचिते ऋग्वेदभाष्ये श्रीमाधवाचार्यैः—प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि । यथा घटपटादिद्रव्याणां स्वप्रकाशत्वाभावेऽपि सूर्यचन्द्रादीनां स्वप्रकाशत्वमविरुद्धम् । तथा मनुष्यादीनां स्वस्कन्धारोहासंभवेऽपि, अकुण्ठितशक्तेर्वेदस्येतरवस्तुप्रतिपादकत्ववत्स्वप्रतिपादकत्वमप्यस्तु । अत एव संप्रदायविदोऽकुण्ठितां शक्तिं वेदस्य दर्शयन्ति । चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमितीति । एतेनानुमानादेवाऽऽगमप्रामाण्यवादिनः काणादादयस्तृणीकृता ज्ञेयाः । पदादिरूपतामासाद्य धर्मब्रह्मलक्षणालौकिकार्थस्य साधनादिभावेन बोधने धुरंधरत्वाद्यावन्ति वेदाक्षराणि तावन्ति हरिनामान्येवेत्यृग्विधानादिस्मृतिमूलकशिष्टप्रवादाच्चातिसुन्दरा इत्यर्थः । एतादृशा ये वर्णा अकारादयस्त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मता इति पाणिनिशिक्षो-

क्तेस्तन्मात्रसंख्याकास्तत्तच्छाखाप्रातिशाख्यतत्तच्छिक्षातत्तद्व्याकरणनिर्णीतोदात्ताद्युच्चारणा अग्निमीळे इषे त्वेत्यादौ प्रसिद्धा अलौकिकाक्षरविशेषा इति यावत्। तेषामिमानि सौवर्णानि मन्त्रब्राह्मणप्रसिद्धपदानि निरुक्तसुवर्णमयत्वात्तत्संबन्धीनि पदप्रकृतिः संहितेति यास्कोक्तेस्तत्कार्यभूतानि वाक्यादीनि वा तथा तान्येवाङ्गं शरीरं यस्याः सा तथा। यावत्त्रयी रूपेत्यर्थः। ननु निरतिशयापावित्र्यनिरसनलक्षणं हि पवनं विना ज्ञानध्वंसनं नैव घटते। तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्। अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टमिति श्रुत्वा पवित्राणां पवित्रं य इति स्मृत्या चाद्वैतात्मतत्त्वस्यैव निरुपमपावित्र्योक्तेरविद्यादेरेव सर्वापावित्र्यनिदानत्वाच्च। तस्मात्कथं वेदमात्रस्याप्रतिबद्धापरोक्षोक्तविषयकप्रबोधमन्तराऽद्धा तत्साधकत्वमित्याशङ्क्य पुनस्तां विशिनष्टि—सुघनेति। स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति श्रुतेः सुतरां चिन्मात्रतामन्तराऽन्यत्रोक्तघनत्वासंभवात्सुघनशब्दितोऽत्राद्वैतात्मैव संपूर्णसौभाग्यनिदानत्वादुपनिषदाख्यतच्छिरोरुहत्वात्सूक्ष्मात्सूक्ष्मतरं नित्यमिति श्रुतेरतिसूक्ष्मत्वाच्च चिकुराः कुन्तला यस्याः सा तथेत्यर्थः। एतेन सर्वेऽपि भेदवादिनः प्रत्युक्ताः। प्रमाणाधीनत्वाद्वस्तुसिद्धेः प्रमाणानां च प्रत्यक्षादीनां सर्वेषामपि मध्ये श्रुतेरेव प्रबलत्वस्यालौकिकार्थावच्छेदेनावश्यंवाच्यत्वात्तदनुरोधेनैव तदर्थापत्तेरनुमानस्य च तथात्वादन्यथात्ववैदिकत्वापत्तेः शुष्कतर्कचूर्णीकरणस्य तु पूर्वाचार्यैस्तत्र तत्र शतशः संपादितत्वान्मयाऽप्यग्रेऽत्र दिङ्मात्रं संसाधयिषितत्वाच्च। नन्वथापि किं तत्पाठमात्रेण तत्प्रतिपादितार्थसिद्धिः संपद्यत इत्याकाङ्क्षायां पुनस्तां विशिनष्टि—प्रोल्लसदिति। त्रैकालिकाव्यतिरेकलक्षणेन प्रकर्षेण उल्लसति प्रकाशत इति प्रोल्लसत्। यत्साक्षादपरोक्षाद्ब्रह्म। नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते। तमेव भान्तमनुभाति सर्वमित्यादिश्रुतिभ्यः स्वप्रकाशतया सर्वदा भासमानं ब्रह्मेत्यर्थः। तत्र लोचनाब्जे तदाकारान्तःकरणवृत्तिमात्रेणैव तद्विषयकाज्ञाननिवृत्तेरालोचनशक्तिशालिनी परोक्षापरोक्षज्ञानरूपे ईक्षणनीलोत्पले यस्याः सा तथा। स्वप्रकाशाद्वैतब्रह्ममात्रविषयकानाद्यविद्याऽसभानद्व्यावरणद्वयैकानिवर्तकपरोक्षापरोक्षेक्षणेन्दीवरेति यावत्। एवं च तत्र ज्ञानविषयताऽप्यपास्ता। तथा चोक्तमद्वैतरक्षणे श्रीमधुसूदनसरस्वतीभिः—श्रोतव्य इत्यादिरपि श्रुतिरस्तीति चेन्न। तदाकारान्तःकरणवृत्त्युत्पत्तिमात्रफलकत्वात्तस्याः। न तु तावता ज्ञानविषयता समायाति। ज्ञानं हि वृत्तिस्तदभिव्यक्तं चैतन्यं वा। तत्रान्त्ये भेदघटिता विषयता कथमभेदे स्यात्। आद्येऽपि वृत्तेरेवानिर्वचनीयाया अनिर्वचनीयतदाकारत्वं नाम धर्मो न त्वतिरिक्ता विषयताऽस्तीत्युक्तम्। समानसत्ताकयोरेव हि संबन्धो न तु सत्यानृतयोरिति।

विस्तरस्तु शुकिरमालंक्रियाख्यायां मदीयतद्व्याख्यायामेवानुसंधेयः। अथवा पदेन सर्वदा षड्पदवद्रसज्ञानन्दजनकत्वं निरुक्तज्ञानद्वये द्योत्यते। नन्वेवं यदि वेदवैभवं सर्वत्र सांगस्वाध्यायाः सर्वेऽपि विनैव नित्यानित्यवस्तुविवेकादिसकल-साधनसामग्रीं किमिति न मुच्यन्ते। न चाद्वैतात्मसाक्षात्कारानुदयादेवेति वाच्यम्। व्युत्पन्नस्य हि बुद्धिजन्म सद्यसा वाक्यश्रुतौ दृश्यत इति संक्षेपशारीरकवचना-द्व्याकरणाद्यध्ययनेन पदतदर्थज्ञानसत्त्वे वाक्यार्थबुद्धौ विलम्बासंभवात्। नापि विषयवासनादिप्रतिबन्धेन तदनुदय एव दैवात्तदुदयेऽपि तत्फलाविद्याध्वंसाद्यनुदय एव। अत एवाऽऽह भगवान् पराशरः—

ज्ञानाग्निरपि संजातः सुदीप्तः सुदृढोऽपि च।
प्रदग्धुं नैव शक्तः स्यात्प्रतिबद्धस्तु किल्बिषम्॥

इति सांप्रतम्। छान्दोग्यसप्तमाध्यायप्रसिद्धे नारदे सनत्कुमारोपदेशात्प्राक्सकल-निरुक्तसाधनसत्त्वेऽपि तत्तात्कितविषयवासनादिप्रतिबन्धव्युदाससंभवेऽपि तत्त्वप्रमोदयाद-र्शनादिति चेन्न। आचार्यवान्पुरुषो वेदेति, न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा-चिन्त्यमान इति तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति च श्रुतेस्तत्त्वबोधस्याधिकारिण्यपि ब्रह्मनिष्ठाचार्यचरणप्रसादैकलभ्यत्वादित्यभिप्रेत्य पुनर्वि-शिनष्टि मुक्तेति। भासोऽत्रोपक्रमादिभिः षड्भिस्तात्पर्यनिर्णायकलिङ्गैरनुगृहीतवाक्यार्थ-प्रमाविशेष एव। तस्योत्कर्षस्तु यावत्प्रमाणान्तरविरोधवारणपूर्वकत्वमेव। तथा चोद्भासो बाधितस्तात्पर्यावधारणानुगृहीतो वाक्यार्थबोधः सोऽस्त्यस्याः सोद्भासिनी। मुक्तैः श्रीमद्भगवत्पूज्यपादपादारविन्दप्रभृतिभिरद्वैतशास्त्रप्रतिष्ठापकैर्ब्रह्मनिष्ठवरिष्ठैरेव उद्भा-सिनी निरुक्तार्थबोधशालिनी श्रुतिस्तत्त्वमस्यादिमहावाक्यरूपा निरपेक्षशब्दपद्ध-तिर्यस्याः सा तथा। निरुक्तजीवन्मुक्तगुरुवरैकनिर्णेययथार्थनिजपरममहावाक्यार्थ-बोधजननसमर्थेत्यर्थः। एवं च यावद्वैदवादिविदलनपूर्वकसंपूर्णत्रयीस्वारस्यार्थावबो-धनं निरुक्ताचार्यवर्यचरणारविन्दद्वंद्वं विना नैव कालत्रयेऽपि भवतीति भावः। तथा चोक्तं संक्षेपशारीरके—

वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताऽऽसीत्।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शंकरमर्चिताङ्घ्रिम्॥ इति।

ननु श्रीमद्भाष्यकारादीनामीश्वरावतारत्वेन सर्वज्ञत्वादिदं निरुक्तत्रयीस्वारस्य-स्वाद्वैतात्मचिन्मात्रैक्यपरतयाऽस्तु नाम निर्णायकत्वमथापि कथमिदानीतनैर्मुमुक्षुभिः

शरणीकरणीयेषु ब्रह्मविच्छिरोमणिषु तस्यादिति चेन्न। तदङ्गोपाङ्गपारंगतत्वपूर्वकतद्वत्तायाः प्रकृतोपसत्तिविधायकश्रुतौ श्रोत्रियशब्दविवक्षितायाः केषुचिदधतनेष्वपि ब्रह्मनिष्ठेषु योगाभ्यासादितपसा जन्मान्तरीयविलक्षणपुण्यपुञ्जार्जितभगवत्प्रसादेनाभ्यासादिना लोकोत्तरबुद्धिमत्त्वेन वा संभवात्। अप्रतिबद्धशुद्धात्मसाक्षात्कारपूर्वकस्य तावन्मात्रस्यापि सार्वज्ञ्यस्य यथोक्ताधिकारिसंशयादिध्वंसौपयिकत्वाच्चेत्यभिसंधाय पुनर्विशिनष्टि--अनुपमेत्यादिपूर्वार्धशेषेण। अनुपमं भाष्यादिद्वारा निर्विचिकित्सार्थपर्यवसायित्वान्निरतिशयं भ्राजन्ति शोभमानानि स्वाङ्गिमाहात्म्यासादकत्वेनातिरमणीयानीत्यर्थः। एतेनाव्युत्पन्नाधीतशिक्षादिव्युदासः। एतादृशानि यान्यङ्गानि। द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति। परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितीति श्रुतेः।

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति।

स्मृतेश्च शिक्षाद्यानि। तेषां वेदावयवत्वेन तत्रापि कण्ठत एव प्रसिद्धत्वात्। उपलक्षणमिदमुदाहृतस्मृतिप्रसिद्धपुराणाद्युपाङ्गानामपि। तथा चाष्टादशमहापुराणतावन्मात्रोपपुराणसमुच्चयः। तन्नामप्रपञ्चस्तु सूतसंहितादौ द्रष्टव्यः। न्यायः प्रमाणप्रमेयेत्यादिभगवद्गौतमप्रणीता पञ्चाध्यायी न्यायशास्त्रम्। अथातो धर्मं व्याख्यास्याम इत्यादिकणादप्रणीता दशाध्यायी तर्कशास्त्रं च। मीमांसाशब्देनापि पूर्वोत्तरपूर्वपदमथातो धर्मजिज्ञासेत्यादिद्वादशलक्षणीसंज्ञकमथातो ब्रह्मजिज्ञासेत्यादिचतुर्लक्षणीसंज्ञकं तद्द्वयमेव। धर्मशास्त्रं मन्वादिनिखिलस्मृतिसंघः। सांख्ययोगशास्त्रयोस्तु धर्मशास्त्र एवान्तर्भावः। रामायणाभिधादिकाव्यमहाभारतादीतिहासयोरपि च। एवं च यदुक्तमनुपमेत्यादिशिक्षाद्यङ्गविशेषणं तदत्रोपाङ्गचतुष्टयेऽपि द्रष्टव्यम्। तेनाद्वैतात्मैक्यबोधोदयसामग्री समग्राऽपि सिध्यति। अत एव तानि निरुक्तविशेषणविशिष्टाङ्गोपाङ्गान्यनु पश्चादनङ्गो न विद्यतेऽङ्गं शरीरं तदुपलक्षितं यावद्द्वैतं यस्मिन्त्स तथा। अद्वैतचिन्मात्रप्रत्यगेकरसविषयकसाक्षात्कार एव लक्षणया यस्याः सकाशात्सा तथेति यावत्। एवं निरुक्तचतुर्दशविद्यानामप्यद्वैतब्रह्मपरत्वप्रपञ्चस्तु श्रीमहिम्नः स्तवव्याख्याने श्रीमधुसूदनसरस्वतीभिस्त्रयी सांख्यं योग इत्यादिश्लोकोपरि प्रकटित एवेतीहोपरम्यते। अथ कथमेवं यद्युक्ताङ्गाद्युपबृंहिता त्रय्येव चेदुक्ताद्वैतात्मप्रबोधं प्रसुते तर्हि श्रीमच्छंकरभगवत्पादपादारविन्दपरागतः प्राक्तनैर्भर्तृप्रपञ्चभट्टभास्करादिभिर्वेदव्याख्यातृभिः स न

संपादित इति । सत्यम् । तेषामनीश्वरत्वात्तमन्तरा ह्येतस्य महतोऽलौकिकस्यास्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद इत्यादिश्रुतिसिद्धानायासस्वोत्पत्तिकस्य शब्दब्रह्मणस्तात्पर्यं निर्णेतुमशक्यत्वाच्च । अत एव तद्व्याख्याने न त्रयी सदोषैव प्रत्युत भूत्तेषां जीवकोटिनिविष्टत्वेऽप्यब्रह्मनिष्ठत्वात् । श्रीमद्भाष्यकारैस्तु तदादिधावद्भेदमतानि संदृष्ट्यैव भगवत्यास्त्रय्याः शुद्धाद्वैतचिन्मात्रैकरस्यमेव परमतात्पर्यतः सुनिरणाथीति तत्सरण्यैवासौ भेदवादिकृतान्यथाव्याख्यानलक्षणसमारोपितदोषप्रमोषेण प्रकटनिजनैसर्गिकनिर्दोषरूपाऽऽसेत्यभिसंधाय पुनरपि तां विशिनष्टि—दोषेति । अत एवानुपदोदाहृतसंक्षेपशारीरकश्लोके निरस्तेत्यादितृतीयपादोक्तिस्तथा । ननु भवत्वेवं मनुष्याणां भेदवाद एवाभिनिवेशस्तत्त्वर्षीणामपि केषांचित्केवलतार्किकाणां तथात्वमथापि वेदतात्पर्यनिर्णेतुर्महर्षेर्जैमिनेः कथं मन्त्रमय्येव देवतेति कर्मैव फलदातृ प्रपञ्चः सत्यो विग्रहवती देवता नैव तथेश्वरश्चापीति चेन्न । तस्याप्युत्तरकाण्डांशेऽनभिज्ञत्वेन तथात्वानपायादित्याकूतेन पुनरपि विशिनष्टि--सगुणेत्यादिना । गुणैः सत्त्वादिभिः सहितः । प्रकटितविष्णुविधिविरूपाक्षाभिधतत्तद्गुणमूर्तिलीलाविग्रहः परमेश्वरस्तथा सुराः शचीपतिप्रभृतयो विग्रहवन्तो देवताविशेषाश्च तैः सालंकृतिस्तत्प्रतिपादनेन सुभूषितेत्यर्थः । एतेन देवताधिकरणन्यायः समनुगृहीतो भवति । अथैवमपि किमेतज्जघन्यवृत्त्या नेति वदन्पुनरपि विशिनष्टि—चार्विति । चारु तात्पर्यानुगृहीतत्वेनातिसुन्दरी वृत्तिः शक्तिलक्षणादिवृत्तिर्यस्याः सा तथेत्यर्थः । एवं च सगुणब्रह्मप्रतिपादनादौ शक्तिर्निर्गुणतत्प्रतिपादनादौ लक्षणादिश्चेति द्योत्यते । अत एव सौभाग्येति । संपूर्णैश्वर्यवतीति यावत । नहि व्यवहारतः सगुणस्य परमार्थतो निर्गुणस्येश्वरस्यापि प्रतिपादनं विनैश्वर्यं शक्यते । अथैवमपीयं त्रयी ब्रह्मादिगुरूपदिष्टाऽपि विरोचनादिषु कुतो न सफलेत्यत आह—विशदेति । निर्मलनिश्चलादर्शस्यैव प्रतिबिम्बप्रकाशकत्ववद्विशुद्धसुनिरुद्धाप्रतिबद्धबुद्धिष्वेव विशदशब्दितयावन्मलविकलेष्वधिकारिषु वसनं स्वार्थावबोधद्वारकमवस्थानं यस्याः सा तथेत्यर्थः । एवं च विरोचनादेर्यथोक्तगुरुशास्त्रलाभेऽप्युक्ताधिकारवैधुर्यादेव फलानुत्पाद इति नैव त्रय्यामपराधगन्धोऽपीति तत्त्वम् । नहि जगन्मण्डलव्यापिप्रकाशचण्डमपि मार्तण्डमण्डलमनवलोकयन्नुलूको दिवान्धतामेवाधिगच्छतीत्यत्र वासरोऽपराध्यति । तस्मादेतादृश्यनन्तकल्याणगुणरमणीया भगवती भारती सुप्रसिद्धसमुदाहृतश्रुतेः परमेश्वरजन्याऽपि धाता यथापूर्वमकल्पयदिति श्रुत्या वाचा विरूपनित्ययेति--

अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥

इति च श्रुतिस्मृतिसिद्धस्य नित्यत्वस्य प्रवाहानादिनिधनत्वेन व्यवस्थापनात्त्रयीरूपिणी भगवद्वाणी चिकीर्षितप्रकृताद्वैतशास्त्रप्रकरणविरचनपरायणं मामच्युतशर्माणं कंचिच्चिदाभासं पुनातु यावत्तत्सिद्धिप्रसिद्ध्यादिप्रतिबन्धकदुरितदूरीकरणेन पवित्रीकरोत्विति सरल एव संबन्धः । तथा च वेदान्तविज्ञानसुनिश्चितार्था इति नावेदविन्मनुते तं बृहन्तमिति च श्रुतेर्वेद एव द्विजातीनां निःश्रेयसकरः पर इत्यादिस्मृतेरपि स एव सर्वैः सर्वेष्टसिद्धिविघटकदुरदृष्टपिष्टीकरणार्थं सर्वथा प्रत्यहं प्रार्थनीय इत्याशयः । एवं वेदावच्छिन्नं चैतन्यं संप्रार्थ्य ग्रन्थसंग्रथनसुप्रथिततत्कथनादिसामर्थ्यसार्थसुसिद्ध्यर्थं धीवागाधिष्ठात्रीं भगवतीं सरस्वतीं श्लेषालंकारतस्तेनैव पद्येन संयाचते—सौवर्णाङ्गीति । अत्र पदयोजना तु प्रागेव । तत्र देवता हीष्टकामुकैः सुहृष्टपुष्टसकलोचितालंकाराम्बरसौन्दर्यादिगुणविशिष्टा द्व्यष्टहायनवयोवत्येव ध्येयेति शिष्टसंप्रदायात्तथात्वाय तां दर्शयितुं विशिनष्टि—सौवर्णेत्यादिभिर्विशेषणैः । तत्राऽऽदौ ध्यातुर्बुद्धिवृत्तौ प्रत्यक्ष इव ध्येयविग्रहलावण्यादिविशिष्टवर्ण एव प्रतिभातीत्यस्यामीषद्रजःसमुपहितसात्त्विकतामेवाऽऽदौ व्यनक्ति—सौवर्णेति । सुवर्णस्य कनकविशेषत्वेन प्रसिद्धस्य जाम्बूनदाख्यहेम्न एव विकारास्तात्त्विकान्यथाभावरूपाः परिणामा अङ्गानि आननाद्यवयवविशेषा एव न तु शिरोरुहादि यस्याः सा तथा । निरुक्तकांचनपरिणामतापन्नवदनाद्यवयवविशेषेत्यर्थः । परममृदुत्वं कनककेतककोमलदलगर्भगौरवर्णरमणीयत्वं विचित्रलावण्यरूपनिरतिशयकान्तिमत्त्वं च तथा कुन्तलादीनां नीलतरत्वेऽपि दृग्भागविशेषादीनां शुक्लतरत्वेऽपि तत्कोणादीनामरुणतरत्वेऽपि च नैव क्षतिरिति च सूचितम् । नो चेदङ्गशब्देन शरीरग्रहे तदापत्तेर्दुर्निरासत्वात् । ततो हि तस्य शिरस्येव दृक्प्रसरतीति तत्साद्गुण्यं सूचयति—सुघनेति । सुतरामत्यन्तं घना निबिडाश्चिकुराः केशा यस्याः सा तथा । उपलक्षणमिदं तन्नील्यारालानिसर्गसुस्निग्धसुगन्धदीर्घत्वादेः । ततो वालपाश्यादिमौक्तिकहीरकादिरत्ननिकरललितारुणतरकाश्मीरविशेषकविशेषभूपितामृतनिध्यर्धीभूतभालतलविलोकनोर्ध्वं भ्रूवल्लरीयुगुलपरिसरे संचरन्ती तद्वृत्तिर्लोचने एव संचिन्तयतीति तदतुलतां द्योतयति—प्रोल्लसदिति । प्रकर्षेण चकोरेन्दीवरमीनखञ्जनापेक्षयाऽपि वैलक्षण्येन उल्लसन्ती मन्दस्मितसूचकालोचनविशेषेण संफुल्ले लोचनाब्जे नयनकमले यस्याः सा तथा । सुविकसितनैत्रनीलोत्पलेति यावत् । ततस्तस्य तदभ्यर्णवर्तिकर्णयोरेव चित्तं यातीति तदाभरणसमृद्धिं ध्वनयति—मुक्तेति । मुक्ताभिः सुवर्णसूत्ररत्नताटङ्काद्यलंकारविशेषसंगुम्फितमौक्तिकवरनिकरैरुद्भासिन्यौ परमकान्तिमत्यौ श्रुती श्रोत्रे यस्याः सा तथा । स्थूलमुक्ताफलसंग्रथितमणिवरताटङ्काद्याभरणभूषितकर्णेत्यर्थः । उपलक्षणमिदं महामौक्तिकविसरपद्मरागवराविराजमानकाञ्चनसूत्रवस्त्वविचित्रतिलकुसुमाकारोन्नतनासिकाया अपि । अधरारु-

गिमादिवर्णनं तु लोचनविशेषणीभूतमोल्लसत्पदसूचितमन्दस्मितेनैव ध्वनितम् । एवं च संपूर्णशरद्रोहिणीरमणसुफुल्लकाञ्चनकमलवैभवापहारिवदनत्वं तस्यां व्यज्यते । अथ कण्ठादधः पादपद्मनखान्तसर्वाङ्गसौन्दर्यं लोकोत्तरमेवेति प्रत्येकं संवर्णनामशक्यमेवातः सामान्यतोऽनौपम्यमेव तत्राऽऽह—अनुपमेत्यादिपूर्वार्धशेषेण । अनुपमं यावदुपमानहीनं यथा स्यात्तथा भ्राजन्ति दीप्यमानानि यान्यङ्गानि स्कन्धादिपदनखान्तावयवास्तैरनु पश्चात्—अहो किमस्याः सौन्दर्याग्रे मया पुरंदरादिसकलामरसुन्दरेणापि स्थातव्यं तृणायितेनेति ह्रियाऽवस्थितोऽत एव भग्नसौन्दर्यगर्वत्वादनङ्गः शरीरशून्य एव मदनो यस्याः सा तथा । स्वावयवसौन्दर्यतुच्छीकृतकामेत्यर्थः । एतेन स्वध्यानधनानां स्मरबाधनं नैवेति ध्वनितम् । ननु भारती हि प्रकृता ब्राह्मी शक्तिरित्युक्तं सिद्धान्तबिन्दौ । तथा च शिवशापवशात्तस्यापूज्यत्ववत्तच्छक्तेरेतस्या अपि तथात्वापत्तिरित्याशङ्क्य सरस्वतीमावाहयामीति सामान्यतो ब्राह्मणत्वावच्छेदेनानुष्ठेयसंध्योपासनप्रकरण एव तैत्तिरीयश्रुतेर्मैवमिति सूचयति—दोषेति । न हि शशिनः कलङ्कित्वादिकमुपैति रोहिणीमपीति भर्तृनिष्ठशापसंपर्कशून्येत्यर्थः । एतेन निर्दोषं हि समं ब्रह्मेति स्मृतेः प्रकृतदेवताया अपि तथात्वादवश्यध्येयत्वं ध्वन्यते । तत्र हेत्वन्तरमपि कण्ठत एवाऽऽवेदयति—सगुणेत्यादि । गुणाः प्रकृते ऐश्वर्यादयः प्रसिद्धाः षोढाऽनन्ता वा । सात्त्विकसात्त्विकत्वेन सुष्ठु रसः प्रकृते शान्त एव । तथाऽलंकृतयः पूर्वोक्तरयावद्रमण्याभरणानि ते च स च ताश्चेति तथा । तैः सहिता अनन्तकल्याणगुणवती प्रशान्तपावनप्रकृतिः सर्वालंकारभूषिता चेति यावत् । एतेन सात्त्विकैकाराधनीयत्वं ध्वनितम् । रसानां सात्त्विकत्वायुक्तिस्तु मामके साहित्यसार एव ज्ञेया । न चैवमपि भक्तमनोरथपूरकत्वे किमायातमिति वाच्यम् । वक्ष्यमाणरीत्याऽनुपदमेव तत्प्रधानत्वस्य दिद्योतयिषितत्वादित्याशयेनाऽऽह—चार्विति । चारुर्वरदाभयहस्तत्वेन भक्तकामकल्पलतायमाना वृत्तिर्वर्तनशब्दितावस्थितिर्यस्याः सा तथा । आर्थिमनोरथपूर्तिसूचकवरदाभयमुद्रितशयकुशेशयावस्थानेत्यर्थः । एतेन सुप्रसन्नत्वं व्यज्यते । अत एव सौभाग्यसूचकमङ्गलसूत्रादिमत्त्वमपि तत्राऽऽवेदयति—सौभाग्येति । तत्रापि किं रजोगुणप्रधानविधातृशक्तित्वेन तादृश्येव नेत्याह—विशदेति । परिहितसिताम्बरेत्यर्थः । एतादृशी भगवती सरस्वतीरूपा भारतीशब्दिता अद्वैतचितिरेव मां पुनात्वित्यादि प्राग्वदेव । तथा चोक्तलक्षणैव सरस्वती ध्येया विद्याकामैरिति भावः ।

इत्थं भगवतीं सरस्वतीं संप्रार्थ्य निरुक्तालंकारत एव पुनस्तेनैव पद्येनाद्वैतात्मानुभूत्यवच्छिन्नाचितिमपि प्रकृतप्रकरणरचनलक्षणविक्षेपकालेऽपि तत्प्रसादेन

तत्त्वानुसंधानलक्षणजीवन्मोक्षाधिकारितैवास्तीति तस्याग्रहं निक्षिपते—सौवर्णेति । सुष्ठु ईश्वरसमुच्चारितत्वेनोक्तप्रवाहानादित्वादिना च लोकविलक्षणा ये वर्णास्तत्त्वमस्यादि-महावाक्येषु तकाराद्यक्षराणि तेषामिमानि तत्समुदायरूपाणि तत्त्वमस्यादीनि तत्तच्छा-स्त्युपदेशश्लाघ्यानि तत्तच्छाखामहावाक्यानि तैस्तदधिकार्यवच्छेदेनाज्ञमद्वैतब्रह्मात्मै-क्यविषयकाज्ञानतत्प्रयुक्तयावद्द्वैतबाधकं निरुक्तैक्यमात्रविषयकचरमवृत्त्याख्यसा-क्षात्कारलक्षणं शरीरं यस्याः सा तथा । तत्त्वमस्यादिमहावाक्यैककरणकशरीरेत्यर्थः ।

एतेन जीवत्वेश्वरत्वोपलक्षितचिन्मात्रैक्यविषयकसाक्षात्कारस्य वेदान्तविज्ञानसुनि-श्चितार्थाः, नावेदविन्मनुते तं बृहन्तमित्याद्यनेकश्रुतिसिद्धं निरुक्तप्रमाणैक-राजन्यत्वं व्यज्यते ।

ननु जडाया वृत्तेः कथं निरुक्तनिखिलप्रपञ्चविरोधित्वम् । न चासाक्षात्कारा गुरू-क्तितेरपि न तदिति सांप्रतम् । इष्टापत्तेः । नाप्येवं चेदनिर्मोक्षापत्तिः । तव मते तथात्वेऽपि मतान्तरे तत्सिद्धेः । न च तेषामतत्त्वावेदकत्वेनोपेक्षणीयत्वमिति वाच्यम् । विनिगमनाविरहादत्रापि तथात्वात् । नापि सकलप्रमाणमूर्धन्यागमतात्पर्यनिर्णय एव विनिगमक इति युक्तम् । उक्तानुपपत्त्यैव तस्याप्यसिद्धत्वादिति चेद्बाढम् ।

केवलवृत्तेस्तदसामर्थ्येऽपि चित्प्रतिबिम्बच्छायास्तत्सिद्धेरबाधितत्वात् । यथा वेप-क्षमण्याः क्वचिदप्यक्षराव्यञ्जकत्वेन तदज्ञानबाधकत्ववैधुर्येऽपि निर्मलपत्रविशेषेणाव-च्छिन्नायास्तत्तल्लिप्या अक्षराकारतामभ्यस्ततयैव नीतायाः प्रत्यक्षमेवाक्षरव्यञ्जकत्वेन तदज्ञानविनाशकत्वम् । तथा केवलाया वृत्तेस्तत्त्वैक्यलक्षणाक्षराव्यञ्जकत्वेन तदज्ञाना-दिसमुच्छेदकत्वासंभवेऽप्यधिकारिविशेषावच्छेदेनाचार्यसमुपदिष्टनिरुक्तश्रुत्या तदा-कारतां नीतायास्तस्यास्तत्प्रतिबिम्बग्रहाविनाभावात्तदज्ञानादिद्वैतमात्रबाधकत्वं समु-चितमेवेत्याकूतं मनसि निधायाहऽऽह—सुघनेति ।

सुघनपदं तु प्रथमपक्ष एवाद्वैतात्मपरतया व्याख्यातमेव । तथा च सुघनं स्वप्र-काशानन्दरूपं निरुक्तैक्यमेव चिकुरेष्विव प्रतिबिम्बितत्वेनाग्रभागे यस्याः सा तथा । प्रतिबिम्बितब्रह्मात्मैक्येति यावत् । अत एव प्रोल्लसदिति । यतश्चरमवृत्तिरेवोक्तरीत्या ब्रह्मात्मैक्यस्वप्रकाशनिरतिशयानन्दाभिव्यक्तिद्वारोक्तदृश्योच्छेदिकाऽतोऽसौ प्रकर्षेणो-क्तानन्दाश्रुकलाकुलत्वलक्षणोत्कर्षेणोल्लसती लोकोत्तरं विकसमाने लोचनाब्जे स्वाश्र-यशरीरिनेत्रकमले यया सा तथेति यावत् ।

तत्र हेतुः—मुक्तेति । मुक्तो जीवन्मुक्तः श्रीगुरुस्तेनोद्भासस्तत्पदार्थादिविवेको यस्यास्तादृशी श्रुतिस्तत्त्वमस्यादिमहावाक्यं यस्याः सा तथा । संबन्धोऽत्र निरुक्त-श्रुत्या सह ब्रह्मात्मैक्यप्रमितेर्जन्यजनकभाव एव । तथा च ब्रह्मनिष्ठसद्गुरुणा तत्पदा-र्थादिविवेचनपूर्वकं समुपदिष्टतत्त्वमस्यादिमहावाक्यजन्येत्यर्थः । सौवर्णाङ्गीत्यत्र वाक्य-

विशेषैकफरणकत्वोक्तावपि संप्रदायिकविचारपूर्वकत्वानुक्तेर्न तेन सहाप्य पौनरुक्त्यम् । नापि सुघनेत्यादिभ्योल्लसदित्यादिभ्यां गतार्थता । अन्तःकरणस्य सत्त्वप्रधानत्वेन वृत्तिमात्रस्यापि चित्प्रतिबिम्बवैशिष्ट्यनियमात् । पुत्रस्ते जात इत्यादिवाक्यश्रवणोत्तरं पुत्र्यहमिति संजातशाब्दापरोक्षप्रमाविशेषेऽप्यानन्दाश्रुजनकत्वसंभवाच्च ।

ननु भवत्वेवं चरमवृत्तेः सर्वदृश्यविध्वंसकत्वमथापि तस्याः कः प्रध्वंसकः किमात्माऽनात्मा वा । नाऽऽद्यः । तस्यासंगतत्वात् । नान्त्यः । वृत्तीतरस्य तस्यासत्त्वात् । नापि स्वनाश्यत्वम् । आत्मसमवेतगुणानां बुद्ध्यादिप्रबलानान्तानां स्वोत्तरगुणनाश्यत्वादिति चेन्न । सुप्त्यादिप्राक्कालिकबुद्ध्यादौ सुप्त्यादिनाश्यत्वदर्शनेन व्यभिचारादुक्तनियमासंभवात् । वक्ष्यमाणस्वाप्नप्रमावदत्रापि स्वस्वेतरदृश्यध्वंसकत्वाङ्गीकाराच्चेत्याशयेनाऽऽह–अनुपमेति ।

अनुपमं यथोक्तगुरुशिष्यसंसर्गजन्यत्वेन विलक्षणं भ्राजन्ति प्रमाणाद्यसंभावनादिपूर्वोक्तप्रतिबन्धनाशनसमर्थत्वेन दीप्यमानानि यान्यङ्गानि श्रवणमनननिदिध्यासनाभिधान्तरङ्गसाधनानि तानि अनु पश्चात् श्रोतृत्वाद्यभिमानविनाशनानन्तरमित्यर्थः । उपलक्षणमिदमविद्यातदधीनयावद्दृश्यस्यापि । अनङ्गा न विद्यते अङ्गं शरीरं यस्याः सा तथा । निर्मूलितस्वस्वेतरसर्वद्वैतेत्यर्थः । तदुक्तमात्मबोधे श्रीमद्भाष्यकारपादारविन्दपरागैः—

अज्ञानकलुषं जीवं ज्ञानाभ्यासेन निर्मलम् ।
कृत्वाऽज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ॥ इति ।

श्रीमद्वार्तिककारचरणैरपि—

तत्त्वमस्यादिवाक्येभ्यो याऽहं ब्रह्मेति धीर्भवेत् ।
नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥ इति ।

कल्पतरुकारैरपि–शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयत इति । यथा हि–कर्पूरज्वाला स्वात्मानं स्वदाह्यं कर्पूरं च विनाशयन्त्येवोज्जृम्भते तद्वदुक्तवृत्तिरपि स्वस्वेतरोपाध्योः स्वतद्भिन्नदृश्ययोर्निवृत्तिध्वंसो यया तादृश्येवोदयते । प्रकाशत इत्यर्थः ।

ननु निरुक्तलक्षणमाधुनिकानां सुदुर्लभमेव तत्त्वज्ञानम् । प्रतिबन्धबाहुल्यात् । कचिद्गुरुशास्त्रादिलाभेन श्रवणादिसाधनैः प्रमाणासंभावनादीनां तेषामवमोषेण तदाविर्भावसंभवेऽपि भूताद्यैरन्यैस्तैः प्रतिबद्धस्य तस्याधस्तात्समुदाहृतभगवत्पराशरवचसा मोक्षदानादक्षत्वात् । भूतादयः प्रतिबन्धास्तु प्रपञ्चिताः श्रीभारतीतीर्थैर्ध्यानदीपे सप्रमाणोदाहरणम्–

धूमः पुनर्विचारेऽपि विषयासक्तिबन्धतः ।
न वेत्ति तत्त्वमित्येवश्रुतिके सम्यगीरितम् ॥
कुतस्तज्ज्ञानमिति चेत्तद्धि बन्धपरिक्षयात् ।
असावपि च भूतो वा भावी वा वर्ततेऽथवा ॥
अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ।
हिरण्यनिधिदृष्टान्तादिदमेव हि दर्शितम् ॥
अतीतेनापि महिषीस्नेहेन प्रतिबन्धतः ।
भिक्षुस्तत्त्वं न वेदेति लोके गाथा प्रगीयते ॥
अनुसृत्य गुरुः स्नेहं महिष्यां तत्त्वमुक्तवान् ।
ततो यथावद्वेदैष प्रतिबन्धस्य संक्षयात् ।
प्रतिबन्धो वर्तमानो विषयासक्तिलक्षणः ।
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः ॥
शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम् ।
नीतेऽस्मिन्प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते ॥
आगामी प्रतिबन्धश्च वामदेवे समीरितः ।
एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिरिति ॥

विस्तरस्तु पूर्णानन्देन्दुकौमुद्याख्यायां मदीयतद्व्याख्यायामेवानुसंधेय इति चेत्सत्यम् । वर्तमानस्य तस्योक्तरीत्यैव निरस्तत्वाद्भूतभाविनोस्तु श्रीगुरुचरणारविन्दनखेन्दुप्रसादादेव प्रागुक्तत्रिभूमिकजीवन्मुक्तिफलावधिकापरोक्षनिर्विचिकित्सनिरुक्तैक्यप्रबोधे सति तदभावलक्षणलिङ्गाभावेन कल्पयितुमशक्यत्वाच्चेत्यभिसंधायाऽऽह–दोषेति । दोषैर्निरुक्तनिखिलप्रतिबन्धैरस्पृष्टा श्रीगुरुप्रसादबलादकलङ्कितेत्यर्थः ।

अत एव–सगुणेति । गुणाः शमादयः सुरसः शान्तरस एव तैर्याऽलंकृतिर्यावद्दृश्यविषयकालंबुद्धिस्तया सह वर्तत इति तथा । आप्रारब्धं द्वैतप्रतिभासेऽपि सर्वत्र मिथ्यात्वदार्ढ्येनालंबुद्धिसहितेत्यर्थः । अत एव–चार्विति । चारुः स्ववर्णाश्रमधर्माद्यनुसारित्वेनातिरम्यैव न तु यथेष्टचेष्टारूपा वृत्तिर्दक्षिणावर्तभ्रामितचक्रन्यायेन प्राक्तनसत्संस्कारमूलकसत्प्रवृत्तिरेव यया सा तथेत्यर्थः । एतेन स्वैराचारवादः परास्तः ।

अत एव–सौभाग्येति । वसनान्तमप्येकमेवेदं पदम् । भगशब्दितषोढैश्वर्यमध्ये शोभनमैश्वर्यं हि वैराग्यमेव । तथा च स्मर्यते—

यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपीति ।

तथा च सौभाग्यमत्र वैराग्यमेव । शोभनं भगं वैराग्याभिधमैश्वर्यं यस्येति सुभगस्तस्य भावः सौभाग्यमिति व्युत्पत्तेः । तेनैवाऽऽढ्येषु संपत्तिमत्सु आ समन्ताद्विशदं व्यक्तं वसनं निवसनं यस्याः सा तथा । विरक्तवरैकानुरक्तेत्यर्थः । एतादृशी भारती भाति प्रकाशते दृश्यमनया सा भा साक्षिचितिः । यद्वा भाति स्वयमेव सर्वदा प्रकाशत इति भा अद्वैतात्मचितिस्तस्यामेव रतमात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द इति श्रुतेः । सुरतमिवैक्यानुसंधानजन्यं संप्रज्ञातसमाधिसुखं यस्य भारतस्तस्येयं भारती । जीवन्मुक्तसंबन्धिनी निरुक्तकथा ब्रह्मविधेत्यर्थः । मामुक्तचिदाभासम् । इमामिति वा छेदः । आत्मत्वेनैव भासमानयावदृदृश्यसरणिमित्यर्थः ।

एवं च निरुक्तचिदाभासीयाखिलद्वैतमपि संगृहीतं स्यात् । पुनातु सर्वदा तत्त्वानुसंधानस्फोरणेन वास्तविकपवित्री करोत्वित्यन्वयः स्पष्ट एव । एवं प्राक्प्रतिज्ञातरीत्याऽर्थत्रये विवृतेऽपि मुख्येऽथ समासोक्त्यलंकारेण चतुर्थोऽपि श्रीमन्महारामायणाभिधसबृहद्योगवासिष्ठषट्पञ्चाशत्साहस्र्यात्मकभरतवर्षास्थितभगवद्वाल्मीक्यभिधमहर्षिप्रणीतादिकाव्यवाणीपक्षेऽपि प्रतीयत इति सोऽपि प्रकृते कविरनुहरति च्छायामिति न्यायादादरणीय एवेति दिङ्मात्रेण निर्दिश्यते—सौवर्णेति । शोभनाः श्रुतिकटुत्वादिहीना वर्णा अकारादित्रिषष्ट्यक्षराणि यस्याम् । दुःस्पृष्टाख्यस्य ळकारस्य ऋगादिवेदमात्रप्रसिद्धत्वान्नोक्तसंख्याविरोधः । तादृशां पदानां वधादिरूपिणो च इमे तपःस्वाध्यायेत्यादयो वाक्यरूपाः समूहास्त एवाङ्गं शरीरं यस्याः सा तथा । श्लोकोक्तवर्णादिरचनारूपेत्यर्थः ।

तत्र हेतुत्वेनार्थतो महत्त्वं कथयति—सुघनेति । सुघनमद्वैतब्रह्मात्मैक्यमेव चिकुरेष्विव पूज्येषु योगवासिष्ठीयवैराग्यादिषट्सु प्रकरणेषु यस्याः सा तथेति यावत् । अत एव प्रोल्लसती आनन्दाश्रुमकरन्दबिन्दुशालिनी लोचनाब्जे श्रोतृनेत्रकमले यया सा तथा । तत्र हेतुः—मुक्तेति । मुक्तमखण्डबन्धविधुरमद्वैतं ब्रह्मैव उद्भासयति द्वैतमिथ्यात्वात्मैक्यपूर्वकं प्रतिपादयति तादृशी श्रुतिस्तत्त्वमस्यादिरूपा तात्पर्यार्थतो यत्रेति ।

भवत्वेवं योगवासिष्ठावच्छेदेनास्यां ब्रह्मकाण्डोपबृंहकत्वं तथाऽपि तत्साधनीभूतकर्मकाण्डं तु नैवात्र संग्रथितामित्यत आह--अनुपमेति । पूर्वरामायणावच्छेदेन निःसीमसूच्यमानोक्ताङ्गीभूतधर्मप्रतिपादनान्तरमेवोत्तररामायणावच्छेदेनाशरीराद्वैतब्रह्मपरेत्यर्थः । उत्तरार्धगतविशेषणपञ्चकं तु काव्यलक्षणसंपत्त्यै । तत्रापि तृतीयपादो निगदव्याख्यात एव । शिष्टं तद्द्वयं तु क्रमादक्षरसंहत्यादिलक्षणवैदर्भ्यादिरीतिसंग्रहार्थमेव । अत्रापि इमामित्येव च्छेदः । तथा च चिकीर्षितत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षां प्रकृतप्रकरणरचनामित्यर्थः ।

एतेन तत्तौल्यमत्र भवत्विति निरुक्तप्रार्थनीयां प्रति स्वाशयः सूच्यते । पुनातु तादृग्याचनप्रतिबन्धकदुरितदलनेन विमलयत्विति योजना । एवं भारतस्येयमिति व्युत्पत्त्या महाभारतरूपभगवद्बादरायणवाणीपक्षेऽप्यूह्यमित्यलं पल्लवितेन । इह भक्तिरेव शान्तव्यक्ता रसः । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति वृत्तम् ॥३॥

इत्थं श्रुत्याद्यवच्छिन्नचितीः संप्रार्थ्य त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति नमः परमऋषिभ्यो नमः परमऋषिभ्य इति श्रुतेस्तद्विद्धि प्रणिपातेनेति स्मृतेश्च तत्त्वविद्यायाः प्रागूर्ध्वं च श्रीगुरुवन्दनस्यैवाऽऽवश्यकत्वात्तांस्तु शास्त्रशिवस्मरणशुद्धजीवेश्वरैक्याप्रतिबद्धाबाधितसाक्षात्कारप्रदत्वेन त्रीनपि चित्त्वेन चरमगुर्वभिन्नतयैव प्रणमन्नेतत्प्रकरणस्याद्वैतशास्त्रीयत्वात्तत्प्रणेतृभगवद्बादरायणशंकरसुरेश्वराचार्यचरणप्रणमनमपि काव्यार्थापत्त्यलंकारेण व्यनक्ति य इत्यादिशार्दूलविक्रीडितेन—

> यो नारायणरूपतः श्रुतिसतीसीमन्तरत्नप्रभा-
> विध्वस्ताखिलहृत्तमस्कमकरोन्मामात्मरत्यादिषु ।
> श्रीमच्छंकरदेशिकेश्वरपुनर्नूतनावतारं परं
> वन्दे श्रीरघुवीरसद्गुरुवरं तं द्वैतशून्यं शिवम् ॥ ४ ॥

तं वक्ष्यमाणगुणकम् । श्रीति । श्रीमान्सद्गुणैश्वर्यजीवन्मुक्तवर्यत्ववान्स चासौ रघुवीरः । रलयोः सावर्ण्यात्सार्वाशिकाधिकारिसंपद्वैधुर्येण लघवोऽतिफल्गवोऽप्यस्मदादयो वीराः कालत्रयेऽप्यदृष्टमहामोहतत्प्रयुक्तप्रपञ्चरूपशत्रुत्वेन संभावितपराक्रमा एव येन स तथा । यथार्थैतन्नामानमित्यर्थः । अत्रापि द्वितीयपद्यबोधितरीत्या नाथेतिस्थाने वीरपदप्रयोगो ज्ञेयः । एतादृशो यः सन्कालत्रयाबाध्यः परमात्मा । ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः । गुरुषु स्यान्निषेकादिकृद्गुरुरित्यमरोक्तेर्गृणन्ति हितमुपदिशन्तीति व्युत्पत्तेश्च पित्रादिषु हितोपदेष्टृषु वरस्तथा ।

श्रीरघुवीरेत्यनेन कर्मधारयविग्रहस्तु संश्चासौ गुरुवरश्चेत्येकवारं सत्पदेन सह विधाय पुनः कार्यः । तथा च निरुक्तशर्मब्रह्मनिष्ठमखिलगुरुश्रेष्ठमित्यर्थः । इह श्रीमानिति मतुपो लोपेन गन्धद्विपादिवत्समासः । अत्र श्रीपदेनाऽऽचार्येऽचिन्त्यशक्तिमत्त्वं अत एव रघुवीरपदस्थेक्तव्युत्पत्तिसामर्थ्यसत्त्वं च सदिति ब्रह्मनिष्ठत्वं तत एव गुरुवरपदेनोक्तिलपित्राद्यधिकादरणीयत्वं च सूचितम् । एतादृशमपि वस्तुतः । द्वैतेति । त्रैकालिकानवकलितदृश्येन्द्रजालमिति यावत् । अनेन द्वितीयाद्वै भयं भवतीति श्रुतेर्निर्दुःखरूपत्वं व्यज्यते ।

तत्र तार्किकमतमुक्त्यापाचिरतः शिवं स्वप्रकाशप्रत्यगानन्दं वन्दे कायिकादिरूपनिरतिशयस्वनिकृष्टतापूर्वकपूज्यौत्कटयव्यञ्जकत्रिविधप्रह्वीभावलक्षणवन्दतिकर्मतामिव नयामीत्यन्वयः । अत्राहमिति कर्त्रनुक्तेस्तदध्याहारेणैव वाक्यं पूरयता तस्य सर्वात्मना मिथ्यात्वमनादरादेव द्योतितम् ।

युक्तं चैतत् । निरतिशयनिकृष्टत्वस्य वन्दितुस्तदन्तराऽसिद्धेः । तथा च प्रकृते आभासवादरीत्या बाधायां सामानाधिकरण्यं चोरः स्थाणुरेवेत्यादिवदाहत्य जहत्स्वार्थाख्यलक्षणयैव तत्त्वमस्यादिमहावाक्यार्थस्याखण्डैकरस्यं निरुक्तलक्षणनमस्क्रियाकालावच्छेदेनाप्यनुसंधीयमानतया व्यज्यते ।

ननु भवत्वेवं सद्गुरोरद्वैतब्रह्मनिष्ठत्वादीश्वरत्वोपलक्षिताचिता सार्धं सर्वदृश्यमिथ्यात्वपूर्वकं तदैक्यानुसंधानं सकलेष्टनिदानं तथाऽप्युक्ताद्वैतस्यैव सिद्धिः कुतः श्रद्धेया । न च तत्त्वमसि नेह नानेत्यादिश्रुतिसहस्रेणैवासौ सुप्रसिद्धैवेति सांप्रतम् । प्रत्यक्षादिविरोधेन तस्या एव यथाश्रुतार्थतात्पर्यकत्वानिर्णयासंभवात् । नापि सूत्रकारादिभिस्तस्याध्यवसितत्वेन हेतोः स्वरूपासिद्धिरिति युक्तम् । भेदवादिसूत्रकारादिभिर्भेदादिसत्यताया अपि सुनिश्चितत्वेन तदनादरे कारणाभावात् । न ह्यास्तिकाद्येकादशदर्शनवादितदेकदेशिवादिशतमतानि तृणीकृत्य केवलमद्वैतिमतमेव निःश्रेयसकामैरवलम्बनीयमिति राजाज्ञा । तस्मान्नैवोक्ताद्वैते श्रुतितात्पर्यमेवाऽऽदाविति चेन्न ।

अद्वैतशास्त्रसूत्रकारादीनां परमेश्वरावतारत्वेन भेदवादिसूत्रकारादिभिस्तृणद्रुहिणवत्साम्यासंभवात् । तथैवाग्रे मूल एव स्फुटीकरिष्यमाणत्वाच्चेत्याशयेन शिवं विशिनष्टि—श्रीमदित्यादितृतीयपादेन । परम् । अत्यन्तं यथार्थमेवेति यावत् । न तु भाक्तम् । क्रियाविशेषणमिदम् । श्रीमान्विष्ण्ववतारीभूतः को वाऽन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदिति स्मरणाद्भगवान्बादरायणः शंकरदेशिकः ।

भव शंकरदेशिक मे शरणमिति श्रीत्रोटकाचार्यवचनाच्चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यतीति वायुपुराणाच्च, ईश्वरः सुरेश्वरश्चतुराननावतारीभूतत्वेन वैद्यारण्यके श्रीशंकरविजये प्रसिद्ध एवेति श्रीमच्छंकरदेशिकेश्वराः सूत्रभाष्यवार्तिककाराः श्रीहरिहरचतुराननत्वेनोक्तरीत्या प्रसिद्धा एव । ते पुनः कृष्णद्वैपायनस्य द्वापर एवावतारप्रसिद्धेः श्रीमद्भगवत्पूज्यपादश्रीविश्वरूपापराभिधसुरेश्वराचार्ययोः कलावेवावतारप्रसिद्धेश्च श्रीरामाद्यपेक्षयाऽपरवारं नूत्ना निरुक्ताद्वैतशास्त्रप्रतिष्ठापकत्वाल्लोकोत्तरत्वेनाभिनवा अवतारा लीलाविग्रहविशेषाविर्भावा यस्य स तथा । तं निजाभिनवावतारीभूतहरिहराहिरण्यगर्भस्वरूपश्रीबादरायणशंकरभवत्पादसुरेश्वराचार्याभिधद्वैतशास्त्रसूत्रभाष्यवार्तिककारमित्यर्थः ।

एतेन--अहो प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्त इति श्रुतेर्यस्य निर्गुणस्य परशिवस्य नमस्क्रातिकर्मत्वासंभवाद्ब्रह्मविद्विशिष्टत्वेन ( ब्रह्मात्मैक्यप्रमावैशिष्ट्येनेत्यर्थः) । वास्तविकतदभिन्नं निरुक्तश्रीगुरुमवच्छेदकीकृत्य प्रागुक्तनमस्कृतिरेव सर्वेष्टपुष्टिस्तस्य परमात्मनोऽस्मदादिभक्तदृशा कल्पितहरिहरहिरण्यगर्भाभिधस्य साक्षादवतारीभूताः श्रीबादरायणशंकरभगवत्पादसुरेश्वराचार्याः प्रोक्तसूत्रादिकर्तारः सततं सर्वभावेन नमस्कार्या इति किमु वक्तव्यमिति द्योत्यते ।

तस्मात्तान्प्रत्येवाऽऽदावहमहरहः संप्रणम्यानन्तरमेव स्वगुरून्प्रणौमीत्याकूतम् । ननु तथाऽपि तच्छब्दाकाङ्क्षितं तदवस्थमेवेत्याशङ्क्य तत्पूरयति--य इत्याद्येन पूर्वार्धेन । यः परशिवः । नारायणेति । नराय मादृशायानधिकारिणे जीवाय हितं नारं तस्यायनमद्वैतशास्त्रशिवस्मरणोपदेशाभ्यां प्रापणं यतस्तौ । तथा षष्ट्युपाह्वश्रीमन्नारायणशास्त्रिश्रीमहादेवाभिधब्रह्मचारिविशेषात्मकाद्वैतशास्त्रशिवभक्तिगुरू तयो रूपेणेति तथा तदात्मनेति यावत् । सार्वविभक्तिकोऽयं तसिः । माम् । आत्मेति । एवं बिजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द इति श्रुत्युक्तचतुर्विधजीवन्मुक्तावस्थाविशेषेष्वित्यर्थः । सत्त्वापत्त्यादिप्रागुक्तचतुर्विधफलीभूतभूमिकाविशेषविषय इति यावत् ।

श्रुतीति । श्रुतिस्त्रयी सैवाद्वयप्रत्यगेकपातिव्रत्यात्सती साध्वी तस्याः सीमन्त उपनिषद्भागस्तत्रालंकारत्वेन निबध्यमानमुक्तावल्यग्रगुम्फितहीरकवरमण्यभिधरत्नमिव स्वप्रकाशत्वाच्छक्तिलक्षणादिकं कमपि किंचिदपि संबन्धमनपेक्ष्यैव ब्रह्मात्मैक्यप्रबोधकं 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इति स्वशाखोपनिषन्महावाक्यमेव तस्य या प्रभा तज्जन्यौक्यसाक्षात्कार एव तमउन्मूलकत्वात्प्रभाशब्दितश्चरमः प्रबोधस्तेन विध्वस्तं निर्मूलितमेकाज्ञानपक्षेऽखिलान्सर्वजीवान्हरति स्ववशतां नयतीत्यखिलहृदेतादृशं तमो मूलाज्ञानं तत्प्रयुक्तं दृश्यं च यस्य स तथा ।

नानाज्ञानपक्षे तु--अखिलं ससंस्कारं हृत्तमोऽन्तःकरणनिष्ठमज्ञानं यस्य स तथा । सर्वथाऽपि निरस्ताज्ञानतदधीनद्वैतमित्यर्थः । एतादृशमकरोत् । निरुक्तशास्त्राद्यभ्यासादिना सर्वप्रतिबन्धसमुच्छेदनद्वारा निरुक्ताद्वैतनिष्ठासंप्रतिष्ठितं चकारेति संबन्धः ।

एतेन निजविद्याप्रदशिवस्मरणप्रदाद्वैतात्मैक्यप्रबोधप्रदानां त्रयाणामपि गुरूणां सूत्रकारादिभिस्त्रिभिः प्राचीनाचार्यैरुपमानोपमेयभावस्तथा श्रुतिरिव सतीति विग्रहेण योगादात्मरत्यादिश्लिष्टपदद्योतितसमासोक्त्यलंकारेण त्रयीवत्स्वपतिमात्रानुरक्तत्वेन महासती भगवती लक्ष्मीर्यथाऽऽत्मरत्यादिशब्दितपुरुषायितादिविलासविशेषावस्थावच्छेदेन

नारायणेत्यत्र आपो नारा इति प्रोक्ता इत्यादिस्मृतिसिद्धनारायणशब्दशक्यं जलशायिरूपं यस्य। तस्यैः सार्वविभक्तिकत्वोक्तेर्भगवन्तमूर्ध्वरेतसमच्युतं स्वसीमन्तसंबद्धमुक्तावत्पप्र-संगुम्फितस्वप्रकाशमाणिविशेषप्रभाप्रसारेण विनाशितस्वच्छायैकसंभावितसंपूर्णवक्षःस्थलतिमिरं चरीचकार।

तथा भगवती श्रुतिरपि श्रीगुरुत्रयचरणकुशेशयकृपयाऽऽत्मरत्यादिशब्दितजीवन्मुक्त्यवस्थाचतुष्टयावच्छेदेन मामच्युतशर्माणं सीमन्तरत्नप्रभाशब्दितनिरुक्तमहावाक्यैककरणकशाब्दापरोक्षाप्रतिबद्धनिरुक्तैक्यविषयकसाक्षात्कारेण निर्मूलिताज्ञानतदधीनद्वैतमतनोदित्यप्यसौ ( उपमानोपमेयभावः ) शृङ्गाररससूचनद्वारा शान्तरसव्यञ्जकः प्रद्योत्यते। नन्वस्त्वेवं सर्वं सुरसमथापि यदुक्तं शक्त्यादिकं किमप्यनपेक्ष्यैव वेदान्तमहावाक्यस्योक्त्युदयमात्रेणैवाधिकारिण्युक्तप्रमाजनकत्वमिति तदसांप्रदायिकं सर्वत्राद्वैतग्रन्थेषूक्तस्थले जहदजहत्स्वार्थाख्याया भागत्यागलक्षणाया एवाङ्गीकृतत्वादिति चेत्सत्यम्।

सर्वत्र प्रायस्तथात्वेऽपि प्रकृतपक्षस्यापि पूर्वाचार्यैः प्रतिपादितत्वात्। तथा चाऽऽहुः श्रीमद्वार्तिककारचरणारविन्दरेणवः—

दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः।
शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः॥
अगृहीत्वैव संबन्धमभिधानाभिधेययोः।
हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः॥
जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन।
ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम्॥
अविद्याघातिनः शब्दाद्याऽहं ब्रह्मेति धीर्भवेत्।
नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधमिति॥

न चैवमपि तं रघूत्तंसमीड इत्यनेनैतस्य पौनरुक्त्यमिति वाच्यम्। श्रीसूत्रकाराद्याचार्यत्रयनमस्करणादेरिहाभिनवार्थस्य सत्त्वेन वैलक्षण्यादाशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखमिति वचनेन ग्रन्थमुखस्याऽऽशीरायन्यतमत्वोक्तावपि वस्तुतो मङ्गल एव तत्पर्यवसानान्नमस्क्रियात्मकस्य सात्त्विकस्य तस्यात्रैव कृतत्वाच्च। कर्त्रध्याहारेणेह सूचितमाभासवादादिकं स्वग्रे मूल एव व्यक्तीभविष्यतीति नैवेह प्रपञ्च्यते। सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितमिति वृत्तम्। रसालंकारादिकं तूक्तमेवेति दिक्॥ ४॥

अथ सुमुखश्चेत्यादिना विनायकनामस्मरणादेरपि विघ्ननिवारणकारणत्वस्मरणाद्बालकलीलाविलासेन श्रीमत्पार्वतीपरमेश्वरौ स्वमातापितरावानन्दयन्तं तमपि संभावितत‍देकविरस्यनिजदुरितक्षुब्धाधिभौतिकाधिदैविकाध्यात्मिकनिखिलप्रत्यूहप्रशमनद्वारकस्वाभिमतसकलेष्टसिद्धयर्थं प्रार्थयते—ममैतावित्यादिशिखरिण्या—

ममैतौ मातुः स्तनकनककुम्भौ तव तु नो
यतस्तादृग्रूपौ मम शिरसि कुम्भौ तव तु नो ।
इति श्रीहेरम्बो गुहमभिगृणंस्तावनुधयन्
शिवौ स्मेरौ कुर्वन्नवतु परमानन्दयतु माम् ॥ ५ ॥

हे गुह भोः षडानन । एतौ निपीयमानत्वेन क्रमादतिसंनिकृष्टौ । एतेन सद्यस्तदास्वादो मयैव गृह्यते त्वं तु तदभावात्तटस्थ एव वञ्चित इव खिद्यसीति निखिलप्रत्यक्षमेवेति व्यज्यते । तत्रापि मातुः—अम्बायाः, न तु धात्र्याः । एवं च षाण्मातुरस्य तव त्वत्र सुतरामनधिकार इति ध्वनितम् । स्तनेति । स्तनावेव कुचावेव कनककुम्भौ काञ्चनकलशावित्यर्थः । तथा चातुलपयःपूर्णत्वं तत्र द्योत्यते । ममैव पेयत्वेन मत्सत्ताकावेव ।

तत्र यद्यपि नव्यतार्किकमतेऽन्ययोगव्यवच्छेदार्थकत्वमेवैवकारस्येत्यवशिष्टपूर्वार्धानुपयोग एवाथापि प्राच्यतन्मते तस्य विशेष्यविशेषणक्रियासंगतत्वेन क्रमादन्ययोगात्यन्तायोगायोगव्यवच्छेदार्थतायाः पार्थ एव धनुर्धरः शङ्खः पाण्डुर एव नीलं सरोजं भवत्येवेत्यादावङ्गीकृतत्वात्प्रकृते तु तस्य विशेषणसंगतत्वेमात्यन्तायोगव्यवच्छेदेऽप्यन्ययोगव्यवच्छेदाभावात्तदर्थमाह—तव त्विति ।

तुशब्दः प्रोक्तशङ्काशान्त्यर्थः । तेनोक्तस्तनौ मदन्यस्य कस्यापि नैव पेयावित्याशयः । तत्र हेतुः—यत इत्यादिद्वितीयपादेन । कारणगुणाः कार्यगुणानारभन्त इति तार्किकराद्धान्तात्,

'स्वर्गापगाहेममृणालिनीनां नाला मृणालाग्रभुजो भजामः ।
अन्नानुरूपां तनुरूपऋद्धिं कार्यं निदानाद्धि गुणानधीते' ॥

इति कविसमयाच्च युक्तमेवेदमिति भावः । इतिशब्दो गुहमित्यादिनैवान्वेति । अभीति । भूयः समुपदिशन्नित्यर्थः । अन्विति । तदनु संपिबन् । स्मेरौ सस्मितौ । परं तथा तस्माद्यथा भगवान्गजाननः स्वकीयेन बालजल्पितेनापि मातापितरौ तोषितवांस्तथा मदीयेनापि तेन जगन्मातापितरौ यथा तुष्येतस्तथा मदवनानन्दने च स करोत्विति तत्त्वम् । काव्यलिङ्गमलंकारः । रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणीति वृत्तम् । शिष्टं तु स्पष्टमेव ॥ ५ ॥

एवं मातृशब्देन पालकत्वसाधर्म्यध्वनितत्रय्याः स्तनपदेन परमास्वादनीयत्वावेदितभोगमोक्षानन्दाधिकारित्वमस्मच्छब्दनिर्देश्यत्वानुभूतस्यैकस्यैव जीवस्येति युष्मच्छब्दवाच्यथावत्प्रतियोगिकतदधिकारित्वतिरस्करणपूर्वकं पूर्वार्धे ध्वनयता वक्ष्यमाणैकशरीरैकजीववादाभिधब्रह्मज्ञैकानुभवनीयदृष्टिसृष्टिसंज्ञकवक्ष्यमाणपक्षस्योत्तरार्धे चिन्तामण्यपराह्वश्रीहेरम्बाख्यगजाननात्मकबाललीलाविलासशालिविचित्रलीलाविग्रहावच्छिन्नशुद्धचैतन्यरूपपरमेश्वरप्रार्थनसाद्यस्कसिद्धस्वानुभवाधिरूढत्वं द्योतयता ग्रन्थकृता तत्प्राक्तनमङ्गलपद्यचतुष्टयेन च तद्वचनसकलसामग्रीसंपूर्णत्वं स्वस्मिन्सूचितं यद्यप्यथाप्युक्तवादानुभवादेव जीवान्तराभावात्कस्यानुग्रहार्थं प्रकृतप्रकरणकरणप्रवृत्तिरित्याक्षेपे सत्यत्रैव तदविरोधेनैव सिद्धवक्ष्यमाणनानाजीवपक्षस्यैव प्रक्रियायां सिद्धान्तितत्वान्मैवमित्याकूतेन पूर्वाचार्यवर्यविरचितप्रकरणसहस्रसत्त्वात्तत्रापि तदनुग्रहस्य तत एव सिद्धावेतद्वचनप्रवृत्त्यनौचित्यस्य पुनरपि तादवस्थ्येऽत एव केषामाचार्याणां मतं मुमुक्षुणा प्रक्रियायामादरणीयं केषां वाऽनादरणीयं ब्रह्मनिष्ठवरिष्ठत्वेन सर्वेषामपि पूर्वेषां तुल्यतमत्वादेवं व्याकुलबुद्धेः–

' सर्वासङ्गविनिर्मुक्तो मोक्षमात्रप्रयोजनः ।

अतोऽधिक्रियते प्रत्यग्ज्ञानोत्पत्तौ न रागवान् '

इत्यादिवार्तिकोक्तलक्षणाय मोक्षैकसमाकाङ्क्षिणोऽधिकारिणस्तत्समाधानसिद्धिप्रयोजकोक्ताचार्यैकमत्यप्रतिपादनप्रयोजनत्वेनास्य साफल्यमेवेत्याशयेन च प्रेक्षावतामत्र प्रवृत्तिप्राचुर्यस्यान्वर्थनामकत्वेन तच्छ्रवणादेव झटिति सिद्ध्यर्थं ग्रन्थनामतत्कर्तृत्वप्रतिज्ञाप्राप्तस्वौद्धत्यध्वंसनपूर्वकं स्वनामाप्यनधिकारिताध्वनकश्लेष्मघटितं कथयन्नथापि श्रीगुरुचरणरेणुरेवेदं मत्कैतवेन वितनोतीति च द्योतयंस्तद्बलात्सिद्धवदेव तद्वचनं प्रतिजानीते–श्रीमदित्यादिवसन्ततिलकया––

**श्रीमद्रघूत्तमगुरोश्चरणे च्युतेन श्रद्धैकसाधनवता रजसाऽच्युतेन ।**
**आचार्यचित्रमणिमन्दिरविभ्रमाणां बोधैकयासिद्धिररचि च्युतविभ्रमाणाम् ॥ ६ ॥**

अच्युतेन एतच्छर्मणा वासिष्ठगोत्रोत्पन्नेन पञ्चवटीनिवासिना सत्याषाढापराभिधहिरण्यकेशिसूत्रिणा मोडकोपनाम्ना केनचित्तैत्तिरीययजुषद्विजन्मनेत्यर्थः । यद्वैतच्छरीरावच्छिन्नचैतन्यान्तर्यामित्रैकालिकस्वस्वरूपाप्रच्युतिशालिभगवन्नारायणेनेति यावत् । एतेन स्वस्मिन्ग्रन्थकर्तृत्वाध्यासो व्युदस्तः। च्युतेति । च्युतो गलितो विभ्रमः सकारणकद्दश्याध्यासो येषां ते तथा । तेषां सकलप्रसिद्धपूर्वाचार्याणामित्यर्थः । यावत्प्राचीनप्रसिद्धप्रत्यगद्वैतचिन्मात्रनिष्ठग्रन्थकृत्संबन्धिनीति यावत् । एतादृशी ।

बोधेति । बोधः—ब्रह्मात्मैक्यविषयकसाक्षात्कारस्तस्य यदैक्यं स्वरूपफलाभ्यामैक-रूप्यं तस्य सिद्धिस्तद्विषयकप्रमितिरुपपत्तिर्यया प्रकरणरचनया सा तथेत्यर्थः । अरचि-अकार्येत्यन्वयः । यद्यपि प्रकृतप्रकरणस्य मङ्गलश्लोकपञ्चकमात्रसिद्धावपि षष्ठ एव पद्येऽखिलतत्सिद्धिवाचकभूतार्थकाख्यातप्रयोगानौचित्यमेव, तथाऽप्याद्यपक्षे श्रीगुरुच-रणपरमाणोरलौकिकसामर्थ्यादप्रतिबद्धैतत्सिद्धिश्रद्धाधिक्यं ध्वनयितुं द्वितीयपक्षेऽप्यै-श्वर्यादेव तथात्वं द्योतयितुमुचित एव तत्प्रयोग इति भावः ।

ननु सर्वेषां ब्रह्मविदां बोधस्य स्वरूपफलाभ्यामैक्यं तु ब्रह्म वा इदमग्र आसीत्त-दात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳसूर्य-श्चेत्यादिभिः श्रुतिभिः, प्रत्यग्ब्रह्मैक्यप्रम स्वरूपफलाभ्यां तत्तद्ब्रह्मविदामप्येकरूपा । निर्विकल्पकशाब्दप्रमात्वात् । परमते आकाशादिशब्दजन्यप्रमावदित्यादियुक्तिमूल-कानुमित्यादिभिश्च प्रसिद्धमेव तदर्थमेतावान्किमिति प्रयास इति चेत्सत्यम् ।

तथाऽपि प्रक्रियाभेदेन मतभेदसंभवात्तत्तात्पर्यपर्यालोचनया तदैकमत्यस्यैव प्रकृ-तप्रकरणेन निर्णिनीषितत्वाच्चेत्यभिसंधाय कण्ठत एवैतत्प्रकरणरचनप्रयोजनमुज्ज्वल-यति—आचार्येत्यादितृतीयचरणेन ।

आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः ॥

इत्यभियुक्तोक्तेराचार्याः श्रीमच्छंकरभगवत्पूज्यपादपादपद्मादयः सर्वे स्वावधिकाद्वै-तशास्त्रतत्प्रकरणादिप्रणेतारस्त एव चित्रमणयः सितासितरक्तहरितादिरत्नविशेषास्तेषां यन्मन्दिरं तदुपादानकं मुकुरागारादिवद्विलासरहःसदनं तत्र विशिष्टो विलक्षणो भ्रमस्तत्तन्मण्यवच्छेदेन स्वप्रतिबिम्बसहस्रदर्शनवत्तत्तदाचार्यग्रन्थाद्यवच्छेदेन स्वाव-धारिततत्तत्प्रक्रियातात्पर्यसहस्रविषयकभ्रान्तिर्येषां ते तथा तेषाम् । तादर्थ्यस्यापि संबन्धविशेषात्मकत्वात्षष्ठी शेषे इति सूत्रविहिताऽत्र षष्ठी बोध्या ।

तथा च नानाविधप्राचीनाचार्यमतान्यालोच्य प्रक्रियैकमत्यव्याकुलबुद्धिसमाधा-नार्थमित्यर्थः । अत्राऽऽचार्यपदेनोक्तग्रन्थसंग्रथनसमर्थत्वं चित्रेति वक्ष्यमाणतत्तत्प्र-क्रियानानात्वं मणिपदेन सर्वमतानामपि निर्मलत्वं मन्दिरपदेनाऽऽत्मक्रीडादियो-ग्यत्वं च तत्र सूच्यते । एवं विभ्रमेत्यनेन यथोक्तमन्दिरे कश्चिदनभिज्ञः प्रवि-ष्टश्चेद्भ्रान्त एव भवति। तत्र वस्तुतः सत्यपि विलासास्पदत्वे निर्भयत्वे चित्रपदध्वनि-तचिन्तामण्यादिसंग्रहेण सकलकामपूरकत्वे च तद्भ्रमकृतेऽपीति सर्वोऽप्ययमनभिज्ञ-तादोष एव न तु शास्त्रदोष इति द्योत्यते। अथवाऽऽचार्येत्याद्युक्तपदमन्वय एव प्रयो-जनत्वेन योजयित्वाऽरचीति ज्ञेयम् ।

नन्वत्र द्वितीयपक्षे तु कथमेतददतिदुःसाध्यं सर्वपूर्वार्थैकात्म्यं सिध्येदिति शङ्के- चेश्वरत्वान्न प्रसरत्यथापि प्रथमपक्षे सा तदवस्थैवेत्यतस्तत्रापि श्रीगुरुरूपिणस्तस्यैव सामर्थ्याच्च सुकरमेवेति द्योतयितुं तं विशिनष्टि—श्रीमदित्यादिना । उत्तमपदमुत्तंसा- दिपदवद्भ्रूतंस इत्यादौ श्रेष्ठवाचित्वबद्बोध्यम् । शिष्टं तूक्तार्थमेव । च्युतेन विविव- शान्निपतितेन एतादृशेन रजसा परमाणुतुल्येनातिलघुना रजोगुणप्रकृतिना मनुष्यत्वादित्यर्थः ।

ननूक्तनिपतनमपि क संततं तत्राऽऽह—अद्वैकेति । तस्मात्सैव सर्वं कल्पलतेव साधयिष्यतीति व्यज्यते । उक्ता वसन्ततिलका तभजा जगौ ग इति वृत्तम् ॥ ६ ॥

एवं मङ्गलपद्यश्लोक्या सामान्यतः प्रकृतप्रकरणस्य प्रयोजने कथितेऽपि विशेष- तत्तदाकाङ्क्षायां षष्ठेन तस्मिन्नपि स्फुटितेऽपि तत्र विचित्रतायाः सुप्रसिद्धत्वात्तद्दुः साध्यत्वेन तदर्थं प्रवृत्तिं कराङ्गुल्येन्दुसंस्पर्शप्रवृत्तिवद्व्युदासितुं पूर्वं तत्संभवमेव निरुक्तग्रन्थनाम्नावलम्बनेनैवाऽऽक्षिपति—नन्वित्याद्यष्टश्लोक्या ।

तत्र बोधैक्यसिद्धिरिति ग्रन्थार्थत्वेन निरुक्तग्रन्थनाम्नि बोधपदार्थं चतुर्धा विकल्प्य कः प्रकृते तदैक्यसिद्धिप्रतियोगित्वेनाभिमत इति प्रथमं पृच्छति नन्वित्यादिमाल- भारिण्या—

ननु तेऽभिमता यदैक्यसिद्धिः स तु किं मानसवृत्तिरेव बोधः ।
अथ चित्प्रतिबिम्बमण्डिताऽसावुत वा तत्किमु केवला चिदेव ॥७॥

तत्राऽऽद्यपक्षेऽवधारणेन तदधिकरणचित्प्रतिबिम्बव्युदासः । असाविति च्छेदः । मानसवृत्तिरित्यर्थः । उत वा अथवा । तत्—चित्प्रतिबिम्बमेव । अत्राप्येवकारेण तदधिकरणीभूतोक्तवृत्तिव्युदासः । ससजाः प्रथमे पदे गुरू चेत्सभराद्यूेन च माल- भारिणी स्यादिति वृत्तम् ॥ ७ ॥

ननु ' बुद्धेर्वृत्तौ ज्ञानता तावदेका प्रत्यङ्मात्रे ज्ञानता काचिदन्या ।
तत्संपर्काज्ज्ञानता तत्र चान्या व्युत्पन्नोऽयं ज्ञानशब्दस्तु तत्र ।

इति संक्षेपशारीरकोक्तेश्चिदाभास इत्याद्याभासवादिव्यवहृतिमूलिकायाः '

बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत् ।

इति कूटस्थदीपोक्तेश्च भवतु चतुर्ष्वपि बोधपर्यायीभूतज्ञानादिपदप्रयोगदर्शनाच्च- तुर्धाऽयं विकल्प्य(ल्प)प्रश्नस्तथाऽपि किं केनेत्याशङ्क्याऽऽद्यकल्पेऽपि मम प्रश्नत्रयस्य सत्त्वान्नैवमित्यभिसंधाय प्रथमं सनिदर्शनं साधारण्येन तत्स्वरूपं पृच्छति आद्य इत्यादिना शार्दूलविक्रीडितेन—

आद्ये तार्किकवार्तिकारमपमनमो: संयोगजोऽसौ गुणो
बुद्ध्याख्यः सकलप्रकाशनपटुः स्मृत्याऽनुभूत्याऽपि च ।
किंचानुव्यवसायमात्रकलितः सोऽपीष्ट आस्तेऽथवा
किं प्राभाकरवत्स्वतः स्फुरति वा किंवा क्षणाद्भङ्गुरः ॥ ८ ॥

बाढमिति मन्वानं प्रति तदेवाभिसंधितं विकल्पत्रयं प्रकाशयति--किंचेत्याद्युत्तरार्धेन । कलितः प्रकाशितः । तार्किकवदेवेत्यनुकर्षः । प्राभाकरमते हि संविच्छब्दिदतानामात्ममनःसंयोगजबुद्ध्यभिधगुणरूपज्ञानानां स्वप्रकाशत्वं प्रसिद्धमेव । क्षणादिति । सौगतादिवदित्यर्थः । शिष्टं तु स्पष्टमेव ॥ ८ ॥

एवं मानसवृत्तिमात्रं प्रकृते बोधपदार्थ इति पक्षे त्रेधा तार्किकप्राभाकरसौगतादिमतनिदर्शनेन विकल्पप्रश्नमुपन्यस्य विकल्पासहत्वलक्षणमार्थिकहेतुं मनसि निधायाऽऽत्ममनःसंयोगजः स्मृत्यादिनाऽखिलप्रकाशकृद्बुद्ध्याख्यो गुण एव तार्किकवदनुव्यवसायसाक्षिकोऽत्र बोधपदार्थ इति प्रथमपक्षं प्रतिक्षिपति—नाऽऽद्य इति मन्दाक्रान्तया—

नाऽऽद्यस्तस्य स्फुरणमपि किं तेऽन्यतो वा स्वतो वा
नाऽऽद्यो यस्मादतुलभयदा तेऽनवस्थैव भूयात् ।
नान्त्योऽप्येवं तव परमतापत्तितो न द्वितीयो
दृश्या वृत्तिः कथमिह भवेत्स्वप्रकाशानुभूतेः ॥ ९ ॥

तमेव विकल्पासहत्वरूपं स्वाभिसंधितं हेतुं प्रोद्धाटयति तस्येत्यादिना । तस्य-अनुव्यवसायस्य । स्फुरणं प्रकाशनम् । एवं विकल्पेऽभिहिते तत्रान्यत इत्याद्यपक्षप्रतिक्षेपं प्रतिजानीते—नाऽऽद्य इति । तत्र हेतुं प्रतिपादयति—यस्मादित्यादिपूर्वार्धशेषेण । यस्माद्धेतोः । ते सिद्धान्तिनस्तव । अनवस्थैव । अनुव्यवसायोऽप्यन्येनानुव्यवसायेन प्रकाश्यः सोऽप्यनुव्यवसायत्वसाम्यादन्येनेत्यादिरूपा मूलानवस्थितिरेव भूयादित्यन्वयः ।

न च भवत्वेवमनवस्था का हानिर्नहि प्रामाणिक्यनवस्था त्वयाऽपि चाऽऽद्रियते दूषणत्वेन । अन्यथा शब्दे गुणत्वसिद्धिस्तु रूपरसेत्यादिशब्दादेव तत्रापि श्रोत्रग्राह्यत्वविशेषण शब्दत्वासिद्धिरपि शब्दान्तरादेवेत्यनवस्थापत्तेस्तद्व्यवहारस्याप्रामाणिकत्वं स्यादिति सांप्रतम् । अनवस्थादिदोषसत्त्वे प्रतिबन्धेन काचादिसत्त्वे चक्षुरादेरिव प्रमाणप्रसरस्यैवामवसरादित्यभिप्रेत्य तां विशिनष्टि—अतुलेति । रूपादिस्थले तु तदुपक्रमूलीभूतकणादादिमहर्षिप्रणीतस्मृतिसत्त्वेन तस्याः स्वसाधारण्येन शब्द-

मात्रोद्देशेन गुणत्वविधानप्रवृत्तायाः श्रुतेरिव स्वस्कन्धारोहानापत्तेर्नैवानवस्थाप्रसरोऽपीति तत्त्वम् । एतेनोपलक्षणविधया व्यवसायानुव्यवसाययोः पितृपुत्रयोरन्योन्यनिरूपकत्ववदन्योन्यप्रकाशकत्वमपि परस्पराश्रयादेव परास्तम् ।

उक्तनिदर्शनस्य पुत्रोत्पत्त्यैव सिद्धत्वाज्ज्ञप्तिप्रतिबन्धकस्यान्योन्याश्रयादिदोषस्य तत्राप्रसरादिति बोध्यम् । तदास्तां निरुक्तान्तःकरणवृत्त्यात्मकबोधप्रकाशकस्यानुव्यवसायस्य स्वप्रकाशत्वमेवेति वदन्तं प्रत्याह- नान्त्योऽपीति । तत्र हेतुः—परेति । परोऽत्र प्रभाकरो गुरुनामा । अनुव्यवसायरूपवृत्त्यात्मकज्ञानमात्रांश इति शेषः । अयं हेतुः काकाक्षिन्यायेनोत्तराण्यपि । द्वितीयः । किं प्राभाकरवदित्यादिपूर्वपद्योक्तद्वितीयः पक्षः । उक्ते हेत्वन्तरं दर्शयेत्यादि । अनुभूतेश्चिनेर्दश्येति संबन्धः ॥ ९ ॥

एवं ग्रन्थनामस्थबोधपदार्थविषयकोपन्यस्तप्रश्नचतुष्टयनिविष्टप्रथमप्रश्नविषयकविरचितविकल्पत्रयमध्ये तार्किकप्राभाकरनिदर्शनीकृतं विकल्पद्वयं क्रमादनवस्थादिनाऽपनोद्य सौगतनिदर्शनीकृतं तृतीयमपि पक्षं प्रतिक्षिपति । तथा प्राथमिकप्रश्नचतुष्टयावशिष्टपक्षेषु द्वितीयतृतीयौ चित्प्रतिबिम्बविशिष्टमनोवृत्तितद्विशेषणमात्रबोधवादिनौ पक्षावपि प्रतिक्षिप्यान्त्यं विशिनष्टि भवतीत्यादिना हरिणीवृत्तेन—

भवति चरमोऽप्येवं पक्षोऽनुभूतिनिराकृतो
द्वितयमपरं नैवं गौणी यतो बत बोधता ।
तदिह परमः शिष्टः शिष्टैर्यमिष्टमुखैर्नुतः
श्रुतिभिरभितः प्रेम्णाऽत्मीकृतश्च मतः सताम् ॥१०॥

तत्र परिकरालंकारेण हेतुं द्योतयंस्तं विशिनष्टि अनुभूतीति । मम घटीद्वयं वृत्तिः श्रीगुरुचरणकमलाकारैवाऽऽस्याऽऽसीदित्याद्यनुभवेनैव क्षणभङ्गवादः प्रक्षिप्त इत्यर्थः । ननु दीपज्वालान्यायेनोक्तवृत्त्यैक्यानुभूत्युपपत्तावपि तत्र तैलादिह्रासान्यथानुपपत्तितर्कितज्वालानानात्ववत्प्रकृतेऽपि वृत्तिनानात्वमेवास्तु । अत एवोक्तमसंप्रज्ञातापराभिधं निर्विकल्पसमाधिं प्रकृत्य तत्त्वविवेके—

वृत्तयस्तु तदानीमज्ञाता अप्यात्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थितात् ॥ इति ।

तस्माद्यदाऽसंप्रज्ञातसमाधावपि समानविषयकवृत्तिनानात्वं तदा सगुणश्रीगुर्वादिध्यानादौ तन्नानात्वं कैमुत्यसिद्धमेवेति चेत्सत्यम् । तथाऽपि क्षणिकत्वं हि विज्ञानस्यैकक्षणमात्रोत्पत्तिविनाशशालित्वं वक्तव्यम् । अन्यथा तस्योत्पत्त्युत्तरक्षणनाशे तत्सत्त्वे प्रमाणाभावेन तत्सिद्ध्यर्थं स्वप्रकाशस्य तस्य मध्यमक्षणे स्थित्यङ्गीकारे

स्थायित्वापत्त्या क्षणभङ्गवादभङ्गप्रसङ्गः। तथा च तस्य स्वप्रभत्वाङ्गीकारेऽप्युत्पत्ति-क्षणैकविनश्वरत्वेन तत्सत्त्वे पुनः प्रमाणाभावतादवस्थ्यमेवेति तदभावविषयकानुभूते-रेव प्रकृतेऽभिमतत्वाद्वक्ष्यमाणे धारावाहिकस्थले केषांचिदाचार्याणां मते वृत्त्यैक्यस्यापि सिद्धत्वाच्च नैवमिति भावः।

अथोक्तद्वितीयादिपक्षौ प्रतिक्षेप्तुं प्रतिजानीते- द्वितयमित्यादिना। तत्र हेतुः— गौणीत्यादिना। बोधत्वं हि स्वभानेऽन्यानपेक्षत्वम्। यद्वा स्वमात्रायत्तद्वैतसत्ताकत्वमेव। तदुक्तपक्षद्वयेऽपि दृश्यत्वान्नैव मुख्यं स्यादित्याशयः। फलितमाह—तदिहेत्याद्युत्तरार्धेन। चरमः केवला चिदेव बोध इत्यन्तिमः। शिष्टोऽवशिष्टः। श्रुत्यार्षमानुषाचार्यसंमत्यै त्रिविशेषणी।

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदेति वृत्तम्। व्यक्तमेवोर्वरितम् ॥१०॥

एवं ग्रन्थनामनिविष्टं बोधपदार्थमवधार्याधुनैक्यपदार्थं निर्णिनीषुर्लोके ह्यैक्यशब्द-शक्ये सर्वत्राभेदतादात्म्ये एव दृष्टे। तत्राऽऽद्यमुपन्यस्य तस्य पारमार्थिकत्वादिविकल्पेन प्रश्नत्रयमभिधायान्तिमे पक्षद्वयं प्रतिक्षिपति—अद्वैतमिति वसन्ततिलकया—

**अद्वैतमैक्यमिह ते यदि चेदभीष्टं**
**किं पारमार्थिकमुत व्यवहारतस्तत्।**
**किंवा प्रतीतिवशतोऽपि न चान्त्यपक्षौ**
**मिथ्यात्वतोऽनुभवनादिपराहतेश्च ॥ ११ ॥**

तत्—अद्वैताद्यपरनामकमभेदरूपमैक्यमित्यर्थः। व्यवहारतः। व्यवहारेणेत्यर्थः। ज्ञाननिवर्त्यत्वलक्षणं व्यावहारिकं वेति यावत्। प्रतीतीति। प्राग्वदेव प्रातीतिकं ब्रह्मज्ञानेतरबाध्यमित्यर्थः। अन्त्येति। व्यावहारिकप्रातिभासिकपक्षाविति यावत्। तत्रोभयत्रापि हेतुः—मिथ्येति। अत्रायं प्रयोगः—व्यावहारिकः प्रातिभातिको वा निरुक्तचिदभेदः। एतद्ग्रन्थाधीनशाब्दप्रमाविषयत्वाभाववान्। मिथ्यात्वात्। शुक्ति-रूप्यवदिति। एतद्ग्रन्थस्य वेदान्तशास्त्रीयप्रकरणत्वेन—

'शास्त्रैकदेशसंबद्धं शास्त्रात्कार्यान्तरे स्थितम्।
ग्रन्थं प्रकरणं प्राहुः प्रकरणज्ञा मनीषिणः' ॥

इति पाराशरपुराणोक्ततत्सामान्यलक्षणाद्वेदान्तशास्त्रीयजीवेश्वरचिन्मात्राभेदविषयादि-मत्त्वं प्रधानतयाऽऽवश्यकमेवेति व्यावहारिकादिरूपे तदभेदे निरुक्तप्रमाविषयत्वाभा-ववत्त्वं मिथ्यात्वेनोचितमेवेति भावः। दार्ढ्यार्थं तत्र हेत्वन्तरमप्याचष्टे—अनुभ-वेनेति ॥ ११ ॥

एवं तर्ह्यस्तु पारमार्थिकमेवाभेदरूपमैक्यमिति प्रथम एव पक्ष इति चेत्सत्यमेतद्-ग्रन्थतः प्रागेव श्रीमद्भगवत्पादाद्यखिलमुनीन्द्रैरखिलप्रस्थानत्रयादिवेदान्तशास्त्रप्रणयन-द्वाराऽपरैश्च पूर्वाचार्यैः प्रकरणाद्यनेकग्रन्थद्वारा चोपपादितत्वेन सिद्धत्वान्नैवायं तदर्थं प्रयास इत्याशयेनाऽऽह—आद्यस्त्वित्यादीन्द्रवज्रया—

**आद्यस्तु सर्वैर्निगमान्तशास्त्रैः श्रीभाष्यकारप्रमुखैर्मुनीन्द्रैः ।**
**नानानिबन्धैरपरैश्च पूर्वैराचार्यवर्यैरुपपादितोऽस्ति ॥ १२ ॥**

'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति वृत्तम् । शिष्टं तु स्पष्टमेव ॥ १२ ॥

एवमैक्यपदार्थविवेचनेऽभेदरूपमद्वैतं प्रथमं प्रत्याख्यायेदानीं तादात्म्यरूपं तत्प्र-ख्याचिख्यासुः सलक्षणं मीमांसकादिसंमतं तद्भूर्युदाहृत्य पृच्छति—भेदेत्यादि-गीत्या—

**भेदसहिष्णुरभेदस्तादात्म्यं यदि तदेव मतमैक्यम् ।**
**कनकं कटकं नीलः कलशः करका जलं गिरिर्मृदिति ॥१३॥**

उपादेयोपादानगुणगुणिकिंचित्कालिकपरिणाम्यपरिणामिदीर्घकालिकपरिणाम्यपरि-णामिभावैः क्रमाच्चत्वारि तादात्म्यस्थलान्युदाहरति—कनकमित्याद्युत्तरार्धेन । अक्ष-रार्थस्तु स्फुट एव ।

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजगेशः ॥

इति वृत्तम् ॥ १३ ॥

तदङ्गीकुर्वाणं प्रत्याह—अद्वैतिन इत्याद्यार्यया—

**अद्वैतिनस्तवापि त्रिदण्डिमीमांसकादिमतयोगात् ।**
**तर्हि न किं सैद्धान्तिकभङ्गभयप्रसङ्गः स्यात् ॥१४॥**

त्रिदण्डिनो रामानुजाः । मीमांसकास्तु भाट्टादयः सुप्रसिद्धा एव । आदिप-दात्तदेकदेशिनो भट्टभास्करमतृप्रपञ्चप्रभृतयः । तत्र त्रिदण्डिमतमुक्तं वेदान्तकल्पल-तायाम्—त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाभेदमभ्युपेत्य ज्ञानकर्मसमुच्चयाभ्यासादेव कार-णात्मके ब्रह्मणि कार्यात्मकस्य जीवस्य कर्मवासनासहितभेदांशनिवृत्तिर्मोक्ष इति वदन्तीति । एवं मीमांसकादिमतेऽपि गुणगुण्यादितादात्म्यस्थले भेदाभेदवाद एवेति सुप्रसिद्धमेव । तथा च बोधकाद्वैतस्य पूर्वोक्तरीत्या चिन्मात्रस्याऽऽत्मनः प्रपञ्चेन साकं भिन्नतादात्म्यरूपमैक्यं यदि विवक्षितं तर्हि सिद्धान्तभङ्गापत्तिरित्या-कूतम् । आर्यालक्षणं तूक्तं श्रुतबोधे कालिदासेन—

यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्येति ॥ १४ ॥

इदानीं यदर्थमिदं ग्रन्थनामनिर्वचनविवेचनं तत्प्रकृतप्रकरणरचनतुच्छीकरणं स्वचित्तगतं निगमनच्छलेनोद्घाटयति-तस्मादिति स्रग्धरया—

**तस्माद्भावत्क एवं विफल इह भवेदुद्यमः स्वानुभूत्यै**
**सोऽपीष्टश्चेत्ततः किं यदि न तव पुरा तर्हि तुच्छः प्रयासः ।**
**अप्रामाण्यात्परेषामपि बहुभिरलं प्राच्यशास्त्रैर्गुरूणा-**
**माशस्यापि प्रसादाद्भवत इव भवेत्किं न सा कर्मपाके ॥ १५ ॥**

प्रत्यग्बोधाद्वैतस्य पूर्वाचार्यसहस्रेणोपपादितत्वादन्यविधबोधैक्यस्य प्रकृतानुचितत्वाच्चेत्यर्थः । भावत्कस्त्वदीयः । इह ग्रन्थसंग्रथने । एवं बोधैक्यसिद्धिलक्षणप्रयोजनक इति यावत् । एतादृश उद्यमः प्रयत्नः । विफलस्तुच्छो भवेदित्यन्वयः । एवमप्याप्रहात्ख्यातिलाभपूजाद्यन्यतमतत्समुदायान्यतरकामेन त्वया चेदयं ग्रन्थः क्रियेतैव तर्हि तस्य पिष्टपेषणन्यायापत्त्या प्रेक्षावत्प्रवृत्तिविषयता नैव स्यादित्याशयः ।

ननु भवत्वेवं भेदवादिवृन्दविदलनपूर्वकं निरुक्तबोधैक्यसिद्धेः संपूर्णपूर्वाचार्यैः शास्त्रतत्प्रकरणशतप्रणयनतः प्रसाधितत्वं तथाऽपि स्वानुभूतिमात्रसिद्ध्यर्थमिदमुचितमेवेति चेन्न । तत्र स्वशब्देन किं स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीय इत्यमरादात्मैव किंवा ज्ञात्यात्मीयशब्दितबन्धुशिष्याद्यन्यतरः । उभयथाऽपि वैयर्थ्यादित्यभिप्रेत्य शङ्कते—स्वेत्यादिना । तत्तुच्छत्वं हृदि निधाय सप्रतिज्ञमाक्षिपति—ततः किमिति । उभयथाऽपि स्वानुभूत्यर्थं प्रकृतग्रन्थग्रथनेन नैव किमपि प्रयोजनमित्यर्थः ।

तत्राऽऽद्ये हेतुं व्युत्पाद्य निगमयति—यदीत्यादिपूर्वार्धशेषेण । स्वप्रकाशब्रह्मात्मैक्यानुभूतिरिति शेषः । नहि विस्मृतकण्ठचामीकरश्चैत्रः क्वचिदादर्शकाचरचनमात्रेण विनाऽऽप्तोपदेशं तत्पश्यति । तस्मात्तदर्थं ग्रन्थसंग्रथनं व्यर्थमेवेति भावः ।

द्वितीये हेतुं प्रतिपादयति—अप्रामाण्यादित्युत्तरार्धेन । तत्रापि किं त्वयाऽयं परानुभूत्यर्थं ग्रन्थः स्वयमनुभूतिं संपाद्यैव क्रियते तां विनैव वा । तत्र नान्त्य इत्याह—अप्रामाण्यादिति । यदि तव पुरा ग्रन्थस्य रचनतः पूर्वं निरुक्तस्वानुभूतिर्नास्ति चेत्तर्हि परेषामप्यप्रामाण्यादब्रह्मानुभविकृतत्वेन तत्र प्रमाणत्वाभावात्तव तुच्छ एव प्रयास इत्यनुकृष्य संबन्धः । नाप्याद्य इत्याह—परेषामपीत्यादिशेषेण । सा निरुक्तबोधैक्यानुभूतिः । भवत इव तवेव । परेषामपि बन्ध्वादीनामपि । कर्मपाके—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
यथाऽऽदर्शतले प्रख्ये पश्यत्यात्मानमञ्जसा ॥

इति वचनात्तत्त्वसाक्षात्कारोत्पत्तिप्रतिबन्धकदुरितक्षयपूर्वकतज्जनकसुकृते फलदानौन्मुख्ये सतीत्यर्थः । गुरूणां श्रीमद्भगवत्पूज्यपादपादकोकनदाद्याचार्याणामिति यावत् । अलं बहुभिरतुलविपुलैः । एतेन प्रकरणादीनामधिकारिविशेषाणां च संग्रहः सूचितः । एतादृशैः । प्राच्यैरिति । चतुर्लक्षणीभाष्यादिचिरंतनशास्त्रलक्षणकरणैरित्यर्थः । गुरूणां ब्रह्मात्मैक्योपदेष्टॄणां सद्गुरूणां तथा ईशस्यापि परमेश्वरस्यापि प्रसादादनुग्रहात् । न भवेत्किम् । अपि तु भवेदेवेति योजना । यथोक्तसामग्र्या भवतः प्रकृतग्रन्थे विनैवोक्तानुमतिः संपन्ना तथा तेषामपि तथा मयादेवेति भावः । तस्मात्सर्वथाऽपीदं ग्रन्थसंग्रथनं व्यर्थमेवेति तत्त्वम् ॥ १५ ॥

ननु माऽस्तु तत्त्वरीत्या समस्तलोकानुजिघृक्षयेयं प्रकृतग्रन्थसंग्रथनप्रवृत्तिस्तथाऽपि कथाविजयपरिजिहीर्षया त्वसौ युक्तैवेति शङ्कां प्रशमयति — जिगीषेतिशिखरिण्या——

जिगीषाऽपि स्याच्चेत्त्वयि खलु घटेत स्वानुभविता
न पङ्के शङ्काऽपि स्फुरति नवपङ्केरुहलिहाम् ।
कथंचिन्मैत्रेयीप्रियतम इवासावपि यदा
तदाऽप्येतच्छ्लाघ्यं न किल खलु दुःखैकफलतः ॥ १६ ॥

चिदेकनिरते त्वयि तद्वचनमप्यनुचितमेवेति सूचयितुं चेत्पदम् । आस्तामसावपि का बाधस्तत्राऽऽह न खल्विति प्रथमपादशेषेण ।

लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥

इत्यादिस्मरणेन शास्त्रवासनाशब्दितयावच्छब्दब्रह्मसंस्कारैकायत्तपरपराजिहीर्षारूपं जिगीषायाः फलपर्यवसायितत्त्वज्ञानोदयं प्रत्येव प्रतिबन्धकत्वादद्वैतशास्त्रीयप्रकरणस्यास्य तु तत्त्वज्ञानमन्तरा रचनानौचित्यस्य प्रागेवोपपादितत्वान्नैव तयैतद्रचनौचित्यमित्याशयः ।

तदेव व्यतिरेक्यर्थान्तरन्यासेन समर्थयति—नेत्यादिद्वितीयपादेन । नहि श्यामरूपमात्रेण कर्दमे मधुकरारोपोऽपि दृश्यते । यद्वा यथा नूतनशतपत्रेषु शतशः सन्ति मकरन्दसुगन्धलुब्धाः सततं मधुकरास्तथा तत्कारणेऽपि कर्दमे ते सन्ति न वेति यथा शङ्काऽपि नोदेति तद्वज्जयेच्छायां सत्यां तद्वति जिगीषौ त्वयि तत्त्वज्ञानशालित्वं नैव भवतीति भावः ।

ननु ब्रह्मविदामपि याज्ञवल्क्यादीनां जिगीषादर्शनान्नैवमिति चेत् । बाढम् । तत्र तस्य तथा परिणामे दुःखमेव स्वशापजन्यविदग्धशाकल्याख्यब्राह्मणहननानुतापसूचकतदु-

तत्कालिकतत्कर्तृकविद्वत्संन्यासलिङ्गधारणया सिद्धं भवत्येव भवतोऽपि मृषावादतो नैव जिगीषयाऽप्येतत्प्रकरणकरणप्रवृत्तिः प्रशस्तेत्याशयेनाऽऽह—कथंचिदित्याद्युत्तरार्धेन । अत्र कथंचित्पदेन तेन तु न जिगीषयैव जनकसभाप्रवेशः संपादितः, किंतु तद्गृहे यज्ञार्थं मिलितमहर्षिसंघसंनिविष्टत्वेन ब्रह्मविदे जनकसमर्पितगोसहस्रनयनादिप्रसङ्गादेवासावासादिता। त्वया तु तथैवैतत्क्रियत इति वैषम्यमेवेत्यस्वरसः प्रकृतदृष्टान्ते सूच्यते ।

मैत्रेयीति । सा हि याज्ञवल्क्यज्येष्ठपत्नी प्रसिद्धैव । सप्तम्यन्तमिदम् । असौ विजिगीषा । यदा निरुक्तास्वरसादेव तुष्यतु दुर्जन इति न्यायेन यस्मिन्पक्षे स्वी क्रियते तदा तस्मिन्नपि पक्षे इत्यर्थः । एतत्—प्रकृतग्रन्थसंग्रथनम् । बतेति खेदे । तस्मादयुक्तमेवेदं जिगीषयाऽपि प्रकरणकरणमिति तत्त्वम् । याज्ञवल्क्यस्य जिगीषादिकं त्विदं प्रपञ्चितं श्रीमद्विद्यारण्यगुरुभिर्जीवन्मुक्तिविवेके वासनाक्षयनिरूपणप्रस्तावे । अस्ति हि याज्ञवल्क्यस्य तत्प्रतिवादिनामुषस्तकहोलादीनां च भूयान्विद्यामदः । तैः सर्वैरपि विजिगीषुकथायां प्रवृत्तत्वात् ।

ननु तेषां विद्यान्तरमेवास्ति न ब्रह्मविद्येति चेन्न । कथागतयोः प्रश्नोत्तरयोर्ब्रह्मविषयत्वात् । ननु ब्रह्मविषयत्वेऽपि तेषामापातज्ञानमेव न तु सम्यग्वेदनमिति चेन्न । तथा सत्यस्माकमपि तदीयवाक्यैरुत्पन्नाया विद्याया असम्यक्त्वप्रसङ्गात् । ननु सम्यक्त्वेऽपि परोक्षमेवेति चेन्न । यत्साक्षादपरोक्षाद्ब्रह्मेति मुख्यापरोक्षविषयतयैव विशेषतः प्रश्नोपलम्भात् ।

नन्वात्मज्ञानिनो विद्यामद आचार्यैर्नाभ्युपगम्यते । तथा चोपदेशसाहस्र्यामभिहितम्—ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतर इति । नैष्कर्म्यसिद्धावपि—

न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥

इति चेन्नायं दोषः । जीवन्मुक्तिपर्यन्तस्य तत्त्वज्ञानस्य तत्र विवक्षितत्वात् । न खलु वयमपि जीवन्मुक्तानां विद्यामदमभ्युपगच्छामः । ननु विजिगीषोरात्मबोध एव नास्ति ।

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ॥

इत्याचार्यैरभ्युपगमादिति चेन्न ।

रागादयः सन्तु कामं न तद्भावोऽपराध्यति ।
उत्खातदंष्ट्रोरगवदविद्या किं करिष्यति ॥

इत्यत्र तैरेव रागाद्यभ्युपगमात् । न चात्र परस्परव्याहतिः । स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्थापनीयत्वात् । ननु ज्ञानिनो रागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मान्तरप्रसङ्ग इति चेन्मैवम् । अदग्धबीजवदविद्यापूर्वकमेव मुख्यरागादिमत्त्वेन पुनर्जन्महेतुत्वात् । ज्ञानिनस्तु दग्धबीजवदाभासा एव रागादयः । एतदवाभिप्रेत्योक्तम्—

उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना ।
तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ॥ इति ।

तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न । तत्काले मुख्यवदेवाऽऽभासमानानां बाधकत्वात् । रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते तद्वत् । तद्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेत् । चिरं जीवतु भवान् । इयमेवास्मदभिमता जीवन्मुक्तिः ।

याज्ञवल्क्यस्तु विजिगीषुदशायां न हीदृशः । चित्तविश्रान्तये विद्वत्संन्यासस्य तेन करिष्यमाणत्वात् । न केवलमस्य विजिगीषा, किंतु धनतृष्णाऽपि महती जाता । बहूनां ब्रह्मविदां पुरः स्थापितं सालंकारगोसहस्रमपि संनीय स्वयमेवेदमाह—नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इतीत्यादिः । विस्तरस्तु बृहदारण्यकभाष्यादौ ज्ञेयः ॥ १६ ॥

इत्थमुपपादितं प्रकृतप्रकरणरचनानौचित्यं निगमयंस्तर्हि किं कर्तव्यं मयेत्याशङ्कायां किं त्वं तत्त्वज्ञोऽस्युताज्ञ एवाऽऽहोस्विदपक्वविज्ञान इति विकल्प्य क्रमेण समाधत्ते—एवं चेत्यादिशालिन्या—

**एवं चैष व्यर्थ एव त्वदीयो ग्रन्थायामः स्वस्वरूपे तदास्व ।**
**श्रीमद्विष्णुं वा शिवं वा भजस्व त्यक्त्वा सर्वं याहि वाऽरण्यमेव ॥ १७ ॥**

ब्रह्मवित्त्वे हि स्वस्वरूपे चेतसः स्थापनलक्षणमवस्थानमज्ञत्वे स्ववर्णाश्रमधर्मानुष्ठानेनेश्वरलीलाविग्रहविशेषहरिहरान्यतराराधनं फलीभूतजीवन्मुक्तिसुखमात्रांशप्रतिबद्धज्ञानत्वे त्वेतमेव विदित्वा मुनिर्भवतीत्यादिश्रुत्यादिविहितविद्वत्संन्यासेन परमहंसोपनिषत्प्रसिद्धरीत्या सर्वत्यागपूर्वकमरण्यगमनमेव चोचितमेवेति भावः । शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैरिति वृत्तम् ॥ १७ ॥

एवं पूर्ववादिना प्रकृतप्रकरणकरणानिराकरणेऽभिहिते सिद्धान्ती तद्बहुमानपुरःसरं साभिनन्दनं च तदर्धमङ्गीकृत्य स्वकृत्याभिसंधितप्रयोजनरहस्यविशेषश्रवणाय तमभिमुखयति—बाढमित्यादिशार्दूलविक्रीडितपादाभ्याम्—

नाऽहं मित्र तमःशमं विदधते लोकेऽपि के त्वामृते
तत्राप्यत्र रहस्यमेकमनघं प्रेम्णा तदाकर्णय ।
पूर्वाचार्यशतैः शतं सरणयो या दर्शिताः स्वाप्तये
तास्त्वादर्शगृहोममा अपि भिये प्रायो मुमुक्षोर्न किम् ॥१८॥

मित्रेति संबुद्धौ । सूर्यसुहृदोः श्लेषः । एतेन वक्ष्यमाणकार्ये हेतुर्द्योतितः । लोकेऽपि त्वामृते के तमःशमं विदधत इति संबन्धः । एवं च यथा लोके मित्रशब्दितसूर्यं विना न कोऽप्यन्यस्तमःशामकस्तथा शास्त्रेऽपि मित्रशब्दितसुहृदमन्तरा त्वादृशं न कोऽपि तमःपदवाच्याविचारविनिवारक इत्याशयः । अत्र मित्रपदेन बहुमानः शेमुषीणाभिनन्दनं च सूचितम् । किं तत इत्यत्राऽऽह—तत्रापीत्यादिद्वितीयपादेन । तत्रापि एवं सत्यपि । अत्र प्रकृतग्रन्थसंग्रथनविषय इत्यर्थः । यदेकं मुख्यम् । अथाप्यनघम् । निर्दोषम् । एवं च पुनः शङ्कानवकाशः सूचितः । अत एव त्वं तद्रहस्यमाकर्णयरहस्यम् । प्रेम्णा सुहृद्भावेनक्षुद्रनिरुक्ताद्भुतरहस्यश्रवणौत्सुक्येनेत्यर्थः । आकर्णय शृणुत्वन्वयः । तथा च वादित्वं व्युदस्यैव प्रथमं मदुक्त्यादरः कार्यः । पश्चाद्यदि तत्र मनने क्रियमाणे दोषोन्मेषः स्याच्चेत्तदा वादित्वेऽपि प्रकटिते नैव नः कोऽपि क्लेश इत्याशयः । अत एवोक्तं माघे—

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामाशु नयद्रुह इवेहितम् ॥ इति ।

किं तद्रहस्यमित्यत आह—पूर्वाचार्येत्यादिसार्धेन । पूर्वेति । श्रीमत्भगवत्पूज्यपादपादारविन्दप्रभृतिवर्तमानकालावधिकशब्दपरब्रह्मपारंगतसद्गुरुवरवृन्दैरित्यर्थः । एतेन सर्वेषामपि तेषां परमपूज्यत्वात्तदन्यतमसरणेरप्यनादरणव्युदसनं व्यज्यते । अत एव शतमसंख्याताः । किं भेदवादिवत्सिद्धान्ताः, नेत्याह—सरणय इति । पद्धतय इति यावत् । याः स्वाप्तये ब्रह्मात्मैक्यरूपनिजसुखलब्धय इत्यर्थः । दर्शिता मुमुक्षून्प्रति प्रकाशिताः सन्तीति योजना । यथा तत्तद्देशीयजनानामध्वनि गन्तुमुद्दिश्य तद्देशीयैरात्मनैरेते ते मार्गाः सरलं प्रदर्श्यन्ते तद्वन्निरुक्ताचार्यैर्मुमुक्षून्प्रति सरणयः प्रकाशिताः प्रकटिता भवन्तीति भावः ।

किं ततस्तत्राऽऽह—तास्त्वित्यादिचरमचरणेन । तुशब्दः शङ्काशान्त्यै । तत्र प्रतिमार्गावच्छेदकाच्छेदेनैव निसर्गनिर्मलनिर्मितत्वमवितौल्यनामुमुक्षूनादिकं साधारण्येन सर्वादरणे हेतुतया द्योतयति—आदर्शेति । एकैकैतारतम्याः सरव्योऽकैकमुमुक्षुरतौच्यं व्यन्यते । अपिना निरुक्तोपमानेन चाऽऽतत्वसितिकौतुमिमुत्तानन्दत्वमनन्तमावेद्यते । प्रायो बहुधा । तेन तत्रोऽपि केषांचिद्भोगमार्गनेऽपि न भयं ॥मुमुक्षो-

हृदयग्रन्थि बिभित्सोः । भिये किं हेयं किंवोपादेयमिति प्रत्युताद्वैतशास्त्रेऽपि संशय-रूपभीत्या इत्यर्थः । न भवन्ति किं, अपि तु भवन्त्येवेत्यन्वयः । पक्षे स्वस्वप्रेयसी-सहस्लेक्षया तथात्वं ज्ञेयम् ॥ १८ ॥

एवमादर्शगृहोपमानेन वक्ष्यमाणैकशरीरैकजीवानेकशरीरसूत्रात्मकायव्यूहक्कयोगिस-मपरमात्मैकजीवबुद्ध्यविद्यानन्त्यप्रयुक्तनानाजीवावच्छिन्नप्रतिबिम्बाभासवादानामविरोधं निरुक्तरीतिकमुमुक्षुभीतिभञ्जकं व्यञ्जयता प्रकृतग्रन्थसंग्रथनाक्षेपमुपलक्षणविधया विल-क्षणप्रयोजनाभिव्यञ्जनद्वारैव प्रतिक्षिप्य विचित्ररचनचातुरीसूचनचणत्वाप्तदृप्तत्वं प्रति-ज्ञातदुर्घटार्थघटनापटुत्वं च संचूर्णयता भक्तिवैभवेन स्वचेतसीषत्स्मृतिमात्रविषय-त्वतः प्रत्यक्षमिव श्रीगुरुं समनुसंदधता स्वनिमित्तमात्रतां द्योतयताऽतिविस्मितेनाच्यु-तेन प्रकृतप्रकरणस्य तदेककर्तृकता प्रतिज्ञायते तदिति मालभारिण्या——

**तदहो कृपयाऽयमेव तेषां भगवाञ्श्रीरघुनाथसूत्रधारः ।**
**सरसं मृदु मामकीनयेदं तनुपाञ्चालिकया तनोति नाट्यम् ॥१९॥**

यस्मान्निरुक्तसरणयः प्रायेण मुमुक्षोरुक्तसंशयरूपाः संशयात्मा विनश्यतीति स्मृ-तेस्तस्य मृत्यूपलक्षितजन्ममरणप्रवाहलक्षणमहानर्थैकफलकत्वाद्भीतिमात्रहेतवस्तत्त-स्मादित्यध्याहृत्यैव हेत्वर्थकतत्पदेन सह संबन्धो बोध्यः । तेषां निरुक्तभीतमुमुक्षू-णाम् । कृपयैवेति योजना । एतेन ख्यातिलाभपूजादेर्व्युदासः । पूर्वत्र मुमुक्षोरि-त्येकवचनेनेह तेषामिति बहुवचनेन चैकानेकजीववादाविरोधः ।

अत्र श्रीशब्दप्रयोगान्न साक्षात्तन्नामग्रह । निरुक्तशर्मश्रीसद्गुरुरूपेश्वर इत्यर्थः । एवं सरसमर्थतः । मृदु शब्दतः । प्रागुक्तादर्शवेश्मनिदर्शनादेवेति व्यज्यते । अयं ध्यानाधिरूढलीलाविग्रहश्रीमूर्तिकत्वेन साक्षिप्रत्यक्ष इत्यर्थः । एतेन तत्र स्वानुरागा-तिशयः सूचितः ।

नन्वथापि कथमस्य विलक्षणप्रतिज्ञातप्रकरणकरणनिपुणत्वं तत्राऽऽह—भगेति । भगवान् षड्गुणैश्वर्यसंपन्नः । एवं चान्तर्यामित्वेन तत्र स्वहृदयस्थतया प्रकृतप्रकरण-प्रणयनप्रवीणत्वं प्रद्योतते । एतादृशः । अत एव श्रीति । श्रिया ब्रह्मविद्यारूपनि-रुपमसंपदा रलयोः सावर्ण्याल्लघूननधिकारित्वेन तुच्छानपि मादृशान्नाथयति—अद्वैत-ब्रह्मात्मैक्यबोधरूपत्वेन तुच्छीकृतनिखिलदृश्येश्वरत्वोपलक्षितान्करोतीति तथा । स एव सूत्रधारः कलासूत्राभिधपाञ्चालिकानाटकाप्रकटसूत्रचालकः । पक्षे नाटकाचार्यः । एतादृशमिदं प्रकृतग्रन्थरूपं नाट्यं नटनम् । मामकीनया मत्संबन्धिन्या । तन्विति । व्यक्तिरूपपुत्तलिकया द्वारेति यावत् । अहो तनोति विस्तारयतीत्यन्वयः ॥ १९ ॥

अत एवास्य मुक्तमुमुक्षूभयानन्दकत्वमपि प्राचीनप्रकरणवदेव वर्वर्तीत्यभिसंधाय स्वामानित्वं ध्वनयंस्तावुभावप्येतन्निरीक्षणार्थं सार्थकं प्रार्थयते पश्यन्त्विति वसन्ततिलकया—

पश्यन्तु तत्सहृदयाः सदयाः सदेद-
मास्वादयन्तु निजपूर्णरसामृताब्धिम् ।
भीतिं त्यजन्तु विविधोदितपद्धतिभ्यः
शान्त्यादिनोत्सवजुषः स्वबुभुत्सवोऽपि ॥ २० ॥

अत्रापि यस्मादेतन्निरुक्तरीत्या विशिष्टप्रयोजनकं तत्तस्माद्धेतोरिति पूर्ववदेवाध्याहृत्य संबन्धो बोध्यः । अव्ययत्वेऽपि यत्तदोः संबन्धनैयत्यानपायात् । सेति । चित्तं तु चेतो हृदयमित्यमराज्जीवत्वावच्छेदेन तत्त्वसत्त्वेऽपि हरति बाधते मूलाज्ञानतत्कार्यमिति हृत् । स चासावयः । अयः शुभावहो विधिरित्यमरात् ।

अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च ।
वेदान्तानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषितम् ॥

इत्यभियुक्तोक्तरीत्या स्वप्रकाशाखण्डानन्दात्मकजीवब्रह्मैक्यरूपनिरुपमशुभसूचकः साक्षाद्विधिमुखप्रवृत्ततत्त्वमस्यादिमहावाक्यैककरणकः प्रत्यक्षविषयकत्वेन साक्षात्प्रमात्मक एव शाब्दबोधश्चेति तथा । तेन सहिताः सहृदयास्तत्त्वज्ञानिन इत्यर्थः । मुमुक्षुपक्षे तु प्राशस्त्यैकाभिप्रायेण मयूरादिषु शिख्यादिपदप्रयोगवत्प्रकृतेऽपि हृदयसाहित्यबोधनात्प्रशस्तहृदया इति यावत् ।

यद्यपि तेषां दया भूतेष्वलोलुप्त्वमित्यादिस्मृतेः स्वाभाव्यादेव सामान्यतः सर्वतः सदयत्वमस्त्येव तथाऽप्यत्र विशिष्यैव । सदयाः किमयं मद्ग्रन्थः समुचितोऽनुचितो वेति संशयरूपमद्दुःखप्रहरणेच्छवः सन्त इत्यर्थः । एतेन विशिष्यैतन्निरीक्षणौदासीन्यं व्युदस्तम् । नाट्यपक्षेऽपि सहृदयशब्दिता रसिका अपि सदया एव समपेक्षिताः । अन्यथा सूत्रधारस्य वित्तानवाप्त्या श्रमवैफल्यापत्तेः । इदं प्रकृतप्रकरणं पक्षे पाञ्चालिकानाट्यम् । सदा पश्यन्तु निरन्तरं परिशीलयन्त्वित्यन्वयः । तेनानादरः परास्तः ।

ननु किमित्यद्वैतात्मानुसंधानं विहाय प्रकृतप्रकरणमेव परीक्षणीयमित्याशङ्क्यास्य तदेकफलकत्वान्मैवमित्याह—आस्वादयन्त्वित्यादिद्वितीयपादेन । तत इति शेषः । निजेति । आत्मानन्तानन्दकैवल्यजलनिधिमित्यर्थः । अत्र समुद्ररूपकेणैतन्निरीक्षणोत्तरक्षणावच्छेदेनैव तत्पायिनोऽगस्त्यस्य वाताप्यादिभक्षकत्ववेदकानेकजीववादविरोधायनेकाद्वैतशास्त्रीयप्रक्रियाविरोधभक्षकत्वमप्युक्तामृतास्वादपुरस्कारेणैव भविष्यतीति

कीर्तितम् । मोक्षे सालोक्यादिनिरासार्थं निजेति । तत्रापि माध्यादिसंमतसाण्यायां-तत्त्वं वारयितुं पूर्णेति । एवमपि नवविशेषगुणैकविंशतिदुःखध्वंसमात्रविशिष्टात्मस्वं वैशेषिकतार्किकाभिमतमपाकर्तुं रसेति । अमृतपदं तु मोक्षः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतमित्यमरादेव मोक्षपरं प्रसिद्धमेव । आस्वादयन्तु रसयन्त्वित्यर्थः । तस्मान्महाप्रयोजनत्वाद्यदाऽत्र जीवन्मुक्तानामप्यनादरो न युक्तस्तदा मुमुक्षूणां कैमुत्यसिद्ध एव तदभाव इति भावः ।

एवमुभयसाधारण्येन संप्रार्थ्याथ मुमुक्षूनेव पृथक्प्रार्थयते—भीतिमित्याद्युत्तरार्धेन । तत इत्यत्रापि प्राग्वदेव बोध्यम् । तत्रापि शमादिसंपद्विरहकृत एव तत्त्वविद्योत्पत्तितत्फलीभूतजीवन्मुक्त्यन्यतरप्रतिबन्ध इत्यभिसंधाय तान्विशिनष्टि--शान्त्यादिनेति । तथा च बृहदारण्यके पठ्यते—' शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् ' इति । श्रद्धावित्तो भूत्वेति पाठान्तरम् । तत्राप्युत्सवजुषो वैराग्यमहोत्सवसेविन इत्यर्थः । उपलक्षणमेतन्नित्यानित्यवस्तुविवेकस्यापि । एतादृशाः । स्त्वेति । आत्मतत्त्वजिज्ञासवो मुमुक्षुव इति यावत् । अपिः समुच्चये । विविधेति । पूर्वाचार्यैर्बहुविधाभिहितप्रक्रियासरणिभ्यः सकाशादित्यर्थः । भीतिं निरुक्तसंशयरूपमियम् । त्यजन्त्विवति योजना ॥ २० ॥

एवं मुक्तान्मुमुक्षूंश्च विलक्षणप्रयोजनकप्रकृतप्रकरणसप्रणयनिरीक्षणार्थं संप्रार्थ्य पुनस्तद्ग्रथने सर्वथा स्वस्मिन्सामग्र्यभावं कथयन्विस्मयमान इव तत्कर्तारमन्तर्यामिणं श्रीमत्सद्गुरुमेवाऽऽक्षेपव्याजेनावाङ्मनसगम्यत्वेनैवानुसंधत्ते मयीति मालभारिण्या—

**मयि नैव पदं न चापि वाक्यं न च मानं न तपोऽपि चाद्वितीये ।**
**नभसीव विचित्रशक्तिरेकः कुरुते कः पुनरेतदिन्द्रजालम् ॥ २१ ॥**

मय्यस्मच्छब्दवाच्ये प्रकृतप्रकरणलेखकत्वविशिष्टचित्प्रस्वविशेषावच्छिन्नदेहाद्युपहितचिदाभास इत्यर्थः । पदवाक्यमानानि व्याकरणमीमांसातर्कशास्त्राध्ययनानि । नचैवमपि—

यद्दुष्करं दुराराध्यं दुर्जयं दुरतिक्रमम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

इति वचनात्तप एवोक्तलौकिकसामग्रीमन्तराऽप्यलौकिकसामग्रीत्वेनेदं त्वद्द्वारा कारयिष्यतीति वाच्यम् । तस्यैहिकस्य संध्यावन्दनमारभ्यासंप्रज्ञातसमाध्यन्तमध्ये लेशतोऽप्यभावादित्यभिप्रेत्याऽऽह—न तपोऽपि चेति । पक्षे मयि निरुक्तचिदाभासोपलक्षित इत्यर्थः । पदं वैकुण्ठादिस्थानम् । वाक्यं तत्त्वमस्यादिमहावाक्यशक्यस्वमिति यावत् । मानं देशादिपरिच्छेद इत्यर्थः । तपः, तप ऐश्वर्यं इति स्मरणादैश्वर्यम् ।

तत्र सर्वत्र हेतुः—अद्वितीय इति । तथाऽऽकाशवत्सर्वगतश्च नित्य इति श्रुतेरनुरूपं तदेव दृष्टान्तयति—नभसीति । अत्र पदवाक्यमानतपांसि स्थलविशेषविशिष्टपदवृन्दाण्वादियोजनान्तपरिमाणसंतापविशेषा एव । एवं सति । एकोऽद्वितीयत्वेनासहायः । को वाऽवाङ्मनसगम्यो विचित्रशक्तिः 'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुत्युक्तनानाप्रकारकशक्तिरस्मदादिरीशो वा स एतत्प्रकृतप्रकरणरूपं नभसीवेन्द्रजालमन्त्रादिक्षुब्धमायिकनगरादिकं कुरुते रचयतीत्यहं न जान इत्यनुकृष्याध्याहृत्य चान्वयः । तस्मात्पदवाक्यमानतपोभिर्द्रष्टव्यविद्भिरेव कृपयेदं प्रकरणं रत्नमिव तत्परीक्षकैः सुपरीक्षणीयमेवेति भावः । ऐन्द्रजालिकोऽपि विचित्रशक्तिरेव ॥ २१ ॥

इत्थं प्रकृतग्रन्थोपोद्घाते संकथिते सत्यथ शास्त्रोपोद्घातीभूतमध्यासमेव प्रथमं प्रकरणत्वेनात्र संक्षेपं सूक्तेतत्राभिनवतारयिष्यंस्तत्स्वरूपलक्षणे अपि सदृष्टान्तं स्पष्टयति—बोधैक्येति वसन्ततिलकया—

बोधैक्यसिद्धिवशतो यदुपैति बोध्ये
मिथ्यात्वमार्थिकमबोधवपुष्यदस्तु ।
नैव स्फुटी भवति बोधनिवर्त्यरूप-
मन्योन्यसंक्रमभृते खगहीन्द्रतुल्यम् ॥ २२ ॥

बोधौ पञ्चकोशविश्वाधिष्ठानत्वोपलक्षितप्रकाशौ । तयोर्यदैक्यमुक्तप्रकाशैकरूपमबाधितमखण्डाद्वितीयत्वं तद्विषयिणी या सिद्धिस्तत्त्वमस्यादिमहावाक्यैककरणिका चरमचित्तवृत्तिरूपिणी प्रमा सा यया प्राक्प्रद्योतितरीत्या प्रकृतप्रकरणसरण्या सा तथा । तस्या यो वशः । वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोरिति मेदिन्युक्तेरधीनत्वं तस्मादित्यर्थः । प्रकृतप्रकरणेन हि सकलपूर्वाचार्यप्रणीतप्रक्रियैकमत्ये सत्येवेह निरुक्तज्ञानदार्ढ्यद्वाराऽर्थतः संपूर्णद्वैतमिथ्यात्वं भवतीति भावः ।

यत्, आर्थिकमर्थापत्तिसिद्धम् । यदि दृश्यं मिथ्या न स्यात्तर्हि तदनुस्यूतत्वोपलक्षितदृगपराभिधैकबोधभास्यं न स्यात् । तमेव भान्तमनु भाति सर्वमिति—

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इतिश्रुतितदुक्तयुक्तिभ्यां च वर्तते तु तथा तस्मात्तत्तथेत्यन्यथानुपपत्त्युपायातमिति यावत् । बोध्ये स्वप्रभसत्यानन्तानन्दात्मरूपकूटस्थबोधस्य साक्षात्परम्परया वा विषयीभूते यावदविद्यातदधीनद्वैत इत्यर्थः । अत्राधिकरणत्वमेव सप्तम्यर्थः । तेनोक्तद्वैतरूपपक्षस्य मिथ्यात्वलक्षणसाध्यस्य च धर्मधर्मिभाव एव संबन्धः । मिथ्यात्वं वक्ष्यमाणलक्षणमनिर्वचनीयत्वम् । उपैति प्राप्नोतीत्यन्वयः । अस्त्वेवं किं ततस्त-

त्राऽत्र—अवस्थित्यादिशेषेण । तुशब्दः शङ्काशान्त्यर्थः । अदः । अनृतत्वमिथ्यात्वमित्यर्थः । अन्योन्येति । बोधबोध्ययोः संसर्गतादात्म्यलक्षणपरस्पराध्यासम् । ऋते विना नैव स्फुटी भवतीति संबन्धः । निरुक्तलक्षणपरस्पराध्यासासिद्धावेवोक्तमिथ्यात्वं भविष्यतीति भावः ।

तथा च तदर्थमादौ बोधाबोधपदार्थयोश्चिज्जडयोः परस्परं संसर्गतादात्म्यलक्षणाध्यासनिरूपणमेव कार्यमिति तात्पर्यम् । ननु यदि बोधैक्यसिद्धिवशतस्तावदात्मिकमपि बोध्येऽत्र मिथ्यात्वमेदाऽऽदौ रामुपेयाच्चेत्ततस्तत्स्फुटीभवनमपि विना परस्पराध्यासं नैव स्यात्तरं तु तदेव न पश्यामः कथमपि । न हि क्वचिदप्यादर्शवेश्मगतदीपैक्येऽपि तत्प्रतिबिम्बसहस्रात्तत्सहस्रं मन्यमानेऽपि मुग्धे सुहृदुपदेशेनान्वयव्यतिरेकानुगृहीतेन संगतायामपि तदैक्यप्रमायां तद्भास्यादर्शवेश्मनि मृषात्वं दृश्यते । तस्मान्निखिलमिदं कुशचित्रन्यायेन निर्मूलमेवेति चेन्न । अभिसंध्यनवबोधात् ।

तथा हि—अत्र हि भासकं तदारोपितभास्यं चेति वस्तुद्वयमेव । तत्रान्त्यस्य नानात्वेनाऽऽनन्त्येऽपि तदनुस्यूतस्य घटो भाति पटो भातीत्याद्यनुभवात्तत्तदवच्छेदकभेदेन जलचन्द्रवदुक्तप्रतिबिम्बप्रदीपसहस्रवदाभासत्वेऽपि यथोपरचरण्यवच्छिन्नतरणिकिरणालोकावभासमानहरिणतृष्णातरङ्गिणीकल्लोलसहस्रतदवच्छिन्नालोकसहस्रेऽपि निरुक्तदधिष्ठानत्वोपलक्षितालोकैक्यप्रमया मिथ्यात्वमविवादमेव । तथा तदधिष्ठानत्वोपलक्षितस्याऽऽद्यस्य कूटस्थासङ्गाद्वैतानन्तानन्दचिन्मात्रस्यैक्यप्रमया समानाश्रयविषयकत्वान्मूलाज्ञानविनाशे सति तत्कल्पितस्य यावदुपाधिविजृम्भमाणस्यापि द्वैतस्य मृषात्वे किं नाम दोषत्वमपि ।

त्वदुदाहृतादर्शवेश्मप्रदीपदृष्टान्तस्तु विषम एव । तत्र प्रतिबिम्बानां कल्पितत्वेऽप्युक्तगृहस्यातथात्वादित्याशयेन बोध्यं विशिनष्टि—अबोधेति । अबोधेन मूलाज्ञानेन वपुः शरीरं यस्य तस्मिन्यावदविद्यं विद्यमाने । वस्तुतस्तु कालत्रयेऽप्यविद्यमान इत्यर्थः । एवं च यद्यदविद्याविद्यमानं तच्छुक्तिरजतवन्मिथ्येति प्रसिद्धमेवेति नैवात्र काऽप्यनुपपत्तिरित्याकूतम् ।

नन्वेवमपि बोध्यकुक्षिनिक्षिप्ताया मूलाविद्याया अजामेकामित्यादिश्रुत्याऽदिसिद्धानादित्वात्तादृशस्यापि जीवेशतद्भेदाविद्यात्मसंयोगाख्यद्वयचतुष्टयस्यापि तदेकायत्तत्वेन संग्रहेऽपि तस्याः संग्रहासंभव एवेत्याशङ्कोपशान्त्यर्थं मिथ्यात्वस्य संज्ञामात्रत्वं व्युदसितुं सिद्धान्तसंमतं तल्लक्षणं च निर्वक्तुं तत्तथाऽन्योन्यसंकरं च विशिनष्टि बोधेति । बोधोऽत्र प्रमैव । तेन निवर्त्यं सद्योमुक्तिपक्षे प्रध्वंस्यं जीवन्मुक्तिपक्षे प्रबाध्यं रूपं वपुर्यस्य तत्तथेत्यर्थः । एवं च ब्रह्मात्मैक्यविषयकप्रमामात्रबाध्यरूपत्वं निरुक्तमिथ्यात्वे वदता समानाश्रयविषयत्वेन ज्ञानाज्ञानयोर्विरोधस्य सर्वत्र दृष्टत्वाज्ज्ञाननिवर्त्यत्वेनाविद्याविद्यमानस्यैव तस्या अपि समारोपितत्वं संगृहीतमेवेति भावः ।

एवं संकरपक्षेऽपि क्षीरनीरादिवत्संयोगादिसंबन्धावच्छिन्नत्वव्युदासः । तेन सिद्धान्तसमीहितविवर्तवादासिद्धिः । ननु कथमेतद् दृष्टमिति दृष्टान्ताकाङ्क्षायां पुनस्तदुभयमपि विशिनष्टि — स्रगिति । यथा मन्दान्धकारस्थितत्वादिना सविज्ञातायां मालतीमालायां महोरगभ्रान्तिः कदाचित्कस्यचित्संपद्यते तत्र स्रज्यारोपिते अहीन्द्रे मिथ्यात्वं सर्वसंमतमेव तद्वदविद्यातद्विद्यमाने द्वैतेऽपीत्याशयः । संकरपक्षेऽपि यथोक्तस्रगहीन्द्रयोराध्यासिक एव संकरस्तद्वदेव प्रकृतेऽपि चिच्चैत्ययोः स इति रहस्यम् ।

अत्र प्रथमेऽन्वये श्रीमन्मण्डनपण्डितानां ब्रह्मसिद्धिकृतां प्रयोगस्तथा द्वितीये श्रीमत्प्रकाशात्मयतीश्वराणां विवरणकाराणामभिमतं मिथ्यात्वलक्षणं च संक्षिप्तं भवति । तद्विस्तरस्त्वद्वैतसिद्धिलघुचन्द्रिकादावेव समधिगन्तव्य इति दिक् ।

ननु किमेतावता यदत्रभवताऽविद्या मिथ्याज्ञाननिवर्त्यत्वाच्छुक्तिरजतवदित्यनुमानेन तस्यां यथा मिथ्यात्वं साध्यते तथा अविद्या सत्या, उपादानत्वाद्ब्रह्मवदिति प्रत्यनुमानेन मया तस्याः सत्यत्वमपि साधयितुं शक्यमुपलक्षणमिदं गगनादित्वादिहेत्वन्तरस्यापीति सत्प्रतिपक्षत्वात्त्वदनुमानमाभास एव ।

न च तेनैवैतस्य कृतो न तथात्वमिति सांप्रतम् । मायां तु प्रकृतिं विद्यादिति, अजामेकामिति च श्रुत्या यद्यविद्योपादानं न स्यात्तथाऽनादिश्च न स्यात्तर्हि शुद्धं ब्रह्मैवाऽऽकाशादिप्रपञ्चप्रकृतित्वेन परिणामि स्यात्तथा मुक्तिदशायामपि पुनरविद्यातदितरप्रपञ्चोत्पत्तिश्च स्यादिति हेतोः स्वरूपासिद्धिबाधकयुक्त्या तथा यद्यविद्या सत्या न स्यात्तर्हि सर्वार्थक्रियाकारित्वेन सत्यप्रपञ्चोपादानं न स्यादिति युक्त्याऽपि मदनुमानस्यानुगृहीतत्वादिति चेन्न । शङ्खपीतिमोपादानीभूतशङ्खशौक्ल्यावच्छिन्नचैतन्यविषयकाज्ञाने प्रागभावे च व्यभिचारित्वेन त्वदुपन्यस्तानुमाने हेतोरप्रयोजकत्वाच्छुक्तिरजतादेरपि मिथ्यात्वस्य ज्ञाननिवर्त्यत्वैकसाध्यत्वेन प्रकृतेऽपि तथात्वस्यादण्डवारितत्वाच्छुक्तिज्ञानेन शुक्त्यज्ञानं मे नष्टमित्यनुभवादिदं रजतमहमज्ञ इत्यादिसाक्षिभास्यत्वस्योभयत्रापि तुल्यत्वाच्च ।

ननु यद्येवं तर्हि बोधवपुषीतिबोध्यशब्दिताविद्यातदधीनदृश्यविशेषणं व्यर्थमेव । निरुक्तबोधनिवर्त्यलक्षणमिथ्यात्वविशेषणेनैव तस्य सर्वस्यापि संग्रहादिति चेन्न ।

तस्य स्वरूपकथनपरत्वादस्य तु मिथ्यात्वलक्षणपरत्वाच्च । न चाथापि तत्राविद्याधीनदृश्यस्वरूपनिरूपणेऽपि तत्स्वरूपानिरूपणमेवेति वाच्यम् । अस्याविद्येत्यविद्यायामेवाऽऽसित्वा प्रकल्प्यत इति वार्तिकोक्तेरविद्ययैवाविद्याशरीरस्यापि सिद्धेः । नाप्यात्माश्रयः । अनादित्वेनोत्पत्तौ साक्षिरूपायास्तज्ज्ञप्तेरादावेव सिद्धत्वात्तत्रापि पश्चाद्भाविनस्तस्य प्रतिबन्धकत्वाभावात् । नहि दाहे जाते सत्यानीतेऽपि मणौ किंचित्प्रयोजनं जन्यते । एतेनाविद्योपहितचित एव सिद्धान्ते साक्षित्वात्तत्सिद्धौ तत्सिद्धिरित्यान्योन्याश्रयादिकमपि सुसमाधेयत्वादेव प्रत्युक्तम् ।

ननु कोऽयमबोधो नाम यन्निमित्तक एवायं शोभाकीर्णः सकलोऽपि प्रपञ्चः। न चानादिभावरूपं ब्रह्मात्मैक्यप्रमैकनिवर्त्यं तन्मात्राश्रयविषयं मायामोहाद्यपरपर्यायमनिर्वचनीयमज्ञानं प्रसिद्धमेवेति वाच्यम्। अपदार्थत्वात्। तथा हि। अबोध इत्यत्र—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥

इति प्राचां वचनादत्र न गच्छति चैत्रश्चैत्यमित्यादिवन्नञः क्रियानन्वयित्वेन प्रसज्यप्रतिषेधत्वस्य प्रतिषेधः सिद्ध एव। एवं च परिशेषादुत्तरपदान्वितत्वाच्च पर्युदास एवायमिति तु निर्विवादमेव। तदर्थस्तु—

नञीषदर्थे सादृश्ये तद्विरुद्धतदन्ययोः।
व्यतिक्रमे स्वरूपार्थे निषेधाभावयोरपि॥ इति हेमचन्द्रवचनात्।
तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥

इति नञ्वादशिरोमणिविवरणे गदाधरोदाहृतकारिकायाश्च नवधैवावभाति। तत्र हैमकोशापेक्षया कारिकायामप्राशस्त्यमात्रस्याभिनवत्वात्कोशक्रमेणैव तदन्तान्युदाहरणानि। अनुदरा कन्येयमितीषदर्थे। अब्राह्मणोऽयमिति सादृश्ये। असुर इत्यादौ तद्विरुद्धे। अघट इत्यादौ तदन्यस्मिन्। अविचार इति विचारव्यतिक्रमे। अवीरोऽयमिति काका स्वरूपे। अद्वैतमिति द्वैतनिषेधे। अभावरूपं तम इति त्वभावे। अपशवोऽन्ये गोऽश्वेभ्य इति अप्राशस्त्य इति।

तत्र संसर्गाभावोऽन्योन्याभावश्चेति द्वावेव शक्यावन्ये जघन्याः। तयोरेव मुख्यवृत्तिगम्यत्वात्तदितरसप्तानां तु लक्षणावृत्तिगम्यत्वाच्च। तथा चोक्तं तत्रैवावतरणग्रन्थे—संसर्गाभावोऽन्योन्याभावो नञर्थ इति शिरोमणिविवरणे गदाधरेण। लक्षणयैव सादृश्याद्यर्थे प्रयोगनिर्वाहे सादृश्याद्यर्थेऽपि शक्तिकल्पनमयुक्तमपि त्वभावान्यत्वरूपेऽर्थद्वय एव। स दृश्यत्वाद्यपेक्षयाऽभावत्वभेदत्वयोर्लघुतया तयोः प्रवृत्तिनिमित्तत्वे विनिगमकत्वादिति। न च—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः॥

इत्यभियुक्तोक्तेः कोशस्यापि शक्तिग्राहकतया कथं भेदसंसर्गाभावभिन्नतदुक्तार्थेषु लाक्षणिकत्वमिति सांप्रतम्। तस्य तथैवेष्टत्वात्। तत्राज्ञानमित्यत्र नाऽऽद्यो नञर्थः। ज्ञानस्य स्वमते ब्रह्मैकरूपत्वेनानुदरा कन्येत्यादौ कृशोदरीत्यादिवदल्पत्वरूपेषत्वासंभवात्। व्यवहारे तु साक्षिरूपस्यापि तथाऽन्तःकरणवृत्तिविशेषरूपस्यापि तस्य क्रमादविद्योपहितचित

एव साक्षितया यथाकथंचिदीषदर्थकत्वसंभवेऽप्यज्ञानसिद्धौ साक्षिसिद्धिस्तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयपराहतत्वादन्तःकरणवृत्तिगताल्पत्वेन तत्प्रतिबिम्बितचैतन्यरूपज्ञानविशेषेऽपि तत्त्वेन तदात्मकजीवादावतिव्याप्तेश्च । ( आदिना प्रमाणप्रमेयप्रमितयश्चतुर्विधान्तःकरणवृत्तिप्रतिफलितचैतन्यस्यैव प्रमात्रादिरूपत्वात् ) ।

नापि द्वितीयः । वृत्त्यात्मकज्ञानसदृशे स्मृत्यादावतिव्याप्तेः । नापि तृतीयः । ब्रह्माख्यपारमार्थिकेन साक्ष्यन्तःकरणवृत्तिविशेषान्यतरलक्षणव्यावहारिकेण वा ज्ञानेन सहास्य विरोधाभावादन्यथा तत्स्वरूपस्यैवाननुभवापाताच्च । नापि चतुर्थः। ज्ञानान्यस्मिन्घटादावतिव्याप्तेः । नापि पञ्चमः । तत्र ब्रह्मचैतन्यरूपस्य पारमार्थिकज्ञानस्य देशादिपरिच्छेदाभावेन तदतिक्रमासंभवात्साक्ष्यन्तःकरणवृत्तिविशेषलक्षणव्यावहारिकज्ञानस्य तु क्रमादतिक्रमवति भ्रमाणि भ्रमज्ञानातिक्रमणशालिनि प्रमाज्ञाने चातिव्याप्तेः । नापि षष्ठः (स्वरूपपक्षः) । ब्रह्मादिज्ञानत्रयेऽप्यतिव्याप्तेः । नापि सप्तमः । ज्ञानत्वावच्छेदेन निषेधे माध्यमिकमतापत्तेर्जगदान्ध्यापत्तेश्च ।

यत्किंचिज्ज्ञाननिषेधे तु शुक्तिशकलसाक्षात्कारेण नेदं रजतमिति बाधप्रमायामिदं रजतमिति ज्ञाननिषेधकत्वस्यापि सत्त्वात्तत्रातिव्याप्तेश्च । नाप्यष्टमः । ज्ञानसंसर्गाभावस्यैवासिद्धेः । अभासमानस्य तस्य गगनकुसुमायमानत्वेन भासमानत्वे वक्तव्ये तत्सामान्याभावासिद्धेश्च । एवमभावज्ञानं हि धर्मिप्रतियोगिज्ञानमन्तरा नैव भवतीति सर्वसंमतम् । तथा च तज्ज्ञानस्य सत्त्वेऽसत्त्वे वा क नाम ज्ञानसामान्याभावसिद्धिः । तथा चोक्तं सिद्धान्तबिन्दौ—न चेदमभावरूपम् । ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरुक्तत्वात् । धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेरिति ।

नापि नवमः । अप्रशस्तं हि ज्ञानं भ्रमरूपमेव मिथ्यार्थविषयकत्वेन वाच्यम् । तस्य त्वज्ञानैकमूलकत्वेन ततः प्रागेव तस्याऽऽवश्यकत्वात्तदन्तरैव दोषसादृश्यबुद्ध्यादिनैव तदङ्गीकारेऽपि तत्रातिव्याप्तेः सिद्धान्तभङ्गापत्तेश्च । तदुक्तं संक्षेपशारीरके—

साहश्यधीप्रभृति न त्रितयं निमित्तमध्यासभूमिषु जगत्यनुगच्छतीदम् । इत्यादि । त्रितयं साहश्यधीदोषसंस्कारात्मकमिति माधुसूदनी तट्टीका । विस्तरस्तु तत्रैव ज्ञेयः । तस्मादबोधपदार्थस्यैवासिद्धेः क नाम तन्मूलोऽध्यास इति ।

अत्रोच्यते—नवविधस्याप्यर्थस्य प्रकृते क्षोदक्षमत्वात्सूपपाद एवाज्ञानपदार्थः । तद्यथा—सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः पारमार्थिकस्य ज्ञानस्य भूमरूपत्वादीषत्त्वशब्दिताल्पत्वासंभवेऽपि घटाकाशादिवदुपहिते तत्र तत्संभवेन स एक इत्यादिब्रह्मात्मैक्यप्रबोधकश्रुत्यन्यथानुपपत्त्यादिभिर्जीवेश्वरादिप्रपञ्चविषभेदेऽपि भ्रमत्वसिद्धौ तन्मूलीभूतं

' विषयकरणदोषाद्भ्रमः ( संविदि घटादिज्ञाने अस्मत्तार्किकादीनामनुव्यवसायवेद्यत्वभ्रमः ) संविदि (सिद्धान्ते संविदः स्वप्रकाशत्वादन्यथाऽनुव्यवसायस्यापि तत्त्वेनानवस्था ) स्यादपि तु भवति मोहात्केवलादेवमेव ।

भगवति परमात्मन्यद्वितीये विविधाद्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ' इति श्रीमत्सर्वज्ञात्ममुनीश्वरचरणवचनमिदं ब्रह्मविदाप्नोति परमित्यादिश्रुतिभिर्मोक्षस्य ज्ञानैकसाध्यत्वाभिधानाद्ब्रह्मात्मैक्यविषयकविचारितोक्तमहावाक्यैककरणकचरमप्रमारूपज्ञानविनाश्यं तत्समानाश्रयविषयमज्ञानमेव स्वभानान्यथानुपपत्तिसिद्धचिदाभासावलितभीकज्ञानशब्दवाच्यमुक्तिमेवेति प्राथमिकनञर्थः प्रकृते निर्बाध एव । अज्ञानसिद्धौ तदुपहितसाक्षिभिरित्यादन्येऽन्याश्रयस्त्वभस्तादेवानादित्वादिना दत्तोत्तरः ।

यत्तु जीवादावल्पज्ञानेऽतिव्याप्तिप्रदर्शनं तद्भावानवबोधमूलमेव । न ह्यल्पज्ञानमज्ञानपदवाच्यं वदामः, किंत्वल्पत्वं भूम्नि ज्ञाने येनाहं ब्रह्म न जानामीति स्वभानार्थमानीतं तत्स्वसत्तादिप्रयोजकं स्वप्रसादैकागताल्पत्वावच्छिन्नज्ञानं विनाऽनवभासमानमनिर्वचनीयं मृगजलावभासकालोकविशेषादिकमिव ज्ञानरूपम् । तथा च कुतातिव्याप्तिसंभवोऽपि ।

न च तर्हि ज्ञानमेव प्रकृतेऽल्पत्वविशिष्टमज्ञानपदेन वक्तव्यं न त्वल्पज्ञानरूपाचिदाभासान्वितं भावरूपं निरुक्तज्ञाननिवर्त्यमनिर्वचनीयं किंचिद्वस्त्विति वाच्यम् । नित्यस्याल्पत्वस्य विनोपाधिमसंभवेन तदावश्यकत्वात् ।

एवं ब्रह्मरूपपारमार्थिकज्ञानेनानादित्वजन्योपादानत्वाभ्यां सादृश्यस्याज्ञाने ' अजामेकामिति, मायां तु प्रकृतिं विद्यादित्यादिश्रुतिसिद्धत्वादद्वितीयोऽपि नञर्थः सुघट एव ।

तृतीयस्तु प्रथमत एवार्थादुपपादितः । निरुक्तरूपचरमज्ञानविरोधित्वस्य तत्र प्रपञ्चितत्वात् । तथा चतुर्थोऽपि मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदिति श्रुतेर्नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरिति स्मृतेश्च कूटस्थब्रह्मरूपज्ञानभिन्नत्वस्याज्ञाने सत्त्वात्सम्यगेव ।

न चैवं तर्हि भेदवादापत्तिः । यावद्विधं तस्येष्टापत्तेः । एतेन ज्ञानान्यस्मिन्घटादावतिव्याप्तिरपि प्रत्युक्ता । समुदाहृतश्रुत्या तत्र तदेकोपादानकत्वेन तदभेदात् । पञ्चमस्तु यद्यपि वस्तुतो ज्ञानरूपस्य ब्रह्मणोऽज्ञानेनातिलङ्घनलक्षणव्यतिक्रमं कर्तुं परिच्छिन्नत्वेनाशक्यत्वादनुपपन्न इवाऽऽभाति तथाऽपि नास्ति ब्रह्म न भाति ब्रह्मेत्यादिव्यवहारस्य तदेक आहुरसदेवेदमग्र आसीदित्यादिच्छान्दोग्यादिश्रुतौ लोके च नास्तिकादावज्ञानप्रभावादेव दृष्टत्वेन घटत एव ।

तेन पारमार्थिकज्ञानकर्मकव्यातिक्रमस्योक्तरीत्या विवक्षितत्वात्तत्र नाम व्यावहारिकज्ञानरूपयोः साक्ष्यन्तःकरणवृत्तिविशेषरूपप्रमाज्ञानयोर्व्यतिक्रमितरि प्रमाणि प्रमाज्ञाने चातिव्याप्तिशङ्काऽपि ।

एवं षष्ठोऽपि सर्वं खल्विदं ब्रह्म, इदं सर्वं यदयमात्मा, सर्वं खल्विदं ब्रह्मेत्यादिश्रुतिभिर्वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इति शम्भुरेव सदा भाति सर्वात्मत्वेन नापर इति दिवि भूमौ तथाऽऽकाशे बहिरन्तश्च मे विभुः । योऽवभासयन्भमसात्मा तस्मै सर्वात्मने नम इत्यादिस्मृतिभिश्च ब्रह्मद्वया त्वविवेक्यं न कथंचन युज्यत इति समुदाहृतवार्तिकात्तुच्छाऽनिर्वचनीया च वास्तवी चेति च त्रिधा । ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैरित्यभियुक्तोक्तेश्च । वस्तुतः सर्वच्छिदत्यावद्विवर्ततदुपादानयोस्तुच्छत्वेनाज्ञानमिति काक्वा समभिव्याहारे ब्रह्माद्वैतरूपप्रमैकसमवधारणेन युक्त एव ।

सप्तमाष्टमौ तु पञ्चमोक्तरीत्यैवाविरुद्धौ । तथा हि—सत्यं ज्ञानमित्यादिश्रुतेर्नास्ति ब्रह्मेत्यादिव्यवहारस्य ज्ञानरूपब्रह्मैकनिषेधविषयकत्वात्तन्निषेधे तदभावस्याविनाभावसिद्धत्वाच्च निषेधपक्षोऽभावपक्षश्च स्फुटमेव ततः समाहितः ।

न चैवं प्रागुपपादितज्ञानाभावानुपपत्तिविरोधः। तस्याः पारमार्थिकाभावविषयत्वात् । प्रकृतव्यवहारस्य तु यावदविद्यमपारमार्थिकत्वाज्ज्ञानाभावविषयत्वं तदात्माश्रयादेर्दूषणादित्वेनैव प्रत्याख्यातत्वान्मायाया अघटितघटनपाटवस्य सर्वत्र दृष्टत्वाच्च ।

एवं नवमपक्षोऽप्यप्रशस्तज्ञानलक्षणापदार्थसाधकः प्राथमिकैतदर्थकपक्षसमाधानत एव व्याख्यातः । तत्र अज्ञानस्यैषज्ज्ञानरूपत्वं स्वभावान्यथानुपपत्त्या साचिदाभासत्वादेवेत्युक्तं तेन ज्ञानस्य भूमत्वादुपहितत्वमेवाल्पत्वमोषमप्राशस्त्यमपि तदेवेति चिदाभासोपाधिभूतं भावरूपं निरुक्तप्रमैकनिवर्त्यमनिर्वचनीयमेव मायाऽविद्यादिपदवाच्यं निखिलप्रपञ्चोपादानं मूलाज्ञानं सिद्धमेवेति न नञर्थनवकेऽपि तदनुपपत्तिगन्धोऽपीति दिक् ।

अत्र मिथ्यात्वान्योन्यसंकरयोर्बाधनिवर्त्यैक्यैकविशेषणतः प्रकृते ज्ञाननिवर्त्यत्वस्वरूपं श्रीमद्विवरणाचार्यसंमतमेव मिथ्यात्वलक्षणं संगृहीतं भवति । तदाहुर्विवरणे श्रीमत्प्रकाशात्मश्रीचरणाः—अज्ञानस्य स्वकार्येण प्रविलीनेन वर्तमानेन वा सह ज्ञानेन निवृत्तिर्बाध इति । प्रविलीनेनेति कार्यविशेषणं तु रज्ज्वाद्यवच्छिन्नचैतन्याज्ञानवद्भूच्छिद्रादिभूतभाविष्यद्भ्रमसंग्रहार्थम् । तत्र निवृत्तिबाधयोः परस्परोद्देशविधेयभावात्क्रमाज्जीवन्मुक्तिसद्योमुक्ती सिध्यतः ।

तथा च निवृत्तिपदार्थोऽत्र बाधशब्दितो मिथ्यात्वनिश्चय एव न तु ध्वंसस्तथा च किंचित्कालं प्रारब्धतः प्रतिबन्धात्तदाभासप्रतीत्या जीवन्मुक्तिसिद्धिः । तदुक्तं चित्रदीपे—

नाप्रतीतिस्तयोर्बाधः किंतु मिथ्यात्वनिश्चयः ।
नो चेत्सुषुप्तिमूर्छादौ मुच्येतायत्नतो जनः ॥ इति ।

तयोर्जीवभावजगद्भावबाधे स्वात्मैव शिष्यत इति प्राक्प्रक्रान्तजीवजगद्भावयोरित्यर्थः । बाधो निवृत्तिरेवेति तु सद्योमुक्तिसिद्धिरित्यलं पल्लवितेन ॥ २२ ॥

ननु भवत्वेवं प्रतिज्ञातबोधैक्यसिद्ध्यविनाभावसिद्धाविद्याताद्विषमानयावदृश्यमिथ्यात्वात्स्पष्टीभवनं रज्जुसर्पवच्चिदचितोः परस्पराध्यासं विना, तथा तस्य ज्ञाननिवर्त्यत्वमप्यथापि क नाम ततस्तवाद्वैतासिद्धिमत्याशाऽपि । मीमांसकाद्यास्तिकादिवादिभिरध्यासस्यैवानेकविधत्वाभ्युपगमात् । ततश्च द्वैतमिथ्यात्वासिद्धेश्चेति चेन्न । तत्तद्वाद्यभ्युपगताध्यासप्रकाराणां दुष्टत्वेन खण्डयिष्यमाणत्वादित्यभिसंधाय तानुद्दिशति-अख्यातीरिति—

**अख्यातिः सत्ख्यातिस्तथाऽन्यथाख्यातिरप्यसत्ख्यातिः ।**
**आत्मख्यातिश्चेति व्यवस्थितिस्तत्र गुर्वादेः ॥ २३ ॥**

ख्या प्रकथने, इति स्मरणात्ख्यायते प्रकथ्यते अज्ञातशुक्तिकायामालोकादिसामग्र्या लोकैरिदं रजतमिदं रजतमित्यादि केवलं स्पष्टं कथ्यत एवेति ख्यातिः । यद्यपि निरुक्तव्युत्पत्त्या वाचाऽऽरम्भणाधिकरणन्यायेन च सविषयकभ्रान्तिर्मिथ्यैव ख्यातिपदार्थ इति तन्मतेऽपि तत्र सत्ताऽनुपपत्तिरेव । तथाऽपि तत्र तैः सोऽयं देवदत्त इत्यादिमत्यभिज्ञावच्छौक्तिकेदमंशादौ ग्रहणात्मकं रजतादौ स्मरणात्मकं चेति मिलितस्य ज्ञानद्वयस्यैव निरुक्तयथार्थविषयकस्याङ्गीकाराद्युक्तमेव तस्यां सदर्थविषयकत्वेन सत्त्वमिति तत्त्वम् । चः समुच्चये । एवमग्रेऽपि ।

अथैवं सांख्यसंमतां सत्ख्यातिमुद्दिशति—सत्ख्यातिरिति । तैर्हि शुक्तिरूप्यादिषु स्मर्यमाणरूप्येण सहाविवेकाच्छुक्तिशकलं गृह्यमाणमपीदंतया रजतमिव विभातीत्यङ्गीकृतमित्याशयः ।

एवं तार्किकसंमतामन्यथाख्यातिमप्युद्दिशति—तथेति । तथाशब्दोऽत्र मीमांसकादिवदास्तिकत्वमात्रसूचनार्थः । अन्यथा सादृश्यादिदोषमहिम्ना हट्टस्थमेवरूप्यं पुरोवर्तित्वेन गृह्यमाणतया ख्यायत इति तथेत्यर्थः । गर्हा समुच्चयप्रश्नशङ्कासंभावनास्वपीत्यमरादपिरत्र माध्यमिकादिनास्तिकसंमतासत्ख्यात्यादिगर्हार्थः । तामेवोद्दिशति—असदिति । अलीकमेव शुक्तिरजतादीति तदर्थः ।

अथाऽऽत्मपदगृहीतसौगतसंमतां तामुद्दिशति—आत्मेति । आत्मा यत्नो धृतिर्बुद्धिरित्यपि त्रिकाण्डयुक्तेर्बुद्धिरेवोक्तरजतादिकमिति यावत् । चः पूर्वोक्तासत्ख्यातिसमुच्चायकः । इतिशब्दः सर्वास्तिकादिमतख्यात्युपसंहारार्थः । तत्र व्यवस्थापेक्षायां तामाह—व्यवस्थितिरित्यादिशेषेण । गुरुः प्रभाकरः ॥ २३ ॥

एवं ख्यातिपञ्चकं समुद्दिश्याथ तल्लक्षणाकाङ्क्षायां यथोद्देशक्रमप्राप्तामादावख्यातिमेव श्लोकार्धेन लक्षयति—तत्रेति—

**तत्रेदमंशे ग्रहणं प्रमृष्टतत्त्वांशमात्रं स्मरणं च रूप्ये ।**

समुद्दिष्टख्यातिपञ्चकमध्य इत्यर्थः । तामेवाख्यातिमिदं रजतमित्यत्रोदाहरणे व्युत्पादयति—इदमंश इत्यादिपूर्वार्धशेषेण । एवं चेदं रजतमित्यत्र पुरोवर्तिशुक्तिशकलीयेदमंशविषय एव प्रत्यक्षात्मकं ज्ञानं रजतांशे परं प्रमृष्टतत्त्वांशकं स्मरणमिति ग्रहणस्मरणोभयात्मकं सोऽयं देवदत्त इत्यादिविषयकप्रत्यभिज्ञाज्ञानवदेकमेव ज्ञानं भवतीति प्रागुक्तव्युत्पत्तिसिद्धो मिथ्याज्ञानात्माख्यातिशब्दितोऽत्र भ्रमो नैवास्तीत्याकूतम् । तथा च ग्रहणस्मरणैक्यमख्यातिरिति तल्लक्षणं फलितम् ।

एवमेवाऽऽहुः—केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति भाष्यव्याख्याने श्रीमदानन्दज्ञानचरणाः । यत्र शुक्त्यादौ यस्य रजतादेरध्यासो लोकप्रसिद्धस्तयोस्तद्धियोश्च दोषवशाद्विवेकाग्रहे तत्कृतो रजतमिदमित्यादिसंसर्गव्यवहार इत्यख्यातिवादिनः, इति ।

अत्रैव भामत्यामप्युक्तं—तथा च रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे । तत्रेदमिति पुरोवर्तिद्रव्यमात्रग्रहणम् । दोषवशात्तद्गतशुक्तित्वसामान्यविशेषस्याग्रहात् । तन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति । सा च गृहीतग्रहणस्वभावाऽपि दोषवशाद्गृहीतत्वांशप्रमोषाद्ग्रहणमात्रमवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिद्रव्यमात्रग्रहस्य च मिथः स्वरूपतो विषयतश्च भेदाग्रहात्संनिहितरजतगोचरज्ञानसारूप्येणेदं रजतमिति भिन्ने अपि स्मरणग्रहणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । क्वचित्पुनर्ग्रहणे एव मिथोऽगृहीतभेदे । यथा पीतः शङ्ख इति ।

अत्र हि बहिर्विनिर्गच्छन्नयनरश्मिवर्तिनः पीतद्रव्यस्य काचस्यैवातिस्वच्छस्य पीतत्वं गृह्यते, पित्तं तु न गृह्यते । शङ्खोऽपि दोषवशाच्छुक्लगुणरहितः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरसंसर्गाग्रहसारूप्यात्पीततपनीयपिण्डप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च । भेदग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते ।

तदुपपत्तौ च प्राक्तनप्रत्ययस्य भ्रान्तत्वमपि लोकसिद्धं सिद्धं भवति । तस्माद्यथार्थाः सर्वे विप्रतिपन्नाः संदेहविभ्रमाः । प्रत्ययत्वाद्घटादिप्रत्ययवदिति ।

अयमर्थः—असंसर्गाग्रहेति । यथा पीततपनीयपिण्डशब्दितदोषविशेषाप्रमृष्टपीतरूपविशिष्टहाटकगुटिकायां पीतरूपाख्यगुणस्य सुवर्णद्रव्यस्य च यस्तादात्म्यलक्षणः

संसर्गः संबन्धस्तदभावोऽसंसर्गस्तदग्रहात्पीततृणीयपिण्ड इति प्रमितिरतद्रूपकृतेऽपि पित्तनिष्ठस्य पीतरूपस्य शङ्खस्य च परस्परं गुणगुणिभावेन यस्तादात्म्यरूपः संसर्गस्तदभावाग्रहणात्पीतः शङ्ख इत्यभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च भवतीति भावः । तथा चागृहीतभेदत्वे सति सदोषज्ञानद्वयत्वमेवाख्यातित्वमिति तल्लक्षणं सर्वमतानुगतं पर्यवसितम् ।

घटः पट इति क्रमिकज्ञानद्वयेऽतिव्याप्तिवारणाय सदोषेति । न चैवमपि तन्मते भ्रमस्यैवाभावात्सदोषत्वरूपविशेषणं ज्ञाने दूरत्वादिकरणादिदोषजन्यत्वेनान्वेतुं नैवार्हति किंतु प्रमातृसामानाधिकरण्येनैव । तथा च पुनरप्युक्तातिव्याप्तितादवस्थ्यमेव दोषस्य स्वसामानाधिकरण्येऽपि स्वविशेषणीभूतागृहीतभेदत्वे कारणत्वेनानन्वयात् हि प्रमातरि स्वरूपसन्नपि करणादिदोषः कारणतापन्नोऽज्ञानदोषत्वमापादयति. किं शशाङ्कगः कलङ्कः कौमुदीमपि पङ्किलयतीति विभाव्यते चेत्तर्हि सदोषत्वस्याप्यगृहीतभेदत्वेन सह कार्यकारणभाव एव वक्तव्यः । यतोऽगृहीतभेदमतः सदोषमिति । एवं चागृहीतभेदत्वहेतुकमेव निरुक्तज्ञानद्वये प्रमातृनिष्ठकरणादिदोषमन्तरा कालत्रयेऽप्यसंभवात्तस्यार्थसमाजग्रस्तत्वाद्गौरवात्क्लिष्टत्वात्सदोषेति लक्षणे मैवास्त्विति चेन्न वारयामः । इष्टापत्तेः । तस्मादगृहीतभेदकं ज्ञानद्वयमेवाख्यातिरिति निष्कर्षः ।

सा हि गुर्वपरनाम्नः प्रभाकराभिधपूर्वमीमांसकस्यैव संमता । तदुक्तं वेदान्तकल्पलतिकायां श्रीमधुसूदनसरस्वतीचरणैः—प्राभाकराणां तु भ्रान्तित्वानभ्युपगमात्तत्त्वज्ञानस्य कोपयोग इति । प्रागुक्तव्युत्पत्त्याऽत्र ख्यातिपदेन भ्रान्तिरेव तदभावो ऽख्यातिः सर्वत्र शुक्तिरजतादिषु विभ्रमोदाहरणेषु निरुक्तरीत्या ग्रहणस्मरणैक्यस्यैव तैः स्वीकारादिति लक्षणसमन्वयः ।

ननु नीरूपस्येदमंशस्य गुरुमते कथं चाक्षुषत्वम् । न च तुल्ययोगतासिद्धान्तेऽपीति सांप्रतम् । तत्र तस्य स्वप्रकाशसाक्षिभास्यत्वेऽप्यालोकग्रहार्थं चक्षुरपेक्षणात्तस्य च रूपवत्तायाः सर्वसंमतत्वान्निरुक्तोदाहरण एव मतभेदादिविस्तरस्य त्वग्रे वक्ष्यमाणत्वाच्चेति चेन्न । तन्मते संविच्छब्दवाच्ययावज्ज्ञानानामेवान्तःकरणवृत्तिविशेषत्वेन सिद्धान्ते संमतानां स्वप्रकाशत्वाङ्गीकारेण तस्य तद्भास्यत्वसंभवाच्चक्षुरपेक्षायास्तु सिद्धान्तसमत्वाच्चेति दिक् ।

एवमख्यातिं लक्षयित्वाऽथ तामनूद्य खण्डयति—अख्यातिरित्यादिसार्धद्वाभ्याम्—

अख्यातिरेषा तु न युक्तियुक्ता
बाधस्य यन्निर्विषयत्वमेति ॥ २४ ॥

तत्र प्रतिज्ञामाह—अख्यातिरेषा त्वित्यादिना तृतीयपादेन । तुरवधारणे । एषा पूर्वाधिकृतलक्षणत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षेत्यर्थः । नैव युक्तियुक्ता क्षोदक्षमा

भवतीति संबन्धः । तत्र हेतुं व्यस्यादयति —बाधस्येत्यादिचरणचरणेन । यस्मा-द्धेतोर्बाधस्य नेदं रजतं नार्थं रजतमित्यादिरूपस्य प्रत्यक्षादिप्रमाणजन्यज्ञानस्येत्यर्थः । निर्विषयत्वं विषयवैधुर्यम् । एति प्राप्नोति । तस्मादित्यर्थसिद्धेन तच्छब्दाध्याहारेण, एषा अख्यातिर्नैव युक्तियुक्तेति पूर्वेणान्वयः । तथा चोक्तं मदीये साहित्यसारे दोषविनिर्णयरूपविष[ य ]संज्ञकहरत्ने —

> तच्छब्दाक्षेपदक्षो यच्छब्दस्तूत्तरवाक्यगः ।
> पूर्ववाक्यगतस्त्वीप्सेदुपादानं स तद्गिरः ॥
> रे मानस परं साधु कर्तव्यं भवताऽधुना ।
> यन्निमज्जनमाप्येत सच्चिदानन्दवारिधौ ॥ इति ।

विवृतं चेदं मामकीन एव सरसामोदाख्ये तद्व्याख्याने । नन्वस्त्वेवमेक-त्रस्थित्याख्य आर्थे यत्तदोः संबन्धभेदे तच्छब्दस्य त्रैविध्यव्यवस्था । तथाऽपि यदि केवलो यत्र यच्छब्द एवोपलभ्यते तत्र कथं तयोः संबन्धनैयत्यमित्यत आह— तच्छब्देति । शङ्कोपशमनार्थस्तच्छब्दादस्य वैलक्षण्यावद्योतनार्थो वाऽयं तुशब्दः । यच्छब्दस्तूत्तरवाक्यगः । पद्यादिगतद्वितीयवाक्यस्थित एव तच्छब्दाक्षेपदक्षस्तच्छ-ब्दस्याऽऽर्थिकसंबन्धेनाध्याहारक्षमो भवतीति योजना ।

इह तच्छब्दाक्षेपेत्युक्तेः परोक्षत्वादितदर्थाध्याहारो व्युदस्तो बोध्यः । तत्स्वी-कारेऽपि शाब्दबोधासंभवादिति भावः । यथा प्रतापरुद्रीये—

वदान्यो नान्योऽस्ति त्रिजगति समो रुद्रनृपतेर्गुणश्रेणीश्लाघापिहितहरिदीशानयशसः ।
समन्तादुद्भूतैर्द्विरदमदगन्धैः सुरभयः क्रियन्ते यद्विद्वज्जनमणिगृहप्राङ्गणभुवः ॥ इति ।

इयमेव व्यत्यासेनोत्तरार्धोदाहरणम् । तु पुनः पूर्ववाक्यगतः पद्यादि-प्रथमवाक्यस्थः स यच्छब्दस्तद्गिरस्तच्छब्दस्योपादानमार्थिकसंबन्धेन चारितार्थ्या-भावाच्छाब्दिकसंबन्धार्थमुच्चारणमीप्सेत्पद्यादावभिवाञ्छेदित्यन्वयः । तस्मात्पूर्ववाक्ये यच्छब्दश्चेदुत्तरवाक्ये तच्छब्दग्रथनमावश्यकमेवेत्याशयः । तदुदाहरति—रे मानसेति । विस्तरस्तु तत्रैव ज्ञेयः ।

अयमाशयः । यदीदं रजतमित्यादिव्यवहारे ख्यातिशब्दवाच्यः प्रागुक्तयोगवृ-त्तिसिद्धः प्राभाकराणां भ्रमो नैव संमतः किंतु पुरोवर्तिशुक्तिशकलादिसंबन्धीदमं-शविषयकमालोकरूपग्रहणापेक्षितचक्षुर्जन्यमात्मसमवेतं बुद्ध्यभिधगुणरूपं स्वसं-मतस्वप्रकाशत्वशालिप्रत्यक्षं ज्ञानं तथाकचक्यदूरत्वादिदोषप्राग्दृष्टरजतसंस्कारव-

...दपलपितस्वतत्तांशकं रजतस्मरणं चैकीभूय सादृश्यादिदोषैरिदं रजतमित्यविविक्तं ज्ञानं भाति तदेव शुक्त्यादिज्ञानेन स्मर्यमाण रजतस्य शुक्त्यादिना सहाविवेकभङ्गमात्रेण बाधितमिव भवतीति लोके भ्रमत्वेन व्यपदिश्यत इति नियतं तर्हि नेदं रजतमिति पुरोवर्तितादात्म्यप्रतियोगित्वेन नात्र रजतमिति संसर्गप्रतियोगित्वेन च पक्षे साध्याभावनिर्णयलक्षणो बाध एव रजतादिरूपस्य विषयस्य पुरोवर्तितादात्म्यसंसर्गाभ्यामविद्यमानत्वे कथं स्यात् । नहि प्राप्तिमन्तरा कश्चिन्निषेधः प्रवर्तते ।

न च नान्तरिक्षेऽग्निश्चेतव्य इत्यादौ नभोऽन्तरिक्षं गगनमित्यभिधानादन्तरिक्षशब्दिते गगनेऽग्निचयनस्य प्राप्तिमन्तराऽपि निषेधदर्शनान्नैवायं नियम इति सांप्रतम् । तत्रान्तरिक्षशब्देन सांप्रदायिकैर्वितानाद्यावरणशून्यदेशस्यैव स्वीकृतत्वेन संमतत्वात् । तत्रानाश्वासे तु श्रुतावगत्या तथा स्वीकारेऽपि तावता लौकिकनियमे बाधकाभावादन्यथाऽहरहः संध्यामुपासीतेत्यादौ वीप्सायाः सर्वत्र विधौ नित्यत्वघटकत्ववद्विषभक्षणं कुरु कुर्वित्यादावपि तदापत्तेश्च ।

नन्वेवं नियमेऽपि पुरोवर्तीदमंशस्य स्मर्यमाणरजतस्य च परस्परमसंबन्धाग्रहस्तु प्राप्त एवेति तद्विषयक एवायं नेदं रजतमित्यादिर्भवतु निषेध इति चेन्न । तथात्वे नानेन रजतसंसर्ग इति नात्र रजतसंसर्ग इति च निषेधाकारः स्यान्न तु नेदं रजतं नात्र रजतमिति । तत्त्वनुभवविरुद्धमेव ।

किंच सर्वत्र भ्रमो ह्यसंसर्गाग्रहनिबन्धन एव ग्रहणस्मरणलक्षणज्ञानद्वयात्मेति वदन् गुर्वपरनामा प्रभाकरः प्रष्टव्यः—किं पुरोवर्तीदमंशस्मर्यमाणरजतयोर्योऽयमसंसर्गो नाम त्रैकालिकः संबन्धप्रतियोगिको ह्यभावः स पुरोवर्तीदमंशस्मृतरजतलक्षणोभयाधिकरणकः किंवाऽन्यतराधिकरणकः । पक्षद्वयेऽपीदं रजतमिति ज्ञाने पुरोवर्तीदमंशग्रहस्मृतरजतयोर्गृहीतत्वेन तत्प्रतियोगिकसंसर्गाभावस्यापि तदात्मना ग्रहाच्चदसंसर्गाग्रहासंभव एव ।

न चोक्तेदमंशस्मृतरजतलक्षणाधिकरणात्मनोक्तसंसर्गाभावग्रहेऽपि तदात्मना तदग्रहः स्फुट एवेति वाच्यम् । घटसंसर्गाभावात्मना भूतलस्याग्रहेऽपि भूतलमात्रग्रहे घटासंसर्गाग्रहं प्रति प्रतिबन्धकत्ववत्पुरोवर्तीदमंशस्मृतरजतप्रातियोगिकसंसर्गाभावात्मना तयोरग्रहेऽपि तन्मात्रग्रहस्य तदसंसर्गाग्रहं प्रति प्रतिबन्धकत्वात् ।

ननु शुद्धभूतलविषयकधीघटसंसर्गवद्भूतलविषयकधियोः कथं प्रतिबध्यप्रतिबन्धकभावो यन्निदर्शनेन प्रकृतेऽपि स वाच्य इति चेच्छृणु । तद्वद्बुद्धिस्तद्व्याप्यवद्बुद्धिर्वा तदभावबुद्धिं प्रति प्रतिबन्धिका । यथा वह्निमानिति धूमवानिति वा बुद्धौ

तथा च व्याप्तिघटकयच्छब्दवीप्सयैव वाक्यान्यज्ञानसंग्रहे पौनरुक्त्यावहस्य सर्व-पदस्य नैव वैयर्थ्याद्यापत्तिः । अत्र अन्यपदेन शुद्धचिद्रूपस्य स्वप्रकाशस्य नित्यकू-टस्थज्ञानस्य निर्विषयत्वेऽपि न क्षतिरिति द्योत्यते ।

किंच यदि ग्रहणस्मरणोभयात्मकमिदं रजतमिति ज्ञानं तर्हि रजतांशे स्मरणात्म-कस्य तस्य तद्रजतं स्मरामीत्येवोल्लेखेन भाव्यम् । न च तत्र तत्तांशमात्रस्यापलापा-देव तथोल्लिख्यत इति युक्तम् । स एव किंनिमित्तक इति प्रश्नसंभवादित्यभिसंधाय पृच्छति— तत्तेत्यादितृतीयपादेन । चादिनिपातद्वयमपरयुक्तिसमुच्चायकम् ।

ननु कारणान्तराभावाच्छुक्तिविषयकाज्ञानादेव रजतस्मृतौ तत्तांशप्रमोष इति चेन्न । घट्टकुटीप्रभातन्यायापत्तेः । तथा हि—ग्रहणस्मरणात्मकज्ञानद्वयाद्यङ्गीकारलक्षणे आयासे कृतेऽपि यदि शुक्त्याद्यधिष्ठानविषयकाज्ञानमन्तरा नैव गतिस्तर्हि तत्परिणा-मीभूतमनिर्वचनीयमेवास्तु रजतादिकं किमनेनान्तर्गडुना तत्स्मरणेनेत्यापादयति—स इत्यादिचरमचरणेन । अत्र शालिनीवृत्तं विज्ञेयम् ॥ २५ ॥

अपि च ग्रहणस्मरणात्मक एवेदं रजतमित्यादिरूपो भ्रम इति वदन्नख्यातिवादी स्मृतेः संस्कारजन्यत्वमननुभूतस्मृत्यभावान्यथानुपपत्त्या स्वी कुर्यादेव । तथा च यद्यपि रजतादिभ्रमे रजतस्य प्रागनुभूतत्वेन तज्जन्यसंस्कारात्तत्स्मृतिसंभवेऽपि—

खमपि खादति खण्डितमीक्षते निजशिरो नयनेन करस्थितम् ।
किमपि दुर्घटमस्य न विद्यते यदि विमूढमतिर्भवति स्वयम् ॥

इति संक्षेपशारीरकाचार्यचरणवचनोक्तस्वामिकाकाशभक्षणादिभ्रमे तस्य प्राक्कदाऽ-प्यननुभूतत्वेन तत्संस्कारविरहात्तत्स्मृत्यसंभव एवेति निरुक्ताख्यातिवादिप्रक्रिया तुच्छैवेति मन्दाक्रान्तयोपपादयति सुप्त्याकारमित्यादिना—

**सुप्त्याकारं परिणतमभूत्पल्लवाज्ञानमेत-**
**ज्ज्ञानास्वप्नान्प्रकटयति ते तत्र या व्योमभुक्तिः ।**
**सा प्राक्काऽऽसीदपि जगति या स्मर्यतेऽतो मृषैत-**
**त्साकं युष्मत्प्रलपनशतैः संविदोश्चापि नैक्यम् ॥ २६ ॥**

पल्लवेति । मूलाज्ञानस्यैवावस्थाविशेषात्मकं तूलाज्ञानापरनामकमित्यर्थः । सुप्तीति । निद्रारूपमिति यावत् । एतादृशं यदा परिणतमभूदिति योजना । न चेयं स्वप्रक्रियैव न तु प्राभाकरी । एवं च कोक्तानुपपत्तिरिति वाच्यम् । अस्मत्प्रक्रियाया एव तेना-नुपदमेवागत्याऽङ्गीकार्यत्वस्य तत्तामोषश्चापि कस्मात्स्मृतौ ते सोऽज्ञानाज्जमेवास्तु रूप्यमित्यत्रोक्तत्वात् । तस्माद्युक्तमेवोक्तं सुप्त्याकारमित्यादीत्याकूतम् ।

ननु भवत्त्वेवं पल्लवाज्ञानस्य [illegible] तथाऽपि प्रकृते किमायातमित्या-शङ्क्य तदुपपादयति—एतदित्यादिना। एतदिति [illegible] सुषुप्तिरूपत्वेन संजातपरिणामं पल्लवाज्ञानमित्यर्थः। एतेन वक्ष्यमाणे नानास्वप्नप्रकटने हेतुर्द्योतितः। अत एव—नानेति। एतेन स्वप्नानामनैयत्यं ध्वन्यते। प्रकृतं कथयति—त इत्यादिना। तत्र निरुक्तस्वप्नावस्थायामित्यर्थः। ते तव या व्योमभुक्तिस्त्वत्कर्तृकाकाशभक्षणक्रिया सा, अनुभूयते त्वयेति शेषः। ततोऽपि किमित्यत आह—सेत्यादिना। सा भोक्ताकाशकवलनक्रिया। प्राक् ततः पूर्वम्। जगत्यपि विश्वस्मिन्नपि। एतेन स्वनिष्ठत्वेन वर्तमानदेशकालावच्छेदेन तदभावेऽप्ययमनिष्ठत्वेन भूतभाविदेशकालावच्छेदेनापि तदसंभवः सूचितः। क आसीन्न कुत्रापि देशकालादावभूदिति संबन्धः।

ननु मा भवतु सा प्राग्व्योमभुक्तिः कुत्रापि किं तत इत्यत आह—येत्यादिना। या व्योमभुक्तिः स्मर्यते स्मृतिविषयी क्रियते प्रभाकरेण त्वया। स्वकीयतादृक्स्वप्नभ्रम इत्यार्थिकम्। ततोऽपि किं तत्राऽऽह—अत इत्यादिना। एतन्निरुक्तग्रहणस्मरणात्मकत्वकल्पनम्। तत्र दूषणान्तरमप्याह—संविदोश्चेति। उक्तग्रहणाद्यात्मकज्ञानवृत्त्योरित्यर्थः॥ २६॥

एवमुद्दिष्टक्रमानुसारेणाख्यातिवादिनो गुर्वपराह्वयस्य प्रभाकरस्य मते सोपन्यासं निराकृते सत्यवसरप्राप्तं तत्समकक्षमेव सत्ख्यातिवादिनः सांख्यस्य मतं सानुवादमध्यासांश एव सद्यो निराकरोति शुक्तावित्यादिस्रग्धरादिभिश्चतुर्भिः पद्यैः—

शुक्तौ रूप्याविवेकाद्रजतमिव विभातीति सत्ख्यातिरिष्टा
सांख्यादेः साऽपि नैवं रजतमिदमिति स्वानुभूत्या विरोधात्।
किंचाभावान्न भावो भवति यदि मतः प्रागभावोऽपि हेतुः
सोऽपि ज्ञातोऽन्यथा वेत्युभयमपि न यद्व्याहतेश्च क्षतेश्च ॥२७॥

अत्राभिमतच्छब्दानुसारेणेतिशब्दोत्तरं यच्छब्दोऽध्याहार्यः। एवं च शुक्तौ विषये। रूप्येति। पुरोवर्तिबहलालोकावलितशुक्तिशकलनिरीक्षणाव्यवहितोत्तरक्षणशौक्ल्यचाकचक्योद्बुद्धसंस्कारतः स्मृतिविषयीभूतं यद्रूप्यं तस्य तेन साकं यो ह्यविवेको विवेचनाभावस्तत्र तादात्म्याध्यासस्तस्मादित्यर्थः। एतेन वक्ष्यमाणज्ञाने हेतुर्बोधितः। स्मृतरजतीयतत्तांशप्रमोषस्तु प्राग्वदेवात्रापि ज्ञेयः।

ततः किं तत्राऽऽह—रजतमिवेत्यादि। अयं च तदुत्तरसंपद्यमानज्ञानाकारानुवादः। इति, एवंप्रकारा या सत्ख्यातिः [illegible] कलस्मृतकलधौतलक्षणमबाधितमेव

वस्तु ख्यापयति प्रकाशयति या चित्तवृत्तिः सा तथेति यावत् । सांख्यादेः कपिल-मतानुयायिनादिन इत्यर्थः । आदिना पाशुपतादिस्तस्य । इष्टा सिद्धान्तत्वेन संमता । साऽपि । अपिः समुच्चये । एवं पूर्वोक्तप्राभाकरमतख्यातिखण्डनरीत्यैव [illegible] । तथा च सांख्यादिसंमता निरुक्तलक्षणा सत्ख्यातिरपि प्राभाकरसंमताख्यातिरिव समीचीना भवतीति प्रतिज्ञा प्रतिबोधितेत्यावेद्यते ।

तत्र हेतुं व्यक्तीकरोति—रजतमित्यादिपूर्वार्धान्तेन । उपलक्षणमेतदिदं रजतमित्य-नुभवस्यापि । एवं च यद्यविवेकमहिम्ना पुरोवर्तित्वेन गृहीतशुक्तिशकलस्य सहला-लोकाभिवलिततच्चाकचक्योद्दीप्तसंस्कारस्मृतरजतस्य चैक्यविषयकं ग्रहणस्मरणात्मकमे-कमेव ज्ञानं सिद्धान्तमते सत्ख्यात्याख्यं स्याच्चेत्तर्हि स्मृतरजताभिन्नमिदं पश्यामि मदभिन्नमिदं शुक्तिशकलं पश्यामीति वा पुरोवर्त्यभिन्नरजतं स्मरामि पुरोवर्तिशुक्त्य-भिन्नरजतं स्मरामीति वा तदाकारः स्यात्स त्वाबालकमलासनं कस्यापि नैवास्ति, किंतु प्रोक्ताकारानिव प्रतीति तेन सह विरोधान्नैव सत्ख्यातिः संभवतीति भावः ।

तदुक्तं श्रीमत्सुरेश्वराचार्यचरणैर्मानसोल्लासे—सदेव रूप्यं चेद्भाति विलयस्तेन सिध्यतीति । विवृतं चैतदमुक्तदक्षिणामूर्तिस्तोत्रवार्तिके वृत्तान्तकृता । ते तव मते सदेव चेद्रूप्यं शुक्तौ भाति तदा तस्य विलयो बाधो न सिध्यतीति योजनेति । एवं सांख्यादिसंमतसत्ख्यातिस्वरूपं त्वहं मनुष्यः कर्ता भोक्तेत्यादिः प्रतीतिस्तावत्सर्वजनप्रसिद्धा । सा च न स्मृतिरिति सिद्धान्तबिन्दुव्याख्याने न्यायरत्नावल्यां ब्रह्मा-नन्दसरस्वतीभिरप्युक्तम् ।

यद्यपि नाबाधितार्थकस्मृतिरित्येव वक्तुमुचितं भ्रमत्वमात्रस्यैव प्रकृते वाच्य-त्वात्तथाऽपि ग्रहणस्मरणोभयरूपत्वेन यो भ्रमत्वनिषेधः सांख्यादिसंमतस्तन्नि-राकरणाय स्मृतित्वनिषेध इति । अत्र भ्रमत्वनिषेधान्यथानुपपत्तिसिद्धसद्विषयकत्वेन सत्ख्यातिसिद्धिरिति बोध्यम् ।

इह गुरुमतादियानेव विशेषो यत्तेन ग्रहणं त्वांशिकमेवोच्यते न तु यावद्वस्तुवि-षयकमनेन तु यावद्वस्तुविषयकं ग्रहणमुररीकृत्यापि तस्य स्मर्यमाणेन सहा-विवेकात्तत्तादात्म्यमेवाऽऽद्रियत इति । इह विस्तरस्त्वाकरत एव ज्ञेय इति दिक् ।

एवं च शुक्तेः पुरोवर्तित्वेन साक्षाद्ग्रहेऽपि तदव्यवहितक्षणस्मृतरजततादात्म्य-ग्रहे तदविवेक एव प्रयोजक इति फलितम् । तत्राविवेको हि विवेचनाख्याविभि-न्नत्वेनोभयवस्तुविषयकप्रमालक्षणविवेकप्रागभाव एव तदत्यन्ताभावो वा स्यात्तथा च कथं तदुपादानकस्तन्निमित्तकोऽपि वा निरुक्ततादात्म्यरूपभाव इत्याकूतेन तां तृणतां नयति । किंचेति । दूषणान्तरसमुच्चायकावेवेमौ निपातौ ।

ननु प्रागभावस्य कार्यत्वावच्छेदकावच्छिन्नं प्रत्यपि कारणतायास्तार्किकादिभिरभ्युपगतत्वेन कथं भावस्कीयमभावस्य भावकारणत्वाभावप्रतिज्ञा समुचितेत्याशङ्क्य तुष्यतु दुर्जन इति न्यायेन गूढाभिसंधिः प्रागभावस्य कारणतामङ्गी करोति—यदीत्यादिना । अपिना मतपदेन च तत्पक्षस्य तुच्छत्वं मतान्तरत्वं च सूचितम् ।

अथ तमेव गूढाभिसंधिं समुद्घाटयंस्तत्र विकल्प्य खण्डयितुं पृच्छति—सोऽपीत्यादिना । प्रागुक्तरीत्या यावद्भावकार्यहेतुत्वेन संमतः स्वप्रागभावोऽपीति यावत् । इदं रजतमिति भाने योऽयं पुरोवर्तित्वेन गृहीतशुक्तिशकलस्य तच्चाकचक्यादिदर्शनसमुद्बुद्धसंस्कारस्मृतहट्टस्थरजतस्य च परस्पराविवेकनामा तदुभयविभिन्नत्वविषयकप्रमाप्रागभाव एव हेतुत्वेन तार्किकवत्कापिलेनाप्युच्यते चेत्तर्हि सोऽपि किं ज्ञातस्तद्धेतुरज्ञातो वेति प्रश्नाशयः ।

ननु भवत्वेवमज्ञातस्य ज्ञातस्य वा तस्य तद्धेतुत्वं किं ततः प्रकृत इत्याशङ्क्योभयथाऽपि तदयुक्ततां प्रतिजानीते—इतीत्यादिना । उक्तविकल्पमनुषक्तुमितिशब्दः । तत्र हेतुद्वयं क्रमेण पक्षद्वयेऽप्याह—यदित्यादिशेषेण । यदि निरुक्तज्ञानप्रागभावात्मा अविवेक इह ज्ञात एवोक्तज्ञानकारणमित्युच्यते तर्हि ज्ञानसामान्यप्रतियोगिकत्वपक्षे तस्य ज्ञातत्वेन तद्विषयकज्ञानस्य सत्त्वाज्ज्ञानसामान्यप्रतियोगिकप्रागभावसिद्धिव्याहतिरेव ।

यदि तु पुरोवर्तिशुक्तिशकलस्मृतरजतोभयभेदविषयकाख्यज्ञानविशेषप्रागभाव एवोक्तज्ञानहेतुरिति संमतं तर्हि तत्रापि निरुक्तोभयवस्तुविषयकज्ञानप्रागभावोऽत्र वर्तत इति ज्ञानस्योभयवस्तुज्ञानमन्तरा सुतरामसंभवात्तत्सत्त्वे च तत्प्रागभावाभावात्तत्रापि व्याहतिरेवेति प्रथमचकारसूचितोऽर्थः ।

यदि पुनरज्ञात एवोक्तज्ञानप्रागभावो निरुक्तज्ञानहेतुरित्युक्तव्याहतिभीत्याऽङ्गी क्रियते चेत्तर्हि तत्सत्त्वे प्रमाणाभावात्तत्क्षतिरेव । न च नेदं रजतमिति बाधान्यथानुपपत्तिरेवोक्तवस्तुद्वयविषयकज्ञानप्रागभावे प्रमाणमिति वाच्यम् । तथात्वे नेदं स्मृतरजतमिति बाधापातात् । वस्तुतस्तु निरुक्तवस्तुद्वयविषयकज्ञानप्रागभावात्मकाविवेकस्य स्वप्रतियोगिरूपज्ञानमात्रहेतुत्वेनेदं रजतमिति ज्ञानान्तरं प्रति तत्कारणत्वकल्पनस्यानौचित्यमेवेति चरमचकारार्थः । तस्मादयुक्तैवेयं सत्ख्यातिरित्याकूतम् । प्रागभावस्य हि स्वप्रतियोगीतरहेतुत्वमेव तार्किकैरप्युच्यत इति शिवम् ॥ २७ ॥

अथ पुनरपि ज्ञानप्रागभावाभिधाविवेकासिद्धौ युक्त्यन्तरं विरचयति प्रतियोगीत्यादिप्रबोधितया—

प्रतियोगिविबोधमन्तरा यदभावो न कदाऽपि बुध्यते।
जनितः प्रतियोगिनः पुरा क नु सिद्धिर्यदि साऽपि नैव सः ॥२८॥

यत्—यस्माद्धेतोः। सामान्यतो ह्यभावज्ञानत्वावच्छिन्नं प्रति प्रतियोगिज्ञानत्वेनैव कारणतेति घण्टाघोषः। ननु भवत्वेवं नियमस्तथाऽपि प्रकृते ज्ञानप्रागभावाख्येऽविवेके किमायातमित्यत आह—जनित इत्याद्युत्तरार्धेन। जनितः पुरा उत्पत्तेः पुरा प्रकृते ज्ञानप्रागभावे ज्ञानाख्यप्रतियोगिन उत्पत्तेः पूर्वमित्यर्थः। क नु सिद्धिः कुत्र वा देशे काले सिद्धिरस्तीत्यन्वयः।

अस्तु तर्हि प्रकृते प्रतियोगिनो ज्ञानस्योत्पत्तेरनन्तरं सिद्धिः का क्षतिरित्यत्राऽऽह—यदीत्यादिशेषेण। यदि सा प्रकृते प्रतियोगिनो ज्ञानस्योत्पत्त्यैव सिद्धिरस्ति तर्हि सोऽपि तत्प्रागभावोऽपि नैव ततस्तस्य तदुत्पत्तिमात्रेणैव ध्वस्तत्वान्नैव सिध्यतीति संबन्धः। तदुक्तं सिद्धान्तबिन्दौ मधुसूदनाचार्यैरज्ञानं प्रकृत्य—न चेदमभावरूपं ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरुक्तत्वात्। धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां च व्याघातापत्तेरिति। तस्माद्यदाऽविवेक एव न सिध्यति तदा क नाम तदेकमूलिका सत्ख्यातिः सति कुड्ये चित्रमिति न्यायादित्याशयः॥ २८॥

यद्यप्यज्ञात एव ज्ञात एव वा ज्ञानप्रागभावात्मा अविवेकोऽत्रेदं रजतमिति ज्ञाने हेतुरिति पक्षः पूर्वं सोऽपि ज्ञातोऽन्यथा वेत्युभयमपि न यदुव्याहृतेश्च क्षतेश्चेत्यत्र खण्डित एव तथाऽपि सिंहवावलोकनन्यायेन पुनरपि तं भङ्ग्यन्तरेण दूषयिष्यंस्तस्य स्वप्रतियोगिनं प्रत्यपि यदा न हेतुत्वं तदा निरुक्तज्ञानं प्रति नेति कैमुत्यसिद्धमेवेत्याशयेनोभयथाऽपि तमनूद्यापमुद्राति—अज्ञात इति स्रग्धरया—

अज्ञातः प्रागभावो यदि भवति मतः कारणं निष्प्रमाणो
वन्ध्यापुत्रेऽपराधः क इह वद तदा कारणत्वे पटादेः।
अध्यक्षं यन्मृदि स्यादिह घट इति सत्कार्यवादे तदिष्टं
नैवासत्कार्यवादे कथमपि घटते भ्रान्तिमात्रोऽथ सोऽपि ॥२९॥

यदि निष्प्रमाणोऽप्यज्ञातः प्रागभावः प्रागुक्ताविवेकाभिधो निरुक्तशुक्त्यादिज्ञानप्रागभावः कारणं, इदं रजतमिति ज्ञानकारणम्। मतः सांख्यादेस्तव संमतो भवति तदा इह लोकव्यवहारे वन्ध्यापुत्रेऽधिकरणे। पटादेः कारणत्वे विषये कोऽपराधः किमिति वैमत्यमिति वदेति योजना। निष्प्रमाणकत्वस्याज्ञातज्ञानप्रागभावसत्त्ववद्वन्ध्यापुत्रे तुच्छेऽपि तुल्यत्वादिति भावः।

एवं प्रतिबन्द्याऽऽद्यपक्षं प्रतिक्षिप्यान्त्यमपि तं प्रत्याचष्टे—अध्यक्षमित्याद्युत्तरार्धेन। इह मृदि। आर्द्रमृत्तिकायाम्। घटः स्यादिति यदध्यक्षं प्रागभावविषयकं प्रत्यक्षं

प्रमाणमित्यर्थः । अस्तीति शेषः । तत्सत्कार्यवादे कार्यं हि सूक्ष्मरूपेण कारणे सत्त्वेन सामग्र्याऽऽविर्भवतीति सांख्यादेस्तव सिद्धान्त इष्टमपि घटस्य तत्कालावच्छेदेन कारणात्मना विद्यमानत्वेनोक्तप्रकाराईत्वात्संभवमपि । एवं तर्हि सत्कार्यवादरीत्या सांख्यस्य मम संमततयैवास्तु ज्ञानप्रागभावस्योक्तप्रत्यक्षेण ज्ञातस्यैव सिद्धिरिति चेन्न ।

तद्वादे कार्यस्य सत्त्वेनैव तत्प्रागभावासिद्धेर्नाभावो विद्यते सत इति नियमादाविर्भावशब्दितोत्पत्तेरपि कार्यत्वाविशेषाच्चेत्याकूतम् । असदिति । असदेवाविद्यमानमेव कारणसामग्र्या कार्यमुत्पद्यत इति प्रागभावस्य हेतुत्वं वदतां तार्किकाणां मत इति यावत् । कथमपि केनापि प्रकारेण नैव घटते नैव युज्यत इत्यन्वयः ।

ननु भवतु स एव वाद इति तत्राऽऽह--भ्रान्तीत्यादिशेषेण । अथ निरुक्तासत्कार्यवादाभिमततार्किकपक्षारम्भेऽपीत्यर्थः । सोऽपि तत्पक्षोऽपि । भ्रान्तिमात्रः प्रागभावसत्त्वे प्रमाणाभावादुक्तप्रत्यक्षस्य त्वसतः कार्यस्योद्देश्यात्वासंभवात्सामान्यलक्षणप्रत्यासत्तेरद्वैतसिद्ध्यादौ खण्डितत्वादसदेवोत्पद्यते चेच्छशविषाणस्याप्युत्पत्त्यापत्तेश्च व्यामोहमात्रमूलक एवेति संबन्धः । तस्मादज्ञातो वा ज्ञातो वा प्रागभावो नैव हेतुर्भवतीति भावः ॥ २९ ॥

एवं तर्हि सत्कार्यवादोऽस्मत्संमत एवास्तु येनेह कपालद्वये घटो भविष्यतीति प्रागभावसाधिका प्रत्यक्षप्रतीतिः संगता स्यात्तथा पुरोवर्तिशुक्तिस्मृतरजतविभिन्नत्वविषयकचित्तवृत्तिविशेषरूपविवेकाख्यज्ञानप्रागभावात्मकाविवेकमूलकमिदं रजतमिति सत्ख्यात्याख्यं ज्ञानमपि शुक्तिविशेषांशरजततत्तांशप्रमोषपूर्वकं ग्रहणस्मरणात्मकमेकमेव सूपपन्नं स्यादित्याशङ्क्य सत्कार्यवादमनूद्य तमपि दूषयितुं प्रतिजानीते--आविर्भवेदित्यादिवसन्ततिलकापूर्वदलेन—

आविर्भवेद्यदि सदेव तु कार्यजातं
सामग्र्युपाश्रयत एतदपि स्थवीयः ।
आकाशनीलिममुखे व्यभिचारयोगा-
त्तस्मादनिर्वचनमेव तु सर्वकार्यम् ॥ ३० ॥

यदि तु । एतेन पक्षान्तरं द्योत्यते । सदेव कारणात्मना विद्यमानमेव । कार्यजातं सकलमपि प्रागभावप्रतियोगि । सामग्रीति । यावत्कारणावलम्बेनेत्यर्थः । आविर्भवेत्प्रादुर्भूयादिति ब्रूषे तर्हि--एतदपि । निरुक्तपक्षजातमपि स्थवीयः स्थूलमेवेत्यन्वयः । अयमपि त्वत्पक्षोऽनुचित एवेति भावः । तत्र हेतुं स्फुटयति—आकाशेत्यादितृतीयचरणेन । नभोनैल्यादिरूपकार्थे इत्यादिना पीतः शङ्खस्तिक्तो गुड इत्यादेर्ग्रहः । व्यभिचारेति । हेतोः साध्याभाववद्वृत्तित्वसत्त्वादित्यर्थः ।



तद्यथा। कार्यं स्वप्रागभावकाले कारणरूपेण सदेव। कार्यत्वात्। व्यतिरेके कारणवदिति सत्कार्यवादसाधकः सांख्यादेः प्रयोगोऽवश्यं वाच्यः। तत्र कार्यत्वरूपहेतोः नीलं नभ इति प्रतीतिविषयीभूतनभोधर्मिकनीलिमधर्मप्रतियोगिकप्रागभावदशायां नभआदौ कारणे नीलिम्नस्तद्रूपेण सत्त्वे मानाभावेन साध्याभाववति नभोनीलिम्नि विद्यमानत्वं स्फुटमेव।

न च तत्रापि पक्षकुक्षिनिक्षेप एवेति। नीलिमधर्मस्य धर्मिणं विहाय स्थित्यदर्शनेन तत्रापि धर्मिपुरस्कारेणैव स्थित्यापत्तेः। इष्टापत्तौ धर्मप्रतीतिदशायां कारणातिरिक्तधर्मिणोऽपि प्रतीत्यापत्तेश्च। न च तर्हि घटे पाकेन कथं रक्तरूपोत्पत्तिरिति सांप्रतम्। वैशेषिकादिमते कार्यस्य प्रागभावदशायामसत एवोक्तसामग्र्यनन्तरमुत्पत्त्यङ्गीकारेण मन्मते तु तस्यानिर्वचनीयत्वेनैवापर्यनुयोज्यत्वात्।

किंच प्रागभावदशायां कारणात्मनाऽपि कार्यसत्त्वे तत्त्वेनैव तत्प्रतीतिः कुतो न जायत इति प्रश्नो दुर्निरास एव। तथोत्पत्तेरपि कार्यत्वाविशेषात्तस्या अपि कारणात्मना स्थितौ सामग्र्योत्पत्तौ चानवस्था। तथा चोक्तं वेदान्तकल्पलतिकायां सत्कार्यवादखण्डने—सत्त्वेऽप्याविर्भावतिरोभावौ संभवत इति चेन्न। तयोरपि सत्त्वाविशेषात्। तत्राप्यन्यकल्पनेऽनवस्था मूलक्षतिकरीति। एवं च सत्कार्यवादस्यासंभवेन तन्मूलकसत्ख्यातेरप्यसिद्धेर्निगमनव्याजेन स्वसिद्धान्तं बोधयति—तस्मादित्यादिचरमचरणेन। सर्वपदं भ्रमादिसंग्रहार्थम् ॥ ३० ॥

अथोद्देशक्रमप्राप्तामन्यथाख्यातिमनूद्य दूषयति—हट्टस्थमेवेत्यादीन्द्रवज्रया—

हट्टस्थमेव प्रतिभाति शुक्तौ
सादृश्यदोषादिवशेन रूप्यम्।
सैषाऽन्यथाख्यातिरपि क्षता य-
द्बोधोऽथ बाधोऽपि कथं विनाऽर्थम् ॥३१॥

हट्टस्थमेवाऽऽपणस्थितमेव। एवं चानिर्वचनीयख्यातिव्यवच्छित्तिर्द्योत्यते। रूप्यं रजतम्। सादृश्येत्यादि। आदिना दूरस्थत्वालोकसंनिकृष्टत्वादिदोषान्तराणामपि संग्रहः। शुक्तौ तत्तादात्म्येनेत्यर्थः। प्रतिभाति। इदं रजतमिति पुरोवर्त्यभेदेन परिस्फुरतीत्यन्वयः। एवमन्यथाख्यातिस्वरूपमनूद्य तत्खण्डनं प्रतिजानीते—सैषेत्यादिना। अपिः सत्ख्यात्यादिसमुच्चायकः। क्षता खण्डिता भवतीति यावत्।

तत्र हेत्वाकाङ्क्षां पूरयंस्तद्द्वयं स्पष्टयति यदित्यादिशेषेण। यद्यस्माद्बोधः। इदं रजतमिति पुरोवर्त्यभेदेन ज्ञानम्। अथ तदुत्तरं निकटगमने सति। बाधोऽपि नेदं रजतमिति तन्निरासोऽपीत्यर्थः। अर्थं विना तद्विषयीभूतभावमन्तरेत्यर्थः। कथं

स्यात्कथंचिदपि नैव संभवेदिति ध्वन्यः । तस्मान्निरुक्तबोधबाधोत्पत्त्यन्यथानुपपत्त्या भावरूपतद्विषयीभूतार्थस्वीकार आवश्यक एवेति भावः । स चोक्तहेतुभ्यामेवासतः सतश्च विलक्षणत्वादनिर्वचनीय एवेत्याकूतम् । तदुक्तं दाक्षिणात्यमुनिनोत्प्रेक्षितं—

तेनेदं सत्यमित्येवं सादृश्यादपि विभ्रमः ।

पीतः शङ्खो गुडस्तिक्त इत्यादौ नास्ति तुल्यतेति ॥

विस्तरस्त्वेतट्टीकायां वृत्तान्ताख्यायामेव द्रष्टव्यः । परास्तं चात्र चित्सुखाचार्यादिभिः प्राचीनैर्मधुसूदनाचार्यादिभिर्नवीनैश्च भूरितरमित्युपरम्यते ॥ ३१ ॥

एवं तार्किकसंमतायामन्यथाख्यातावर्थमन्तरा बोधबाधयोरनुपपन्नत्वमुक्त्या खण्डितायां सत्यामसावन्त्यहेत्वसिद्धिं मन्वानः सन्नान्तरिक्षेऽग्निश्चेतव्य इति श्रुत्याऽन्तरिक्षशब्दिताकाशदेशावच्छेदेनाग्निचयनलक्षणस्यार्थस्य प्रत्यक्षादिविरोधेनाप्राप्तस्यापि यथा पूर्वतन्त्रे निषेधस्तद्वत्प्रकृतेऽपि स्मर्यमाणरजतस्य पुरोवर्तिशुक्तिशकलाभिन्नत्वेनाप्राप्तस्यापि नेदं रजतमिति भवतु निषेध इति शङ्केत चेत्तामाशङ्कामनूद्य सिद्धान्ती स्मर्यमाणरजतेन सह पुरोवर्तिशुक्तिशकलाभेदनिषेधः किं वैदिको लौकिको वा । नाऽऽद्यः । नेदं रजतमित्यादिश्रुत्यभावात् । अन्त्येऽपि किं भावप्रमाणकोऽभावप्रमाणको वा । नाऽऽद्यः । अभावविषयीकरणे प्रत्यक्षादिभावप्रमाणाप्रसरात् । तदुक्तं वेदान्तपरिभाषायाम्—

ननूक्तरीत्याऽन्तःकरणेन्द्रियसंनिकर्षस्थलेऽभावस्यानुपलब्धत्वमनुमतम् । तत्र क्लृप्तेन्द्रियमेवाभावाकारवृत्तावपि करणम् । इन्द्रियान्वयव्यतिरेकानुविधानादिति चेन्न । प्रतियोग्यनुपलब्धेरप्यभावग्रहे हेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात् । इन्द्रियस्य चाभावेन संनिकर्षाभावेनाभावग्रहाहेतुत्वात् । इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेरिति । तस्मादनुपलब्ध्यभिधोऽन्त्यपक्ष एव परिशिष्यते । तज्जन्यनिषेधस्य तु वेदेतरप्रमाणजन्यत्वेन प्राप्तिपूर्वकत्वस्यैवावश्यवाच्यत्वाद्वेदे त्वगत्या तथाङ्गीकारेऽपि दुर्भिक्षकोद्रवभक्षणन्यायेन सर्वत्र तदनौचित्याच्चेत्याशयेन दूषयति चेतव्य इत्यादिस्रग्धरया—

चेतव्यो नान्तरिक्षेऽग्निरिति तव कथं स्यादनाप्ते निषेध-

स्तद्वन्नः कालधौतो लसतु स इति चेन्नास्य वेदान्यजत्वात् ।

किंचाऽऽस्तां सोऽपि तुष्टो भवतु खलु इति न्यायतः किं ततोऽभू-

द्भूयात्प्राग्बोध एव भ्रमवपुरिह सेऽयं विनाऽर्थं कथं वा ॥ ३२ ॥

अप्यद्वैतिन् त्वं यदि भ्रमस्थल इदं रजतमिति बोधस्तथा नेदं रजतमिति बाधोऽप्यर्थं विना। शुक्त्यवच्छिन्नचैतन्यविषयकाज्ञानपरिणामीभूतानिर्वचनीयाभिनवो त्पन्नरजतरूपपदार्थमन्तरा कथं भूयादित्यापादयसि चेत्तर्हि तव मते पूर्वकाण्डे नान्त- रिक्षेऽग्निश्चेतव्य इति श्रुतिबोधितो निषेधः । अनाप्ते नान्तरिक्षाधिकरणा- ग्निचयनप्राप्तिं विनाऽभिधेयधर्मभूतेष्टकाचयनाप्राप्तौ तन्निरासकाख्यचयनप्राप- णलिङ्गः स्थण्डिलविशेषस्तु निराधारस्य चयनस्याप्राप्तौ कथं भवतोऽपि तस्मिन्विषय इत्यर्थः । कथं स्यादिति प्रतिबन्दीयम् ।

तथाऽपि प्रकृते किमायातमित्यत आह —तद्वदित्यादिना । तव मते यथा निरु- क्तोदाहरणेऽप्राप्तेऽप्यर्थे निषेधः प्रवर्तते तद्वदस्माकं तार्किकाणामपि मते । कालधौतः कलधौतं रूप्यहेम्नोरित्यमरात्कलधौतस्य प्रकरणाद्रूप्यस्यार्थं तथा रजत- प्रतियोगिक इति यावत् । सः । नेदं रजतमित्यप्राप्तेऽपि रजतलक्षणेऽर्थे निषेधे ऽस्तु संभवत्विति संबन्धः । एवं पूर्वपक्षे प्राप्तेऽथ सिद्धान्ती तद्दूषणं प्रतिजानीते- इति चेन्नेति । तत्र हेतुं प्रतिबोधयति अस्येत्यादिपूर्वार्धशेषेण । अस्य नेदं रजत- मिति निषेधस्य । वेदेति । वेदेतरलौकिकप्रमाणजन्यत्वादित्यर्थः । एतेन दृष्टान्तवैषम्यं प्रतिबन्दीभञ्जनं च सूचितम् ।

तथाथा यो यो वेदेतरप्रमाणकरणको निषेधः स स्वार्थप्राप्तिपूर्वक इति व्याप्तौ विवक्षितायां सत्याम् । नेदं रजतमिति निषेधो न प्राप्तिपूर्वको भवितुमर्हति । निषे- धत्वात् । नान्तरिक्षेऽग्निश्चेतव्य इति निषेधवदिति । नेदं रजतमिति निषेधः प्राप्ति पूर्वकः । निषेधत्वात् । नानुचितं चोरेदिति सहसा विदधीत न क्रियामिति च निषेधवदिति मदुक्तप्रयोगहेतोः सत्प्रतिपक्षतार्थं त्वदुक्तप्रत्यनुमानप्रयोगे दृष्टान्ती- कृतस्य नान्तरिक्षेऽग्निश्चेतव्य इति निषेधस्यालौकिकत्वात्स्फुटमेव वैषम्यम् । तथा च नैवासौ प्रतिबन्दी नाप्यस्मदुक्तहेतोः साधारणानैकान्तिकता । निषेधमात्रस्य तत्र सत्त्वेऽपि निरुक्तविशिष्टनिषेधत्वाभावेन साध्याभाववदवृत्तित्वात् । प्रत्युत त्वदुक्तहे- तोरेव न सुरां पिबेदित्यादिनिषेधेषु साधारणानैकान्तिकतेति सुधिया समनुसंधेयं निर्मत्सरतयेति रहस्यमिति । तस्मात्तुच्छमेवेदम् ।

ननु यो यो निषेधः स प्राप्तिपूर्वक इति व्याप्तिरेव लाघवादवश्यं वक्तव्या । अन्यथा वेदेतरेत्यादिनिरुक्तव्याप्तिविवक्षायां गौरवं स्फुटमेव । तथा त्वदुक्तानुमान- प्रयोगेऽपि निषेधत्वप्राप्तिपूर्वकत्वयोरेव व्याप्यव्यापकभावः स्पष्ट एव । तस्यास्तु व्यभिचारः प्रोक्त एव नान्तरिक्ष इत्यादाविति शङ्कां गूढाभिसंधिनाऽङ्गीकृत्याथापि नैव तव मतनिस्तार इत्याह—किंचेत्याद्युत्तरार्धेन । इदं निपातद्वयं युक्त्यन्तरसमुच्चा-

एकमेव । खलो दुर्जनस्तुष्टो भवतु, इति न्यायतः । तुष्यतु दुर्जन इति न्यायेनेत्यर्थः । सोऽपि कश्चिदर्थं विनाऽपि निषेधोऽपि । आस्तां भवत्वित्यन्वयः । एतेन नान्तरिक्षेऽग्निश्चेतव्य इत्यत्रापि सांप्रदायिकैरन्तरिक्षपदेन लक्षणया यज्ञमण्डपाद्यावरणशून्यभूभागस्यैवाङ्गीकृतत्वाद्धन्तुलो नैव व्यभिचारगन्धोऽपीति निगदाभिसंधिर्ध्वन्यते ।

नन्वेवं चेदिष्टं नः समीहितमित्यत्राऽऽह—किं तत इत्यादि । ततः कश्चिदर्थेऽसतेऽपि निषेधो भवतीति स्वीकारेणेति यावत् । ते इत्यपकर्षणीयम् । तार्किकस्य नवेत्यर्थः । किमभूत्तव किमपीष्टमासीदिति योजना । ननु कथं न मदिष्टसिद्धिरभूदुक्तख्यातिभङ्गेऽसदादिख्यात्यन्यथाख्यातेरेव सिद्धत्वादित्याशङ्कां प्रत्याह—भूयादित्यादिशेषेण । ते तार्किकस्य नव मत इत्यर्थः । इह शुक्तिरजतादिभ्रमस्थले । अर्थं विनाऽन्यथाख्यातेरेव स्वीकृतत्वादनिर्वचनीयं रजतादिलक्षणं विषयमन्तरैवेति यावत् । प्राक् प्रथमम् । भ्रमवपुः । भ्रमात्मकोऽपीत्यर्थः । अयं, इदं रजतमित्यादिलक्षणः प्रकृतः । बोध एव ज्ञानविशेष एव । कथं वा भूयाद्बुद्धीच्छाद्वेषप्रयत्नभावनाभिधसंस्काराणां त्वन्मते सविषयत्वनियमात्कयाऽपि युक्त्या नैव भवेदिति योजना ।

तस्मात्सति कुड्ये चित्रमिति न्यायेनाऽऽदाविदं रजतमिति बोध एवार्थं विना नैवोपपद्यत इति तत्सिद्ध्यर्थमेवानिच्छताऽपि तार्किकेण गत्यन्तराभावादनिर्वचनीयं रजतमुररीकरणीयमेव । पश्चाद्बाधस्याप्युक्तविषया व्यभिचारविरहात्सार्थक्यसिद्ध्यर्थं तद्विषयत्वेति भावः ॥ ३२ ॥

ननु तदभाववति तत्प्रकारकज्ञानत्वेनेदं रजतमित्याद्यनुभवस्य भ्रमत्वात्तत्र रजतत्वप्रतियोगिकाभाववत्त्वेन शुक्तिरेव पुरोवर्तिनी विवक्षिता। तत्र तच्छाठेदतरजतत्वप्रकारकमुक्तज्ञानं भवत्येवेति क तस्य निर्विषयत्वशङ्कावकाशः ।

न चैवं तर्हि नीलो घट इत्यनुभवे यथा नीलत्वप्रकारकघटविशेष्यकत्वं नियतं तथा प्रकृतेऽपीदंत्वप्रकारकरजतविशेष्यकत्वमेव स्यात्तु तत्र प्रकारीभूतस्येदमंशस्य सत्त्वेऽपि विशेष्यीभूतस्य रजतस्यासत्त्वात्पुनर्विषयवैधुर्यतादवस्थ्यमेव ।

किंच शुक्तिविशेष्यकरजतत्वप्रकारकत्वे तूक्तानुभवस्य रजतं शुक्तिरित्याकारः स्यान्न त्विदं रजतमिति । तत्त्वदृष्टचरमेवेति वाच्यम् । दूरस्थत्वादिदोषवशाच्छौक्तिकशौक्ल्यविशेषांशप्रमोषेऽपि तदीयेदमंशस्य गृहीतत्वेन तद्विशेष्यकत्वस्य तथा दोषविशेषोद्बुद्धसंस्कारवशस्मृतरजतत्वप्रकारकत्वस्यापि तत्र सत्त्वात्तश्च रजतमिदमित्यपि क्वचिद्भानसंभवादिदं रजतमिति भानस्य तु घटो नील इति भानवदुपपत्तेश्च ।

तस्मादुक्तभ्रमेऽपि विशेष्यीभूतशौक्तिकगृहणेदमंशस्य सत्त्वेन प्रकारीभूतस्य ज्ञानलक्षणप्रत्यासत्त्या हट्टीयरजतनिष्ठरजतत्वस्यापि विषयस्य स्फुटत्वात्क नाम निर्विषयतेति चेन्न । सुरभिचन्दनमिति चाक्षुषानुभवेऽपि चन्दनं पश्यामि सौरभं स्मरामीत्येवानुव्यवसायेन ज्ञानलक्षणप्रत्यासत्तेरेवाप्रामाणिकत्वादन्यथा तृणज्ञानेनापि वह्निज्ञानमित्यतिप्रसङ्गाच्चेति नन्मूलकनिस्तारकसत्त्वभानाभावात् । एवं तर्हि भवतु भ्रमात्मकज्ञानं निर्विषयमेव बुद्ध्या शुक्तपक्षकस्य सविषयकत्वनैयत्यं तु तदितरबुद्ध्याभिप्रायकमेवेत्याशङ्कां प्रशमयति- ऋतेऽर्थमित्यादिशिखरिण्या

ऋतेऽर्थं चेद्बोधो भवति यदि ते माध्यमिकता
भ्रमेऽसौ नान्यत्रेत्यपि न गमकस्यात्र विरहात् ।
विसंवादोऽसौ चेन्मम इह स सत्येऽपि रजते
न नानेहास्तीत्याद्यमितनिगमैर्बाधवशतः ॥ ३३ ।

तत्राप्यादौ सर्वोऽपि बोधः किं सामान्यतो निर्विषयोऽभिप्रेतः किंवा बोधविशेष इति विकल्प्याऽऽद्यं प्रत्याह--ऋत इत्यादिप्रथमचरणेन । हे तार्किक ते तव । यदि अर्थमृते विनैव बोधो ज्ञानं भवति । इदं रजतमित्यादिभ्रमजातमिति यावत् । यदि भवति चेत्तर्हि ते माध्यमिकता शून्यवादिता स्यादिति संबन्धः ।

अयं भावः । बोधत्वनिर्विषयत्वयोर्व्याप्यव्यापकभावे शुक्तिरजतादेरिव घटादेरपि बोधविषयकस्येनालीकत्वमेव । तत्सत्त्वे बोधेतरप्रमाणाभावात्तस्य तु शुक्तिरजतादिबोधवन्निर्विषयत्वेनैव तदसाधकत्वाच्चेति । द्वितीयमपि निराचष्टे-भ्रमेऽसावित्यादित्रिपाद्या । असावर्थं विनैव बोधो भ्रमे भ्रमविषयीभूतशुक्तिरजतादिस्थल एव । अन्यत्र अयं घट इत्यादिप्रमास्थले तु न नैव निर्विषयो बोधो भवतीत्यन्वयः ।

एवं तार्किकेण स्वनियमेऽभिहितेऽथ सिद्धान्ती तमनूद्य तत्खण्डनं प्रतिजानीते-इत्यपि नेति । इतिशब्दो द्वितीयनियमानुवादार्थः। अपिस्तु प्रथमनियमसमुच्चायकः । एवं च यत्र यत्र भ्रमाभिधबोधविशेषत्वं तत्र निर्विषयत्वमिति द्वितीयनियमोऽपि नैव युक्त इति यावत् । तत्र हेतुं प्रकटयति---गमकस्येत्यादिना । अत्र निरुक्तनियमविषये बोधत्वतौल्येऽपि भ्रम एव निर्विषयो न तु प्रमेत्यङ्गीकार इत्यर्थः । गमकस्य नियामकस्य । विरहाद्राहित्यात् । निरुक्तनियमे विनिगमकाभावादित्यर्थः ।

अथ पुनरपि पूर्ववादी विनिगमकप्रकाशनेन हेतोः स्वरूपासिद्धिं शङ्कते-विसंवाद इत्यादिना । शुक्तिरजतज्ञानोत्तरं रजतार्थिनस्तद्ग्रहणप्रवृत्तौ सत्यां तत्र शुक्तिमात्रोपलम्भेन रजतलाभाभावरूपाविपरीतसंवाद एवासौ गमक इत्यर्थः । सिद्धान्ती तु

तमपि प्रति[illegible] मन्दयति—नेदित्यादिना । इतिशब्दोऽत्राऽऽर्थिक एव । इति त्वं वदसि चेत्तर्हि स विसंवादः सत्येऽपि रजते व्यावहारिकसत्त्वावच्छिन्नत्वाद्ब्रह्मज्ञानेतराबाध्ये पण्यरजतेऽपीत्यर्थः । इह—अद्वैतसिद्धान्ते । समस्तुल्य एवेति यावत् ।

ननु कथं सत्येऽपि रजतेऽनुपलब्धिलक्षणो विसंवादस्तस्यार्थक्रियाकारित्वोपलब्धेरित्याशङ्क्योक्तप्रतिज्ञायां हेतुं द्योतयंस्तामप्युपपादयति—न नानेत्यादिविशेषणेन । इह—अद्वैतप्रमाणे नानाभावाभावात्मकत्वेनानेकविधं दृश्येन्द्रजालं नास्ति नैव विद्यत इति नेह नानाऽस्ति किंचनेति श्रुतेरार्थिकं प्रवचनम् । आदिना न तु तद्द्वितीयमस्ति न ह्यस्ति द्वैतसिद्धिरित्यादीनां संग्रहः । अमितपदं वेदान्तस्याभिप्रायम् । बाधेति । निरुक्तवेदवाक्यकोटिकरणकप्रमाबाधितत्वात्सत्यरजतेऽपि विसंवादः सम एवेति योजना । तस्मादनिर्वचनीयो भ्रमेऽपि विषयोऽभ्युपेय एवेति नैवान्यथाख्यातिसिद्धिरित्याशयः ॥ ३३ ॥

एवं सिद्धान्तिना सकलद्वैतस्यापि शुक्तिरूप्यादिवन्मिथ्यात्वं मनसि निधाय नेदं रजतमिति शुक्तिसाक्षात्कारक्षणावच्छेदेन प्रत्यक्षबाधितत्वाच्छुक्तिरजतादेर्विसंवादिप्रवृत्त्या यदि मिथ्यात्वं तर्हि नेह नानाऽस्ति किंचनेत्यादिश्रुत्यादिबाधाद्व्यावहारिकसत्यरजतादेरपि समानमेवेत्युक्ते तत्र तार्किकः सर्वत्र प्रमाभावं शङ्कते—एवं चेदित्यादिस्रग्धरया—

एवं चेत्क्वापि नैव प्रमितिरिह तव स्विष्टमित्यप्ययुक्तं
को वा विज्ञानवादाद्यत इह भविता शांकराणां विशेषः ।
मैवं नित्यात्मसत्त्वाद्व्यवहृतिविषयेऽप्यर्थजालस्य बाधा-
दन्यस्यैतादृशस्य स्फुटतरमखिलैः स्वीकृतत्वाच्च पूर्वैः ॥ ३४ ॥

भो वेदान्तिन्, एवं चेन्निरुक्तश्रुत्यवष्टम्भेन सकलप्रपञ्चस्यापि सत्त्वेन भासमानस्य शुक्तिरजतादिवत्प्रातिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वलक्षणं मिथ्यात्वं यदि चेत्तर्हि । इह संसारे । तव क्वापि कस्मिंश्चिदपि वस्तुनि विषय इत्यर्थः । प्रमितिः प्रमा यथार्थानुभूतिरिति यावत् । नैव स्यान्निखिलस्यापि दृश्यस्य मिथ्यात्वादिति संबन्धः ।

पुनः स एव तत्रेष्टापत्तिमाशङ्क्य तदयुक्तत्वं प्रतिजानीते—स्विष्टमित्यपीत्यादिप्रथमपादान्तेन । इदं सुतरामिष्टं ब्रह्माद्वैतात्मन एव पारमार्थिकत्वेन तद्भिन्नसकलद्वैतस्यापि मिथ्यात्वात्तद्विषयकप्रमाभावापादनमद्वैतमतेऽत्यन्तहितमेवेत्यर्थः । इत्यप्ययुक्तमेतदङ्गीकरणमप्यनुचितमेवेत्यन्वय ।

तत्र हेतुं द्योतयन्विज्ञानवादमापादयति- को वेत्यादिद्वितीयपादेन । मत्तः कारणात् । इह दृश्यमिथ्यात्वांशविषय इति यावत् । विज्ञानेति । सिद्धान्तबिन्दावात्मविषयकमानावादिविप्रतिपत्तिं प्रकृत्य क्षणिकं विज्ञानमिति सौगता इत्युक्तबौद्धविशेषसौगतसंमतविज्ञानवादादित्यर्थः । शांकराणां श्रीमच्छंकराचार्यचरणैकसंमताद्वैतमतोपजीविनां भवतामिति यावत् । को वा विशेषो भविता । तेषामपि क्षणिकविज्ञानातिरिक्तस्य सर्वस्यापि मिथ्यात्वान्न कोऽपि दृश्यमिथ्यात्वविषये विशेषो भविष्यतीति योजना । अत्र शांकरपदेन लोकोत्तरमहानुभावसंबन्धिनां युष्माकमिदं सौगतसाम्यं परमारम्यमेवेति द्योत्यते । तस्मादिदं सर्वथा हेयमेवेति भावः ।

एवं तार्किकेण दृश्यमिथ्यात्ववादिनि विज्ञानवादे सकलमिथ्यात्वाङ्गीकारादेवाऽऽपादिते सति सिद्धान्ती समाधातुं प्रतिजानीते- मैवमिति । अद्वैतिनामस्माकमरे तार्किक त्वं दृश्यमिथ्यात्ववादमात्रसाम्याभासात्सौगतसाम्यं मा वदेत्यर्थः । तत्र हेतुं प्रकटयति— नित्यात्मेत्यादिशेषेण । नित्यः कालत्रयाबाध्यो य आत्मा प्रत्यक्कूटस्थः सच्चिदानन्दरूपः साक्षी तस्य सत्त्वात्सर्वबाधावधिभूतत्वेनाङ्गीकृतत्वादिति यावत् ।

ननु किमेतावता घटादिद्वैतजालस्य प्रतिभासमात्रत्वेन क्षणिकत्वं तु तदवस्थमेव । न च वाढं दृष्टिसृष्टिवादे तथैव सिद्धान्तितत्वात्प्रतिभासमात्रत्वेऽपि ज्ञानस्याविद्यादिपरिणामात्मकवृत्त्यवच्छिन्नचैतन्यरूपस्य त्रिचतुःक्षणस्थायित्वाभ्युपगमेन क्षणिकत्वाभावाच्चेति वाच्यम् । निरुक्तवादे तथात्वेऽपि सृष्टदृष्टिवादे तु पुनरुक्तापत्तेर्दुर्वारत्वमेवेति चेन्न ।

तद्वादे हि ब्रह्मज्ञानेतराबाध्यत्वलक्षणव्यावहारिकसत्यत्वस्य प्रातिभासिकशुक्तिरजतादीतरद्वैते स्वीकृतत्वेन पारमार्थिकयथार्थविषयकत्वेन द्वैते प्रमानुदयेऽपि व्यावहारिकसत्यार्थविषयकत्वेन तत्र तदुदयसंभवे निरुक्तापत्तेरप्रसरादित्यभिप्रेत्य पुनर्हेत्वन्तरं स्फुटयति—व्यवहृतीत्यादिशेषेण । व्यवहृतिर्हि प्रमाणप्रमेयाभिधानाभिधेयादिव्याप्तिस्तद्विषये प्रातिभासिकभिन्नसकलाकाशादिप्रपञ्च इत्यर्थः । बोधात्तत्तद्विषयकज्ञानाख्यान्तःकरणवृत्त्यवच्छिन्नचैतन्यात्सकाशादिति यावत् ।

अन्यस्यापि । दृष्टिसृष्टिवादे हि दृष्टिर्निरुक्तरूपज्ञानाख्यवृत्तिरेव सृष्टिः प्रपञ्चरचनेति स्वीकारेणात्र तद्व्यतिरेकार्थमपिशब्दः प्रकृतेऽनुकृष्य संबध्यते । तथा चोक्तज्ञानभिन्नस्यापीत्यर्थः । एतादृशस्य निरुक्तव्यवहृतिविषयतायोग्यस्य, अर्थजालस्याऽऽकाशादिपदार्थवृन्दस्येति यावत् । अत्र जालपदेन प्रपञ्चे बन्धकत्वाद्दुःखदत्वं तथेन्द्रजालत्वेन कल्पितत्वं च सूच्यते । अखिलैः संपूर्णैः । एतादृशैः पूर्वैर्भाष्यकारादिभिः सकलप्राचीनाचार्यैरित्यर्थः । स्फुटतरं भाष्यादितत्तद्ग्रन्थेष्वतिस्पष्टं यथा स्यात्त-

थेति यावत् । स्वीकृतत्वादङ्गीकृतत्वमित्यत्र योजना । चः पूर्वहे समुच्चयार्थः । तस्मान्नैवात्र दोषतुषलेशोऽपीत्याशयः ॥ ३४ ॥

ननु न्यायकौस्तुभे तावत्—अथ प्रमालक्षणे यत्र भ्रमेऽतिप्रसङ्गवारणाय तद्वत्त्वमुपात्तं स भ्रमः किंरूपः । अङ्गीकृता च तत्तद्वादिभिर्भ्रमस्य तत्तद्रूपता । तदुक्तम्—

आत्मख्यातिरसत्ख्यातिरन्यथाख्यातिरेव च ।
तथाऽनिर्वचनख्यातिरख्यातिः ख्यातिपञ्चकम् ॥

इतीति चेन्न । इदं रजतमित्यादिभ्रमस्य रङ्गादौ रजतत्वादिप्रकारकतया व्यधिकरणप्रकारकत्वेनान्यथाख्यातिरूपत्वात् । अन्यथा प्रकारान्तरेण व्यधिकरणधर्मेण ख्यातिरन्यथाख्यातिरिति तद्विवरणादिति सप्रसङ्गं सप्रमाणं साशङ्कं चान्यथाख्यातिस्वरूपं निरूप्यार्थादिदं रजतमित्यादेः शौक्तिकेदमंशविशेष्यकहट्टस्थरजतत्वप्रकारकत्वेन तत्रानिर्वचनीयरजताद्यर्थस्वीकारानौचित्यमपि संसूच्यात्र सौत्रान्तिका इत्यादिना सौत्रान्तिकवैभाषिकप्राभाकरसंमताः क्रमादात्मख्यात्यसत्ख्यात्यख्यातीः सप्रपञ्चं संदूष्याग्रे वेदान्तिनस्त्विति त्वन्मतमप्युपक्रम्य, अनिर्वचनीयख्यातिरेव भ्रमः । अनिर्वचनीयस्य सत्त्वेनासत्त्वेन सत्त्वासत्त्वाभ्यां च निर्वक्तुमशक्यस्य तत्रोत्पन्नप्रातिभासिकरजतस्य ख्यातिरिति तद्विवरणादित्याहुरिति तदनूद्य तदप्यसदिति तत्तुच्छत्वमपि प्रतिज्ञाय प्रसिद्धरजतस्य भानेनैव निर्वाहेणानन्तस्थलेऽनिर्वचनानन्तरजतोत्पत्तिनाशतत्सामग्रीकल्पने गौरवेण चानिर्वचनीयख्यातिवादस्याप्रयोजकत्वात् ।

न च रजतविषयकचाक्षुषे रजतचक्षुःसंयोगस्य हेतुतया रजतचक्षुःसंयोगाभावेन प्रसिद्धरजतचाक्षुषं न संभवतीत्यनिर्वचनीयख्यातिरावश्यकीति वाच्यम् । स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वविषयतासमवायोभयघटितसामानाधिकरण्योभयसंबन्धेन चक्षुःसंयोगविशिष्टचाक्षुष एव चक्षुःसंयोगस्य हेतुतया तदभावेऽपि ज्ञानलक्षणासंनिकर्षेण प्रसिद्धतद्भाने बाधकाभावात् ।

न च ज्ञानलक्षणायाः संनिकर्षत्वे मानाभाव इति वाच्यम् । सुरभि चन्दनमित्याद्यनुरोधेन तत्संनिकर्षस्याऽऽवश्यकत्वात् । न च तत्र चन्दनत्वेन सौरभमनुमीयत इति वाच्यम् । सौरभमनुमिनोमीत्यनुव्यवसायाभावेन तथा वक्तुमशक्यत्वात् । एतेन ज्ञानलक्षणसंनिकर्षाभ्युपगमे तन्मूलकपर्वतो वह्निमानित्यादिप्रत्यक्षेणैव वह्न्यादिगोचरप्रवृत्त्याद्युपपत्तौ पर्वतो वह्निमानित्याद्यनुमितिमात्रोच्छेदप्रसङ्ग इत्यपि निरस्तम् । तत्र पर्वतं वह्निमनुमिनोमीत्यनुव्यवसायेन तदुच्छेदाभावात् ।

यत्तु भ्रमस्थले विषयादिगतदोषस्य रजतादिविषयत्वमहत्वे कार्यतावच्छेदकमिति गौरवम्। अनिर्वचनीयख्यात्युपगमे च रजतत्वादिकमिति। लाघवमिति। तत्तुच्छम्। प्रकारतासंबन्धेन रजतत्वादेरेव दोषकार्यतावच्छेदकतया गौरवाभावात्। एतेन भ्रमस्थले लौकिकविषयतास्वीकार आवश्यकः। रजतं साक्षात्करोमीत्यादिप्रत्ययात्। एवं च लौकिकसंनिकर्षं विना तदसंभवेनानिर्वचनीयख्यातिस्वीकार इत्यपि निरस्तम्। अनन्तानिर्वचनीयरजतोत्पत्त्यादिकल्पनमपेक्ष्य क्लृप्तहेतुताकदोषस्यैव लौकिकविषयतानियामकत्वकल्पनात्।

किंच दोषस्य रजतादिहेतुत्वमते न तावद्रजतत्वावच्छिन्नं प्रति दोषस्य हेतुत्वम्। प्रसिद्धरजते व्यभिचारात्। न च विजातीयरजतत्वावच्छिन्ने तद्धेतुत्वमिति वाच्यम्। प्रमाणान्तरेण तादृशवैजात्यासिद्धेः। दोषजन्यतावच्छेदकतया कल्पनेऽप्येवं तत्। अपरं च प्रसिद्धं रजतसामग्रीजन्यतावच्छेदकं प्रसिद्धानिर्वचनीयसाधारणं चान्यद्रजतत्वमिति जातित्रयकल्पने गौरवम्। अपि चानिर्वचनीयरजताङ्गीकारे तव प्रसिद्धरजतार्थिनः प्रवृत्त्यनुपपत्तिः।

न च प्रसिद्धानिर्वचनीययोस्तादात्म्यग्रहात्तदुपपत्तिरिति वाच्यम्। तदपेक्ष्य रङ्ग-रजतयोस्तादात्म्यग्रहस्वीकारस्यैवौचित्यात्। अनन्तानिर्वचनीयरजतोत्पत्त्यादिकल्पनेन लाघवात्। एवं रजतभेदतद्व्याप्यादीनां ग्रहकालेऽपि रजतोत्पत्तौ बाधकाभावेन तद्भानापत्तिः। एवं रङ्गरजतोत्पत्तावुक्तभेदादिनिर्णयवतोऽपि पुरुषान्तरस्य तद्रजतचाक्षुषापत्तिः। चक्षुःसंयोगादिसत्त्वात्। बाधनिर्णयप्रतिबन्धकतायाश्च भवद्भिरनभ्युपगमात्। तस्मादन्यथाख्यातिरूप एव भ्रम इति सिद्धम्। योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यत इत्यादिभ्रमानुवादकश्रुतिस्वारस्यमप्यत्रैवेति संक्षेप इत्यन्तग्रन्थेन तत्र हेत्वादिप्रपञ्चमात्कथं भ्रमस्थलेऽनिर्वचनीयरजताद्यर्थस्वीकारेण तस्यानिर्वचनीयख्यातित्वावश्यकत्वं कथं वा नान्यथाख्यातित्वमिति।

अत्रोच्यते। प्रसिद्धरजतभानं हि तव रजतत्वरूपा या सत्यरजतनिष्ठा जातिः सैवेदं रजतमित्यत्र प्रकारीभूय भासत इत्येवेष्टं सैव हि पुरोवर्तिनीं तद्व्यक्तिमन्तरा कथं भासत इत्येवाऽऽदौ पृच्छामः। नहि व्यक्तिमन्तराऽपि तद्भानं कुत्रापि दृष्टचरम्। नापि शौक्तिकेदमंशलक्षणव्यक्तेः सत्त्वेन तत्र तद्भानोपपत्तिसंभव इति युक्तम्। घटेऽपि पटत्वादिभानापत्तेः। न वा तन्निष्कृष्टतदिदमंशमात्रविशेष्यकत्वेन तत्प्रकारकभानाभ्युपगमान्नोक्तापत्तिरिति सांप्रतम्। इदं रजतमित्यादिवद्घटेऽप्ययं पट इति भ्रमापत्तेः। सादृश्यभावान्न तथेति चेन्न। अयं गज इत्यादौ स्वाप्ने धर्मिभ्रमे पीतः शङ्खस्तिक्तो गुड इत्यादौ जागरकालिकेऽपि धर्मभ्रमे च व्यभिचारात्।

ननु सुरभि चन्दनमित्यादिवज्ज्ञानलक्षणसंनिकर्षेणोक्तरजतत्वजातेः प्रकृते प्रकारतया भानमभ्युपगम्यत इति चेन्न । तत्रापि यदि सौरभसाक्षात्कारश्चेत्तदन्यथानुपपत्त्या घटेऽपि यथाकथंचित्तत्कल्पनमपि । यदि सोऽप्यस्तीति ब्रूषे तर्हि चन्दनं पश्यामि सौरभं जिघ्रामीत्यनुव्यवसायापातः । अस्ति तु सर्वजनीनश्चन्दनं पश्यामि सौरभं स्मरामीत्येव सः । तथा च कुड्यचित्रन्यायेनोक्तोदाहरणेऽपि ज्ञानलक्षणप्रत्यासत्तेरेव गगनकुसुमायमानत्वात्तन्निदर्शनेनात्रापि तत्कल्पनं तादृशमेव । एवं च सुरभि चन्दनमित्यत्र चान्दनचाक्षुषप्रमया संस्कारोद्बोधे सौरभस्मरणमेवाव्यवधानेन जायमानं चन्दनधर्मिविशेष्यकं सौरभप्रकारकं नीलो घट इत्यादिवदेकमिव ज्ञानं भासमानमपि न वस्तुतस्तथा किंतु निरुक्तरीत्या विभिन्नमेव ज्ञानद्वयं तत्स्मृत्यनुभवभेदेनेति दिक् ।

ननु ज्ञानद्वयसत्त्वे किं प्रमाणम् । न च चन्दनं पश्यामि सौरभं स्मरामीत्यनुव्यवसायान्यथानुपपत्तेरेव तत्र मानत्वमिति वाच्यम् । सर्वजनीनस्योक्तानुव्यवसायस्यासर्वज्ञदुर्ज्ञेयत्वात्त्वदीयस्य तस्य त्वस्मान्प्रति भ्रमप्रमादविप्रलिप्सादिसंभावनयाऽश्रद्धेयत्वाच्चेति चेन्न । अनुमानस्यैव तत्र प्रमाणत्वात् ।

तथा हि--सुरभि चन्दनमिति ज्ञानद्वयम् । विभिन्नकरणकयोग्यविशिष्टज्ञानत्वात् । पर्वतो वह्निमानिति ज्ञानवत् । अत्र यद्यपि पर्वतविशेष्यकं वह्निमत्प्रकारकमेकमेव विशिष्टज्ञानं भासते तथाऽपि विशेषणीभूतवह्निमत्त्वांशस्यानुमानगम्यत्वाद्विशेष्यीभूतपर्वतांशस्य तु प्रत्यक्षसिद्धत्वाच्च यथा ज्ञानद्वयत्वमेव तद्वत्प्रागाप्तवाक्येन चन्दनपदवाच्यः काष्ठविशेषो गान्धिकापणे तिष्ठतीति तावन्मात्रं चाक्षुषप्रत्यक्षेणापि तदानुभवतस्तत्सौरभ्यं चाननुभवतः कालान्तरे चन्दनसाक्षात्कारेऽपि सुरभि चन्दनमिति प्रतीत्यनुदयात्तदनुभववतस्तु तदुदयाच्चेत्यन्वयव्यतिरेकाभ्यां प्रकृतेऽपि स्मृत्यनुभवात्मकज्ञानद्वयत्वं दुरपह्नवमेव ।

यद्वा सौरभांशे त्वत्राप्यनुमानमेव । तथा चोक्तमद्वैतसिद्धौ सामान्यलक्षणप्रत्यासत्तिखण्डनप्रसङ्गे—एतेन सुरभि चन्दनमित्यादिविशिष्टज्ञानाय कल्पिता ज्ञानलक्षणा प्रत्यासत्तिरपि निरस्ता । चन्दनत्वेन सुरभित्वानुमानोपपत्तेः । अन्यथा साध्याविशिष्टपक्षप्रत्यक्षोपपत्तेरनुमानमात्रोच्छेदप्रसङ्गादिति ।

न च सुरभि चन्दनमिति ज्ञानस्य सौरभांशेऽनुमितित्वे सौरभमनुमिनोमीत्यनुव्यवसायापत्तिरिति सांप्रतम् । पर्वतो वह्निमान् धूमादिति व्यवसायोत्तरं पर्वते धूमेन वह्निमनुमिनोमीत्येवानुव्यवसायेन यथा प्रत्यक्षविषयीभूते पर्वतरूपे विशेष्ये पर्वतं पश्यामीति पृथगनुव्यवसायो नैवोदेति विशिष्टज्ञानत्वस्य नीलोऽयं घट इत्यादिज्ञान-

वत्साम्ये ऽपि प्रत्यक्षविषयीभूतपर्वतरूपविशेष्यांशस्य गौणत्वादनुमितिविषयीभूतवह्निमत्त्वलक्षणविशेषणांशस्यैव प्रधानत्वात्तद्विषयक एवानुव्यवसायोदयस्तद्वत्सुरभि चन्दनं मधुरो गुडः शीतलं जलमित्यादिव्यवसायोत्तरमपि विशेषणीभूतस्य सुरभित्वादेरनुमितिविषयीकृतस्यापि प्रत्यक्षविषयीकृतविशेष्यीभूतचन्दनाद्यपेक्षया गौणतया तद्विषयकः पृथगनुव्यवसायो नैवोदेति किंतु सौरभ्यविशिष्टं चन्दनं पश्यामीति विशिष्टविषयक एवासावुदेतीति क्वोक्तापत्तिप्रसक्तिः ।

दृष्टान्तदार्ष्टान्तिकयोर्विशिष्टज्ञानत्वस्य विशेष्यविशेषणयोः क्रमात्प्रत्यक्षानुमितिविषयतायाश्च तौल्येऽपि दृष्टान्ते विशेष्यस्य पर्वतस्यैव गौणत्वं न तु विशेषणस्य वह्निमत्त्वस्य दार्ष्टान्ते तु विशेषणस्य सुरभित्वस्यैव गौणत्वं न तु विशेष्यस्य चन्दनस्येत्यत्र न विनिगमनाविरहः । उभयवादिसंमतस्य तथानुभवान्यथानुपपन्नत्वस्यैव विनिगमकत्वात् ।

एतेन न च तत्र चन्दनत्वेन सौरभमनुमीयत इति वाच्यम् । सौरभमनुमिनोमीत्यनुव्यवसायाभावेन तथा वक्तुमशक्यत्वादिति परास्तम् । उक्तानुव्यवसायाभावरूपहेतोरप्रयोजकतायाः प्रतिपादितत्वात् ।

एवं ज्ञानलक्षणसंनिकर्षाभ्युपगमे तन्मूलकसाध्यविशिष्टपक्षप्रत्यक्षेणैव वह्न्यादिगोचरप्रवृत्त्याद्युपपत्तौ पर्वतो वह्निमानित्याद्यनुमितिमात्रोच्छेदप्रसङ्गभङ्गार्थं पर्वते वह्निमनुमिनोमीत्यनुव्यवसायः शरणीकृतः सोऽपि तृणीकृत एव । पर्वते वह्निमनुमिनोमीत्यनुव्यवसायेनैव तत्र तस्यानुमितिविषयत्वं तत्त्वे च तथाऽनुव्यवसाय इत्यन्योन्याश्रयात् ।

किंचान्यथाख्यातिवादिना रजतविषयकचाक्षुषत्वरजतचक्षुःसंयोगत्वेन कार्यकारणभावस्य प्रकृते भङ्गप्रसङ्गभङ्गार्थं स्वाव्यवहितेत्यादिना तत्र संबन्धान्तरे समाश्रितेऽपि ज्ञानलक्षणसंनिकर्षमन्तरा निरुक्तख्यात्यसिद्धितादवस्थ्यमेव । तस्य तु निराकृतिः प्रतिपादितैवेति सोऽपि प्रयासः प्रयास एव । यत्त्वनन्तरथलेऽनिर्वचनीयानन्तरजतोत्पत्तितन्नाशतत्सामग्रीकल्पने गौरवं तदपेक्ष्य रजतं साक्षात्करोमीति भ्रमनिर्बाहार्थं क्लृप्तहेतुताकदोषस्यैवोभयमतसिद्धस्य लौकिकविषयतानियामकत्वकल्पनं तदपि तुच्छमेव । विकल्पासहत्वात् ।

तथा हि—स किमुक्तप्रत्यासत्त्या रजते लौकिकविषयतां नियमयति यद्वा तामन्तरैव । नाऽऽद्यः । तस्याः प्रागेव खण्डितत्वात् । नान्त्यः । पुरोवर्तिरजतादिलक्षणाभिनवार्थसंपादनं विना तदसंभवात्तदङ्गीकारे चानिर्वचनीयख्यात्यापत्तेश्च । तस्मात्प्रत्यासत्त्यन्तराविरहान्निरुक्तगौरवमपि गौरवाबाधकमेव न तूक्तलाघवं तथेति तत्त्वम् ।

एतेन दोषस्य रजतादिहेतुमत इत्यादिना जातित्रयकल्पने गौरवं तथा प्रसिद्ध-रजतार्थितया प्रवृत्त्याद्युपपत्त्याऽनन्ततत्कल्पनागौरवमपि परास्तम् । अन्यथानुपपत्तेः सर्वतो बलवत्त्वात् । तदुक्तं श्रीमद्वार्तिककारचरणैः—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्ट्यदृष्टिवैमत्यं सैव सर्वबलाधिका ॥ इति ॥ ३४ ॥

एवं रजतभेदतद्व्याप्यादीनां ग्रहकालेऽपीत्यादिदोषाभासोपन्यासस्तु सिद्धान्ताबाधमात्तुषायित एवेति शिवम् । तस्मादन्यथाख्यातेः सर्वथाऽप्यसिद्धेरखिलैरपि तार्किकैरिदं रजतमित्यादिभ्रमेष्वानिर्वचनीयख्यातिरेव बोधबाधादेरर्थमन्तराऽन्यथानुपपत्त्याऽवश्यमेवाङ्गीकर्तव्येत्याशयेन तत्र सनिदर्शनं युक्त्यन्तरमपि व्युत्पादयन्नुपसंहरति भ्रम इत्यादिशिखरिण्या—

**भ्रमेऽर्थो न स्याच्चेद्वशमुपनयेद्बिम्बमखिलं**
**कथं छायाग्राहीति च सदसदन्यः स रजतम् ।**
**अवश्यं स्वीकार्यः कणभुगनुगैराक्षचरणै-**
**रपि प्राच्यैर्नव्यैरपि न गतिरन्या स्फुरति यत् ॥३५॥**

भ्रमे शुक्त्यादौ रजतादिभ्रान्तिस्थल इत्यर्थः । अर्थः । अनिर्वचनीयोऽभिनवः स्वाश्रितशुक्त्यवच्छिन्नचैतन्यैकविषयकालोकादिसकलसामग्र्युपेताज्ञानपरिणामीभूतरजतादिपदार्थ इति यावत् । न स्याच्चेद्भ्रमत्वावच्छेदकावच्छेदेन न भवेच्चेत्त्वत्संमतान्यथाख्यात्यैव निर्वाहे सति नैव सिद्ध्येच्चेदित्यर्थः। छायेति । एतन्नामा कश्चिच्छायां प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छायेत्यमराज्जले प्रतिफलितं प्रतिबिम्बं गृह्णन् बिम्बमात्मानं प्रतिग्राहयतीति व्युत्पत्त्याऽप्यन्वर्थसंज्ञो जलजन्तुविशेष इत्यर्थः। अखिलं संपूर्णमपि । बिम्बं तद्ग्राह्यप्रतिबिम्बप्रतियोगिकाबिम्बत्वावच्छिन्नं नित्यजगज्जीवनादिव्यापाराधिकृतजीमूतादित्यसितद्युतिग्रहाविद्युत्तारकासप्तर्षिध्रुवादीभिन्नं यावच्चेतनमित्यर्थः ।

एतेन वक्ष्यमाणे महारामायणादिप्रसिद्धे लवणाब्धौ दक्षिणस्यां दिशि स्थिते तस्मिन्निरुक्तमेघादिप्रतिबिम्बानां तज्जलधिजले संभवेऽपि तदाकर्षणेन तेषां कथं न पारवश्यं संपन्नमिति प्रश्नः प्रत्युक्तः । तत्र तदाकर्षणावर्णनादेव तथाविधेश्वरेच्छायाः कल्प्यत्वादन्यथा तदानीमेव जगद्व्यवहारविप्लवापत्तेश्चेत्याकूतम् । कथं वशमुपनयेत्स्वाधीनतामानीयात्न कथमपीत्यन्वयः ।

अयं भावः । प्रतिबिम्बो हि भ्रमत्वेन सर्वसंमतः । तत्र यदि निरुक्तानिर्वचनीयार्थरूपत्वं तथा तद्बिम्बीभूतेन तदधिष्ठानेन सह तत्तादात्म्यं च न स्याच्चेत् ।

निरुक्तच्छायाग्राहिकर्तृकप्रतिबिम्बग्रहणेन बिम्बाकर्षणं स्यात्तस्मात्तदन्यथानुपपत्त्या सदावश्यकतैवेति । अत्राखिलपदेन लोके मण्यादिलक्षणं हि प्रतिबन्धकं प्रतिबध्यस्य वह्न्यादेर्दाहशक्त्यंशमेव प्रतिबध्नाति न तु प्रकाशशक्तिमपीति । तद्वत्प्रकृते नैवास्ति किंतु सार्वांशिकपारवश्यमेवेति द्योत्यते । स च च्छायाग्राही तावदुक्तः श्रीमदार्षे रामायणे सुन्दरकाण्डे प्रथमसर्ग एव—

प्रदृश्यमानः सर्वत्र हनूमान्मारुतात्मजः ।
भेजेऽम्बरं निरालम्बं पक्षयुक्त इवाद्रिराट् ॥
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।
इदं मम महासत्त्वं चिरस्य वशमागतम् ॥
इति संचिन्त्य मनसा छायामस्य समाक्षिपत् ।
छायायां गृह्यमाणायां चिन्तयामास वानरः ॥
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ।
प्रतिलोमेन वातेन महानौरिव सागरे ॥
तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्तदा कपिः ।
ददर्श स महासत्त्वमुत्थितं लवणाम्भसि ॥
तद् दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् ।
कपिराज्ञा यथाऽऽख्यातं सत्त्वमद्भुतदर्शनम् ॥
छायाग्राहि महावीर्यं तदिदं नात्र संशयः ।
स तां बुद्ध्वाऽर्थतत्त्वेन सिंहिकां मतिमान्कपिः ॥
व्यवर्धत महाकायः प्रावृषीव बलाहकः ।
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥
वक्त्रं प्रसारयामास पातालाम्बरसंनिभम् ।
घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥
स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् ।
कायमात्रं च मेधावी मर्माणि च महाकपिः ॥
स तस्या विवृते वक्त्रे वज्रसंहननः कपिः ।
संक्षिप्य मुहुरात्मानं निपपात महाकपिः ॥

आस्ये तस्या निमज्जन्तं ददृशुः सिद्धचारणाः ।
ग्रस्यमानं यथा चन्द्रं पूर्णे पर्वणि राहुणा ॥
ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनःसंपातविक्रमः ॥
तां तु दृष्ट्या च धृत्या च दाक्षिण्येन निपात्य सः ।
कपिप्रवीरो वेगेन ववृधे पुनरात्मवानिति ॥

अत्र तिलकः कश्चित्संगृह्यते । छायाग्रहणेन तद्वस्तुनिरोधशक्तिस्तस्या ब्रह्मदत्ता । महासत्त्वं स्त्रीरूपं प्राणिनम् । अर्थतत्त्वेन च्छायाग्रहणरूपार्थक्रियया । एवमध्यात्मरामायणेऽप्यस्मिन्नेव प्रकरणे—

किंचिद्दूरं गतस्यास्य च्छायां छायाग्रहोऽग्रहीत् ।
सिंहिका नाम सा घोरा जलमध्ये स्थिता सदा ॥
आकाशगामिनां छायामाक्रम्याऽऽकृष्य भक्षयेत् ।
तया गृहीतो हनुमांश्चिन्तयामास वीर्यवान् ॥
केनेदं मे कृतं वेगरोधनं विघ्नकारिणा ।
दृश्यते नैव कोऽप्यत्र विस्मयो मे प्रजायते ॥
एवं विचिन्त्य हनुमानधोदृष्टिं प्रसारयन् ।
तत्र दृष्ट्वा महाकायां सिंहिकां घोररूपिणीम् ॥
पपात सलिले तूर्णं पद्भ्यामेवाहनद्रुषा ।
पुनरुत्प्लुत्य हनुमान्दक्षिणाभिमुखो ययाविति ॥

छायास्पर्शमात्रेण जन्तूनां गतिनिरोधेनाऽऽकर्षकश्छायाग्रह इत्युच्यत इति तट्टीकाकृन्नागेशभट्टः । ननु किमेतावता सा हि ब्रह्मदत्तवरप्रभावात्प्रतिबिम्बाक्षेपमात्रेण बिम्बाकर्षणशक्तिशालिनी सिंहिकानाम्नी राक्षस्येव न त्वेवंजातीयः कश्चिज्जलजन्तुरप्यस्तीति चेन्न । तथात्वेऽपि नागेशभट्टव्याख्याताध्यात्मरामायणानुसारेण तिलकव्याख्यातमहासत्त्वमिति 'कपिराज्ञा यथाऽऽख्यातं सत्त्वमद्भुतदर्शनम्' । छायाग्राहीति च तत्रत्यग्रन्थसंदर्भाभिप्रायेण च तथाविधजातीयकजन्तुजन्मग्रहणस्य निरुक्तराक्षस्या अपि संभावितत्वात् । तिलककृन्मते तथात्वेऽपि मदभिप्रेतप्रमस्थलीयार्थविशेषसत्त्वांशे विसंवादाभावाच्च । अत एव सूतसंहितायां यज्ञवैभवखण्डेऽपि मरणसूचकप्रकरण उक्तम्—

दर्पणे वा जले वाऽपि परेषां वाऽथ चक्षुषि ।
अशिरस्कं स्वमात्मानं पश्यन्याति न जीवतीति ॥

नन्वथाप्यनिर्वचनीयख्यातिसिद्धिः कथमित्याशङ्क्य निगमनव्याजेन समाधत्ते–इति चेत्यादिना नव्यैरपीत्यन्तेन । चः प्रागुक्तहेतुसमुच्चयार्थः । निरुक्तान्यथानुपपत्तिसिद्धभ्रमस्थलीयार्थविशेषावश्यकत्वादपीत्यर्थः । कणेति । काणादशास्त्रप्रवीणैर्वैशेषिकैरित्यर्थः । आक्षेति । अक्षचरणोऽक्षपादो गौतमस्तस्येमे तथा तत्प्रणीतशास्त्राध्येतारो नैयायिकास्तैरपीति यावत् । ते उभे अपि प्राचीनादिभेदेन द्वेधा व्यवह्रियन्त इति तथाविधानामपि तेषां संग्रहार्थं तान्विशिनष्टि–प्राच्यैरित्यादिना । एतादृशैरपि निरुक्तवैशेषिकनैयायिकाभिधानिखिलतार्किकैरपि । स भ्रमस्थलीयोऽर्थः ।

तं लक्षयति–सदित्यादि । सत्त्रिकालाबाध्यं ब्रह्म । असत् क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हं शशविषाणादि· ताभ्यामन्यस्तत्प्रतियोगिकभेदद्वयवानिति यावत् । एतादृशः क इत्यत्राऽऽह––रजतमिति । उपलक्षणमिदं रज्जूरगादेरपि । स हि नेदं रजतमित्यादिना बाध्यमानत्वान्न कालत्रयाबाध्यब्रह्मवत्सन् । निरुक्तबाधात्पूर्वं तदर्थिन इदं रजतमित्यादिना प्रतीयमानत्वान्न क्वचिदप्युपाधावप्रतीयमानशशविषाणादिवदसन्निति लक्षणसंगतिः । तथा चाऽऽहुः श्रीमधुसूदनसरस्वत्योऽद्वैतसिद्धौ–सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यमिति । अवश्यं स्वीकार्योऽङ्गीकरणीय एवेति योजना ।

ननु भवत्वेवं भवत्सिद्धान्ते तत्तथाऽप्यन्यथाख्यातिवादिभिः सर्वैस्तत्किमिति स्वीकार्यमित्याशङ्क्य गत्यन्तराभावादिति हेतुं द्योतयन्समाधत्ते–नेत्यादिशेषेण । यद्यस्माद्धेतोः। अन्या सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयलक्षणाऽनिर्वचनीयत्वरूपमिथ्यात्वस्वीकारेतरेत्यर्थः । गतिः शुक्तिरजतादिभ्रमस्थलीयबोधबाधादेर्निर्बाधनिर्वाहमार्ग इति यावत् । न स्फुरति नैव भासत इति संबन्धः । तस्मान्निखिलैरप्यन्यथाख्यातिवादिभिः प्रकारान्तरवैधुर्यादुक्तलक्षणाऽनिर्वचनीयख्यातिरेवोररीकरणीयेत्याशयः ।

एवमेवोक्तमद्वैतसिद्धावपि । नाप्यन्यत्र स्थितस्य रूप्यस्य भानादन्यथाख्यातिः । अत्यन्तासत इवान्यत्र सतोऽप्यपरोक्षप्रतीतिप्रयोजकसंनिकर्षानुपपत्तेस्तुल्यत्वात् । न च संस्कारस्मृतिदोषाणां प्रत्यासत्तित्वम् । रजतप्रत्यक्षमात्रे रजतसंयोगत्वेन कारणत्वावधारणात् । संनिकर्षान्तरसत्त्वेऽपि तदभावे रजतप्रत्यक्षोत्पत्तेर्वक्तुमशक्यत्वात् । न च लौकिकप्रमारूपप्रत्यक्ष एव तस्य कारणत्वम् । अस्य विभागस्य स्वशिष्यानेव प्रत्युचितत्वादित्यादि ।

अत्र गुरुचन्द्रिकाऽपीषत्संगृह्यते––प्रत्यक्षमात्र इति । द्रव्यनिष्ठविषयतया प्रत्यक्षसामान्ये इन्द्रियसंयोगस्य हेतुत्वकल्पनायां लाघवात् । लौकिकालौकिकविषयतया प्रत्यक्षे इन्द्रियसंयोगोऽलौकिकविषयतया प्रत्यक्ष उपनयनादिहेतुरिति कल्पनानव-

काशात्सुरभि चन्दनमित्यादौ सौरभं स्मरामीत्येव प्रत्ययादुपनयनादिहेतुत्वे माना-भावाच्चेति ।

नन्वेवमपि श्रीमधुसूदनसरस्वतीभिः प्रागुक्ताद्वैतसिद्धिमध्ये सुरभि चन्दनमिति पराभिमतज्ञानलक्षणाप्रत्यासत्त्युदाहरणे सुरभित्वांशेऽनुमानमेवेत्युक्तं ब्रह्मानन्दैस्तु तत्र स्मृतिरेवोक्तेति कथं नानयोः परस्परं विरोध इति चेत्सत्यम् । अनुमानपक्षेऽपि चन्द-नत्वरूपलिङ्गचाक्षुषोत्तरं तत्सुरभित्वव्याप्यमिति व्याप्तिस्मृतिस्त्वावश्यक्येव । एवं च यदि सिषाधयिषाद्यनुमितिसामग्रीप्राबल्यं तदा स्मृतौ जातायामपि सत्यां तस्यास्त-द्वत्त्वेन चन्दनत्वेन सुरभित्वमनुमिनोमीत्येव प्रत्ययो भवत्यन्यथा तु चन्दनचाक्षुषो-त्तरं सौरभस्मरणमेवेत्युभयमप्यविरुद्धमेवेति बोध्यम् ।

यत्तु योऽन्यथा सन्तमात्मानमित्यादि कौस्तुभकृताऽन्यथाख्यातिसाधकत्वेन वच-नमुदाहारि तदिन्द्रजालमिव मायामयः स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममितीति द्वैतं प्रकृत्य मैत्रायणीयश्रुत्यै-क्यादनिर्वचनीयख्यातिपरमेवेति तत्त्वम् । विस्तरस्त्वनिर्वचनीयवाद एवेति शिवम् ॥ ३५ ॥

इदानीमुद्देशक्रमप्राप्तामसत्ख्यातिमप्यनूद्य दूषयति—असदेवेत्यादिमालभारिण्या--

असदेव विभाति रूप्यमेषा यदसत्ख्यातिरितीह शून्यवादी ।
तदपि स्फुटमीदृगेव तुच्छं यदृतेऽर्थं न हि जन्यभानमस्ति ॥३६॥

रूप्यं—इदं रजतमिति भ्रमेऽवभासमानं रजतम् । असदेव शशविषाणवत्तुच्छमेव । शुक्तिसाक्षात्कारोत्तरक्षणावच्छेदेन नेदं रजतं नात्र रजतं किंत्वसदेव रजतमभादि-त्यनुभवादिति भावः । विभाति—इदं रजतमिति भ्रमविषयतयाऽवभासत इत्यर्थः ।

किं तत इत्यत आह—एषेति । एषा निरुक्तरूपा । असदिति । असतः शून्यस्य ख्यातिः प्रख्यातिः । इदं रजतमित्यादिभ्रमत्वेन प्रसिद्धिरिति यावत् । इति निरु-क्तप्रकारेण । इह लोके । शून्येति । माध्यमिकाभिधो बौद्धविशेषः । तदुक्तं चित्र-दीपे--शून्यं माध्यमिका जगुरिति । वदतीति शेषः । तदपि निरुक्तासत्ख्यातिक-थनमपि । ईदृगेव । अन्यथाख्यातिकथनवदेव । स्फुटं स्पष्टमेव । तुच्छं निःसार-मेवास्तीत्यध्याहृत्यान्वयः । तत्र हेतुं वक्ति- यदित्यादिशेषेण । यद्यस्माद्धेतोः । अर्थं स्वविषयमृते विना जन्यं प्रागभावप्रतियोगि । एतेन कूटस्थाद्वैतज्ञानव्यावृत्तिर्द्योत्यते । एतादृशं भानं ज्ञानम् । नह्यस्ति । हिरवधारणे । नैवास्तीति संबन्धः । तस्मात्तुच्छ-त्वेन क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हस्यासत इदं रजतमिति भ्रमविषयत्वं ब्रुवन्मा-ध्यमिको भ्रान्त एवेति भावः ।

एतेनासत्ख्यातिवाद्यानन्दतीर्थीयोऽपि माध्वापराभिधः प्रत्युक्तः। तदुक्तमद्वैतसिद्धौ—तस्मादनिर्वाच्यख्यातिरेव प्रमाणसंभवान्न त्वसदन्यथाख्यातिः प्रमाणविरहादिति। विस्तरस्तु तत्रैव तथा गुरुलघुचन्द्रिकाभिधतट्टीकयोरपि च बोध्यः। इह त्वनतिप्रयोजनत्वाद्विस्तरभयाच्च मया नैव तत्प्रपञ्च्यत इति संक्षेपः। ब्रह्मविद्याभरणेऽप्यध्यासभाष्यविवरणे—असत्ख्यातिर्द्वेधा—शून्यवादिनां निरधिष्ठाना तान्त्रिकाणां केषांचित्साधिष्ठानाऽसदारोप्येति ॥ ३६ ॥

एवमेव क्रमप्राप्तात्मख्यातिस्वरूपमप्यनूद्य तत्खण्डनेऽप्युक्तहेतुमेवातिदिश्य प्राचीनाचार्यैर्गुर्वादिसौगतान्तानां सर्वेषामप्येतेषां विस्तरेणाऽऽकरादौ तत्तदवसरे खण्डितत्वान्नैवात्र मया तत्प्रपञ्चो विरच्यत इति वदन्नुपसंहरति—अर्थ इत्यादिशालिन्या—

अर्थो नास्ति ज्ञानमेवास्ति रूप्य-
मित्येषाऽऽत्मख्यातिरप्युक्तहेतोः।
प्रत्याख्याता सौगतस्येप्सिता या
पूर्वाशिष्टाः सर्व एते त्वलं तत् ॥ ३७ ॥

रूप्यं—इदं रजतमिति भ्रमविषयीभूतं रजतमित्यर्थः। अर्थः कश्चिद्विषयव्यतिरिक्तो विषयलक्षणः पदार्थः। नास्ति निरुक्तभ्रमविषयीभूतत्वेन नैव वर्तत इति यावत्। एवं तर्हि निरुक्तभ्रमे विषयतयाऽवभासमानस्य रूप्यस्य का गतिरित्यत आह—ज्ञानमेवेति। इदं रजतमिति बुद्धिरेवेह पुरोवर्तिरजतरूपेण भासमाना। अस्ति वर्तत इत्यन्वयः।

भवतु किं ततस्तत्राऽऽह—इत्येषेत्यादिना। इतिशब्दः प्रकारार्थः। एषा कथितरूपत्वेन साक्षिप्रत्यक्षेति यावत्। आत्मेति। आत्मनो बुद्धेरेव ख्यातिर्निरुक्तभ्रमे प्रसिद्धिर्ज्ञानज्ञेयात्मना परिणतिरित्यर्थः। अपिः पूर्वोक्तमतसमुच्चये। उक्तेति। पूर्वपद्यान्तिमचरणनिरूपितादर्थं विना ज्ञानज्ञानानुपपत्तिलक्षणलिङ्गादिति यावत्। सा प्रत्याख्याता निरस्ता भवतीति संबन्धः। सा केत्याकाङ्क्षायामाह—सौगतस्येति। या सौगतस्य विज्ञानवादिनो बौद्धस्येप्सिताऽभिप्रेताऽस्तीति योजना।

तदुक्तं तं केचिदन्यत्रान्यधर्मेत्यादिभाष्यव्याख्यानेऽन्यथाख्यातिपक्षे व्याख्यायाऽऽनन्दज्ञानाचार्यैः। अत्र त्वन्यत्र बाह्ये शुक्त्यादावन्यस्य ज्ञानस्य धर्मो रजतादिस्तस्याध्यासो बहिरिव तदभेदेन धीरित्यात्मख्यातिवादिनस्तमध्यासमाहुरिति योजनेति। एतेन पातञ्जला अपि परास्ताः। तेषामप्यध्यासेऽर्थस्य मानसत्त्वात्।

तथा चोक्तं योगवार्तिके—अत्र च शास्त्रेऽन्यथाख्यातिः सिद्धान्तो न तु सांख्यवदविवेकमात्रम्। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येत्यागामिसूत्रात्। वैशेषिकनयायार्थ [illegible] यद्वाद्यरजतादेर्नोऽऽरोपः, किंत्वान्तरस्यैवेति।

ज्ञानाकारमनुभवसिद्धं शुक्त्यादिसंनिकृष्टं विहाय दूरस्थरजतादिविषयकत्वकल्पने गौरवात् । स्वप्ने दृष्टमिदानीं नास्तीति स्वरूपतो बाधानुपपत्तेश्च ।

विप्रपृष्ठ्यादिचित्तस्थं न बहिष्ठं कदाचन । स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ।

इति स्मृत्या भ्रमेऽपि चित्तस्थविषयस्यैव दर्शनसिद्धेश्च । तथा च ब्रह्मसूत्रद्वयम्— संध्ये सृष्टिराह हि । तदभिध्यानादेव तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति चेतीति । ततः किं तत्राऽऽह—पूर्वैरित्यादिशेषेण । पूर्वैः श्रीमद्भाष्यकारचरणादिभिः पूर्वाचार्यैः । एते गुर्वादयः प्रकृताः । सर्वेऽपि भेदवादिनः संपूर्णा अपि च्छिन्नाः खण्डिता एव तत्तस्मादलं पर्याप्तमिति ॥ ३७ ॥

ननु भवत्वेवमख्यातिप्रभृत्यात्मख्यात्यन्तततद्भेदवादिसंमतख्यातिखण्डनमथापि सिद्धान्ते तु कथं तदव्यवस्थेत्याशङ्क्य किं सामान्यतः पृच्छस्युत विशेषत इति विकल्प्यान्त्यपक्षे त्वग्रे तत्तन्मतभेदेन तदुपन्यसनतदेकमत्यप्रकारयोश्च वक्ष्यमाणत्वान्नैवात्र तत्समाधानावसरः । प्रथमे तु समाधीयत एवेत्यभिप्रेत्य भ्रमकारणतन्निवारणकरणतल्लक्षणतदभिधानतदुदाहरणानि च क्रमात्कथयति—स्रगादीत्यादिपृथ्व्या—

स्रगाद्युपहितात्मचिद्विषयमोहमात्रोत्थितं
तदेकमिति नश्वरं सदसदन्यरूपाकृति ।
अनिर्वचनसंज्ञकं स्फुरति भोगिराजादिकं
भ्रमेष्विति सुधीश्वरैस्तदलमभ्युपेयं किल ॥ ३८ ॥

स्रगत्र मन्दान्धकारपतिता मालत्यादिमालेव तदुपहिता यथमात्मचित् तद्विषयकं यन्मोहमात्रं तूलाज्ञानावस्थाज्ञानापरपर्यायं पल्लवाज्ञानमेव तस्मादुत्थितमुत्पन्नमित्यर्थः । अत्र मात्रचा पराभिमतदोषसादृश्यसंस्काराः परास्ताः । तेषां व्यभिचारित्वात् । तथा— विषयकरणदोषान्न भ्रमः संविदि स्यादपि तु भवति मोहात्केवलादेवमेव । भगवति परमात्मन्यद्वितीये विचित्राद्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुरिति च । एवं संस्कारेऽप्यूह्यम् । तथा चोक्तं संक्षेपशारीरके—

साहृश्यधीप्रभृति न त्रितयं निमित्तमध्यासभूमिषु जगत्यनुगच्छतीदम् ।
ब्राह्मण्यजातिपरिकल्पनमात्मनिष्ठं जात्या न साम्यमुपलब्धमिहास्ति पूर्वमिति ॥

तदेकेति । स्रगाद्युपहितात्मचिदेकविषयकसमानाधिकरणकभ्रमनाश्यमिति यावत् । ज्ञानाज्ञानयोः समानाश्रयसमानविषयकत्वेनैव नाश्यनाशकभावात् । चैत्राश्रितघट-ज्ञानेन मैत्राश्रिततद्विषयकाज्ञानभङ्गप्रसङ्गभङ्गार्थं समानाश्रयेति । चैत्रमात्राश्रितघट-ज्ञानेन तन्मात्राश्रितपटाज्ञानभङ्गप्रसङ्गभङ्गार्थं च समानविषयेति । तथा । सदसदन्येति ।

तदुक्तमद्वैतसिद्धौ---सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यमिति । अत्र सदसती ब्रह्मतुच्छे एव तदुभयप्रतियोगिकभेदद्वयस्य शुक्तिरजतादौ सत्त्वेन लक्षणसमन्वयः । विस्तरस्तु तत्र तट्टीकाद्वये च ज्ञेय ।

उपलक्षणमिदमपरैतल्लक्षणानामपि । यतो निरुक्तविशेषणत्रयावीशिष्टं तत एव । अनिर्वचनेति । सदादिरूपेण न विद्यते निर्वचनं निर्धारणं यस्य तदनिर्वचनम् । अनिर्वचनमिति संज्ञा यस्य तत्तथेत्यर्थः । तथा हि । स्रगाद्युपहितात्मचिद्विषयमोहमाञोत्थितत्वेन तदेकमिति नश्वरत्वात्सदिति वक्तुमशक्यमेव । न हि त्रिकालाबाध्यतया सच्छब्दवाच्यं वस्तु केनचिद्बाध्यं भवति । अत एव स्वाधिष्ठानप्रमोदयपर्वेक्षणावधिप्रतीयमानत्वात्क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वलक्षणमसदित्यपि वक्तुमयुक्तमेव ।

एवमुभयरूपत्वमपि परस्परविरोधादेव तथोभयाभिन्नरूपत्वमप्यप्रसिद्धत्वादेवानुचितमिति निरुक्तगतिरेव शरणमित्याशयः । तदुक्तं भगवद्भिः खण्डनकारैः—

समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तदस्तु गतिस्तत्त्वद्वस्तुधीव्यवहारयोः ॥ इति प्रश्नः ।
उपपादयितुं तैस्तैर्मतैरशकनीययोः ॥
अनिर्वचनतावादपादसेवा गतिस्तयोः । इति समाधानम् ।

एतादृशं भोगिराजादिकं स्रगाद्यध्यस्तविषधरवरादिकम् । आदिना शुक्तिरजतादिकम् । भ्रमेषु । अयं सर्प इत्यादिभ्रमात्मकज्ञानावच्छेदेनेत्यर्थः । स्फुरति विषयतया प्रतिभासत इति यावत् । इति । एवंप्रकारेण । तत् । तस्मात्कारणादख्यात्यादिवादिमुख्ययावद्बौद्धवादिभिरुपपादयितुमशक्यत्वादित्यर्थः । अलमवश्यमेव । सुधीति । सकलमुमुक्षुक्षितिपतिभिरिति यावत् । अभ्युपेयं किल गत्यन्तरवैधुर्यादादरणीयमेवेत्यन्वयः सरल एव । तस्मादनिर्वचनीयख्यातिरेव सकलदोषविकला श्रुत्यनुकूलदृश्यत्वादिहेतुकब्रह्मप्रमेतराबाध्यसत्त्वधार्मिकप्रतीत्यर्हचिद्भिन्नपक्षकनिरुक्तादिलक्षणमिथ्यात्वसाध्यकशुक्तिरजतादिदृष्टान्तकयुक्तिमूला चेत्याकूतम् ॥ ३८ ॥

ननु तत्तदाचार्याणामवान्तरमतभेदेऽपि भवत्वेवं सिद्धान्ते सामान्यतोऽनिर्वचनीयख्यातेः कारणादिपञ्चकव्यवस्था, तथाऽपि श्रीमद्भगवत्पूज्यपादाभिधभाष्यकारपादारविन्दानां किमध्याससामान्यलक्षणं संमतं कतिविधश्च स इत्याशङ्क्य तत्संमतं तल्लक्षणद्वयं तथा कारणाध्यासकार्याध्यासभेदेन तद्द्वैविध्यं तथाऽर्थाध्यासज्ञानाध्यासभेदेन पुनस्तत्तथात्वं तथा संसर्गाध्यासतादात्म्याध्यासभेदेन पुनरपि तद्द्वैविध्यं च सोदाहरणं कथयन्समाधत्ते—अन्यत्रेत्यादिस्रग्धरया—

अन्यत्रान्यावभासः सकलबुधमतोऽध्यास एवं द्विधाऽपि
सत्यासत्यैक्यरूपो जनकमुखतनुर्ज्ञेयतज्ज्ञानमूर्तिः ।
संसर्गः केवलं स्यात्सत इदम इव व्यालमुख्ये भ्रमेऽत्र
तादात्म्यं चासतः स्यादिदमि गुणगतेऽस्मिन्यथैवोरगादेः ॥३९॥

अन्यत्राज्ञातेऽधिष्ठानीभूते शुक्त्याद्यवच्छिन्नचैतन्ये सामान्यीभूतेदमंशेनाधिकरण इत्यर्थः । अन्येति । अन्यस्य रजतादेरवभासः प्रतिभासमात्रमिति यावत् । एवं भाष्यसंमतं प्राथमिकमध्यासलक्षणमुक्त्वा द्वितीयं तदाह—सत्येति । सत्यं पारमार्थिकादिसत्यतापन्नं सामान्यतो बाधविधुरमित्यर्थः । असत्यं बाध्यं तयोर्यदैक्यमहमज्ञ इदं रजतमित्यादिसंमेलनभानं तदेव रूपं यस्य स तथेति यावत् ।

एवं द्विधाऽपि निरुक्तद्विःप्रकारकलक्षणात्मकोऽपीत्यर्थः । एतादृशोऽध्यास आरोपः । सकलेति । सकलाः स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम चेति प्रश्नोपनिषत्प्रसिद्धाः प्राणादिषोडशकलाविशिष्टाः संपूर्णजीवाः । बुधाः साक्षात्परम्परासंबन्धेन वा बुधाः । अद्वैतब्रह्मात्मैक्यसाक्षात्काररलक्षणचरमप्रमावत्त्वेन तत्त्वज्ञाः । येन स तथा श्रीमच्छंकराचार्यसंज्ञको भगवानद्वैतशास्त्रभाष्यकारस्तस्य मतः संमतोऽस्तीति संबन्धः । श्रीमद्भाष्यकारादिनिखिलपूर्वाचार्यवर्यसंमतोऽस्तीत्यपि वाऽर्थो बोध्यः ।

उपलक्षणमिदमपरपरीक्षकाणामपि । तथा चोक्तं भामत्यां सर्वथाऽपि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरतीति भाष्यव्याख्याने—अन्यस्यान्यधर्मकल्पना अनृतता सा चानिर्वचनीयेत्यधस्तादुपपादितम् । तेन सर्वेषामेव परीक्षकाणां मतेऽन्यस्यान्यधर्मकल्पनाऽनिर्वचनीयाऽवश्यंभाविनीति, अनिर्वचनीयता सर्वतन्त्रसिद्धान्त इत्यर्थ इति । एतेनाऽऽद्यलक्षणं संक्षिप्तं भवति ।

द्वितीयं तूक्तं भगवद्भिः श्रीमद्भाष्यकारपादारविन्दपरागैः कण्ठत एवाध्यासभाष्ये—सत्यानृते मिथुनीकृत्येति । सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिरपि—सत्यानृतवस्तुसंभेदावभासोऽध्यास इति । एवं लक्षणद्वयमध्यासीयं संक्षिप्य तस्य कारणाध्यासकार्याध्यासभेदेन द्वैविध्यं विधातुं पुनर्विशिनष्टि—जनकेति । जनयतीति जनकमखिलजन्यस्याऽऽकाशादेस्तथा जीवेशतद्भेदस्वचित्संसर्गात्मकव्याप्यस्यापि जगतः परिणाम्युपादानं तद्वत्क्रमादूव्यापकं च तन्मुखं प्रधानं यस्य कार्याध्यासस्याहंकारादेः स तनुः स्वरूपं यस्य स तथा कारणाध्यासात्मक इत्यर्थः ।

एवं पुनरपि तस्य द्वैविध्यमभिधातुं तं विशिनष्टि—ज्ञेयेति । ज्ञातुं योग्यो ज्ञेयश्चिद्विषयीभूतोऽर्थस्तथा तस्योक्तरूपस्यार्थस्य यज्ज्ञानमविद्यावृत्त्याद्यवच्छिन्नं चैतन्यं च ते मूर्तिराकारो यस्य स तथा । अर्थाध्यासज्ञानाध्यासात्मक इति यावत् ।

ननु किमेतावदेव कारणाध्यासकार्याध्यासार्थाध्यासज्ञानाध्यासात्मकमध्यासभेदचतुष्टयमेवोतान्योऽपि कश्चिदस्ति तद्भेद इत्याशङ्क्य संसर्गाध्यासतादात्म्याध्यासाख्यं तद्भेदद्वयमपरमपि कथयन्नारोप्येऽधिष्ठानस्य संसर्गाध्यास एव तथाऽधिष्ठाने तावदारोप्यस्य तादात्म्याध्यास एवेति च नियमं दृष्टान्तदार्ष्टान्तिकयोः स्पष्टयति–संसर्ग इत्याद्युत्तरार्धेन ।

अत्र चतुर्विधेऽप्यध्यासे इदम इदमंशात्मकाधिष्ठानांशस्य व्यालमुख्ये सर्पादिरूपे भ्रम इव सतो ब्रह्मणः, असति इत्यार्थिकम् । केवलं संसर्ग एव स्यात्संसर्गाध्यास एव भवेत् । चस्त्वर्थे । असतस्त्वध्यस्तस्य । सतीत्यार्थिकम् । अधिष्ठान इत्यर्थः । गुणगते रज्जुगते इदमि इदमंशेऽस्मिन्साक्षिप्रत्यक्षे यथा--उरगादेरध्यस्तस्य सर्पादेस्तादात्म्यमेवायं सर्प इति तद्रूपतैवास्ति न तु संसर्गस्तथा तादात्म्यमेवेतीत्यध्याहृत्य योजना ।

नन्वाद्यलक्षणमन्यत्र शुक्त्यादावन्यावभासोऽन्यस्य रजतादेरवभासः प्रतिभास इति व्युत्पत्त्या ज्ञानाध्यासे समन्वयादप्यर्थाध्यासे रजतादिरूपे कथं समन्वियादिति चेन्न । व्युत्पत्त्यन्तरेण तत्रापि तत्संभवात् । तद्यथा—अन्यत्रेति तु प्राग्वदेव । अन्येति । अवभास्यते विषयी क्रियत इत्यवभासः। अन्यश्चासाववभासश्चेत्यन्यावभासो रजतादिपदार्थ इति । एवं चाध्यासद्वयेऽपि संभवत्येवेदं लक्षणमिति संक्षेपः ।

नन्वेवमपि कथमस्यानादौ कारणाध्यासेऽविद्यादिरूपे समन्वय इति चेत् । उच्यते । अन्यत्र दृश्याधिष्ठानत्वोपलक्षिते दृङ्मात्रे वस्तुनि, अन्योऽनाद्यविद्याधिष्ठानाधिष्ठेयभावादिरूपताचित्संबन्धतदाभासादिरूपजीवेश्वरतद्भेदरूपदृश्यपञ्चकात्मा योऽवभासः प्रागुक्तव्युत्पत्त्या आरोप इत्यर्थाध्यासस्तथा षष्ठीसमासेन ज्ञानाध्यासश्च सुघट एवेति ।

ननु सिद्धान्तबिन्दावविद्याध्यासश्चैक एवानादिरित्युक्तं त्वया त्वविद्याचित्संबन्धजीवेशतद्भेदचिदाभासानां तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यानामन्येषामपि चतुर्णामनादित्वमुच्यत इति कथं न तद्विरोध इति चेन्न । चशब्देन तत्रोक्तचतुष्टयस्यापीष्टत्वात् । अवधारणस्य तु तद्धेदं तर्ह्यव्याकृतमासीदितिश्रुतिप्रसिद्धाव्याकृताख्यमहाप्रलयदशायां तेषां तत्राविस्पष्टत्वेन स्थितत्वेऽपि तन्मात्रविषयसुषुप्तिसमप्रतीत्याभिप्रायकत्वाच्च । अन्यथा तृतीयाष्टमश्लोकटीकायामव्याकृतपदार्थनिरूपणं प्रक्रम्य ।

तत्र साभासाऽविद्या मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैश्चैतन्यतत्संबन्धजीवेशविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यत इति तन्निरूपणं कथं संगच्छेत । तस्मान्न कोऽपि मयि तद्ग्रन्थविरोधगन्धोऽपीति ध्येयं धीरैः । एवमेवान्यत्रापि विरोधपरिहारे प्रयतिष्यामहे ।

नन्वेवं कारणकार्यार्थज्ञानाख्यचतुर्विधाध्यासेष्वपि प्रथमस्यान्यत्रान्यावभासोऽध्यास इत्यध्यासलक्षणस्य भवतु समन्वयः, परं तु पञ्चमः संसर्गः केवलमित्याद्युत्तरार्धे संसर्गाध्यास उक्तः स एव न संभवत्यादौ । ततस्तत्र लक्षणसमन्वयस्तु कुड्यचित्रन्यायेन दूरतोऽपास्त एव ।

न च तथाऽप्यन्योऽन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति भाष्यव्याख्याने श्रीरामानन्दसरस्वतीभिः सत्यमनिदं चैतन्यं तस्यानात्मनि संसर्गमात्राध्यासो न स्वरूपस्येत्युक्तोऽसौ कथमपलप्येत इति सांप्रतम् । तत्रैव प्रकृतभाष्ययोजनस्य । जाड्यचैतन्यादिधर्माणां धर्मिणावहंकारात्मानौ तयोरत्यन्तं विभिन्नयोरितरेतरभेदाग्रहणेनान्योन्यस्मिन्नन्योन्यतादात्म्यमन्योन्यधर्मांश्च व्यत्यासेनाध्यस्य लोकव्यवहार इति योजनेत्युक्तत्वेनाऽऽत्मानात्मनोरुभयोरपि परस्परतादात्म्याध्यासस्यैव तत्संमतत्वादिति चेन्न ।

अन्योन्यात्मकतामिति यथाश्रुतभाष्यानुसार्युक्तरामानन्दग्रन्थस्य मतान्तरपरत्वादन्यथा समुदाहृतस्य तत्प्रघट्टकस्थस्यैवोत्तरग्रन्थस्यासांगत्यापत्तेश्च । तच्च मतमुक्तं संक्षेपशारीरके—‘अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु । रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेन ’इति । अत्र हि, इदं रजतमित्यादाविदमंशो योऽयं भ्रमे भाति सोऽपि रजतादिवदधिष्ठानाज्ञाननिबन्धनोऽनिर्वचनीयत्वेन बाध्य एव न त्वाधिष्ठानीयेदमंशसंसर्गमात्रम् । निरुक्तव्यातिविशेषादित्यभिप्रायः स्पष्ट एव । तेनैतन्मते तु नैव संसर्गाध्यासः किंतु सर्वत्र तादात्म्याध्यास एवेति सिध्यति । इदमेव मतं नृसिंहभट्टोपाध्यायैरङ्गीकृतमित्युक्तं सिद्धान्तलेशसिद्धान्तसूक्तिमञ्जर्याम्—

नृसिंहभट्टोपाध्यायः पूर्वं रजतविभ्रमात् ।
न मानमिदमाकारवृत्ताविति समभ्यधादिति ॥

अत्र टीकाऽपि मूलकृतामेव । इदं रजतमिति विशिष्टगोचरैकैवाविद्यावृत्तिर्दोषादिसहकृतेन्द्रियसंयोगादुत्पद्यते । न तु ततः प्रागिदमंशमात्रगोचराऽन्या वृत्तिरस्तीति मतान्तरमाह-

ष्टिसिद्धेति । न मानमिति । तथा हि । न तावत्प्रत्यक्षम् । ज्ञानद्वित्वाननुभवात् । नाप्यध्यासकार्यलिङ्गकमधिष्ठानसामान्यज्ञानानुमानम् । रूपानुपहितचाक्षुषायोगेन पीतः शङ्खो नीलं नभ इत्याद्यध्यासेषु व्यभिचारेण तद्धेतोरिति न्यायेन दोषसंप्रयोगादिनाऽन्यथासिद्धेश्चाध्यासहेतुत्वाभावात् । अत एव न सादृश्यज्ञानमपि तद्धेतुः । रङ्गादिविसदृशे रजतानध्यासनियमस्तु अवश्यंभाविविशेषदर्शनकृतप्रतिबन्धादेवेति भाव इति ।

न चास्मिन्मते त्वात्मनोऽप्युक्तरीत्याऽध्यस्तत्वेन बाध्यत्वाच्छून्यवादापत्तिः कथं पराकरणीयेति वाच्यम् । विशिष्टं शुद्धान्नातिरिच्यते विशिष्टं शुद्धादतिरिच्यत इति च मतद्वयं शास्त्रे प्रसिद्धमेव । तत्राऽऽद्ये गामानयेति वृद्धवाक्यं श्रुत्वा यां कांचिद्गोत्वावच्छेदकावच्छिन्नां गोव्यक्तिं पूजाद्यर्थमुपानीय मध्यमवृद्धः कृताज्ञो भवति लोके । गां नमस्कुर्यादिति विधावपि च तादृशीं गोव्यक्तिं नमस्कृत्य चैत्रस्तथा भवति शास्त्रे । तेन निरुक्तगोव्यक्तेर्यत्किंचिच्छुक्लत्वादिगुणवैशिष्ट्याविनाभावेऽपि शुद्धगवानयनादिसिद्ध्या विशिष्टं शुद्धान्नातिरिच्यत इति पर्यवस्यति ।

अन्त्ये तु सोऽयं मनुष्यलोकः पुत्रेणैव जय्य इति जातपुत्रोऽग्नीनादधीतेति च श्रुतेः क्रमान्मनुष्यलोकजयाग्न्याधानानधिकारप्रयोजकशुद्धदेवदत्तापेक्षया मनुष्यलोकजयाग्न्याधानाधिकारप्रयोजकपुत्रित्वविशिष्टदेवदत्तत्वस्यातिरिक्तत्वाद्विशिष्टं शुद्धादतिरिच्यत इत्येव पर्यवस्यति । तेनेहाऽऽत्माधिष्ठानकाध्यस्तत्वविशिष्टात्मनः सकाशादन्त्यमतरीत्या शुद्धात्मनोऽतिरिक्तत्वेन सत्त्वान्नैव शून्यवादापत्तिरिति दिक् ।

नन्वेवं तर्हि संसर्गाध्यासाङ्गीकारतदनङ्गीकारकृन्मतयोर्विरोधपरिहारः कथमिति चेत् । अत्रैवाग्र एतन्मतविचिन्तने विरोधस्य परिजिहीर्षितत्वात् । एवं च संसर्गाध्यासतादात्म्याध्यासयोरुभयोरप्याद्यलक्षणस्य समन्वयस्तु क्रमात्संसर्गः केवलं स्यादित्याद्युत्तरार्धपादेर्यन्निगदेनैव व्याख्यातः सोदाहरणमपि ।

ननु भवत्वेवमाद्यलक्षणस्य षोढाध्यासेष्वपि कारणादिरूपेषु समन्वयः परं तु द्वितीयस्य कथमसाविति चेत् । उच्यते । कारणाध्यासे सत्यं द्वैताधिष्ठानत्वोपलक्षितं चिन्मात्रमेव सर्वबाधावधिभूतम् । तथा—असत्यं बाध्यत्वान्मिथ्याभूतमविद्याचनादिदृश्यपञ्चकमपि तयोरैक्यं संमेलनमेव रूपं तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुतिप्रसिद्धं स्वरूपं यस्य स तथेत्यर्थः । एवमहंकारादिसकलकार्याध्यासेऽप्यहमस्मीत्यादिरूपेऽप्यसौ सत्यमबाधितत्वादुक्ताध्यासाधिष्ठानत्वोपलक्षितं सन्मात्रं तथा—असत्यं बाध्यत्वान्मिथ्याहमादि तयोरैक्यरूपोऽसावतिस्फुट एव । एतेनार्थाध्यासे सत्यासत्यैक्यरूपत्वं व्याख्यातम् ।

अज्ञानाहंकारादेः स्वतः सत्ताशून्यत्वेन सत्यासत्यैक्यरूपत्वात् । ज्ञानाध्यासे तु, इदं रजतमयं सर्प इत्यादिवदहमस्मीत्यादावपि सत्यमधिष्ठानीभूतमिदमंशवत्सन्मात्रमबाधितत्वादसत्यं रजतादिवद्बाध्यत्वान्मिथ्याभूतमहंकारादिकं तयोरैक्यं संमेलनं रूप्यते निरूपणविषयी क्रियते येन ज्ञानेन स ज्ञानविशेषस्तथेति यावत् । संसर्गाध्यासतादात्म्याध्यासयोस्त्वेतल्लक्षणसमन्वयः सदृष्टान्तं कण्ठत एवोक्तः संसर्गः केवलं स्यादित्याद्युत्तरार्धचरणयोरिति सर्वमवदातम् ।

इहाऽऽद्यलक्षणेऽन्यपदार्थस्य सापेक्षत्वेन निगूढत्वलक्षणास्वरसादन्त्यमेव सिद्धान्तलक्षणं बोध्यम् । तदुक्तं सिद्धान्तबिन्दौ—यद्वा सत्यानृते मिथुनीकृत्येति भाष्यवचनात्सत्यमिथ्यावस्तुसंभेदावभासोऽध्यास इत्येव सिद्धान्तलक्षणमिति । तस्मान्न कोऽप्यत्र शङ्कावकाश इति सर्वं सुमङ्गलम् ॥ ३९ ॥

एवं सप्रपञ्चमध्यासनिरूपणे कृतेऽपि तत्र शिष्यः सद्वस्तुनः स्वस्मिंस्तादात्म्येन कल्पिते मिथ्याभूते द्वैते सिद्धान्त्युक्तं संसर्गाध्यासं गूढाभिसंधिरेवानुवदति—संसर्गो यदीत्यादिशार्दूलविक्रीडितेन—

संसर्गो यदि ते सतः सत इहाध्यासस्तदाऽसौ मृषा
वाच्यस्तस्य तथात्मतैकवचनात्संक्षेपशारीरके ।
बाढं चेत्क सतोऽस्ति भाष्यगदितः संभेदभासोऽमताऽ-
ध्यस्तस्याखिलवस्तुनोऽनृततयेत्यत्रोच्यते श्रूयताम् ॥४०॥

अयि श्रीमत्सद्गुरो । ते तव । यदि इह साक्षात्परम्परया च साक्षिप्रत्यक्षेऽविद्यातद्व्याप्यानादितत्कार्यात्मकाकाशादिदृश्यजाले इति यावत् । सतः कालत्रयाबाध्यस्वप्रकाशप्रत्यग्वस्तुन इत्यर्थः । संसर्गः संबन्धात्मक एव प्रकाश्यप्रकाशभावात्मकोऽध्यास आरोपः । मतः संमतोऽस्तीत्याद्यध्याहृत्य योज्यम् । ननु किं तत इति चेत्तत्र गूढाभिसंधिमुद्घाटयति—तदेत्यादिपूर्वार्धशेषेण । सप्राचीनाचार्यवचःसंमतहेतुकम् । तदा तस्मिन्पक्षे । असौ निरुक्तासदनुयोगिकः प्रोक्तरूपसत्प्रतियोगिक आरोप इत्यर्थः । संक्षेपेति । तस्य निर्णीतरूपाध्यासस्य । तथात्मतेति । तथा वक्ष्यमाणमृषाशब्दितमिथ्यारूप आत्मा स्वरूपं यस्य स तथात्मा तस्य भावस्तथात्मता तस्या एकं तन्मात्रप्रतिपादकं यद्वचनं वाक्यं तस्मादध्यस्तस्य नियतमिथ्यात्वप्रतिपादकवाक्यादित्यर्थः । तच्च वाक्य पूर्वपद्यव्याख्यान एवोदाहृतम् । अध्यस्तमेव हि परिस्फुरति भ्रमेष्वित्यादि । मृषा मिथ्यैव । वाच्यो वक्तव्यो न त्वध्यस्तसंसृष्टत्वेन मिथ्या स्वरूपतस्तु सत्य एवेत्यन्वयः ।

ननु भवत्वेवं का नः क्षतिरिति वदतः श्रीगुरोरेव वाक्यमनूद्य तत्र शिष्यः शङ्कते बाढं चेदित्यादिना, अनृततयेतीत्यन्तेन । बाढमित्यर्धाङ्गीकारे । भवत्वेवं किं तेनेति वदसि चेत्तर्हि भाष्यगदितः सत्यानृते मिथुनीकृत्येतिभाष्योक्तः सतोऽधिष्ठानीभूतसद्वस्तुनोऽसता मिथ्याभूतेनाऽऽरोपितेन सहेत्यर्थः । संभेदेति । संमेलनावभासः । अध्यस्तस्य—आरोपितस्य । अखिलेति । सर्वपदार्थस्य । अनृततया मिथ्यात्वेन । कास्ति न कापि संभवतीति संबन्धः । इतिशब्दः शङ्कासमाप्त्यर्थः । तत्राऽऽचार्यः समाधातुं प्रतिजानञ्शिष्यमभिमुखी करोति—अत्रेत्यादिशेषेण ॥४०॥

एवमध्यस्तमेव हि परिस्फुरति भ्रमेष्वित्यादिसमुदाहृतसंक्षेपशारीरकवचनात्सामान्यतः सर्वस्यापि भ्रमभासमानवस्तुनोऽध्यस्तत्वेन मिथ्यात्वात्सद्वस्तुनः सकलद्वैताधिष्ठानीभूतस्य दृङ्मात्रस्यापि दृश्ये संसृष्टत्वेनाध्यस्तस्य संसर्गाध्यासत्वेनैव मिथ्यात्वे प्राप्ते सति सत्यानृते मिथुनीकृत्येतिभाष्योक्तसत्यासत्यैक्यरूपोऽध्यास इति द्वितीयं तल्लक्षणमसंभावितमेवाधिष्ठानारोपयोः संसृष्टत्वतादात्म्याभ्यां सिद्धान्तेऽध्यस्तत्वेनोभयोरपि मिथ्यात्वादित्याशङ्कायाः पूर्वपक्षे प्रतिज्ञातं समाधानमाचार्यः समुदाहृतग्रन्थयोस्तात्पर्यभेदेनाविरोधाभिधमभिदधानः प्रथमं भाष्यस्वारस्यं स्पष्टयति—सत्यानृते इतीत्यादिवसन्ततिलकया—

> सत्यानृते इति वचः प्रभृतीह भाष्य-
> मालम्ब्य बोध्यमतिमेव नभः सदेवम् ।
> सत्संविदोऽनुभवनान्नभआदिदृश्य
> सत्यानृताध्यसनसंकथने प्रवृत्तम् ॥ ४१ ॥

प्रभृतिग्रहणात्सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहार इति वाक्यमेव गृह्यते । तेन निरुक्तं भाष्यवाक्यमित्यर्थः । इह लोके । नभ आकाशं सत् । उपलक्षणमिदं घटादेरपि । एवमुक्तप्रकाराम् । बोध्येति । संबोध्य शिष्यबुद्धिमेवेति यावत । आलम्ब्यानुसृत्य । सदिति । सती कालत्रयाबाध्या येयं संवित्स्वप्रकाशचितिस्तस्या इत्यर्थः । नभआदिदृश्ये आकाशाद्यखिलद्वैतावच्छेदेनेत्यर्थः । उपलक्षणविधया कारणदृश्यस्यापि संग्रहादिति भावः । सत्येत्यादि । सत्यं कालत्रयेऽप्यबाध्यमधिष्ठानीभूतात्मवस्तु । अनृतमारोपिताखिलदृश्यजालम् । अनयोर्यदध्यसनमधिष्ठानस्याऽऽरोपे संसृष्टविधया, आरोप्यस्य चाधिष्ठाने तादात्म्यविधयाऽऽरोपणं तस्य यत्संकथनं मुमुक्षून्प्रति सम्यगनुभवाद्यनुसारेण प्रतिबोधनं तस्मिन्विषय इत्यर्थः । प्रवृत्तमस्तीत्यन्वयः ॥ ४१ ॥

एवं परभाष्यस्यैव श्रीमद्भाष्यकारस्वारस्यकथनानन्तरं संक्षेपशारीरकाचार्यरहस्यं विवृणोति—सत्येत्यादिशार्दूलविक्रीडितेन—

सर्वज्ञात्ममुनीश्वरीयवचनं त्वात्मज्ञदृष्टेर्वशा-
द्युक्तं तस्य यतोऽवभाति सकलव्यामाऽपि चिद्व्याप्यवत् ।
मिथ्यैवाद्वयसच्चिदेकविमलानन्दात्मसाक्षात्कृते-
स्तस्मान्नैव विरोधगन्धकलनाऽप्यध्यासशास्त्रेऽस्ति नः॥४२॥

सर्वज्ञात्मसंज्ञका ये मुनीश्वरा ब्रह्मविद्वरिष्ठाः संक्षेपशारीरकाचार्यास्तेषामिदं तच्च तद्वचनं चेति तथा । अध्यस्तमेव हि परिस्फुरति भ्रमेष्वित्यादि प्रागुदाहृतपद्यमित्यर्थः । तुशब्दः प्रोक्तभाष्यविरोधशङ्काशान्त्यर्थः । आत्मेति । ब्रह्मनिष्ठानुभूतेः । वशाज्जीवन्मुक्तबुद्ध्यधीनत्वादिति यावत् । युक्तं संगतमेवास्तीति शेषः । तत्त्वज्ञवरबुद्ध्यैव निरुक्तसंक्षेपशारीरकवाक्योक्तसंसर्गाध्यासविषयीभूतवस्तुनोऽपि मिथ्यात्वं भवतीति भावः । तत्र हेतुं प्रतिबोधयति—तस्येत्यादि । यतो हेतोस्तस्य जीवन्मुक्तस्य । सकलेति । सर्वद्वैतसत्तास्फूर्त्यादिप्रदत्वेन तदनुस्यूताऽपीत्यर्थः । अपिना मुमुक्षुदशेदमनुचितमिवेति द्योत्यते । चित् प्रत्यगात्मचितिः । व्याप्यवन्निरुक्तदृश्यसममेव । अद्वयेति । अद्वैतब्रह्मात्मैक्यापरोक्ष्यादित्यर्थः । मिथ्यैवावभाति मृषैव परिस्फुरतीत्यन्वयः ।

अत्र ग्रन्थनाम हित्वा साक्षात्तन्नामग्रहणेन तत्रान्वर्थनामकत्वान्महामहिमत्वं संप्रद्योत्यते । नन्वात्मज्ञेत्यनेनैव विवक्षितेष्टसिद्धौ सत्यां किमद्वयेत्यादिहेतुनेति चेन्न । परोक्षज्ञानेनाप्यात्मज्ञत्वसंभवेन तद्व्युदासार्थमुक्तहेतोरावश्यकत्वात् । न च तत्रापि, आत्मसाक्षात्कृतेरित्येतावतैवापरोक्षात्मज्ञानलाभे सत्यद्वयाद्यानन्दान्तसप्तपदी व्यर्थेति वाच्यम् । तत्त्वंपदार्थैक्यघटकत्वेन तत्सार्थक्यात् ।

तद्यथा—सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति तदैक्षतेति च श्रुतिभ्यां प्रतिपादितशोधिततत्पदार्थसूचिका अद्वयेत्यादिचतुष्पदी । विमलेत्यादित्रिपदी तु तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति श्रुतिप्रतिपादितपुत्रादिसौषुप्तानन्दान्तसर्वदृश्यसुखमलशून्यतत्साक्षित्वोपलक्षितचितः प्रतीचस्त्वंपदार्थस्यापि शोधितस्य सूचिका । अनयोर्लाभवात्कर्मधारयस्त्वखण्डैक्यरूपाभेदस्य वाक्यार्थस्येति ।

नन्वेवं सत्यानृते मिथुनीकृत्येत्यादिभाष्यं सुलभ इत्याद्यनुभवादाकाशादियावद्दृश्ये कल्पितेऽधिष्ठानीभूतस्य सद्वस्तुनः संसर्ग एव मिथ्याभूतो न त्वधिष्ठानं सद्वस्तु तथा मिथ्या भवत्यन्यथोभयोरपि परस्परमध्यस्तत्वेन बाधितत्वाच्छून्यवादप्रसङ्ग इत्याभिप्रायं मुमुक्षुबुद्धमनुरोधेनैव प्रवृत्तं तस्यैवोक्तविधसकलदृश्याधिकरणकसत्संसर्गस्याधिष्ठानीभूतसद्वस्तुनि तु सकलदृश्यतादात्म्यस्य चानुभवात् ।

अध्यस्तमेव हि परिस्फुरति भ्रमेष्विति व्याप्तिघटितं सन्नभ इत्याद्यनुभूयमा दृश्यतादात्म्यापन्नं सद्वस्त्वपि सत्तादात्म्यापन्नदृश्यवन्मिथ्यैवेत्यभिप्रायकं संक्षेपशारी रकवाक्यं तु जीवन्मुक्तदृष्ट्यैव प्रवृत्तं तस्य व्याप्यदृश्यवद्व्यापकत्वावच्छिन्नं सद्वस्त्व मिथ्यैव भातीति नैवोक्तग्रन्थयोर्विरोधो नापि शून्यवादगन्धोऽपीत्येवमभिप्रायवर्णनः सांप्रदायिकमिति चेन्न ।

प्राचीनाचार्याणां तथैव स्वारस्यादन्यथा गत्यन्तराभावाच्च । तथा हि—अन्योन्य स्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मि ध्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवह इत्यध्यासप्रतिपादके भाष्ये संक्षेपशारीरकाचार्यैरन्योन्याध्यसने निरास्पदमिदं शू जगत्स्यादित्यादिपूर्वपक्षमुक्त्वाऽग्रेऽभिहितम्—

अधिष्ठानमाधारमात्रं यदि स्यात्प्रसज्येत सत्यं तदा चोद्यमेतत् ।
न चैतत्सकार्यस्य मोहस्य वस्तुन्यधिष्ठानगीर्गोचरे लोकसिद्धे ॥

इति सामान्यतोऽधिष्ठानाधारपदार्थयोर्भेदमुक्त्वा—

किंचानृतद्वयमिहाध्यसितव्यमिष्टं स्याच्चेत्तदा भवति चोद्यमिदं त्वदीयम् ।
सत्यानृतात्मकमिदं मिथुनं मिथश्चेदध्यस्यते किमिति शून्यकथाप्रसङ्गः ॥

इति पद्यं प्रोक्तं तत्र मधुसूदनसरस्वतीभिरन्त इदं सिद्धान्तितम्—प्रतीचः प रसंसृष्टत्वाकारेण बाध्यत्वेऽपि स्वरूपेण सत्यत्वान्न शून्यप्रसङ्ग इत्यर्थ इति तेनाऽऽत्मनः संसर्गाध्यास एव प्रोदाहृतभाष्यानुसारेण स्फुटीकृतोऽत्र मूलकारटीक काराभ्यामिति तु निर्विवादमेव ।

अथाग्रिमत्रिश्लोक्या तु क्रमादर्थाध्यासज्ञानाध्यासतदनुमानमूलीभूतव्याप्तीरप्याचा समनुभावयन्नात्मनोऽपि तादात्म्याध्यासमेवानात्मनि प्रकटितवान्—

इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विवदमि ।
रजतभ्रमेऽस्य च परिस्फुरणान्न यदि स्फुरेन्न खलु शुक्तिरिव ॥

रजतप्रतीतिरिदमि प्रथते ननु यद्वदेवमिदमित्यपिधीः ।
रजते तथा सति कथं न भवेदितरेतराध्यसननिर्णयधीः ॥

अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेनेति ॥

अत्राप्युक्तटीकैव यावदुपयोगं संगृह्यते । रजतेति । एकैवेदं रजतमितिधीः तत्र यथा रजतस्येदमा तादात्म्यं भासते एवमिदमोऽपि रजततादात्म्यमित्यनुभ

एवात्रेतरेतराध्यासे मानमित्यर्थ इति । अध्यस्तमेव हीति । अध्यस्तस्यैव भ्रमे स्फुरणादिदमंशोऽप्यध्यस्त इति साधितमित्यर्थः ।

ननु सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायादनध्यस्तोऽपीदमंशः प्रथतामिति नेत्याह—नान्यदिति । अन्यस्वरूपेण संसृष्टतया वा, अनध्यस्तमित्यर्थः । धर्मिण्यभ्रान्त इति च धर्मिस्वरूपेऽभ्रान्तं न तु संसर्गेऽपीत्यर्थ इति । अत्र त्वहंकाराध्यासस्य गूढत्वेन प्रसिद्धरजताध्यासोदाहरणद्वारा तदध्यासताधनं ध्वनयता मूलकृता भगवता सर्वज्ञात्ममुनिवरेणेदमर्थस्य रजते कल्पितत्वं ब्रुवाणेन तथा रजतप्रतीतिरित्यादिश्लोकटीकाकारेणापि यथा रजतस्येदमा तादात्म्यं भासते एवमिदमोऽपि रजततादात्म्यमित्यनुभव एवेति वदता च तद्धदध्यस्तमेव हीति श्लोकटीकायामपि, अध्यस्तस्यैव भ्रमे स्फुरणादिदमंशोऽप्यध्यस्त इति च कण्ठत एवेदमंशस्य रजते तादात्म्याध्यासकथनादनुभवपदप्रयोगकरणेन चैतत्पक्षस्य मदुक्तजीवन्मुक्तदृष्ट्या प्रवृत्तत्वमप्यतिस्वारसिकमेव ।

नन्वेवमप्यत्रैवान्ते टीकाकृता धर्मिण्यभ्रान्तमिति च धर्मिस्वरूपेऽभ्रान्तं न तु संसर्गेऽपीत्युक्त्याऽऽत्मनः संसर्गाध्यास एवात्रापि श्लोकत्रयेऽभिप्रेतत्वेनोक्त इति चेन्न । तस्य संसर्गमात्राध्यासात्मकभ्रमपरत्वात् । ते च भ्रमा ब्रह्मविद्याभरणे दर्शिताः । सन्ति च केवलसंसर्गाध्यासाः । यथा दर्पणे मुखाध्यासः । तत्र हि दर्पणं मुखं वा परस्परमध्यस्यत इति नानिर्वचनीयख्यातौ वक्तुं शक्यम् । तयोर्व्यावहारिकत्वेन प्रातिभासिकाध्यासानिर्वाहात् । किंतु तयोराधाराधेयभाव एव ।

न च सोऽधुना केनचित्प्रकारेणानुभूयते । येन तत्सजातीयस्य तत्समानप्रकारोपस्थितिः कारणमिति निरूप्येत । एवं रक्तः पट इत्यत्रापि कुसुम्भादिगतरक्तिम्नः पटे साक्षात्संबन्धस्याभावात्सोऽध्यस्यत इति । तस्मादुक्तश्लोकत्रये तावदात्मनोऽप्यनात्मनि तादात्म्याध्यास एवाऽऽत्मत्वेनेति ध्येयम् ।

एवमेवोक्तं मोक्तटीकाकारैरेव सिद्धान्तबिन्दौ । स्वप्ने तु गज इत्याकारवदयमित्याकारोऽपि कल्पित एव । उभयाकारबाधेऽप्यधिष्ठानभूतचैतन्यस्याबाधान्न शून्यवादप्रसङ्गः । जाग्रद्दशायामपि शुक्तीदंकारविलक्षणस्य प्रातीतिकस्यैव रजतेदंकारस्य भानाभ्युपगमाच्च । अध्यस्तमेव हि परिस्फुरति भ्रमेष्विति न्यायात् ।

शुक्तीदमंशभानपक्षेऽपि नेदमंशसत्यत्वमध्यासे प्रयोजकम्, किंत्वधिष्ठानसत्यत्वम् । अधिष्ठानं चात्राज्ञातं शुक्तिचैतन्यमिव तत्रापि साक्षिचैतन्यं विद्यत एवेत्युपपादितम् । तस्मान्न पक्षद्वयेऽपि काऽप्यनुपपत्तिरिति । एवं चाऽऽत्मनोऽनात्मनि संसर्गाध्यास इति पक्षो मुमुक्षुदृष्ट्या प्रवृत्तस्तथा ( इदं सर्वं यदयमात्मेत्यादिरित्युक्तः )

आत्मनोऽप्यनात्मनि तादात्म्याध्यास एवेति पक्षस्तु जीवन्मुक्तदृष्ट्यैव प्रववृत इत्यनयोः पक्षयोरध्यासभाष्यसंक्षेपशारीरकयोश्चाविरोध इति मदुक्तव्यवस्था नैवासांप्रदायिकीति दिक्।

फलितमाह—तस्मादित्यादिचरमचरणेन। तस्मान्निरुक्तरीत्या, अविरोधसिद्धेर्हेतोः। नोऽद्वैतिनामस्माकम्। अध्यासेति। निरुक्ताध्यासप्रतिपादके भाष्यादिशास्त्रे विषय इत्यर्थः। विरोधेति। विरोधलेशसंभावनाऽपि नैवास्तीति योजना ॥ ४२ ॥

तदेवमुक्तरीत्या पक्षद्वयेऽप्यध्यस्तस्य शुक्तिरजतादेर्दृष्टान्तस्य मिथ्यात्वे विगान(वैमत्य)विरहेण तन्निदर्शनतः सर्वद्वैतस्यापि मिथ्यात्वं युक्त्या तदनुग्राहकश्रुत्या तथा तत्त्वमस्यादिमहावाक्यजन्यब्रह्मात्मैक्यविषयकाप्रतिबद्धसाक्षात्कृतिरूपानुभूत्यर्थापत्त्या च सिध्यतीति प्रतिबोधयति—एवमित्यादिस्रग्धरया—

> एवं दृष्टान्तभूतं रजतमिह यदा शुक्तिबोधैकबाध्यं
> तद्वन्मिथ्या तदा किं न भवति सकलद्वैतरूपेन्द्रजालम्।
> दृश्यत्वाद्वा जडत्वात्परिमितमिलितानित्यकानात्मताभ्यां
> युक्त्याऽप्येवं चिदात्माद्वयदृढमिति नोऽनात्ममिथ्यात्वसिद्धिः ॥ ४३ ॥

एवं प्रागुपन्यस्तभाष्यादिरीत्येत्यर्थः। इह लोके शास्त्रे च। दृष्टान्तेति। निदर्शनीभूतमित्यर्थः। एतादृशं रजतं शुक्तौ भ्रान्तिभातं रूप्यम्। यदा यस्मिन्नद्वैतपक्षे। यद्वा यावद्भेदवादिबाधक्षणे। शुक्तीति। अधिष्ठानभूतशुक्त्यवच्छिन्नचैतन्यविषयकप्रत्यक्षप्रमैकबाधितमित्यर्थः। एतेन ज्ञाननिवर्त्यत्वलक्षणं तस्य मिथ्यात्वं द्योत्यते। तदा तस्मिन्नेव क्षणे। सकलेति। संपूर्णदृश्यलक्षणमायाविवर्तजातमिति यावत्। तद्वन्निरुक्तरजततुल्यमिति यावत्।

तत्र षोढा हेतूनाह दृश्यत्वाद्वेत्यादितृतीयपादेन। दृश्यत्वं साक्षात्परम्परया वा साक्षिविषयत्वम्। जडत्वं चिद्भिन्नत्वम्। वाशब्दोऽत्र यादृच्छिकविकल्पार्थः। तेन सर्वेष्वपि हेतुषु साम्येनैव सद्धेतुत्वाद्धेत्वाभासत्ववैधुर्यं ध्वनितं भवति। न चैवं तर्ह्येकेनैव हेतुना चारितार्थ्ये सत्यन्येषां वैयर्थ्यमेवेति वाच्यम्। बुभुत्सोः प्रत्येकमनेकैः प्रमाणैरुपकारकैः परार्थानुमानैरसंभावनाविनाशहेतुत्वेन तत्सार्थक्यात्। असंभावनाविपरीतभावनात्मकाभ्यां ताभ्यां प्रतिबन्धः प्रमाणोत्पन्नाया अप्यपरोक्षब्रह्मविद्यायाः प्रसिद्धो भवत्यविद्यानिवृत्त्यसामर्थ्यरूपः।

तथा चाऽऽहुः श्रीमद्विद्यारण्यगुरुवरचरणाः प्रथमवर्णकीयविवरणसारे—'तत्रासंभावना नाम चित्तस्य ब्रह्मात्मैक्यपरिभावनाप्रचयनिमित्तैकाग्र्यवृत्त्ययोग्यतोच्यते । विपरीतभावनेति च शरीराद्यध्याससंस्कारप्रचयः । इत्याद्युक्त्वाऽग्रेऽभिदधद्भिः । अतः शास्त्रप्रमाणादुत्पन्नाऽपि ब्रह्मविद्या चित्तदोषप्रतिबद्धा तर्कं सहायमपेक्ष्य पश्चाद्विषयं निश्चिनोति ' इति ।

परिमितेत्यादि । परिमितत्वं देशकालवस्त्वन्यतमपरिच्छिन्नत्वम् । मिलितत्वं संयुक्तत्वप्रयोजकं सावयवत्वमेव । अनित्यकत्वं प्रागभावादिचतुर्विधान्यतमाभावप्रतियोगित्वम् । अनित्यमेवानित्यकमिति स्वार्थे कप्रत्ययः । अनात्मत्वं पराक्त्वम् । एतदन्यतमहेतोर्मिथ्या मृषा न भवति किं, अपि तु भवत्येवेति संबन्धः ।

ततः किं तदाह—युक्त्याऽपीत्यादिचरमचरणेन । एवं निरुक्तप्रयोगरूपया युक्त्याऽपि परार्थानुमानलक्षणयुक्त्याऽपीत्यर्थः । अपिना ' अतोऽन्यदार्तं ' इति ' नेह नानाऽस्ति किंचनेति, यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ' इति । इन्द्रजालमिव मायामयमित्याद्याः श्रुतयः प्रकृतयुक्त्यनुग्राहिकाः समुच्चीयन्ते । चिदित्यादि । चित्स्वप्रकाशचितिरेवानधीनभानलक्षणा सा चासावात्मा चेति तथा । तस्य या अद्वयदृढामितिः सुविचारिततत्त्वमस्यादिमहावाक्यैककरणिका अप्रतिबद्धब्रह्मात्मैक्यविषयकसाक्षात्कृतिः सार्वविभक्तिकेनात्र तसिना तया करणीभूतयेत्यर्थः ।

इह चित्पदेन शोधिततत्पदार्थस्तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिश्रुतिसूचितस्तथाऽऽत्मपदेनाऽऽत्मनस्तु कामाय सर्वं प्रियं भवतीत्यादिश्रुतिसूचितः शोधितत्वंपदार्थस्तद्वदद्वयपदेनासिपदलक्षितं तयोरैक्यं च सूच्यते ।

अनात्मेति । एवमुक्तरीत्या तत्त्वंपदार्थशोधने समष्टिचिदाश्रितजगद्रूपस्य व्यष्टिचिदाश्रितपञ्चकोशरूपस्य चानात्मनो यावद्दृश्यस्य च मिथ्यात्वसिद्धिरार्थिक्येव संपद्यत इत्यध्याहृत्यान्वयः ।

तदुक्तं विवरणसारे—एवं जीवब्रह्मणोरेकत्वे वाक्यादनुभवाद्वा ज्ञायमाने सत्यविद्यातत्कार्यनिवृत्तेरार्थिक्याः साक्षाच्छास्त्रप्रतिपाद्येऽनन्तर्भावात्प्रयोजनत्वेन विषयात्पृथङ्निर्देशो युक्ततर इति ॥ ४३ ॥

नन्वेवं श्रुतियुक्तिब्रह्मविदनुभूत्यन्यथानुपपत्तिभ्यः शुद्धब्रह्मण एवानात्ममिथ्यात्वसिद्ध्या नित्यत्वं द्वैतस्य त्वनित्यत्वं ध्वनितं तन्नोपपद्यते । ब्रह्मसूत्रव्याख्यातॄणामेव बहूनां भेदवादिनामप्युपलम्भात् । तथा हि—नैलकण्ठभाष्यानुयायिनः सन्ति

वैदिका अपि भेदाभेदवादिनः शैवाः । रामानुजास्तु श्रीवैष्णवाख्यास्त्रिदण्डिनः पूर्वमीमांसां द्वादशाध्यायीं संकर्षणमीमांसां चतुरध्यायीमुत्तरमीमांसां च चतुरध्यायीमेकीकृत्य कर्मोपासनज्ञानसंज्ञककाण्डत्रयात्मकसर्ववेदार्थविचारकारकं विंशत्यध्यायात्मकमेकमेव शास्त्रं भेदाभेदप्रतिपादकं रामानुजभाष्यानुसारेण मन्वानास्तान्त्रिकवैदिकाः सन्ति ।

एवं माध्वा अप्यानन्दतीर्थीयाः केवलभेदवादिनस्तद्भाष्यानुयायिनस्तथैव जीवेश्वरभेदजीवपरस्परभेदजीवजगद्भेदजगदीश्वरभेदजगत्परस्परभेदाभिधपञ्चविधभेदज्ञानादेव विष्णुलोकादिप्राप्तिरूपां नारदपाञ्चरात्रादितान्त्रिकधर्मानुष्ठानान्मुक्तिं मन्वानाः प्रसिद्धा एव वैष्णवंमन्याः । तथा च कथमेतेषु जीवत्सु सत्सु परोक्षतोऽपि द्वैतमिथ्यात्वसिद्धिपूर्वकमद्वैतात्मैक्यसिद्ध्या नित्यानित्यवस्तुविवेकः संभवेदित्यत्राऽऽह कश्चिदित्यादिशार्दूलविक्रीडितेन—

कश्चिच्छाबरशांकरेतर इहाऽऽम्नायार्थ एवास्ति चे-
द्भूयाद्वैदिकमानिनामवसरः सांख्यादिसंख्यावताम् ।
तत्राप्येष विशेष आर्यचरणैः प्राच्यैरलं बोधितो
भव्यं भूतकृतेन भूतमपि तत्प्राप्त्यै कदाचित्क्वचित् ॥४४॥

इह लोके । शाबरेति । शाबरं हि श्रीमच्छबरस्वामिविरचितं द्वादशलक्षणीभाष्यं सुप्रसिद्धमेव । तद्वच्छांकरमपि श्रीमच्छंकरभगवत्पूज्यपादविरचितं चतुर्लक्षणीभाष्यमपि तथा । ताभ्यामितरोऽन्य उपासनरूपः। कश्चित्कोऽपि यस्य वादिनो योऽभिमतः स कोऽपीत्यर्थः । आम्नायेति । वेदार्थ एवास्ति चेत्तर्हि । वैदिकेति । वयमेव वेदार्थविद इति केवलमभिमन्यमानानामित्यर्थः । एतेनैतेषामसांप्रदायिकत्वेनातत्त्वावेदकत्वं व्यज्यते । एतादृशाम् । सांख्येति । सांख्याः सम्यक् ख्यायान्ति श्रुतिमनादृत्य केवलं युक्त्यवष्टम्भेनैव चतुर्विंशतितत्त्वानि सेश्वराणि तानि पञ्चविंशतिसंख्याकानि । ख्या प्रकथने इति स्मरणात्प्रकथयन्तीति वा क्रमात्कापिलाः पातञ्जलाश्चेति तथा । त आदयो मुख्या येषां ते च ते संख्यावन्तः संख्यावान्पण्डितः कविरित्यमरात्पण्डितास्तेषामित्यर्थः ।

आदिना तार्किकमीमांसकादयः सर्वेऽपि भेदवादिनः संग्राह्याः । समरसाख्यचिज्जडैकरस्यवादिनस्तथा वल्लभाचार्यमतोपजीविनो राधावल्लभिनश्च । अवसरो वेदार्थप्रतिपादकत्वेन हितोपदेशावकाश इत्यर्थः । भूयाद्भविष्यतीत्यन्वयः । एवं च निरुक्तभाष्यद्वयभिन्नो यतो वेदार्थ एव नोर्वरितस्ततो नैवात्र संसारे केषांचिदपि भेदवादिनां वेदमूलकत्वेन हितोपदेशावकाशो भवतीति भावः ।

यद्यपि कर्मब्रह्मणोस्तु वेदार्थभूतयोर्निरुक्तपूर्वोत्तरमीमांसाभाष्याभ्यां क्रमात्प्रतिपादितत्वे केषांचिदपि प्रायो नैव विवादस्तथाऽपि मन्दानामुपासनाकाण्डस्यावशेष इव भाति, परंतु कर्माङ्गोपासनानां तावदहरहः संध्यामुपासीतेति यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्नित्यादीनां कर्ममीमांसायां तद्वज्ज्ञानाङ्गोपासनानामपि सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति मनो ब्रह्मेत्युपासीतेति च प्रभृतीनां ब्रह्ममीमांसायामेव विचारितत्वात्स तुच्छ एवेति ध्येयं धीरैः ।

तस्माद्योऽत्र काण्डद्वयेऽपि नैव विचारितः स तु वेदार्थ एव नेत्याकूतम् । तेनेह प्रागुपन्यस्तानां वादिनामवैदिकत्वं तु निरुक्तनियमादेवेति द्योत्यते । अत्र विस्तरस्तु सिद्धान्तसिद्धाञ्जने गौडब्रह्मानन्दयादौ च स्पष्ट एवेति नैवेह मया प्रतन्यते ।

ननु भवत्वेवं नियमः श्रद्धैकधनानां शुद्धवैदिकानामिष्टः प्रेक्षावत्त्वेन पुनः प्रतिवादिविजिगीषूणां तूक्तग्रन्थावलम्बश्च परंतु प्रोक्तनियमेऽपि किं पूर्वोत्तरकाण्डयोस्तात्पर्यं येनाग्रे यथाधिकारं परम्परया साक्षाच्च मुमुक्षूणां तथैव प्रवृत्तिः स्यादित्यतस्तद्विविच्य ससंप्रदायं संक्षिप्य सपूर्वमीमांसकमतखण्डनं सिद्धान्तयति—तत्रापीत्याद्युत्तरार्धेन । कोऽसावत्र विशेष इत्यतस्तं संक्षिपति—भव्यमित्यादिचरमचरणेन । तदुक्तं संक्षेपशारीरके—

भव्याय भूतमिति किंच विधिप्रधाने काण्डेन योऽयमिह तद्विपरीतमाहुः ।
भूताय भव्यमिति भूतपरं हि सर्वं वेदावसानमिति सूत्रकृदाचचक्षे ॥ इति ।

विवृतं चेदं मधुसूदनसरस्वतीभिः । भव्यार्थत्वासंभवाद्ब्रह्मैव सन्ब्रह्माप्येतीत्यत्रत्यस्याप्येतिशब्दस्य नात्र भूतभव्यन्यायावतार इत्युक्तम् । किंचायं न्यायः कर्मसमभिव्याहृतभूतविषयो न तु सिद्धब्रह्मविषयोऽपि । प्रत्युत विपरीतं विविदिषावाक्यानुसारेण सर्वापेक्षा च यज्ञादिश्रुतेरिति सौत्रन्यायेन च कर्मण एव ब्रह्मशेषत्वावगमादित्याशयेनाऽऽह—भव्याय भूतमिति ।

विधिः प्रधानं प्रतिपिपादयिषितो यस्मिन्काण्डे तस्मिन् । इह ब्रह्मकाण्डे । तद्विपरीतं भूतभव्यन्यायविपरीतम् । तद्वैपरीत्यमेवाऽऽह—भूताय भव्यमिति । हि हेतौ । यतो भूतपरं सत्यसिद्धब्रह्मपरं वेदावसानं वेदान्तसूत्रकृदाचचक्षे समन्वयप्रमुखैः सूत्रैरुक्तवानतो भाष्यकारादय एवमेवाऽऽहुरित्यर्थ इति ।

अक्षरार्थस्त्वेवं—तत्रापि कश्चिदित्यादिपूर्वार्धोक्तरीत्या वेदार्थस्य शाबरशांकराख्यपूर्वोत्तरमीमांसाभाष्यद्वयप्रतिपादितधर्मब्रह्माभिन्नत्वाभावेन वेदार्थनिर्णयविषये यावद्वेदवाचनवकाशादुक्तभाष्यद्वयमध्येऽपीत्यर्थः । भव्यं भवितुं योग्यं साध्यं संध्यावन्द-

नाथसंप्रज्ञातसमाध्यन्तात्यन्तिककाम्यनिषिद्धवर्जनपूर्वकपरमेश्वरप्रसादैकावाप्त्यर्थानेकजन्मानुष्ठिततन्त्रगन्धानास्कन्दितस्ववर्णाश्रमोचितश्रौतसौत्रस्मार्तपौराणप्रसिद्धानित्यनैमित्तिकप्रायश्चित्ताख्यकर्मजन्यपरमेश्वरपरितोषरूपपुण्यमित्यर्थः ।

भूतकृते ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रुतिप्रसिद्धाज्ज्ञानमात्रविहितत्वप्रयुक्तानित्यासिद्धब्रह्मप्राप्त्यर्थमिति यावत् । अस्ति न तु भूतमपि ब्रह्मत्वेन नित्यसिद्धमप्यात्मवस्तु । तत्प्राप्त्यै निरुक्तपुण्यप्राप्त्यर्थं पूर्वमीमांसकसंमतशेषशेषिभावरीत्या कदाचित्कस्मिंश्चिदपि काले । कचित्कस्मिंश्चिदपि देशे । भवतीत्येष निरुक्तरूपः । पूर्वकाण्डविचारपरशाबरभाष्यापेक्षयेहोत्तरकाण्डविचारपरशांकरभाष्य एवेत्यार्थिकम् । विशेषस्तद्वैपरीत्यलक्षणोंऽशः श्रीमद्वार्तिककारसाक्षाच्छिष्यत्वात्प्राच्यैरतिप्राचीनैरित्यर्थः ।

आर्यैति । अतिपूज्यपादैः श्रीसर्वज्ञात्ममुनीश्वरैः । एतेनोक्तसिद्धान्ते परमादरणीयत्वं व्यज्यते । अलं पर्याप्तमेव । बोधितोऽभूदिति शेषः । तस्मात्पूर्वपद्ये यदिदमुक्तं प्राक्तनाध्याससाधकग्रन्थेन श्रुतियुक्तिब्रह्मनिष्ठानुभूत्यन्यथानुपपत्तिभिः सकलद्वैतस्य ज्ञाननिवर्त्यत्वलक्षणं मिथ्यात्वं तेन ध्वनितो योऽयं दृङ्मात्रं ब्रह्मात्मवस्त्वेव नित्यं दृश्यं सर्वं शुक्तिरजतादिवदनित्यमिति नित्यानित्यवस्तुविवेकः । स तावदुक्तरीत्या भव्याख्यसुकृतसंपत्त्या भव्याधिकारिण एव भवतीति भावः ।

एवमेवोक्तं मदीयाद्वैताधिकरणचिन्तामणिमालाचित्प्रभाख्यतट्टीकयोः—

स्वोत्पत्तावप्यपेक्षा भवति किमु न वा कर्मणां ब्रह्मबुद्धे-
रन्त्यां मुक्ताविवात्राप्यनभिलषतु सा स्वप्रमाणं विनाऽन्यत् ।
मैवं यज्ञादिशान्त्याद्युभयनिगमतो यत्प्रमा सर्वमिच्छ-
त्यद्वैतं शंकरं तं परमगुरुमहं सच्चिदानन्दमीडे ॥ इति मूलम् ।

टीका—नन्वेवमपि ब्रह्मबुद्धेरद्वैतब्रह्मात्मैक्यविषयकाप्रतिबद्धप्रमायाः । स्वोत्पत्तावपि चित्तशुद्ध्यादिद्वाराऽन्तःकरणावच्छेदनाप्रतिबद्धान्महावाक्यात्स्वाविर्भूतावपि । कर्मणां संध्यावन्दनादिनित्यादिकर्मणाम् । अपेक्षा चित्तशुद्ध्यादिद्वारा । भवति किमु न वेति संशये सति । स्वफले मुक्तौ यथाऽन्यन्नापेक्षते तथाऽत्र स्वोत्पत्तावपि स्वप्रमाणं विना स्वजनकविचारितमहावाक्याभिधप्रमाकरणमन्तरा । सा ब्रह्मबुद्धिः । अनभिलषतु मैवेच्छतु । इति—अन्त्यश्चरमः पक्षः प्राप्त इति चेन्मैवम् ।

कुतः । यज्ञादिशान्त्याद्युभयनिगमतः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति बहिरङ्गसाधनप्रतिपादकात्तथा शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यतीत्याद्यन्तरङ्गसाधनप्रतिपादकाच्च वेदाद्यत्प्रमा यस्याद्वैतब्रह्मात्मैक्यस्य प्रमा यद्विषयकाप्रतिबद्धबुद्धिः । सर्वं

संपूर्णं वैदिकं परम्परया कर्मजातम् । इच्छत्यभिलषति तमिति योजनया सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदित्यधिकरणाशयेन प्राग्वदेव श्रीगुरुं स्तौति—स्वोत्पत्तावपीति ।

एतेनोक्तरीतिकशुद्धानिरुद्धबुद्धावेवाधिकारिणि पूर्वपद्योक्तः स्वविवेकः स्वकार्यसाधकः समाविर्भवति न त्वन्यस्मिन्ग्रन्थाभ्यासमात्रेण वावदूके वाचाटे पापिष्ठ इति सिद्धान्तः ॥ ४४ ॥

एवं प्रपूर्वपद्यसमवबोधितः सकलविरुद्धख्यातिखण्डनसाधितानिर्वचनीयख्यातिरूपचिदाचिन्मिथुनीभावलक्षणाध्याससिद्धो नित्यानित्यवस्तुविवेकः कथं संभवति स्वाभिमतः सत्सु भेदवादिविशेषर्षभेष्विति केन साधनेन वाऽसौ पारमार्थिकः संपद्येतान्यथापाठितपञ्जरकीरन्यायेन सहस्रशः समुपलभ्यन्ते जल्पाकाः परंतु जरत्तृणाश्रमपि त्यक्तप्राणा एवेति नैव ते तत्त्वविवेचनप्रवीणाः सन्तीत्यपि चाऽऽशङ्कां पूर्वश्लोकेन शमयित्वेदानीं निरुक्तसाधनपरिशुद्धनित्यानित्यवस्तुविवेकवति तस्मिन्नुक्तगमनाधिकारिण्युक्तपरिपक्वविवेककार्यं दृढतरवैराग्यमाविर्भवतीति प्रतिपादयति यावदृश्य इत्यादिशालिन्या—

> यावद्दृश्ये या श्वविड्धीरखण्डं सा वैराग्यं जायते तच्च तस्मात् ।
> ग्रैष्मे मध्येऽहं तृषार्तोऽपि बुद्ध्वा मार्गे तोयं कः पिपासत्यदोऽपि ॥ ४५ ॥

कल्पितत्वेनानित्ये निखिलद्वैतजाले विषय इत्यर्थः । अखण्ड निरुक्तनित्यानित्यवस्तुविवेकपरिपाकक्षणमारभ्य यावद्विदेहकैवल्यपूर्वक्षणपर्यन्तमिति यावत् । या । श्वेति । श्वविड्वत्स्वसंनिकर्षमात्रेण परमदुःखदत्वात्तत्तौल्यमतिरित्यर्थः । सा वैराग्यं भवतीति योजना ।

एतेन दृश्यमात्रविषयकसततदुःखदत्वप्रमितिप्रयुक्तयावत्तत्प्रतीतितदनादरो वैराग्यमिति तल्लक्षणमुक्तं भवति । अत्र हैरण्यगर्भानन्दान्तेष्टाविषयसंग्रहार्थं मात्रच् । क्षणिकानिष्टाप्तिजन्यदृश्यानादरव्युदासार्थं सततेति । हारे सर्पभ्रमेण दुःखदत्वभ्रान्तिशान्त्यर्थं प्रमितिपदम् । जडादि( अतिमूढ )गतदृश्यानादरवारणार्थं प्रयुक्तान्तम् । निरुक्तानादरेऽपि किंचित्कालत्वव्यावृत्तये यावदिति ।

नन्वेवंलक्षणं वैराग्यं कथं भविष्यतीत्यत आह—जायत इत्यादिपूर्वार्धशेषेण । तदुक्तलक्षणं वैराग्यम् । तस्मान्निरुक्तलक्षणनित्यानित्यवस्तुविवेकाहितदृढतमद्वैतमिथ्यात्वनिश्चयलक्षणविनश्वरत्वानुसंधानाधायकसंस्कारसंपादकेतोरित्यर्थः । जायत इति संबन्धः ।

ननु कालत्रयाबाध्यत्वेन दृङ्मात्रमेव नित्यं दृश्यं तु तत्र कल्पितत्वेनाऽऽकाश-कार्ण्यवदनित्यमेवेति नित्यो नित्यानामित्यादिना नेह नानाऽस्ति किंचनेत्यादिना च श्रुतिवाक्येन सिद्धत्रिचतुःक्षणावस्थायिप्रमारूपचित्तवृत्तिविशेषात्मकान्नित्यानित्यव-स्तुविवेकादेतोराकैवल्यावधृतयावदृदृश्यविषयकश्ववान्तसाम्याबाधकानुरागाभावः कथं मुमुक्षोरित्याशङ्कामर्थान्तरन्यासेन शमयति—ग्रैष्म इत्याद्युत्तरार्धेन।

ग्रीष्मर्तुसंबन्धिनीत्यर्थः। मध्याह्नकाले। तृषा पिपासया। आर्तः परमपीडि-तोऽपि पान्थः पुरुष इत्यार्थिकम्। इदमेतत्कालावच्छेदेनात्र पुरोवर्तितयोषरधरादौ भासमानमिति शेषः। एतादृशं तोयं जलम्। मार्गे मृगाणामिदं मृगसदृशातपमत-पुरःक्षुब्धमनुष्यादितत्तद्द्रष्टृजीवतात्कालिकमतिकल्पितमित्यर्थः।

इति बुद्ध्वाऽपि निरुक्तरीत्येदं तावदूषरधरणीसंपृक्तसवितृकिरणग्रहणदुष्टिमद्दृष्टि-कल्पितत्वेन मिथ्यात्मकमेव महोदकमिव विभातीति निश्चित्यापीत्यर्थः। अदोऽपि सोपाधिकभ्रमत्वेन यावदुपाधिसाक्षिप्रत्यक्षमपीदं मृगजलमपीत्येतत्। कः पुरुषः। पिपासति तत्कर्मकपानक्रियाविषयकेच्छाविषयी करोतीत्यर्थः। किंशब्दसूचिताक्षेपान्न कोऽपि निरुक्तमृगजलपानं कर्तुमिच्छतीत्यन्वयः। तस्मान्निरुक्तनित्यादिविवेकजन्य-मुक्तवैराग्यमुचितमेवेति भावः।

यद्युक्तं वैराग्यलक्षणं गौरवदूषितमिति विभाव्यते तदा दृश्यानित्यत्वमापन्नाकैव-ल्यतदनादर इत्येवास्तु तल्लक्षणम्। द्वैतनिष्ठाविनश्वरत्वाविषयकप्रमावाप्तयावत्तद्ध्वंस-बन्धत्वभाव एवेहामुत्रार्थफलभोगविराग इति तदर्थ इति॥ ४५॥

एवं यतो निरुक्तलक्षणमामोक्षमक्षयमेवोक्तलक्षणदृढतमानित्यादिविवेकवतो वैराग्यं संपन्नमतोऽस्य तत्कार्यीभूताः क्रमाद्बीजादाम्रादीनामङ्कुरपल्लवपुष्पोचया इव शम-दमोपरमाः स्वयमेवान्तःकरणबहिःकरणस्थूलभोगाधिकरणसंबन्धितत्त्वबोधोपयुक्ते-तरव्यापारविरामरूपाः प्रादुर्भवन्तीत्याह शमेत्यादिद्रुतविलम्बितेन—

शमदमोपरमत्रितयं त्विदं चितिमितेर्जनकेतरकर्मणाम्।
निजमनःकरणाकृतिजन्मनां विरमणानि भवन्ति ततः क्रमात्॥ ४६॥

शमदमोपरमा वक्ष्यमाणा एव। एतेषां तु त्रितयं त्र्यवयवकूटमिदं वक्ष्यमाणलक्ष-णत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षं भवतीत्यर्थः। नन्वस्य त्रितयस्य किं स्वरूपमित्या-काङ्क्षायां तुशब्दसूचितस्वकारणीभूतवैराग्यवैलक्षण्याच्चैषां क्रमेण लक्षणानि संक्षि-पति—चितीत्यादित्रिपाद्या।

ततः प्रागुक्तैहामुत्रफलभोगविरागादेर्हेतोरित्यर्थः । क्रमादुद्दिष्टशमादिक्रमानुसारेणेति यावत् । निजेति । निजस्य प्रमातुः स्वस्य याः मनःकरणाकृतयः । मनश्च करणानि च आकृतिश्च तास्तथा । स्वचित्तादिचतुष्टयश्रोत्रादिदशेन्द्रियस्थूलतनवस्ताभ्यो जन्मोपपत्तिर्येषां तेषामित्यर्थः । एतादृशाम् । चिति--अद्वैतब्रह्मात्म्यैक्यरूपस्वप्रकाशचिन्मात्रविषय इत्यर्थः ।

मितेरधिकारिविचारिततत्त्वमस्यादिमहावाक्यजन्यानिर्विकल्पाखण्डप्रमाया इत्यर्थः । जनकेति । जनयन्ति तानि तथा साक्षात्परम्परया वोत्पादकानि । तत्र साक्षादुत्पादकं निरुक्तमहावाक्यविचार एव मानसमात्रकर्म । परम्परया तदुत्पादकानि तु कश्चिदित्यादिप्रपूर्वपद्ये सूचितानि संध्यावन्दनाद्यसंप्रज्ञातसमाध्यन्तानि चित्तादिसाध्यान्यपि यथासंभवज्ञेयानीति विवेकः ।

एतेभ्य इतराणि अन्यानि एतादृशानि यानि कर्माणि तेषामित्यर्थः । विरमणानि स्वयमेवानुपदोक्तदृढतमवैराग्यसंस्कारवशात्तत्त्वज्ञानोत्पादकमानसैन्द्रियकशारीरकक्रियेतरमानसादिक्रियाप्रागभावपरिपालनरूपप्रशमनानीत्यर्थः । भवन्ति प्रचुरं संपद्यन्त इत्यन्वयः कार्यः ।

एवं च निरुक्तविरागसंस्कारजन्यत्वे सति ब्रह्मज्ञानानुपयोगिमानसकर्मप्रागभावपरिपालनं शमः । मूढजडेऽतिव्याप्तिव्यावृत्तये सत्यन्तम् । मानसेति वक्ष्यमाणैन्द्रियकक्रियाव्युदासार्थमेव । ब्रह्मज्ञानेत्यादितद्विशेषणं तु उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदेति संध्योपासनाख्यनित्यध्यानकर्मसंग्रहायैव ।

न चोक्तविरागस्मृतावतिव्याप्तिरिति वाच्यम् । तत्र विरागसंस्कारजन्यत्वेऽपि त्रिक्षणावस्थायित्वेन ब्रह्मज्ञानानुपयोगिमानसक्रियारोधनलक्षणतत्प्रागभावपरिपालनासंभवात् । एवं सत्यन्तेन हेतुहेतुमद्भावात्पौर्वापर्यक्रमोऽप्यनयोः समुचित एव ।

एवमेवोक्तशमसंस्कारजन्यत्वे सति ब्रह्मज्ञानानुपयोग्यैन्द्रियकक्रियाप्रागभावपरिपालनं दमः । पुराणादिश्रवणतीर्थनिमज्जनसूर्यादिसंदर्शनगाङ्गजलाद्याचमनशेषावग्रहणवेदाक्षराद्युच्चारणशालग्रामशिलाबाणालिङ्गाद्यर्चनगुर्वभिवादनार्थगमनशुद्धिप्रयोजकयथाविधिमलमूत्रोत्सर्जनसंग्रहार्थं ब्रह्मज्ञानानुपयोगीत्यैन्द्रियकक्रियाणां विशेषणम् ।

ननूक्तशमेनैवालं किमनेन ततो बहिरङ्गेण दमेनेति चेन्न । शमवतो मनोराज्यादिशून्यस्यापि दैवाच्छ्रोत्रसंनिकृष्टग्राम्यगीतादिश्रवणवर्जनासंभवात् । अन्यथा ग्राम्यगीतं न शृणुयादित्यादिनिषेधपरिपालनानापत्तेश्च । उपलक्षणमिदमिन्द्रियान्तरवृत्तीनामपि । शिष्टं तु प्राग्वदेवोह्यम् ।

तद्वदेवोक्तदमसंस्कारजन्यत्वे सति ब्रह्मज्ञानानुपयोगिशारीरकक्रियाप्रागभावपरि-पालनमुपरमः । अत्रापि प्राग्वद्दमेनैव चारितार्थ्यमाशङ्क्य 'न पाणिपादचपलो न नेत्र-चपलो यतिः । न च वाक्चपलश्चैव' इति शिष्टस्य लक्षणमिति स्मृत्युक्तनिष्फलकर-चरणादिचेष्टावर्जनार्थत्वेन समाधेयम् । गुर्वभिवादनादिसंग्रहार्थं ब्रह्मज्ञानानुपयोगीत्य-त्रापि बोध्यम् ।

न च विरागस्यैवोक्तलक्षणादादावभावविशेषात्मकत्वेन ततः कथं तादृशस्यैव शमस्योत्पत्तिरिति वाच्यम् । लक्ष्यचतुष्टयस्यापि प्रागभावरूपत्वेन तत्तत्पालनसामग्र्या एव भावरूपत्वेन तत्तत्पूर्वोत्तरभावापन्नतत्तत्कार्यकारणभावसंभवादिति शिवम् ।। ४६ ।।

ननु न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति तैत्तिरीयश्रुतेस्तथा वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वा इति च ततः प्रसिद्धमो-क्षसाधनयोस्त्यागसंन्यासयोः किमिति न प्रकृते कथनं क्रियत इत्याशङ्क्य जीव-न्मुक्तिविवेके त्यागस्य विवेकेन यावदिष्टविषयानादरलक्षणस्य गौणसंन्यासत्वाभिधा-नात्तस्य चेह यावद्दृश्य इत्यादिपद्योक्तेहामुत्रार्थफलभोगविराग एवान्तर्भावस्य स्पष्ट-त्वाच्च मुख्यसंन्यासस्य परमहंसाख्यैकदण्डधारणलक्षणचरमाश्रमस्य सूत्रभाष्यव्याख्याने श्रीमदानन्दज्ञानचरणैरुपरत इतिश्रुतिपदव्याख्याने तूपरतिपदेनैवोक्तत्वाच्च तन्मतरीत्या स एवेह मया पृथगेव तत्कथनोत्तरं कथ्यत इत्याशयेन तं प्रथयति तेनैवेत्यादिवस-न्ततिलकया—

तेनैव सिध्यति यथाविधि कायिकाद-
स्त्यागः समस्तविहितात्मककर्मराशेः ।
विप्रस्य यः परमहंसतया प्रसिद्धः
संन्यास एष चरमाश्रम एकदण्डः ।। ४७ ।।

तेनैवानुपदोक्तलक्षणोपरमेणैव । साधनान्तरवारणायावधारणम् । यो विप्रस्य ब्राह्मणस्य । परमेति । प्रसिद्धः शास्त्रादौ ख्यातः । यथाविधि न तु यथेष्टम् । कायिकादेः । आदिना वाचिकमानसिके । एतादृशस्य । समस्तेत्यादि । सर्वविधि-चोदितक्रियासंघस्येत्यर्थः । इहावधारणाभावान्न निषिद्धपरिग्रहप्रसङ्गः । त्याग ईदृशः संन्यासः प्रैषोच्चारणादिरूपः । अत एव । एकदण्डः । एकदण्डलिङ्गकः । चर-माश्रमः । एष सिध्यतीति संबन्धः ।। ४७ ।।

अथ शमादिषट्कावशिष्टं तितिक्षादित्रयं संलक्ष्योक्ताधिकारिणस्तत्सिद्धिमप्युक्त्वा विविदिषासंन्यासमेव कथयति विविदिषेत्यादिना—

तितिक्षा शीतादेः सहनमनिशं कालजनुष-
स्तथा श्रद्धा श्रीमद्गुरुगदितवेदान्तवचसि ।
दृढो यो विश्वासस्तदनु च समाधिश्चिति मनः-
स्थिरीकारः शास्त्रश्रवणविषये वा भवति सः ॥ ४८ ॥

तदनु निरुक्तसंन्यासोत्तरमेवोक्ताधिकारिण इत्यार्थिकम् । कालेति । तत्कालोद्भवस्य । एतादृशस्य । शीतादेः । अनिशं न तु क्षणिकम् । सहनं धैर्येणाशोचनम् । एवं चेदमेव तितिक्षालक्षणमिति द्योत्यते । एवं श्रद्धां लक्षयति—श्रद्धेत्यादिना। विश्वास इत्यन्तेन । तथेति समुच्चये । निरुक्ततितिक्षेवेत्यर्थः । विश्वासः फलावश्यंभावनिश्चयः । एवं समाधिमपि लक्षयति—समाधिरित्यादि । चितीति ब्रह्मणि । स्थिरीकारो भूरिकालं तदाकारतासंपादनम् । एवं पातञ्जलमतेन समाधिं लक्षयित्वाऽऽनन्दज्ञानमतेन तं लक्षयति—शास्त्रेत्यादिशेषेण । स समाधिस्तदनु भवतीति योज्यम् ॥ ४८ ॥

एवं नित्यानित्यवस्तुविवेकेहामुत्रार्थभोगविरागशमादिषट्कसंपदः प्रागुक्तरीत्या शुद्धनिरुद्धबुद्धेरधिकारिणोऽस्य क्रमात्कार्यहेतुभावेन प्राचुर्यं प्रतिपाद्य ततः सर्वसाधारणनिर्दुःखसुखेच्छालक्षणमुमुक्षायाः परमपरिपाकं शमादित्रयजन्यसंन्यासजन्यतितिक्षादित्रितयजन्यं सलक्षणं पूर्वार्धेन संक्षिप्याथ तत्कार्यभूतां 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिप्रतिपादितां विशिष्टगुरूपसत्तिमप्युत्तरार्धेन प्रतिपादयति बुभुक्षेवेत्यादि मुमुक्षुमनयनेति —

बुभुक्षेव तीव्रा स्वनिर्मोक्षवाञ्छा भवेत्सा ततो जायते तत्र यत्ना ।
अथासौ गुरुं ब्रह्मनिष्ठं वरिष्ठं पदाब्जे मुदाऽऽदाय सम्भूयाभ्युपयातु ॥४९॥

बुभुक्षेव भोक्तुमिच्छेव भोजनमात्रविषयवाञ्छात्मनेत्यर्थः । सा ह्यतिक्षुधितस्य तत्कालविच्छेदेनान्नं विना अकाचस्फोटकुबेरस्यसुवर्णदानमपि अरम्यतामेवाऽऽनयतीति प्रसिद्धमेव । तद्वन्मोक्षादृत ब्रह्मलोकान्तमपि दीयमानं वस्तु तुच्छमेव यया वाञ्छया संपद्यते साद्दशुत्कण्ठितेति यावत् । अत एव तीव्रा । एतादृशी । स्वेति । स्वस्याऽऽत्मनो यो निर्मोक्षो नितरां मोक्षमायुज्यापेक्षयाऽप्यधिक एतादृशो मोक्षो मोक्षः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतमपवर्गादिपदवाच्यं तत्र वाञ्छा लालसेत्यर्थः । एतादृशी । अत एव तादृशि । तासां तितिक्षाश्रद्धासमाधीनां पूर्वोक्तलक्षणानां परम्परयैवेद्धा वृद्धा । एतादृग्मुमुक्षा । ततो निरुक्तस्वसंमतसमाध्युर्ध्वमित्यर्थः । जायते संपद्यत इत्यन्वयः ।

ततः किं तदाह—अथेत्यादिना । निरुक्तमुमुक्षाव्यवहितोत्तरक्षणमेव । असाधुक्तलक्षणोऽधिकारी । आदौ प्रथमम् । मुदा—अस्ति श्रुत्युक्तलक्षणः श्रीगुरुरिति तद्विषयकपरोक्षप्रमोद्भूतप्रमोदेनेत्यर्थः । समृद्धः सुपुष्टः सन्नित्यर्थः । एतेनौत्सुक्यं व्यज्यते । पदादौ पदवाक्यप्रमाणोपलक्षितसकलशब्दब्रह्मणीत्यर्थः । वरिष्ठं तद्विषयकप्रावण्यश्रेष्ठमित्यर्थः । एतेन तत्र श्रोत्रियत्वं द्योत्यते । तत्रापि ब्रह्मेति । एतेन स्वेष्टदत्वमपि । पक्षे पदादौ । वक्ष्यमाणप्रणामाय तत्पादतद्द्वंद्वावच्छेदेनेत्यर्थः । अभ्युपेयाद्युक्तोपहारकरः परिसरेदिति संबन्धः ॥ ४९ ॥

ततस्तदुचितं कथयति प्रणतोऽस्मीति प्रमिताक्षरया—

**प्रणतोऽस्मि पादकमलं भवतः करुणामृतैकवपुषो भगवन् ।**
**गुरुवर्य पाहि भवभोगिभयादभयप्रदैर्निजकटाक्षलवैः ॥ ५० ॥**

अयि भगवन् ईश्वर । भवतः । करुणेति । पादेति । प्रेति । तेनामानित्वम् । तत्र हेतुः । गुरुवर्येति । भवेति । संसारसर्पसाध्वसात् । अभयेत्यादि । निजेति । पाहीति योजना ॥ ५० ॥

एवं तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवयेत्यादिस्मार्तश्रीगुरुप्रणत्यादिब्रह्मज्ञानान्तरङ्गतरसाधनत्रयमध्ये प्रकृतोऽधिकारी श्रीगुरुप्रणत्याख्यं प्रथमं सदनुष्ठायावशिष्टसाधनद्वयं समनुष्ठातुं पाठक्रमादर्थक्रमो बलीयानिति न्यायेनाऽऽदौ तदीयस्तुतिरूपसेवामेव संपादयति गुरुवरेत्यादिपुष्पिताग्रया—

**गुरुवर तव पादपद्मरेणुर्मम तु विभाति विमुक्तिकल्पवल्ली ।**
**सकलविबुधभृङ्गसेव्यमाना विगतभिदात्मचिदेकपुष्पिताग्रा ॥ ५१ ॥**

भो गुरुवराऽऽचार्यचूडामणे । तव । पादेति । चरणकमलपरागपटलीत्यर्थः । मम तु । एतेन स्वस्मिँल्लोकवैलक्षण्यं व्यज्यते । तर्हि प्रेक्षावत्त्वं तत्राऽऽह—सकलेति । सर्वविद्वन्मिलिन्दास्वाद्यमानेत्यर्थः । तत्र हेतुं द्योतयन्पुनस्तां विशिनष्टि—विगतेत्यादिचरमचरणेन । विगता निरस्ता भिज्जीवेश्वरादियावद्भेदसंततिर्यया । एतादृशी याऽऽत्मविषयिणी चित्प्रेक्षोपलब्धिश्चित्संविदित्यमरादद्वैतब्रह्मात्मैक्यविषयकविचारितवेदान्तमहावाक्यजन्यप्रमा तयैव पुष्पितं कुसुमितमग्रं यस्याः सा तथेत्यर्थः ।

एतेन तद्दर्शनादेव तत्त्वज्ञानं भवतीति द्योत्यते । एतादृश्यत एव विमुक्तीति कैवल्यफलप्रदकल्पलतिकेत्यर्थः । ईदृशी विभाति स्फुरतीत्यन्वयः । तस्मात्त्वयाऽहमनुग्राह्यभूतानन्यशरणोऽनुग्राह्य एव करुणामृतैकवपुष्ट्वादनुपदोक्तात्र तूदासीनवदासीनं गुणैर्यो न विचाल्यत इति स्मृतेर्नैसर्गिकौदासीन्येनोपेक्षणीय इत्याशयः ।

अत्र पादयोः पद्मरूपकेण तु सामुद्रिकोक्तजीवन्मुक्तचक्रवर्तिचिह्नाद्गुरुवरपदप्रतिज्ञाताचार्यचूडामणित्वे मम त्वित्यादित्रिपाद्युक्ततद्विवरणे च हेतुर्द्योत्यते । कल्पवल्लीरूपकं तु तद्वृणौ सद्यः संप्रार्थितदानदक्षत्वमेव व्यनक्ति । एवं सकलपदं श्लेषेण विबुधमधुकरयोरुभयोरपि संतृप्तिसूचकाव्यक्तमधुरध्वनिध्वनकमेव । महामहिमत्त्वार्थे रेणुपदम् । उक्तकल्पवल्लीरूपकप्रतिपादनायोत्तरार्धोक्तविशेषणद्वयं च ज्ञेयम् । तेनात्र पूर्वार्धेऽन्वयसमाप्तेः समाप्तपुनरात्तत्वरूपवाक्यदोषोऽपोद्यते । तदुक्तं मदीयसाहित्यसारीयहरचापाख्यसप्तमगुणरत्ने—

समाप्तपुनरात्तं स्याद्गुणो वाक्यान्तरोदये ।

रामाऽपि स्यादुपादेया महागुणवती सतीति । गुरुभक्तिरेव भावः ॥ ५१ ॥

अथैवमधिकारिकृतस्तुत्या यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति श्रुत्युक्तां तत्र भगवन्निति प्रपूर्वपद्योक्तगुर्वीश्वरसमभक्त्यनुमिताद्वैतविद्योपदेशपात्रतामालक्ष्य प्रसन्नः श्रीगुरुरपि तं सर्वापेक्षाधिकरणन्यायेन तीव्रतमब्रह्मजिज्ञासान्तसकलान्तरङ्गसाधनकार्यलिङ्गकानुमानेन गुरुनिरुद्धबुद्धित्वमभिदधानः समभिनन्दयति—अये विविदिषो भवानित्यादिपृथ्व्या—

अये विविदिषो भवानतुलभव्यभाग्यो यतो
मनुष्यशतकोटिषु त्वदुपमं ब्रवीति श्रुतिः ।
अनन्तजनिषु त्वयाऽध्ययनयज्ञदानादिभि-
श्चितं सुकृतमास यत्तदिदमागतं पक्वताम् ॥ ५२ ॥

अये इति कोमलामन्त्रणेऽव्ययम् । तेन प्रथमप्रयुक्तेन स्वस्मिन्नतुलकारुणिकत्वं तस्य चाऽऽश्वासनं सूच्यते । विविदिषो अद्वैतब्रह्मजिज्ञासो भवांस्त्वम् । अतुलेति । अनुपमकुशलसुकृतोऽसीत्यर्थः । कुत इत्यत आह—यत इत्यादिना । यतो हेतोः श्रुतिः कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति । उपलक्षणमिदम् । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये, इत्यादिस्मृतेरपि । त्वदुपमं त्वत्समं मुमुक्षुम् । ब्रवीति वक्तीत्यन्वयः । तत्र हेतुमाह—अनन्तेत्यादि । असंख्यातजन्मसु त्वया । अध्ययनेति । अध्ययनं गुरुमुखोच्चारणानूच्चारणादिलक्षणं स्वशाखायाः पठनम् । यज्ञः—वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिश्रुतिविहितनित्यज्योतिष्टोमादिलक्षणः श्रौतस्तथा स्वस्वसूत्रविहितः स्मार्तः प्रसिद्ध एव । दानं तस्मादन्नं ददत्सर्वाण्येतानि ददातीत्यादिश्रुतिषु प्रसिद्धान्नादिदानं च । तानि आदीनि येषां संध्यावन्दनादिनित्यनैमित्तिकानां तैरित्यर्थः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेरनशनाख्यं तपोऽपि ग्राह्यम् । तस्यापि वेदानुवचनादिपाठात् ।

यत्सुकृतं पुण्यं चितमीशतोषतः संपादितमास । अभूत् । तदिदं तीव्रतमब्रह्मजिज्ञासान्तसकलान्तरङ्गसाधनरूपेणास्मदादिभिः प्रत्यक्षेणानुभूयमानमिति यावत् । पक्वतां परिपाकमागतमस्तीति योज्यम् ॥ ५२ ॥

ननु यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति ज्योतिष्टोमेन स्वर्गकामो यजेतेति रातिर्दातुः परायणमिति च श्रुतिभ्योऽध्ययनादीनां काम्यत्वेन स्वर्गफलकत्वस्यैव संभवात्कथं मद्वाङ्मात्राध्यवसितविविदिषालिङ्गेन साधनचतुष्टयात्मकनित्यानित्यवस्तुविवेकादिपुष्टिस्तया च बुद्धेः शुद्ध्यादिस्ततश्च तमेतं वेदानुवचनेनेत्यादिश्रुतिचोदितविविदिषाफलकवेदाध्ययनादिकर्मानुष्ठानानुमानमिति चेत्सत्यम् । वेदानुवचनादीनामुभयविधश्रुतिविहितत्वेनोभयफलकत्वसंभावनायामपि प्रणतोऽस्मीत्यादिपद्यकृतप्रणामादिपूर्वकं संसारसागरसमुद्धरणप्रार्थनादिलिङ्गादुक्तार्थकत्वस्यैव तत्राध्यवसायौचित्यमित्याशयं विशदयति—ऐशीत्यादिशार्दूलविक्रीडितेन—

> ऐश्याज्ञेति निषिद्धमात्रविरतस्वान्तेन भूयस्त्वया
> निश्छिद्रं यदनुष्ठितं मम भवन्नित्यं च नैमित्तिकम् ।
> प्रायश्चित्तमपीश्वरार्पणधिया कर्मैतदर्थातिच्छिद्रः-
> प्राक्तं तैरविरुद्धचोदितमपि प्रायोऽद्य तत्सार्थकम् ॥ ५३ ॥

अये विविदिषो इत्यत्रापि संबध्यते । त्वया । निषिद्धेति । न कलञ्जं भक्षयेदिति श्रुतेः कलञ्जशब्दवाच्यविषलिप्तपृषतमृगमांसोपलक्षितमद्यमांसलशुनगृञ्जनपलाण्डाशनपरदारगमनपरद्रव्यापहरणप्राणिविहिंसनादियावन्निषिद्धकर्मभ्यः परावृत्तान्तःकरणेन सतेत्यर्थः । ऐशी परमेश्वरकर्तृका । एतादृशी आज्ञेति यथाश्रुतं निषिद्धेत्यत्रापि सुघटमेव । नहि निरुक्तनिषेधविषयेऽनिष्टसाधनतापादकमुक्तवेदवाक्यलक्षणेश्वराज्ञामन्तराऽन्यन्मानमस्ति । यत् । निश्छिद्रमज्ञातेतरप्रायश्चित्तरहितमित्यर्थः । एतादृशम् । भूयो बारं बारम् । न त्वेकवारम् । इदं च संध्यावन्दनादियथाविधि न्यायसंभवाभिप्रायमेव आम्रम् । तेनैकस्मिन्जन्मन्येकवारमेव संभावितानां सर्वतोमुखादिक्रतूनां नैवाऽऽवृत्त्यापत्तिरित्याकूतम् । नित्यमहरहः संध्यामुपासीतेति बृहज्जाबालोपनिषद्विहितं संध्यावन्दनादि । तथा । नैमित्तिकम् । जाते जातेष्टिं कुर्यादिति श्रुतिविहितं जातेष्ट्यादिकमित्यर्थः । तथा प्रायश्चित्तमपि कूष्माण्डैर्जुहुयाद्योऽपूत इव मन्येतेति तैत्तिरीयश्रुतिविहिताज्ञातपातकप्रायश्चित्तमपीत्यर्थः । एतादृशम् । त्रयीत्यादि । वेदत्रयोपलक्षिततदुपनिषद्विहितमिति यावत् ।

नन्वेवं चेदेकादश्युपवासाद्यननुष्ठानापत्तिरित्यत आह—तैरित्यादि । तैस्त्रयीतदिच्छद्भिः सह । अविरुद्धेति । अविरुद्धानि यानि स्मृत्यादीनि तैश्चोदितं विहितमुक्तवतापीत्यर्थः । एतादृशं कर्म । ऐशी ईश्वरस्य । आज्ञेति बुद्ध्या । तथापि । ईश्वर-

र्पणधिया न तु फलेच्छया । अनुष्ठितमनन्तजन्मसु । समभवत् । प्रायो बहुधा । अथ तत्सार्थकमित्यन्वयः ॥ ५३ ॥

ननु प्रायोऽद्य तत्सार्थकमिति पूर्वपद्यान्ते प्रयुञ्जतां शब्दपरब्रह्मोभयपारवतां श्रीमतामपि स्वान्ते निरुक्तमत्साधनधनानुमितौ किंचित्संदेह इव प्रतिभासत इति चेद्वाढम् । अत एव मयाऽयं वक्ष्यमाणस्त्वां प्रति प्रश्नः क्रियते । यदि त्वं तस्योत्तरं सांप्रदायिकसैद्धान्तिकसरण्यैव दास्यसि चेत्तर्हि तन्मामकं सदनुमानमेव स्यादन्यथा भ्रान्तेः पुरुषधर्मत्वादस्तु तदाभासताऽपि । नैतावता काऽपि नः क्षतिरिति गूढाभिसंधिराचार्यः प्रकृतं मुमुक्षन्तं प्रति तमेव प्रश्नमुपन्यसति या त्वाचार्यमित्यादिशालिन्यैव—

या त्वाचार्यं श्रोत्रियं ब्रह्मनिष्ठं ज्ञेयः प्रोक्तो नैव चाऽऽत्माऽवरेण ।
इत्याम्नायो देशिकत्वं यदूचे तत्त्वं कस्माज्ज्ञातवान्मय्यसीह ॥५४॥

अथ विविदिषो इत्यत्रानुवर्तते । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्यर्थं संक्षिपति—या त्विति प्रथमपादेन । जिज्ञासुरित्यार्थिकम् । श्रोत्रियं शब्दब्रह्मपारगमित्यर्थः । एतादृशम् । ब्रह्मनिष्ठं निःशेषवाङ्मन कायप्रवृत्त्युपरमात्मिका । ब्रह्मनिष्ठेह वेदान्तैः पुंसः संपद्यते भृशमिति वार्तिकसारवचनाद्बाधितत्वेनोपशान्तससंस्कारसकलान्तर्बहिःकरणतदधिकरणव्यवहरणमित्यर्थः । एतादृशं चाऽऽचार्यं प्रति यातु ब्रह्मात्मैक्यविषयकविचारितवेदान्तमहावाक्यजन्यसाक्षात्कारप्राप्त्यर्थमित्यर्थः । यातु गच्छत्विति यावत् । एवं न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमान इति श्रुत्यर्थमपि सारतः संगृह्णाति—ज्ञेय इत्यादिद्वितीयपादेन । अवरेणानार्येण गुरुणा प्रोक्तः समुपदिष्टोऽप्यात्मा । ज्ञेयो ज्ञातुं योग्यः । नैव भवतीत्यार्थिकम् ।

ननु भवत्वेवमन्वयव्यतिरेकाभ्यां श्रुतिसंमतं शब्दपरब्रह्मपारगत्वमेव गुरुत्वं ततः किं प्रकृत इत्याशङ्क्य निरुक्तगुरुलक्षणवाक्योपसंहारपूर्वकं तल्लक्षणं स्वस्मिन्नाधिपंस्तत्सत्त्वे हेतुं पृच्छति—इतीत्याद्युत्तरार्धेन । इति निरुक्तपादद्वयसंक्षिप्तवाक्यार्थः । एतादृश आम्नायः श्रुतिः स्त्री वेद आम्नाय इत्यमरान्निरुक्तवाक्यद्वयात्मको वेद इत्यर्थः । देशिकत्वं गुरुत्वम् । यदूचे उक्तवानसि । तदुक्तलक्षणं गुरुत्वम् । इह लोके मयि कस्माद्धेतोरबाधितालिङ्गात् । ज्ञातवानसीति तद्ब्रूहीत्याद्यध्याहृत्य संबन्धः । तस्मात्त्वदक्ष्यादिमान्यं गुरुत्वलक्षणं मयि नैव संभवतीति भावः । एवं ब्रह्मजिज्ञासुना त्वया मां प्रति नैवोपसर्तव्यमिति गूढाभिसंधिः ॥५४॥

ननु तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्यैव तत्त्वविद्वरगुरोर्लक्षणं निर्णीतमेवेति चेन्न । तस्याः सर्वसाधारणगुरुत्वविषयकत्वेन

विशिष्यैतद्व्यक्तित्वावच्छिन्नचेतनाविषयकत्वात्तत्रापि शब्दब्रह्मपारंगतत्वलक्षणश्रो-त्रियत्वाख्यपूर्वदलस्य वेदादिशब्दग्राहकश्रोत्रेन्द्रियेण प्रत्यक्षसंभवेऽपि ब्रह्मनिष्ठत्वाख्यो-त्तरदलस्य तद्व्यक्तिमानसधर्मीभूताद्वैतब्रह्मात्मैक्यविषयकसाक्षात्कारत्वेनासर्वज्ञदुर्ज्ञे-यत्वादित्याक्षिपति शब्दब्रह्मेत्यादिशार्दूलविक्रीडितेन—

शब्दब्रह्मतदर्थपारगमनात्स्याच्छ्रोत्रियो यद्यपि
श्रोत्रेण ग्रहणं च तत्त्वविषयं भूयात्तथाऽप्यन्तिमम् ।
शक्यं ज्ञातुमहो कथं किल दलं श्रुत्यैव स ब्राह्मणः
केन स्यादिति रूपयाऽपलपितं तल्लक्ष्म बोधेतरत् ॥५५॥

अये विविदिषो, इदं पदद्वयमत्राप्यनुकृष्यम् । यद्यपि । शब्देति । वेदोपल-क्षिताखिलवाङ्मयतदर्थविषयकाध्ययनवैदुर्यादित्यर्थः । अत्रार्थपदं परोक्षार्थपरम् । तेन ब्रह्मणो वेदशीर्षार्थत्वेऽपि तदापरोक्ष्यस्य ब्रह्मनिष्ठपदेनैव वक्ष्यमाणत्वान्न तत्रा-तिव्याप्तिः । श्रोत्रियः श्रोत्रियंश्छन्दोऽधीते इति पाणिनिवचनाच्छ्रोत्रियपदशक्यता-वच्छेदकावच्छिन्नश्चेतनः पिण्डविशेष इत्यर्थः । स्याद्भवेत् ।

तथा तत्त्वविषयं निरुक्तश्रोत्रियत्वविषयकं ग्रहणं ज्ञानं श्रोत्रेण श्रवणेन्द्रियेण भूयात्तथाऽपि । अहो इत्याश्चर्ये प्रश्नबहुमाने च । अन्तिमम् । निरुक्तवेदवाक्यपर्य-वसिते श्रोत्रियत्वे सति ब्रह्मनिष्ठत्वमेव मुमुक्षूपसदनीयगुरुत्वमिति लक्षणसंबन्ध्युत्तर-मित्यर्थः । दलं भागजातं ब्रह्मनिष्ठत्वरूपमिति यावत् । ज्ञातुमपरोक्षीकर्तुमित्यर्थः । कथं किल शक्यम् । कथंपदमाक्षेपे । किलपदमप्यर्थे । तेन कथमपि शक्यं केनापि प्रकारेण सुकरमिति काका संबन्धे कृते सति नैव सुसाध्यं भवतीति यावत् ।

कुतोऽयं नियम इत्यत आह—श्रुत्यैवेत्यादिशेषेण । तथा च काण्वैराम्नायते—पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्पाण्डित्यं च बाल्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्त-मिति । एवं च यतः स ब्राह्मणः केन स्यादितिरूपया । स पाण्डित्यबाल्यमौन-पदेष्टश्रवणमनननिदिध्यासनपरिपाकवानथ ब्रह्मसाक्षात्कारानन्तरं ब्राह्मणो ब्रह्मनिष्ठः केन करणेन स्यादिति प्रश्ने येन सकलसाधनफलेन स्यात्तेनेदृश एवेत्युत्तरपर्यवसि-तरूपयेत्यर्थः । तल्लक्ष्म ब्रह्मनिष्ठलक्षणं बोधेतरत्तत्त्वज्ञानभिन्नम् । अपलपितम् । अपलापस्तु निह्नव इत्यमरान्निराकृतमेवास्तीति योजना । तस्मान्नैव ब्रह्मनिष्ठलक्षणं चाक्षुषादिप्रत्यक्षविषयीभूतं स्वसंवेद्यज्ञानं विनाऽन्यद्भवतीति भावः ॥ ५५ ॥

नन्वेवमपि भवत्त्वद्वैतब्रह्मात्मैक्यविषयकसाक्षात्कार एव तल्लक्षणमित्याशङ्क्य किमत्र मानं न तावत्प्रत्यक्षम् । परबुद्धेरप्रत्यक्षत्वात् । नाप्यनुमानं लिङ्गाभावा-दित्याशयेन समाधत्ते—तत्र त्वित्याद्यार्यया—

तत्र तु न प्रत्यक्षं परबुद्धित्वान्न वाऽनुमानमपि ।
लिङ्गाभावादेवं शब्दाद्यपि नैव संभवति ॥ ५६ ॥

एवं प्रत्यक्षादिवदित्यर्थः । शब्दाद्यपीति । अयमभिप्रायः—यथा प्रत्यक्षेऽनुमाने परबोधागम्यत्वे हेतुकथनं कण्ठादेव कृतं तथा शब्दे आदिपदगृहीतार्थापत्तावपि हेत्वनुक्तावपि तदूहनं यथोचितं कार्यमेवेति । तद्यथा । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोरभावे शक्त्यादेः क्रमाच्छब्दस्य नैव प्रवृत्तिः संभवतीति सर्वसंमतमेव । तत्र तु परनिष्ठतत्त्वबोधे परेणान्यं प्रति बोधनीये तद्व्यक्तिनिष्ठतत्त्वबोधत्वमेव शक्यतावच्छेदकं वाच्यम् । तत्तु नैव संभवति । व्यक्तीनामानन्त्यात् । एवं च यस्यार्थस्य देवदत्तेऽनुपपद्यमानतत्त्वावबोधं कल्पयेत्तादृगर्थः कोऽपि नोपलभ्यत इति शब्दवदर्थापत्तिरपि प्रकृते प्रमाणीभवितुं नैव पार्यत इति । तस्मादुक्तमानिष्ठलक्षणीभूतत्त्वावबोधस्य तन्निष्ठस्य प्रत्यक्षानुमानशब्दार्थापत्तिप्रभृतिप्रमाणासिद्धत्वान्नैव तल्लक्षणसंभव इति ॥ ५६ ॥

ततः प्रकृतमुमुक्षुणा किमकारीत्याकाङ्क्षायां वृत्तानुवादपूर्वकं शिष्यस्य सत्त्वाविर्भावं सप्रणामं लक्षणप्रतिपादकवाक्यमवतारयति—इतीत्यादिहरिण्या—

इति स गुरुणा त्यागोद्रेकाद्मानितयेरितं
मृदुतमवचः श्रुत्वा शिष्यः शिखीव घनध्वनिम् ।
पुलकितवपुः प्रेमोद्गारात्प्रमोदभराश्रुभि-
स्तरलनयनः प्रोवाचेदं नतो मधुराक्षरम् ॥ ५७ ॥

इति या त्वाचार्यमित्यादिश्लोकयाऽनुपदोक्तयेत्यर्थः । गुरुणा प्रकृतशिष्यशरणीकृतत्वेन वर्णिताचार्येण । त्यागेति । सकलदृश्यानादरोल्लासादित्यर्थः । अत एव । अमानितया मिथ्याभूतशरीरादिसंघाते धन्यंमन्यताऽध्यासध्वस्त्येति यावत् । ईरितं कथितम् । अत एव । मृद्विति । मधुराक्षरस्वरादिवाक्यम् । शिष्यः श्रुत्वा । घनध्वनिं जलदमन्दनिनदम् । श्रुत्वा शिखीव मयूर इव । प्रेमेति । सौहृदसंस्कारादित्यर्थः । पुलकितवपू रोमाञ्चितदेहः । अत एव । प्रमोदेति । आनन्दातिशयजन्यलोचनजलैरित्यर्थः । तरलेति । चञ्चलविलोचनः सन्निति यावत् । तत्रापि नतो नम्रश्च सन् । इदं वक्ष्यमाणत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षम् । मधुराक्षरं वाक्यम् । पक्षे केकारुतम् । प्रोवाचावददित्यन्वयः । इह शान्त एव रसः । पूर्णोपमाऽलंकारः ॥ ५७ ॥

किमुवाच शिष्यः श्रीगुरुं प्रतीत्यतस्तद्दिशदयति मय्येवेत्यादिवसन्ततिलकया—

मय्येव भाति सकलं जगदिन्द्रजालं
सौरातपे मृगजलं स्वनिभे यथेति ।
निष्ठावतां प्रियसमागममन्तराऽपि
स्वानन्दतो मुखमतीव विकासमेति ॥ ५८ ॥

सकलं यावद्दृश्यत्वावच्छेदकावच्छिन्नम् । न तु यत्किंचित्स्वप्नमनोराज्यादि । तस्य ज्ञानाभासत्वप्रयोजकस्थूलशरीरादिबोधबाध्यत्वात् । जगदित्यादि । गच्छति तत्त्वबोधेन जीवन्मुक्तिपक्षे बाध्यं सद्योमुक्तिपक्षे प्रध्वंस्यं च सदधिष्ठानैकरूपतां प्राप्नोतीति तथा । संपूर्णमपि द्वैतं तदेवेन्द्रजालं मणिमन्त्रादिक्षुब्धमायानिर्मितनगरादीत्यर्थः । मय्येव तत्साक्षित्वोपलक्षितचिन्मात्रात्मन्येव । अत्रावधारणं त्वीश्वरादिव्युदासार्थम् ।

एवं च यो यो भासमानो भ्रमः स स्वप्रभाधिष्ठानकः । भास्यत्वान्मृगजलमणिवह्निभ्रमवत् । न च रजतादिभ्रमेऽव्याप्तिः । तत्रापि शुक्त्याद्यवच्छिन्नाज्ञातचैतन्यस्यैवाधिष्ठानत्वादित्याशयेनाऽऽह—स्वनिभे अनन्याधीनभानरूपे स्वप्रकाशे ब्रह्मण्येवेत्यर्थः ।

एतेन तत्पदार्थविवेचनमनुपदोक्तास्मच्छब्दार्थशोधितत्वंपदार्थलक्षणमुख्यविशेष्यविशेषणाभेदसामानाधिकरण्यलक्षणैक्यात्मकमहावाक्यार्थश्च सूच्यते । यथा सौरातपे । वह्न्यातपवारणार्थं सौरेति । मृगजलं मध्याह्नकालिकोषरधरणीसंयुक्तसूर्यकिरणग्रहणदोषदूषितचक्षुरवच्छिन्नबुद्धिनिष्ठप्रकृतभ्रमैकाधिष्ठानीभूतनिरुक्तसंयुक्तातपावच्छिन्नचैतन्यविषयकाज्ञानविवर्तीभूतमृगजलोपलक्षिततदद्रष्टृकाल्पितसलिलमित्येतत् ।

भाति सोपाधिकभ्रमत्वेन यावदुपाधि परिस्फुरति । तथा जीवन्मुक्तिपक्षानुसारात्तत्त्वज्ञानोत्तरमपि प्रारब्धपरिसमाप्तिक्षणपर्यन्तं भाति प्रतीयत इति यावत् । इति निरुक्तप्रकारकतत्त्वानुसंधानरूपेत्यर्थः । निष्ठावतां निःसीमस्थितिशालिनाम् । प्रियेत्यादि । इष्टविषयज्ञानपूर्वकतल्लाभं विनाऽपीत्यर्थः । स्वेति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यादिति तैत्तिरीयश्रुतेर्निरुक्तजगदिन्द्रजालभ्रमाधिष्ठानीभूतस्वप्रकाशभूमात्मानन्दानुसंधानादेवेति यावत् ।

मुखं वदनम् । अतीव यावज्जाग्रदवस्थायामित्यर्थः । विकासं विशिष्टकान्तिमत्त्वलक्षणसंफुल्लत्वमिति यावत् । एति प्राप्नोति सरलमेव । अत्र स्वेतिपदं सौरातपे विशेषणविधयाऽन्वेति । तस्यापि व्यावहारिकस्वप्रकाशत्वात् । ननु तत्त्वविद्या निर्गुणब्रह्मविषयैव नतु जगदधिष्ठानत्वविशिष्टसगुणब्रह्मविषयेति तथा च नेदमनुसंधानमिति चेत्सत्यम् । दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यते इत्यनुभूतिप्रकाशोक्तेर्जीवन्मुक्तिदशायां दृष्टिसृष्टेरौचित्यात्तदभिप्रायेणेदमिति सर्वं सुमङ्गलम् ॥ ५८ ॥

ननु भवत्वेवं शुको मुक्तो वामदेवो मुक्त इति श्रुतेः शुकादिजीवन्मुक्तेष्वेव निरुक्तब्रह्मनिष्ठलक्षणं प्रकृते त्वच्छरणीकृते मयि किमागतमित्यत आह—तदिदमिति प्रबोधितया—

तदिदं भवदाननाम्बुजे भगवन्भूरि मया निरीक्ष्यते ।
घटते कथमात्मतृप्तता विरहादेतदतोऽस्तु लक्षणम् ॥५९॥

भो भगवन् । उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति वचनादपि सर्ववेदार्थवित्त्वेन सद्गुरो, इत्यर्थः । यद्वा ज्ञानी त्वात्मैव मे मतमिति श्रीमद्भगवद्गीतोक्तेः परमात्मतत्त्ववित्त्वेनेश्वराभिन्नाचार्यवर्येति यावत् । प्रथमपक्षे परोक्षविद्यप्युक्तभगवत्त्वसंभव एवास्वरसः । तदपि कुत इत्यतो वक्ति—तदिदमित्यादिना । तत्पूर्वपद्योपपादितयाऽदृश्याधिष्ठानत्वोपलक्षिताद्वैतस्वप्रकाशात्मानुसंधानप्रयुक्तयाऽवज्जागरविकस्वरमुखत्वमित्यर्थः ।

इदं प्रत्यक्षं ब्रह्मनिष्ठलक्षणम् । भवदिति । युष्मन्मुखकमले । मया शरणागतेन तत्त्वजिज्ञासुनेत्यार्थिकम् । भूरि विपुलम् । न तु क्षणिकत्वेन यत्किंचित् । निरीक्ष्यते चाक्षुषनिर्दोषप्रमाविषयी क्रियत इत्यन्वयः । तेन तस्यान्यथानुपपत्तिपर्यवसितासाधारणधर्मत्वेन लक्षणत्वमुपपादयति—घटत इत्याद्युत्तरार्धेन । एतन्निरुक्तमुखविकसनम् । आत्मेति । यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यत इति श्रीमद्भगवद्गीतोक्तेरद्वैतात्मतृप्तिजन्यकृतकृत्यताभावाद्धेतोरित्यर्थः । कथं घटते युज्यते । अतः साधारणधर्मत्वराहित्यात् । लक्षणं ब्रह्मनिष्ठत्वप्रमापकम् । अस्तु भवत्वित्यर्थः ॥ ५९ ॥

ननूक्तधर्मस्य सयुक्तिकत्वेन लक्षणत्वेऽप्यसांप्रदायिकत्वमित्यत्राऽऽह—निःशेषेत्यादिवसन्ततिलकया—

निःशेषवाङ्मनसकायजकर्मशान्तिः
स्वाद्वैतचिन्तनवशादिह जायमाना ।
ब्रह्मिष्ठता निगदिता गुरुभिः पुराणैः
शास्त्रेषु याऽनवरतं त्वयि सा स्फुटैव ॥ ६० ॥

निःशेषवागादिजव्यापारप्रशम इत्यर्थः । इह लोके । स्वेति । अद्वैतात्मानुसंधानाद्धेतोरिति यावत् । जायमाना सत्येव न तु सुप्तिमूर्च्छादिवेत्यर्थः । पुराणैः प्राचीनैः । गुरुभिः आचार्यैः । शास्त्रेषु—नाऽऽपदि ग्लानिमायान्ति हेमपद्मं यथा निशीति, निःशेषमनःकायवाग्व्यापारनात्मिका । ब्रह्मनिष्ठेह वेदान्तैः पुंसः संपद्यते पृथगिति च

प्रसिद्धवार्तिकसारादिग्रन्थेष्वित्यर्थः । एतादृशी निगदिता कथिता या ब्रह्मिष्ठता ब्रह्मनिष्ठता । सा त्वयि अनवरतं सर्वदा । स्फुटैव स्पष्टैवास्तीति संबन्धः । तस्मात्ता-दृमितः परमपरीक्षकत्वेनोपेक्ष्य इत्याशयः ॥ ६० ॥

नन्वेवं यदि ब्रह्मनिष्ठलक्षणं प्राचीनाचार्यसंमतं तर्हि प्रागुदाहृतायाः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेत्यादिश्रुतेस्तल्लक्षणाभावबोधिन्याः का गतिरित्यत्राऽऽह— तेनेत्यादिरथोद्धतया—

**तेन लक्षणपराकृतिः श्रुतौ तज्ज्ञमात्रविषयेति मे मतिः ।**
**अद्वयात्मचितिबोधनिष्ठयोर्भेद एव यत उक्तयुक्तितः ॥ ६१ ॥**

तेन मय्येव भाति सकलमित्यादिपद्योक्तब्रह्मनिष्ठलक्षणस्य श्रीमच्चरणसमन्वित-त्वसयुक्तिकत्वससांप्रदायिकत्वादिनेत्यर्थः । अयि सद्गुरो, इत्यार्थिकमेव । श्रुतौ स ब्राह्मणः केन स्यादित्यादिबृहदारण्यकवाक्य इत्यर्थः । लक्षणेति । असाधारणधर्मनि-राकरणम् । तज्ज्ञमात्रेति । तत्त्वज्ञमात्रविषया । इति निरुक्तप्रकारा । मे प्रकृतमुमुक्षोः । मतिर्मननजन्यप्रमेत्यर्थः ।

ननु ब्रह्मज्ञब्रह्मनिष्ठयोः को भेदः सति च तद्भेदे लक्षणाभावतत्सद्भावौ क्रमादु-भयविषयौ स्तः । स किं शाब्दिको नेत्युच्यते किंवाऽऽर्थिकोऽथवा यौक्तिकोऽप्यु-ताऽऽनुभविकः । नाऽऽद्यः । व्युत्पत्तिभेदेन विभिन्नार्थद्वयस्यैव प्रतीतेः । तथा हि । ब्रह्म जानातीति ब्रह्मणि नितरां तिष्ठतीति क्रमादद्वयोः पदयोर्व्युत्पत्ती । तत्राऽऽद्ये-ऽन्याबृत्ताननुगतं वस्तु ब्रह्मेति भण्यते । ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनीति वार्तिकोक्तेर्ब्रह्मविषयकापरोक्षैकप्रमावत्त्वं फलति द्वितीये तु तदुत्तरं निःशेषेत्यादिवा-र्तिकसारोक्ततद्विषयकानुसंधानवत्त्वमिति स्फुट एव तद्भेद इति ।

अत एव न द्वितीयः । निरुक्तरीत्या तद्भेदे प्रामाणिके सति तदभेदमन्तराऽनुपपद्य-मानस्य कस्याप्यर्थस्याभावादुभयोरप्यर्थयोरभेदसाधकत्वाभावाच्च । नापि तृतीयचतुर्थौ । क्रमान्मय्येव भातीति तदिदमिति च पद्याभ्यामपैव निराकृतत्वादित्याशयेन समाधत्ते— अद्वयेत्याद्युत्तरार्धेन । अद्वयात्मचितिरद्वैतब्रह्मात्मचिन्मात्रं तद्विषयको यो बोधः प्रमा या च तदनुसंधानेन तत्र नितरां स्थितिलक्षणा निरुक्तावस्थारूपा निष्ठा तयोरित्यर्थः । भेद एव यत उक्तयुक्तितो निरुक्तयुक्तेः । अस्तीत्यन्वयः । एतेन पूर्वोपोक्तार्थे हेतुरपि प्रतिपादितः । तस्मान्नैवात्र कोऽपि शङ्कावकाश इत्याशयः ॥ ६१ ॥

अथ फलितं निगमयति—युक्तं तत इत्यादीन्द्रवज्रया—

**युक्तं ततस्तावकपादपद्मसद्माऽऽश्रितुं निर्भयमस्मदादेः ।**
**संसारसर्पभ्रमकान्दिशीकं तत्त्रा(त्पा)हि मां देशिकपुण्डरीक ॥ ६२ ॥**

भो सद्गुरो । ततो निरुक्तहेतोः । अस्मदादेः शिष्यस्येत्यार्थिकम् । तावकेत्यादि । श्रीमच्चरणारविन्दमन्दिरमित्यर्थः । एतेन पादे पद्मरूपकेण मोक्षलक्ष्म्यालयतया विचारगहनसेव्यत्वं व्यज्यते । तेन । यतो निर्भयमत आश्रितुं शरणीकर्तुं युक्तं योग्यमस्ति । तत्तस्माद्धेतोः । भो देशिकेति । गुरुवर त्वम । संसारेति । कांदिशीको भयद्रुत इति । व्याघ्रेऽपि पुण्डरीको नेति चामरः ॥ ६२ ॥

अतः श्रीगुरुणा किमकारीत्यत्राऽऽह--इति शिष्यवाक्येत्यादिप्रमिताक्षरया--

इति शिष्यवाक्यविवशः स गुरुः
करुणामृतैकतनुरात्मदृशा ।
तमवेक्ष्य तत्त्वमसिवाक्यरसं
विपिने प्रबोधयति सारतरम् ॥ ६३ ॥

इति मय्येव भातीत्यारभ्याव्यवहितपूर्वपद्यपर्यन्तमित्यर्थः । शिष्येति । प्रकृतान्तेवासिवचनपराधीन इत्यर्थः । एतेन वक्ष्यमाणोपदेशे हेतुर्द्योतितः । एतादृशः स प्रागुक्तः । गुरुराचार्यः । संक्षेपशारीरकवद्ग्रन्थकृत्कल्पित एव । यतः । करुणेति । दयापीयूषमात्रशरीर इत्यर्थः । अतः । तं निरुक्तसांप्रदायिकरीत्या ग्रन्थकृतैव प्रकृतत्वेन कल्पितं तं शिष्यमिति यावत् । आत्मेति । अद्वैतात्मानुसंधानपूर्वकोन्मीलितदृशेत्यर्थः । तथा चोक्तं शिवानन्दलहर्याम्--

दीक्षां मे दिश चाक्षुषीं सकरुणां दिव्यैश्चिरं प्रार्थितां
शंभो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ इति ।
स्वात्मानमनुसंधाय चक्षुरुन्मील्य तद्दृशा ।
गुरुः शिष्यमवेक्षेत दीक्षेयं चाक्षुषी मता ॥

इति सांप्रदायिकं तल्लक्षणमपि । अवेक्ष्य--अवलोक्य । विपिने । अरण्येऽधीयेरन्निति श्रुतेः । अरण्येऽध्ययनादेतदारण्यकमितीर्यत इति वार्तिकाच्च गङ्गातीरनिकटारण्य इत्यर्थः । तत्त्वमसीति । इदं हि च्छान्दोग्यषष्ठमहावाक्यं सुप्रसिद्धमेव । इतरोपनिषन्महावाक्यानि विहाय विशिष्यैतस्यैव ग्रहे सामवेदो वै ब्राह्मणानां प्रसूतिरिति श्रुतिः । वेदानां सामवेदोऽस्मीति स्मृतिरपि हेतुत्वेन ध्वन्यते ।

तस्य यो रसः श्रीमद्भाष्यकारादिसर्वसांप्रदायिकपूर्वाचार्यनिर्णीततात्पर्यांशस्तमित्यर्थः । सारेति । अतिशयेन सारो निर्गलितातिसंक्षिप्तार्थो यथा स्यात्तथेति यावत् । एतेन सर्वस्याप्यद्वैतशास्त्रोपलक्षितशब्दब्रह्मणस्तावदेकपर्यवसन्नत्वेन मादृङ्मन्दप्रज्ञमुमुक्षुजनव्युदसनं व्यज्यते । प्रबोधयति । अप्रतिबद्धाबाधितापरोक्षप्रमापर्यवसायित्वलक्षणप्रकर्षेण बोधयतीति योजना ।

अत्रावेक्ष्येति ल्यबा(पा)। नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिर्धर्मोत्पत्तेः पापहानिस्ततश्चित्तशु-द्धिस्ततः संसारयाथात्म्यबोधस्ततो वैराग्यं ततो मुमुक्षुत्वं ततस्तदुपायपर्येषणं ततः सर्वकर्मतत्साधनसंन्यासस्ततो योगाभ्यासस्ततश्चित्तस्य प्रत्यक्प्रवणता ततस्तत्त्वमस्या-दिवाक्यार्थपरिज्ञानं ततोऽविद्योच्छेदस्ततः स्वात्मन्येवावस्थानं ब्रह्मैव सन्ब्रह्माप्येति विमुक्तश्च विमुच्यत इति नैष्कर्म्यसिद्ध्युक्तसकलसाधनपरम्परावत्त्वेन महावाक्यप्रबो-धनाधिकारानुसंधानं ध्वन्यते ॥ ६३ ॥

अथ प्रतिज्ञाततत्त्वमस्यादिमहावाक्यार्थोपदेशप्रकारमेव परिष्करोति येनेत्यादि-शार्दूलविक्रीडितेन—

येनाऽऽभाति समस्तदृश्यमनिशं तद्भूममानं भवा-
नद्वैतात्मसुखैकरूपममलं कालत्रयाबाधितम् ।
ब्रह्मासि द्वितयं कदाऽपि न भवेद्भूतं भवत्यप्यदः
सौरालोक इवेक्षणेऽथवदयं त्वय्येव भाति क्षणम् ॥६४॥

अथ निर्विदिषा, इत्याथिकम् । येन वक्ष्यमाणरूपतत्पदान्वयार्हवस्तुना । अनिशं निरन्तरम् । न तु क्षणमात्रम् । तेन मणिमन्त्रादिक्षुद्रमायया किंचित्कालभासमा-नेन्द्रजालिकनगरादिकारणेऽतिव्याप्तिः प्रत्यस्ता । समस्तेति । सर्वद्वैतमिति यावत् । अत्र दृश्यपदेन द्रष्टुं प्रकाशितुं योग्यं दृश्यमिति व्युत्पत्तेः स्वकर्मकस्फूर्तिकर्तरि दृङ्मात्ररूपत्वं व्यज्यते । समस्तपदेन घटादियत्किंचिद्दृश्यभासकप्रमातृव्यावृत्तिर्व्य-ज्यते । भाति जाग्रदादिषु प्रकाशत इत्यर्थः ।

तथा च श्रूयते—तस्य भासा सर्वमिदं विभातीति । न्यायरत्नावलीकृतामनुमानमपि—घटादयो भानविषयाः । आनयनादिविषयत्वादिति । भवत्वेवं ततः किं प्रकृत इत्या-शङ्क्य येनेत्यादिचतुर्भिः पदैस्तत्त्वंपदार्थयोः शोधनं समाष्टिव्यष्ट्यात्मकसामान्यरूप-सकलदृश्यभासकदृङ्मात्रवस्तुकथनेन सिद्धवत्कृत्याखण्डवाक्यार्थमेव प्रश्नयति—तदि-त्यादिना ब्रह्मासीत्यन्तेन ।

अत्र यत एवमतः सततसकलद्वैतभासकत्वात् । भवान् त्वम् । तत् जगद्भासकत्वे-नानुपदमेवोपक्रान्तं चिन्मात्रमित्यर्थः । भूम निरुक्तसर्वभासकत्वादेव व्यापकमिति यावत् । एतादृशं ... स्वप्रकाशचैतन्यमित्यर्थः । नन्वेवं येनाऽऽभातीत्यादिना जगद्भासकेऽपि वस्तुनि भवतु दीपादिवज्जडत्वमेवेति शङ्काशान्त्यर्थमेव मानपदं तस्य जगद्भासकत्वेनाऽऽर्थिकसिद्धमपि ... कण्ठत एव चिन्मात्रत्वमुपपा-दयितुमशक्यमिति ... चेन्न त्रिविधपरिच्छेदशून्यत्वमप्रत्य-क्त्वपरमानन्दत्वमप्रतिबोधकत्वेन तस्याखण्डाद्याविशदयति—अद्वैतात्मेत्यादि ।

देशकालवस्तुपरिच्छेदशून्यत्वमद्वैतत्वम् । बाधावधिभूतत्वमात्मत्वम् । निरतिशयानन्दघनत्वं सुखैकरूपत्वमित्येतत् । तदाहुः श्रीमत्पञ्चपादिकाचार्याः—सुखैकतानसदात्मकूटस्थचैतन्यैकरसतासंसारित्वाभिमतस्याऽऽत्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति । अत्रैकपदेन हैरण्यगर्भान्तवैषयिकसुखस्य क्षयित्वादिना दुःखास्कन्दितत्वात्तद्व्यतिरेको व्यज्यते ।

ननु यद्येवं मामकं वास्तविकं स्वरूपं तर्हीदं देहेन्द्रियाद्यखिलद्वैतं कुतः समभूत् । न च वाच्यमनीशया शोचति मुह्यमानः । तम आसीत्तमसा गूढमग्रे । माया च तमोरूपाऽनुभूतेस्तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपमस्यास्य व्यञ्जिका नित्यनिवृत्ताऽपि मूढैरात्मेव दृष्टा । पराऽस्य शक्तिर्विविधैव श्रूयते । नीहारेण प्रावृताः । मायां तु प्रकृतिं विद्यात् । अजामेकां लोहितशुक्लकृष्णामिति च श्रुतिशतेन । तथा—अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः । तत्त्वाविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायामिति च स्मृतिव्रातेन ।

तथा ब्रह्मविदाप्नोति परम् । विद्ययाऽमृतमश्नुते । ज्ञात्वा देवं मुच्यते सर्वपाशैः । ज्ञात्वा देवं सर्वपाशापहानिः । तमेव विदित्वाऽतिमृत्युमेति । तमेवं विद्वानमृत इह भवति । तरति शोकमात्मवित् । एतद्वै तदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण इत्यादिश्रुतार्थापत्त्या । एवं—ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमिति स्मृतार्थापत्त्या च ।

तद्वत्—विमतं मिथ्या दृश्यत्वात् । शुक्तिरूप्यवत् । विमतं ज्ञाननिवर्त्यम् । कल्पितत्वात् । स्वप्नवत् । विमतं बाध्यम् । अध्यस्तत्वात् । मृगजलवदित्यादियुक्तिभिश्च सिद्धादनादिभावरूपात् ।

आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव ।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयता बलेन ॥

इति श्रीमत्सर्वज्ञात्ममुनीश्वरचरणोक्तात्मैकाश्रयविषयकावरणविक्षेपणशक्तियुक्तादज्ञानादेवेति । तस्यापि जडत्वेन जन्यजगदन्तःपातित्वात् ।

नापि निरुक्ताजत्वसाधकश्रुत्या प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीति स्मृत्या च तस्यानादित्वान्नैव जडत्वेऽपि जन्यजगदन्तःपातित्वमस्तीति सांप्रतम् । अनादित्वस्यैव विचार्यमाणत्वात् । तथा हि—न विद्यते आदिः प्राथमिकः कालसंबन्धो यस्य तत्त्वमनादित्वमेकं प्रागभावाप्रतियोगित्वाख्यं मुख्यम् । अपरं तु बीजाङ्कुरन्यायेन प्रवाहानादित्वं गौणमेव । तत्राऽऽद्ये व्युत्पत्तिपक्षे तावदादिपदार्थनिर्वचने प्राथमिकः कालसंबन्ध एवाऽऽदिपदार्थत्वेन परिष्कृतः, स तु प्राथमिकादिपदार्थयोरनर्थान्तरत्वादात्माश्रयदूषित एव । द्वितीये पारिभाषिकपक्षेऽप्यनादिः सान्तः प्राग-

भाव इति प्रागभावलक्षणमेवानादिपदार्थघटितमिति तथात्वमनादिपदार्थसिद्धावनादि-पदार्थसापेक्षत्वेन स्फुटमेवेति ।

एवं गौणमपि नैतन्निर्वक्तुं शक्यम् । लक्षणाभावात् । अत्रोच्यते । बीजाङ्कुरयो-रन्यतरव्यक्तिमत्कालत्वमेव प्रवाहानादित्वमिति ब्रह्मविद्याभरणे गौणानादित्वलक्षणं स्पष्टमेव । तद्वन्मुख्यानादित्वमपि प्रकृते व्युत्पत्तिसिद्धमेवेष्टम् । तद्यथा—जायतेऽस्ती-त्यादीनां यास्कपरिपठितानां षण्णां भावविकाराणां मध्ये सत्कार्यवादाभिप्रायेण प्रादुर्भावस्यैवोत्पत्तिपदार्थत्वान्न कोऽपि दोषः ।

न चैवमप्यज्ञानस्यानादिभावत्वेन नित्यद्रव्यवदविनाशित्वापत्तिः । त्वन्मते पार्थि-वपरमाणुनिष्ठनीलरूपस्यापि घटे पाकरक्ततायां दाहादिसामग्र्या नाशवदनादिभावरू-पस्याप्यज्ञानस्य तत्त्वज्ञाननाश्यत्वे बाधकाभावात् । तदुक्तं विवरणसारे श्रीमद्विद्या-रण्याचार्यचरणैः—ननु निवृत्तिर्नाम स्वोपादानगतोत्तरावस्था घटस्य मुद्गतकपालरू-पत्वप्राप्तेर्निवृत्तित्वात् । न हि निरुपादानस्याविद्याध्यासस्य सा संभवतीति चेन्न । स्वाश्रयगतोत्तरावस्थाया निवृत्तित्वात् । अन्यथा परमाणुगतश्यामत्वादेरनादेरनिवृत्ति-प्रसङ्गादिति ।

तस्मादनादिभावरूपमप्यद्वैतब्रह्मात्मैक्यसाक्षात्कारनिरस्यं मूलाज्ञानं निखिलदृश्य-कारणं तदन्तःपातिद्रष्टृचिदाभासदृशा भासमानमप्याकाशकार्ष्ण्यवत्तत्स्वरूपे वस्तुतः कालत्रयेऽपि नास्त्येवेत्याशयेन पुनस्तद्विशिनष्टि—अमलमिति । निरवद्यं निरञ्जनमिति श्रुतेरविद्यानासङ्गीत्यर्थः । तदुक्तं श्रीमत्सुरेश्वराचार्यचरणैः—

अस्याविद्येत्यविद्यायामेवाऽऽसित्वा प्रकल्प्यते ।
ब्रह्मदृष्ट्या त्वविद्येयं न कथंचन युज्यत इति ।

ननु द्विधेतं द्वि(द्वी)तमित्याहुस्तद्भावाद्द्वैतमुच्यत इति वार्तिकोक्तेरद्वयमप्यद्वैतेति विशे-षणे वस्तुपरिच्छेदविधुरत्वं संभवत्येव तथा येनेत्यादिना देशपरिच्छेदराहित्यमप्यथापि कालपरिच्छेदशून्यत्वं तु तत्र यद्विवृतं तत्पारिभाषिकमेव, न तु शाब्दिकं, नापि यौक्ति-कमपि । तथा च कथं तस्य सत्यत्वापरपर्यायं नित्यत्वमपि तदभावे कथं पुमर्थत्वमपीति तत्राऽऽह—कालेति । भूतभविष्यद्वर्तमानव्यवहारकारणीभूतवस्त्वविच्छेदेन मिथ्या-त्वनिश्चयविषयतानाक्रान्तमित्यर्थः । एतेन सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रत्योऽनन्तपदार्थो व्याख्यातः । एवं चात्राखण्डभासमानस्वप्रकाशाविनाश्यद्वैतप्रत्यगानन्दत्वेन पुरुषा-र्थत्वमपि ध्वनितम् ।

एतादृशम् । अत एव ब्रह्म । अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते । ब्रह्मार्थो दुर्लभोऽत्र स्याद्द्वितीये सति वस्तुनीति वार्तिकवचनान्निरुक्तरूपत्वादेवाद्वैतात्मतत्त्व-मेवास्याखण्डं भवतीति योजना । एतेन भागत्यागलक्षणया तत्त्वमस्यादिमहावाक्य-स्याखण्डाद्वैतस्वप्रकाशब्रह्मात्मैक्यानन्दैकरसलक्षणोऽर्थः कथितो भवति ।

ननु भवत्वेवं श्रीमच्चरणप्रसादेन मामकं वास्तविकं स्वरूपमद्वैतं ब्रह्मैवाथापि प्रकृते प्रतीयमानस्यास्य द्वैतजालस्य का गतिरित्यत आह—द्वितयमित्यादि । क्रमात्सद्योमुक्तिजीवन्मुक्तिपक्षाभ्यां शेषेण सदृष्टान्तम् । अये शिष्य अदः साक्षिणस्तवेदं द्वितयं द्वैतं जीवेशाद्यनाद्याकाशादि सादि च दृश्यमित्यर्थः । कदाऽपि क्वचिदपि देशे काले च न भवेन्नैव भूयान्नापि भूतमभून्नापि भवतीत्यन्वयः । एवं च त्वयि निरुक्तबोधादविद्याध्वंसोपलक्षिते चिन्मात्रे त्रिकालमपि द्वैतं नास्तीति सौरालोकदर्शेणतोयवदिति स्वदृष्टिवशात्सद्योमुक्तिरित्याकूतम् ।

नन्वेवं तर्हि कथमिदं श्रीमद्भिरुच्यते मया च श्रूयत इत्यनुभूतिजातमित्यत्राऽऽह—सौरेत्यादिना । अये मुमुक्षो सौरालोके सूर्यसंनिभमध्याह्नकालिकोत्तरचरण्यवाच्छिन्नातप इवेत्यर्थः । एणेति मृगजलवत् । क्षणं यावत्प्रारब्धपरिसमाप्तिक्षणपर्यन्तमित्यर्थः । त्वय्येव त्वत्कल्पितत्वात्त्वल्लक्षणेऽधिष्ठान एवेति यावत् । दृष्टिसृष्टित्वात्तु ब्रह्मणि । भाति मिथ्यात्वेन परिस्फुरतीति संबन्धः ।

एवं च स्वकल्पितप्रातिभासिकलोकदर्शैव जीवन्मुक्तिरिति तत्त्वम् । एवमेवोक्तं वार्तिक एव—

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ।
अविद्या सह कार्येण नाऽऽसीदस्ति भविष्यतीति ।
शास्त्रार्थस्य समाप्तत्वान्मुक्तिः स्यात्तावता मितेः ।
रागादयः सन्तु कामं न तद्भावोऽपराध्यत इति ॥ ६४ ॥

अथासौ शिष्यः स्वसंशयसंशान्त्यर्थं प्रश्नप्रार्थनमेवाऽऽतनुते—भो देशिकेशेत्यादिवसन्ततिलकया—

**भो देशिकेश भवदेकपदारविन्द-**
**द्वंद्वान्मिलिन्दवदहं मकरन्दलिप्सुः ।**
**संदेहसंदहनहेतुसुगन्धिलोभा-**
**दाशाऽस्ति चेत्किमपि गुञ्जितवद्वदामि ॥६५॥**

भो इति संपूज्यसंबोधने । अत एव । देशिकेश दिशन्ति निरतिशयहितं ब्रह्मात्मैक्यं दृश्यमिथ्यात्वपूर्वकमुपदिशन्ति शिष्यं प्रति करुणयैवेति देशिकाः सद्गुरवस्तेषामीशो ब्रह्मनिष्ठस्तत्संबुद्धौ तथा । अध्याचार्यचक्रवर्तिन्नित्यर्थः । अत एव । भवदेकेति । एकपदेनाब्रह्मनिष्ठब्रह्मविन्मात्रव्यावृत्तिः । पदेत्यादि तु पूजार्थमेव । केवलब्रह्मविदां तत्त्वोपदेशदक्षत्वेऽपि तत्रोद्दालकादिवच्छिष्याणां श्रद्धातिरेकापादकसार्वविदिकतत्त्वानुसंधानशून्यत्वात्समुचितमेव तद्व्युदसनमित्याशयः । अत एव

पित्राऽप्युद्दालकेन श्वेतकेतुं प्रति तत्त्वोपदेशावसरे श्रद्धत्स्व सौम्येति श्रद्धाविधानमबोधि । अरविन्दरूपकं त्वरुणत्वमसृणत्वादिमत्त्वेन सामुद्रिकप्रसिद्धमहाब्राह्मणत्वाबेदकमेबेति भावः । अत एव मिलिन्दवदित्युपमेति बोध्यम् । अहं प्रकृतजिज्ञासुः । अत एव । मकरन्देति । श्रीमत्पादपद्मगतात्मतत्त्वावबोधरूपरसेच्छुरित्यर्थः । संदेहेति । संशयप्रशमसामग्रीभूतसौरभेच्छयेति यावत् । तत्रापि मय्ययं मच्छिष्योऽपि संशयमिषादाक्षिपतीति विषादव्युदासायाभयं संयाचते—आज्ञेत्यादिना । तत्रापि किमपि स्वल्पमेव न तु भूरितरम् । तेन विक्षेपशङ्का प्रतिक्षिप्यते । अत एव गुञ्जितवदिति । एतेन ध्वनितोऽपि वक्ष्यमाणप्रश्ने माधुर्यं ध्वन्यते । वदामीति सरल एव संबन्धः ॥ ६५ ॥

ततः किं वृत्तमित्यत आह—इतीत्यादिप्रमिताक्षरया—

**इति शिष्यवाक्यपरिहृष्टमनाः स गुरुस्तमाह मृदुहास्यमुखः ।**
**परिपृच्छ यत्तव मनस्युदियात्तदहं छिनद्म्यखिलमात्मदृशा ॥ ६६ ॥**

इति निरुक्तरीत्येत्यर्थः । शिष्येति । बुभुत्सुकृतप्रार्थनसुप्रसन्नमानस इति यावत् । एतादृशः । स पूर्वप्रकृतः । गुरुराचार्यः । ननूक्तप्रार्थनया श्रीगुरुनिष्ठः परितोषः शिष्येण कथं तर्कित इत्यतस्तं विशिनष्टि—मृद्विति । मन्दस्मितास्यः सन्नित्यर्थः । एतेन तत्समाधानप्रोत्साहः सूच्यते । तं प्रकृतशिष्यं प्रति । आह—इत्थमुवाचेत्यन्वयः । किं तदित्यत्र तद्विशदयति—परीत्यादि । हे शिष्य तव मनसि यच्छङ्कादिकम् । उदियादुत्पद्येत तत्त्वं परिपृच्छ विस्तरतः प्रश्नविषयी कुरु । न तु भीत्या संकोचं कुर्वित्यर्थः । नन्वेवं प्रश्नाभयेऽपि तत्समाधानाभावे व्यर्थोयासत्वमित्यतस्तमाश्वासयति—तदित्यादिचरमचरणेन । आत्मेति । ब्रह्मानुभूत्यैव न तु शुष्कतर्केणेत्यर्थः । तत्रापि अखिलं निःशेषमेव च्छिनद्मि न तु प्रजापतिप्रथमाद्युपदेशोपमं सावशेषमिति ॥ ६६ ॥

एवं श्रीगुरोः साभयाश्वासने सति स शिष्यः किमकरोदित्यत आह—अथेत्यादिमालभारिण्याः पूर्वार्धेन—

**अथ सोऽवददात्मसंविवित्सुः प्रणतः प्राञ्जलिरेव नम्रवाचा ।**
**यदभाणि भवद्भिरात्मतत्त्वं विगतद्वैतमिदं भवत्वथापि ॥ ६७ ॥**

अथ निरुक्तश्रीगुरुदत्ताभयादिवाक्यश्रवणानन्तरम् । स प्रकृतशिष्यः । आत्मेति । अद्वैतात्मविषयकतीव्रविविदिषाशाली सन्नित्यर्थः । एतेन विनिगूढविजिगीषानिरासः सूचितः । तत्रापि । प्रणतोऽतिनम्रः । अत एव । प्राञ्जलिरेव च सन्नित्यर्थः । एतेनानुपमविनयो व्यज्यते । न तु प्रौढपादः । अत एव । नम्रवाचा विनीतभारत्येति

बाबत् । इत्यवददिति योजना । किं तदित्यपेक्षायां तद्विस्तरेण वक्तुमादौ श्रीगुरूक्त-मनुवक्ति—यदित्यादिनिरुक्तवृत्तस्यैवोत्तरार्धेनैषट्न्यूनेन । तत्रार्धश्लोकारमुक्त्वा भाविप्र-माणप्रमुखप्रश्नबीजमुत्तरश्लोकान्वय्येव निक्षिपति—इदमित्यादिशेषेण ॥ ६७ ॥

तत्राधीतसाङ्गस्वाध्यायस्य ब्राह्मणस्य स्वशाखोपनिषदद्वैतमहावाक्याद्ब्रह्मात्मैक्यवि-षयकसाक्षात्कारप्रमारूपब्रह्मविद्या सामान्यतः सर्वत्र शब्दस्वाभाव्यादुत्पद्यमानाऽपि प्रायः पञ्चविधैर्विषयवासनाप्रमाणप्रमेयासंभावने साधनफलविपरीभावने चेति प्रति-बन्धैः प्रतिबद्धैव भवति । तन्मध्येऽस्याधिकारिणः प्रागुक्तगुरूपसत्त्यन्तसकलसाधनतः प्रथमस्य तस्य निरासादवशिष्टतच्चतुष्टयप्रयुक्तं क्रमेण निरुक्ताद्वैतब्रह्मात्मैक्ये प्रश्नच-तुष्टयं स्पष्टयति—किमत्रेत्याद्युपजातेश्चरणचतुष्टयेन—

किमत्रमानं भगवञ्छ्रुतिश्चे-

दन्यैर्विरोधे सति साऽपि कुत्र ।

कर्मापि मोक्षस्य कुतो न हेतुः

किंवा फलं ज्ञानभवं वदैतन्नु ॥ ६८ ॥

भो भगवञ्श्रीगुरो । एतेन यस्य देवे परा भक्तिरित्यादिश्रुत्युक्तेश्वरगुर्वभेदभाव-नापरिपाकरूपप्रश्नसमाधानावधारणसामग्री स्वस्मिंस्तथा श्रीगुरावपि ज्ञानी त्वात्मैव मे मत(तं)इति स्मृतेरुपदेष्टृत्वसामग्री च सूचिता । अत्र प्रागुक्ताद्वैतात्मतत्त्वे विषये मानं प्रमाणं किमस्तीत्याद्यः प्रश्नः । तत्त्वमस्यादिः श्रुतिर्मानमिति चेत्तर्ह्यन्यैः प्रत्य-क्षादिभिः प्रमाणैः सह विरोधे सति साऽप्युक्तश्रुतिरपि कुत्र प्रमाणत्वेनावतिष्ठेत कुत्रा-पीत्यर्थः । शिष्टं तु स्पष्टमेव प्रश्नत्रयं च ॥ ६८ ॥

ततः श्रीगुरुः किं समादध इत्यत आह प्रमाणादीत्यादिभुजंगप्रयातेन—

प्रमाणाद्यसंभावनादिस्तवेयं यदीक्षस्व तर्हि त्वमात्मोपशान्त्यै ।
चतुर्लक्षणीं भाष्यकारादिरीत्या तथा चेदियात्ते प्रबोधप्र-
दीपः ॥ ६९ ॥

अये जिज्ञासो यदि तवेयं प्रमाणाद्यसंभावनादिरेतल्लक्षणा चतुर्विधप्रतिबन्धाव-लिरस्ति तर्हि त्वमात्मोपशान्त्यै निरुक्तशङ्कामूलीभूतचेतोदोषनिरासार्थमित्यर्थः । भाष्येति । आदिना भामत्यादिः । चतुर्लक्षणीमुत्तरमीमांसाम् । ईक्षस्व । तथा चेत्यादि स्फुटमेव । आदिपदाभ्यां प्रमेयसाधनादिविपरीतभावनाग्रहः ॥ ६९ ॥

ननु यदाहं श्रीमद्भिर्मां प्रति निरुक्तप्रमाणाद्यसंभावनादिमूलकोक्तप्रश्नचतुष्टयस-माधानार्थं त्वं भाष्यकारादिरीत्योत्तरमीमांसामेव परिशीलयेति तत्र प्रथम प्रवाधतो

ब्रह्मजिज्ञासेत्यधिकरणे भाष्यादिनैव सह पूर्वाचार्यग्रन्थविरोधस्तेन कथं मदीयसंशयविलयः संभवेदित्यभिसंधाय तद्विरोधं ध्वनयितुं प्रथमं तत्रत्यभाष्याद्यर्थमेव संक्षेपेणानुवदति—श्रीभाष्यादीतिशार्दूलविक्रीडितेन—

श्रीभाष्यादिमतेऽथशब्दगदितोऽस्त्यर्थो मुमुक्षावधे-
रानन्तर्यमखण्डसाधनगणात्संशुद्धरुध्यन्मतेः ।
तद्वत्कर्मफले क्षयित्वकथनाज्ज्ञानाच्च मोक्षोक्तितः
सूत्रे प्राथमिके स्फुटीभवदतःशब्देन तत्संभवः ॥७०॥

श्रीशब्दः पूजार्थः । श्रीमन्मुमुक्षुमोक्षप्रदतत्त्वज्ञानदानदक्षत्वलक्ष्मीशालि च तद्भाष्यादि चेति तथा । आदिपदेन पञ्चपादिकादि । तस्य यन्मतं तस्मिन्नित्यर्थः । संशुद्धेति । सम्यक्शुभसंस्कारैकप्राचुर्यपर्यन्तं शुद्धा सत्त्वैकप्राधान्येन निर्मलाऽत एव रुध्यन्ती स्वयमेव योगाभ्यासमन्तरेव स्तब्धीभावाख्यनिरोधपरा च मतिर्बुद्धिर्यस्य स तथा । तस्याधिकारिण इत्यर्थः ।

मुमुक्षेति । मुमुक्षा प्रागुक्तलक्षणा मोक्षेच्छा अवधौ पर्यन्ते यस्य स तथा । अत्र लम्बकर्णमानयेत्यादिवत्तद्गुणसंविज्ञानबहुव्रीहौ तु तदसंग्रहापत्तेः । पञ्चमीयम् । एतादृशात् । अखण्डेति । अखण्डः प्रागुक्तलक्षणत्वेन कैवल्यपर्यन्तत्वान्निरन्तरः । एतादृशो यः साधनानां नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिषट्संपदादीनां श्रवणाद्यन्तरङ्गाणां गणः संघस्तस्मादित्यर्थः । आनन्तर्यमव्यवहितोत्तरभावित्वमेव ।

अथेति । अथशब्देन सौत्रेण गदितः कथित इत्यर्थः । एतादृगर्थोऽस्तीत्यन्वयः । एवमतःशब्दार्थमपि कथयति—तद्वदित्यादिना । ज्ञानान्मोक्षोक्तितश्चेति योज्यम् । एवम् । तदिति तस्य निरुक्तसाधनचतुष्टयानन्तरमेव ब्रह्मजिज्ञासुना तद्विचारः कार्य इति नियमस्य संभवो युक्तत्वावश्यंभाव इत्यर्थः । अत इति । प्राथमिके अथातो ब्रह्मजिज्ञासेति शास्त्रारम्भघटके सूत्रे । स्फुटीभवदिति संबन्धः । अपरं तु सरलमेव ।

तथा चाऽऽहुः श्रीमद्भाष्यकारचरणा एव । तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते । अतःशब्दो हेत्वर्थः । यस्माद्वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति—तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयत इत्यादि । तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयति—ब्रह्मविदाप्नोति परमित्यादीति ॥ ७० ॥

ननु भवत्वेवं भाष्यादिसंमतोऽर्थः प्रथमसूत्रस्याथापि तद्विरुद्धोऽसौ केन प्राचीनाचार्येण कथं लिखित इत्यतस्तं विशदयति—ब्रह्मानन्देत्यादिना साम्यध्वनकेन तेनैव वृत्तेन—

ब्रह्मानन्दमते त्वथार्थ उदितस्तद्वै मुमुक्षेतरत्
ल्यब्लोपेऽपि च पञ्चमी अत इमां लब्ध्वा मुमुक्षामिति ।
युक्तं चैतदतःपदस्य विरहेऽप्यार्थोऽस्ति तत्संभवो
मोक्षेच्छाऽन्यदपि प्रयोजकतया वाच्यं न तत्केवलम् ॥७१॥

तुशब्दो वैलक्षण्यार्थः । अथार्थः—अथातो ब्रह्मजिज्ञासेतिसूत्रीयाथशब्दार्थः । तद्वै तदेव नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमादिसाधनसंपदिति साधनत्रयमेवेत्यर्थः । मुमुक्षेतरत्—मुमुक्षामात्रमेव साधनचतुष्टयात्पृथक्कृत्येत्यर्थः । उदित उक्तः । अस्तीति शेषः । ततः किं तत्राऽऽह—ल्यबित्यादिना । अत इमां मुमुक्षां लब्ध्वेत्यतःशब्दार्थे ल्यब्लोपे पञ्चमी चोक्ताऽस्तीत्यन्वयः ।

पञ्चमी अत इत्यत्र संध्यभावस्तु—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षत इति वचनात् ।

धिक्तां च तं च मदनं च इमां च मां चेति भर्तृहरिवाक्यवदेतद्वाक्येऽपि तत्त्वादेवाविरुद्ध इति बोद्धव्यम् । यद्येतत्कल्पनमगतिकगतिकमिति चेत्तर्हि पञ्चमीत्यत इमामिति पठ । तेनेतिपदमुक्तवाक्यसंग्राहकं हेतुसंग्राहकं च स्यात् । तथा च न कोऽपि दोषः प्रत्युत गुण एव । इतिशब्दद्वयं तु विभिन्नान्वयीति नैव पौनरुक्त्यावहमिति । अपि चेति निपातावुक्तवाक्यद्वयसमुच्चायकावेव ।

ननु भवत्वेवं मतभेदेन व्यवस्था । तथा, अल्पाक्षरमसंदिग्धं न्यायवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरिति पाराशरपुराणोक्तसूत्रलक्षणात्सूत्रस्यानेकार्थताया गुणत्वेनापीति च कोऽत्र विरोध इति चेत्सत्यम् । मतभेदेन व्यवस्थासंभवेऽपि किं मतं हेयं किंवोपादेयमिति मुमुक्षोस्तत्रापि संदेहात् । सूत्रे विश्वतोमुखत्वलक्षणमनेकार्थत्वं गुण एवेति मनसि निधायैव श्रीमद्भाष्यकारचरणैरस्याधिकरणस्याध्यासागतार्थत्वाधिकारिशास्त्रारम्भाभिधैश्चतुर्भिर्वर्णकैः परस्पराविरोधेनैवानेकार्थत्वस्योक्तत्वाद्विरुद्धानेकार्थत्वस्य तु संदेहाधायकत्वेनानौचित्याच्च ।

वस्तुतस्तु ब्रह्मानन्दोक्तसूत्रमुक्तावलीविवृतनिरुक्तलक्षणसूत्रार्थ एव श्लाघ्यः सयुक्तिकत्वादित्याशयेनाऽऽह—युक्तं चैतदित्याद्युत्तरार्धेन । एतत्पूर्वार्धोक्तं ब्रह्मानन्दमतम् । चोऽवधारणे । तथा च निरुक्तमतमेव युक्तं सयुक्तिकत्वाद्योग्यं भवतीत्यर्थः । तत्र हेतुं प्रतिपादयति—अतः पदस्येत्यादिना । यतोऽतःपदस्य विरहेऽननुभवेऽपीत्यर्थः । तत्संभवो ब्रह्मविचारकर्तव्यतासंभवः । आर्थ आर्थिकः । ब्रह्मविचारविधिर्नान्तरीयकसिद्धः । अस्ति । तथा यतः । मोक्षेति । नित्यानित्यवस्तुविवेकादित्रयमपी-

त्यर्थः । प्रयोजकतया । निरुक्तविधौ मुमुक्षासंपादनद्वारकतया । कारणं वाच्यं न तु तत्केवलं साक्षात्कारणं वाच्यमत एतदेव युक्तमिति ॥ ७१ ॥

ननु किमस्मिन्नेवाधिकरणेऽयमस्ति विरोधः किंवाऽग्रेऽपि सर्वत्र तत्तदधिकरणेष्वपीत्याशङ्कायामाऽऽगमनादित्यान्त्यमङ्गी करोति—इत्यादिष्विति प्रहर्षिणीपूर्वार्धेन—

इत्यादिष्वधिकरणेषु तेषु तेषु
ते तेऽन्येऽप्यभिविलसन्त्यलं विरोधाः ।
तच्छेदं किल करुणानिधिं विना त्वां
कः कुर्यान्नलहृदयोदयोदयाभः ॥ ७२ ॥

इतिशब्दः प्रोक्तानुवादार्थः । अधिकरणेषु, अधिकरणसूत्रेष्विति यावत् । तल्लक्षणं तूक्तमभियुक्तैः—

विषयो विषयश्चैव पूर्वपक्षस्तथोत्तरम् ।
सिद्धान्तश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं मतमिति ।

आदिपदमग्रिमाधिकरणसंग्रहार्थम् । ते ते वक्ष्यमाणाः । अलं विपुलम् । अभिविलसन्ति सयुक्तिकत्वेनाखिलान्तर्वाण्यादरणीयतया रमणीयतामापद्यन्त इत्यर्थः ।

ततः किं तत्राऽऽह -तच्छेदमित्युत्तरार्धेन तद्ध्वंसनप्रार्थनं संस्तवानुकम्पनं ध्वनयञ्श्लेषादिना । भो सद्गुरो इत्यार्थिकमेवात्र संबोधनम् । तदिति । तेषां वक्ष्यमाणविरोधानां यच्छेदः प्रध्वंसस्तमित्यर्थः । किलेत्यवधारणे । निरुक्तविरोधप्रध्वंसनमेवेति यावत् । करुणेति । कृपापीयूषपारावारमित्यर्थः । एतेन सद्यः सर्वविरोधबाधनधुरंधरत्वं संबोध्ये श्रीगुरौ ध्वन्यते ।

एतादृशं त्वां विना । कः । नलेति । नलस्य दमयन्तीपतेः प्रसिद्धस्य यद्धृदयं तत्र या उदया नैषधीयचरितप्रथमसर्गोक्ततद्धृतसुवर्णवर्णराजहंसकरुणवाक्यश्रवणोत्तरमाविर्भूतोत्कटकृपा तस्या य उदयस्तद्वदा समन्ताद्भासत इति तथा । कुर्यान्न कोऽपि करिष्यतीत्यन्वयः । अयं भावः । स यथा विशब्दवाच्यनिरुक्तराजहंसाख्यपक्षिरोधबाधको द्रुतमेव तन्मोचनेनाभूत्तद्वत्त्वमपि प्रकृतविरोधबाधादस्मन्मोचको भवेति । अत्र करुणो रसः । लुप्तोपमाश्लेषादयोऽलंकाराः ॥ ७२ ॥

एवं शिष्यवाक्यमाकर्ण्याऽऽचार्यस्तमाश्वासयञ्श्रवणेऽभिमुखयति—शृण्वित्यादिवसन्ततिलकया—

शृण्वत्र तत्त्वमतिगूढतमं यदस्ति
सर्वं गुरोः करुणयैव वयं वदामः ।
आचार्यवर्यमतभेदरहस्यजातं
वाक्यैकवाक्यघटनाप्रतिपाटवेन ॥ ७३ ॥

करुणयैवेत्यवधारणं स्वामानित्वध्वननार्थम् । आचार्येत्यादि । वाक्यैकेत्यादि । भावप्रधाननिर्देशाद्वाक्यैकवाक्यतासंपादनास्त्वित्यर्थः । भतीति । परमनैपुण्येन । यतः । अत्र मताविरोधे । अतिगूढतमं तत्त्वं यदस्ति तद्वयं सर्वं वदामोऽतस्त्वं शृण्विति संबन्धः । शिष्टं तु स्पष्टमेव ॥ ७३ ॥

अथ श्रीगुरुः प्रतिज्ञातं भाष्यादिरहस्यं विशदयति—भाष्यादेस्त्वित्यादिशार्दूलविक्रीडितेन—

भाष्यादेस्तु यथाश्रुतग्रहधियां योऽर्थस्तमादाय वै
ब्रह्मानन्दमुनिर्विरुद्धमवदत्तत्खण्डनार्थ्ये वसन् ।
नित्यानित्यविवेक एव करणं वैराग्य एवं क्रमा-
न्मोक्षेच्छां प्रति तत्प्रयोजकमहो न स्यात्किमु
व्योमवत् ॥७४॥

आदिना पञ्चपादिकादिः । तुशब्दः प्रोक्तशङ्काशान्त्यर्थः । यथेति । यथाश्रुतस्यैव न तूहापोहितस्य । ग्रहो ग्रहणं शब्दार्थादेः संग्रहणं यया तादृशी धीर्बुद्धिर्येषां मन्दप्रज्ञानामधिकारिणामित्यर्थः । योऽर्थः प्रतिभासत इति शेषः । तं वै तमेवार्थम् । आदायानूद्य । ब्रह्मानन्दमुनिः । तदिति । तादृगर्थनिराकरिष्णुरेव सन् । विरुद्धं प्राक्त्वदुपन्यस्तरीत्या भाष्यादेर्यथाश्रुतार्थविरुद्धमित्यर्थः । अवदत्सूत्रमुक्तावल्यामुक्तवानित्यन्वयः ।

ननु तथाऽपि मुमुक्षायां तत्प्राक्तनसाधनत्रयप्रयोज्यत्वं कथं तत्राऽऽह—नित्येत्यादिना । वैराग्ये प्रागुक्तलक्षणे दृश्यानादरे विषये । नित्यानित्यविवेक एव करणं दृङ्मात्रनित्यत्वप्रमया दृश्यस्य मिथ्यात्वे तत्र मृगजलवद्रागानुदयात् । एवमनया कार्यकारणभावरीत्या । क्रमादनुक्रमेण वैराग्यं शमादिसंपदं प्रति करणं शमादिसंपन्मुमुक्षां प्रति करणमिति प्राक्प्रपञ्चितेन । तन्नित्यानित्यवस्तुविवेकादि साधनत्रयम् । मोक्षेच्छां प्रति । अहो इति सादरसंबोधनम् । तन्निर्णायकमानससदस्यान्प्रति । अरण्ये ब्रह्मविद्योपदेशकाले बाधानां तेषामभावादिति भावः । प्रयोजकं परम्पराकारणम् । व्योमवदाकाशवत् । न स्यात्किमु । अपि तु स्यादेवेति संबन्धः ॥७४॥

व्योमदृष्टान्तमेव स्पष्टयति—आथर्वणीत्यादिवसन्ततिलकतया—

आथर्वणी श्रुतिरसौ क्रममेव वक्ति
भूतोद्भवे तदपि याजुषवाक्यतोऽत्र ।
तां पूर्वपूर्वमनुहेतुपरां यथाऽऽहु-
र्भाष्ये तथैव समभीप्सितमस्ति तेषाम् ॥ ७५ ॥

असौ । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरा पृथिवी विश्वस्य धारिणीतिमुण्डकोपनिषत्प्रसिद्धेत्यर्थः । आथर्वणी श्रुतिः । दश भूतोद्भवे–आकाशादिपञ्चमहाभूतोत्पत्तौ । क्रममेव वक्ति खं वायुरित्याद्याकाशाद्य क्रममात्रं कथयति । तदपि । एवं सत्यपि । अत्राद्वैतशास्त्रे । याजुषेति । तस्माद्वा एत स्माद्वात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवीति तैत्तिरीयकयजुर्वेदवचनादित्यर्थः ।

तां निरुक्तमुण्डकश्रुतिम् । पूर्वपूर्वमनु आकाशादिपूर्वपूर्वभूतानुसारेण । हेतुपर माकाशादिपूर्वपूर्वभूतमेव वाय्वाद्युत्तरोत्तरभूतं प्रति कारणमिति प्रतिपादिकामि यावत् । यथाऽऽहुः प्राचीनाचार्या इत्यार्थिकम् । तथैव हेतुकार्यभावेनैव नित्यानित्य वस्तुविवेकादिसाधनक्रमपठनम् । भाष्ये प्रागुदाहृतशारीरभाष्यवाक्ये । तेषां श्रीम द्भगवत्पादाभिधभाष्यकाराणाम् । समभीप्सितं समीहितमस्तीति योजना । तस्मा कोऽप्यत्र ब्रह्मानन्दवचोविरोधः ॥ ७५ ॥

एवं भाष्यकारस्वारस्यं श्रुतिदृष्टान्तेन स्पष्टीकृत्य ब्रह्मानन्दीयसूत्रमुक्तावलीग्रन्थैक वाक्यतां कुर्वन्तं श्रीगुरुं प्रति शिष्यः पुनः शङ्कते—नन्वित्यादिद्रुतविलम्बितेन—

**ननु शमादिविधायकवाक्यतो भजति साधनतां न मुमुक्षुता ।**
**इति न सूत्र इदं खलु युज्यते क्वचिदपीति न तेऽपि समत्वतः ॥७६**

ननु सति कुड्ये चित्रमिति न्यायेनाऽऽदौ मुमुक्षाया एव शमादिविधायकवाक्य काण्वमाध्यंदिनीयोभयोरपि पाठेऽनवलोकनात्क नाम तदानन्तर्यविचारावसर इति शङ्कते नन्विति । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्य तीति काण्वपाठः। श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदिति माध्यंदिनीयः पाठ तत्रोभयत्रापि मुमुक्षासंग्रहाभावान्मुमुक्षुता मोक्षेच्छुता । साधनतां श्रवणाद्यङ्गत्वम् न भजति नैव प्राप्नोति । इति हेतोः । सूत्रे, अथातो ब्रह्मजिज्ञासेति शास्त्रारम्भा धिकरणसूत्र इत्यर्थः । इदं प्रागुक्तं मुमुक्षानन्तर्यम् । न खलु युज्यते नैवाथशब्दे ग्रहीतुं युक्तं भवतीति पूर्वपक्षान्वयः ।

अथ सिद्धान्ती गुरुः समाधत्ते–नेत्यादिशेषेण । तत्र हेतुं प्रतिपादयति–तेऽपी त्यादिना । ब्रह्मानन्दतात्पर्यानभिज्ञस्य यथाश्रुतसूत्रमुक्तावलीग्रन्थेन भाष्याद्दिदूषक स्याथ विवेकादिसाधनत्रयानन्तरमत इति ल्यब्लोपे पञ्चमीमां मुमुक्षामवाप्येत्यादि सूत्रं योजयतस्तवापीत्यर्थः । समत्वतः शमादिविषयकवाक्यापठितमुमुक्षाया ल्यब्लो पञ्चमीं कृत्वाऽपीमां मुमुक्षामवाप्येति योजनया ग्रहणसाम्यादित्यर्थः ॥ ७६ ॥

एवं तर्हि को वा ब्रह्मानन्दाभिमतोऽर्थ इत्यतस्तमाह— विजिज्ञासस्व त्वमिति शिखरिण्या—

विजिज्ञासस्व त्वं तदिति खलु सूत्रस्य विषयः
प्रधानस्तस्याङ्गं खलु शमदमादेर्विधिवचः।
विवेकाद्यप्यत्र स्फुरति न मुमुक्षेव तदपि
तदानन्तर्यं ते यदि किमपराद्धं वद तया॥ ७७॥

अयि भृगूपलक्षिततत्तन्मुमुक्षो। त्वम्। तज्जन्यजगज्जन्मादिकारणत्वोपलक्षितं ब्रह्म। विजिज्ञासस्व गुरूपसत्त्योपनिषदादिषु विचारयस्वेत्यर्थः। इति खलु अयमेव सूत्रस्याथातो ब्रह्मजिज्ञासेति शास्त्रारम्भाधिकरणस्येत्यर्थः। प्रधानो मुख्यो विषयो विचार्योऽर्थोऽस्तीत्येतत्। ततः किं तत्राऽऽह—तस्येत्यादि। तस्य प्रधानविधेः। अङ्गमेव। शमेति। विधीति। शमदमादिविधिवाक्यं शान्तो दान्त इत्याद्युदाहृतशमदमादिसंबन्धिनो विधिपदेष्टावश्यानुष्ठापकवाक्यं निरुक्तप्रधानविध्यर्थस्याङ्गमेव भवतीति संबन्धः।

एवमपि किं प्रकृत इत्यत आह—विवेकेति। अत्र शमादिविधिवाक्ये। विवेकाद्यपि नित्यानित्यवस्तुविवेकेहामुत्रफलभोगविरागाख्यप्रथमसाधनद्वयमपि मुमुक्षेव न स्फुरति नैव यद्यपि भासते। तदपि। एवं सत्यपि। ते ब्रह्मानन्दग्रन्थविरोधवादिनस्तव। यदि तदानन्तर्यं विवेकादिसाधनत्रयानन्तर्यं संमतम्। तर्हि तया मुमुक्षया किमपराद्धमिति त्वमेव वदेति योजना। तथा च श्रूयते—अतोऽन्यदार्तम्। कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते। ब्रह्मविदाप्नोति परम्। तद्विजिज्ञासस्वेत्यादि॥ ७७॥

ननु भवत्वेवं ब्रह्मानन्दस्य भाष्यादियथाश्रुतार्थग्राहिभ्रमभञ्जकत्वं तत्तात्पर्यव्यञ्जकत्वेन तथाऽपि भाष्यादौ सूत्रगतस्यातःशब्दस्य निरुक्तसाधनसंभववर्णनपरत्वमनुपयुक्तमेव। उक्तसाधनचतुष्टयानन्तर्यलक्षणाथशब्दार्थकथनमात्रेणैव तत्संभवस्यार्थसमाजसिद्धत्वादन्यथोक्तसाधनचतुष्टयानन्तर्यलक्षणाथशब्दार्थकथनस्यैव भाष्यादावयुक्तत्वाच्च। तथा चैवमपि न सूत्रमुक्तावत्युक्तभाष्यादिदोषावमोष इति शङ्कते—निरुक्तेत्यादिशिखरिण्यैव—

निरुक्तानन्तर्ये सति यदपि सामर्थ्यविभवा-
त्फलत्येवैतेषां समभिमततत्संभव इति।
अतःशब्दात्तस्य स्फुटनमपि नो युक्तमिति न
स्फुटोक्त्या तद्दार्ढ्यध्वननमित इष्टं भगवतः॥ ७८॥

अनुपदोक्तनित्यादिविवेकादिसाधनचतुष्टयानन्तर्यलक्षणेऽथशब्दार्थे वर्णिते सती-त्यर्थः । यदपि यद्यपि । एतेषां भाष्यकाराणाम् । समभिमतेति । सम्यगभिमतः सयुक्तिकत्वेन प्रागुक्तरीत्या संमत इति यावत् । स चासौ तत्संभवस्तेषां निरुक्तसाधनानां संभवः प्रतिबन्धकत्वावच्छेदकावच्छिन्नाभावेन सकलसामग्रीपरिपाकश्चेति तथा । सामर्थ्येति । अवश्यकार्यकारित्वमाहात्म्यादित्यर्थः । फलत्येव पर्यवस्यत्येवेति यावत् । इति हेतोः । अतःशब्दात् । अथातो ब्रह्मजिज्ञासेति सूत्रपठितादतःशब्दवाच्याभिमतहेतोः । तस्य भाष्यकाराभिमतनिरुक्तसाधनचतुष्टयप्रातियोगिकसंपूर्णप्रतिबन्धविधुरसकलसामग्रीपरिपाकस्येत्यर्थः । नो युक्तं नैव योग्यं भवतीत्यन्वयः । एवं च ल्यब्लोपे पञ्चम्या सौत्रातःशब्दसार्थक्यं ब्रुवाणस्य ब्रह्मानन्दस्यैव व्याख्यानमनवद्यमिति भावः ।

एवं पूर्वपक्षे प्राप्ते समाधत्ते—इति नेति । इति प्रकृतमाक्षेपजातं न नैव कर्तव्यमित्यर्थः । कुत इत्यपेक्षायां तत्र हेतुं व्युत्पादयन्भाष्यकारस्वारस्यं स्पष्टयति—स्फुटेत्यादिविशेषेण । यतः । भगवतो भाष्यकारस्य । इतः प्रकृतसूत्रगतादतःशब्दात् । तद्दार्ढ्येति । तस्यार्थात्सिद्धस्य निरुक्तसाधनचतुष्टयसिद्धिसंभवस्य दार्ढ्यं दृढत्वं तस्य ध्वननं सूचनमित्यर्थः । स्फुटोक्त्या स्पष्टोक्त्या । इष्टमस्तीति ॥ ७८ ॥

ननु निरुक्तरीत्या तावदथातो ब्रह्मजिज्ञासेति सूत्रेऽतःशब्देन भाष्यकाराणां नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंभवकथनात्तद्दृढत्वं भवतु सुसमभिमतं ततश्चाऽऽपातिकस्य वावदूकप्रकटितस्य तस्य व्युदस्तत्वमपि तथाऽपि ब्रह्मानन्दमते विवेकाद्यदार्ढ्यं भाष्येण सह विरोधाद्दूषणान्तरमप्यधिकं प्राप्तमित्याशङ्कां शमयिष्यन्नथशब्दार्थस्याधस्तादेव मतद्वयेऽपि निर्गलितमनूद्य जिज्ञासापदार्थमपि साध्याहारं साम्येन समभिधत्ते—भाष्य इत्यादिशार्दूलविक्रीडितस्य त्रिपाद्यन्त्यपादाभ्याम्—

> भाष्ये साधनसंभवोऽत इति गीःस्वा(स्वा)रस्यतः संमतो
> ब्रह्मानन्दमुनिर्ल्यपः क्षपणतस्तत्रावदत्पञ्चमीम् ।
> मोक्षेच्छाविषये प्रवक्ति च ततः प्रत्यक्षतां ब्रह्मणो
> जिज्ञासापदलक्षिते विवरणे तुल्योभयोः कार्यता ॥७९॥

भाष्ये अथातो ब्रह्मजिज्ञासेति सूत्रीये श्रीमद्भगवत्पादीये शारीरकभाष्य इत्यर्थः । अत इतीत्यादि । निरुक्तसूत्रस्थातःशब्दस्वारस्येनेति यावत् । साधनेति । निरुक्तविवेकादिरूपब्रह्मविचारसाधनप्रतियोगिकावश्यंभावयोग्यत्वमित्यर्थः । संमतोऽस्तीत्यध्याहृत्यान्वयः । ब्रह्मानन्देति । ल्यप एतदाख्यप्रत्ययस्य व्याकरणप्रसिद्धस्येत्यर्थः । तत्र लुप्तल्यप्प्रत्ययस्थाने पञ्चमी ल्यब्लोपे पञ्चमीति वैयाकरप्रसिद्धां पञ्चमीं विभक्तिमित्यर्थः । तदवदत्तस्योपादाने संबन्धः ।

अयमभिप्रायः। इहात इति पदमिदंशब्दस्य पञ्चम्यास्तसिलिति पञ्चमीस्थलविहिततसिल्प्रत्ययान्तमेव। सा च पञ्चमीदंशब्दनिष्ठत्वेनेमामानन्तर्यार्थकाथशब्दविवक्षितनित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगविरागशमादिसंपदाख्यसाधनत्रयप्रयोज्यां मोक्षोत्कलिकारूपां बुद्धिवृत्तित्वेन साक्षिप्रत्यक्षां मुमुक्षामवाप्येति विवक्षितल्यपो लोपे शास्त्रकृते जातेतिसूत्रमुक्तावलीकृन्मते निरुक्तविवेकादिसाधनत्रयोत्तरं तत्प्रयोज्यामिमां मुमुक्षामवाप्य जिज्ञासुना गुरूपसत्त्या ब्रह्म वेदान्ते विचार्यमिति सूत्रार्थः पर्यवसित इति ।

ननु ब्रह्मानन्देनैतावत्कुसृष्टिं कृत्वा भाष्योक्तार्थापेक्षया किमधिकमासादितमित्यत आह—मोक्षेच्छेत्यादिना प्रत्यक्षतामित्यन्तेन । ततः प्रोक्तातःशब्दार्थविचारे ल्यब्लोपे पञ्चम्यङ्गीकारेणेत्यर्थः । सार्वविभक्तिकोऽयं तसिः । मोक्षेति । मोक्षविषयिण्या इच्छाया विषयो मोक्ष एव तस्मिन्निति यावत् । मोक्ष इति सप्तम्यन्तं विषयविवक्षया विहाय मोक्षेच्छाविषय इति गुरुतरोक्तिस्तु निरुक्तातःशब्दव्याकृत्यनुरोधेनैवेति ध्येयम् ।

एवं चातःप्रतिपादितरीत्येमां मुमुक्षामवाप्येति वदता ब्रह्मानन्देन मोक्षविषयकेच्छायाः सामान्यत इच्छात्वेनैव कामः संकल्प इत्यादिश्रुतेरन्तःकरणधर्मत्वादेव साक्षिप्रत्यक्षत्वसिद्धावपि पुनस्तत्त्वाभिधायकेदंशब्दप्रयोगादिदमस्तु संनिकृष्टमिति प्राचां वचनात्सविशेषणविधिनिषेधन्यायेन विशेषणीभूते मोक्ष एव पर्यवस्यति । तथा च मोक्षेच्छाविषये मोक्षे । प्रत्यक्षतां च स्वप्रकाशाद्वैतब्रह्मात्मानन्दैकरूपतया नित्यापरोक्षतामिति प्रवक्ति प्रकर्षेण प्रतिपादयतीति योजना ।

स च न्याय इत्थं प्रसिद्ध एव शास्त्रे—सविशेषणविधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध इति । तत्र पुत्री जातः शिखी ध्वस्त इति प्राचामुदाहरणे । अत्र पुत्री जात इति सविशेषण एव विधिः। पुत्राख्यविशेषणेन सहैव जातत्वस्य विधानात् । स च विशेष्यीभूते देवदत्ते प्रागेव जातत्वेन बाधित इति विशेष्ये बाधसत्त्वाद्विशेषणीभूते पुत्र एव जातत्वलक्षणो विधिः पर्यवस्यति । तेन देवदत्तस्य पुत्रो जात इत्येव तदर्थः फलति । एवं शिखी ध्वस्त इति सविशेषण एव निषेधः । शिखाख्यविशेषणेन सहितस्यैव देवदत्तस्य ध्वस्त इत्यनेन निषेधात्। सोऽपि च विशेष्यीभूतस्य देवदत्तस्य संन्यासोत्तरमपि विद्यमानत्वात्तत्र बाधित एव । तथा च विशेषणीभूतशिखायामेवोपसंक्रामति । तेन च देवदत्तः प्रव्रजित इत्येव तदर्थः पर्यवस्यतीति ।

साहित्यसारे तु मयाऽयं न्यायो भङ्ग्यन्तरेणैवोक्तः । तद्यथा—

स्वपरोद्भासकस्यापि बलवद्भासके सति ।
स्वमात्रभासकत्वं स्यात्सौरालोके प्रदीपवत् ॥
विशिष्टवाचके शब्दे तद्वत्सति विशेषणे ।
विशेष्यमात्रवाचित्वं करिबृंहितवद्भवेत् ॥

अत्र विस्तरस्त्वेतट्टीकायामेव सरसामोदाख्यायां ज्ञेयः। ब्रह्मजिज्ञासापदार्थस्तूभयमतेऽपि सम एवेत्याह–ब्रह्मण इत्यादिशेषेण। विवरणे विचारे। शिष्टं तु स्पष्टमेव ॥७९॥

ननु कामः संकल्प इत्यादिश्रुतेः कामशब्दितायाः सामान्यतः सर्वेच्छाया अपि मनोवृत्तिविशेषत्वेन साक्षिप्रत्यक्षतासत्त्वेऽप्युक्तरीत्येदंत्वेन तदुक्तिः प्रोक्तन्यायेन तद्विषयीभूतमोक्षप्रत्यक्षपर्यवसायिनी नैव संभवति। मोक्षस्य हि प्रत्यक्षत्वं यत्साक्षादपरोक्षाद्ब्रह्मेत्यादिश्रुतिभिः स्वप्रकाशत्वेन नित्यापरोक्षब्रह्मणः सकाशात्। एतावदरे खल्वमृतत्वमतोऽन्यदार्तमिति श्रुतेस्तथाऽविद्यास्तमयो मोक्ष इति निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित इति च वार्तिकोक्तेश्च पृथक्त्वाभावादेव वक्तव्यम्।

तथा च तत्प्रत्यक्षत्वं ब्रह्मात्मैक्यसाक्षात्कारैकायत्तम्। तत्सत्त्वे तु द्वैतस्यैवाभावात्क नामोक्तमुमुक्षादीत्याशङ्क्य नित्यानित्यवस्तुविवेकादिसकलसामग्रीजन्यत्वेन मोक्षेच्छायाः प्रकृते वार्तमानिकत्वादेव प्रत्यक्षत्वं न तु प्रव्रजितस्य मम गार्हस्थ्यावस्थायामग्निहोत्रेच्छाऽभूदितिवद्भूतेच्छात्वेन मम स्वर्गप्राप्तौ सत्यां रम्भासंभोगेच्छा भूयादितिवद्भविष्यदिच्छात्वेन वा परोक्षत्वं विवक्षितम्। न चैवं तर्हि पूर्वपद्ये मोक्षेच्छाविषय इत्यादिमूलव्याख्याने कथं त्वयैव तथोक्तमिति सांप्रतम्। तस्य ब्रह्मानन्दद्वयभिप्रायकत्वादित्यभिसंधाय समाधत्ते–यस्मादितिस्रग्धरया–

**यस्मादाम्नाय एव प्रवदति सकलः पुण्यसाध्यस्तु लोकः**
**क्षय्यास्ते कर्मजत्वात्कलमवदिति सद्युक्तिपूर्वं प्रयत्नैः।**
**नाशित्वं जन्यसौख्येऽमृतमपि मितितस्तद्विवेकादिजायां**
**मोक्षेच्छायां न किं सेत्युचितमुभयतोऽप्यापरोक्ष्याद्द्वयोश्च॥८०॥**

यस्माद्धेतोः। आम्नाय एव वेद एव, न त्वितिहासादिः। सकलः संपूर्णः। न तु यत्किंचित्। तेन मूलप्रमाणाकाङ्क्षा। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिश्रुतीनां निरवधिकत्वं च प्रत्युक्तम्। तुशब्दोऽप्यर्थे। पुण्यसाध्योऽपीत्यर्थः। लोकः स्वर्गादिः। क्षयी विनाश्येव। आस्ते भवति। एवं संपूर्णलोकपक्षकक्षयित्वप्रतिज्ञायां हेतुं व्युत्पादयति–कर्मेति। अग्निहोत्रादिक्रियासाध्यत्वादित्यर्थः।

तत्र दृष्टान्तं स्पष्टयति–कलमवदितीति। शालिविशेषोपलक्षितसस्यादिलोकवदिति यावत्। इतिशब्दोऽनुमानोपसंहारार्थः। सदिति। निर्दुष्टानुमानात्मकयुक्तिपुरःसरमित्यर्थः। क्रियाविशेषणमिदम्। प्रयत्नैः। जन्येति। एतेन नित्यकूटस्थात्मरूपमोक्षसुखव्यावृत्तिः सूचिता। नाशित्वं विनश्वरत्वम्। प्रवदति—तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति च्छान्दोग्याष्टमप्रपाठक एव परिपठति।

तथा । मितिः । प्रमित्येत्यर्थः । ब्रह्मात्मैक्यविषयिण्येत्यार्थिकम् । अमृतमपि मोक्षः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतमित्यमरात्कैवल्यमित्यर्थः । अपिः समुच्चये । तेन प्रवदतीत्यत्राप्यनुकृष्यम् । तथा च श्रूयते तैत्तिरीयोपनिषदि—ब्रह्मविदाप्नोति परमिति । तत्तस्माद्धेतोः । विवेकादिजायां नित्यानित्यवस्तुविवेकेन प्रागुक्तरीत्या जायमाने इहामुत्रार्थफलभोगविरागे ततः शमादिषट्कसंपत्तौ जातायां ततः प्रकृत-मोक्षेच्छायाम् । सा वर्तमानकालिकान्तःकरणवृत्तित्वेन साक्षिप्रत्यक्षविषयतेति यावत् । न भवति किम् । अपि तु भवत्येवेति हेतोः । उभयतोऽपि भाष्यादिग्रन्थद्वयेऽपि । द्वयोराचार्ययोरपि । चोऽप्यर्थे । आपरोक्ष्यान्निरुक्तसाक्षिप्रत्यक्षविषयत्वात् । प्रकृतमुमुक्षाया इति शेषः । उचितं सूत्रयोजनं युक्तमेव भवतीत्यन्वयः ।

अत्र प्रयत्नैरित्यनेनोक्तानुमाने यदि जन्यसौख्येऽविनाशित्वं स्यात्तर्हि, अक्रिया-साध्यत्वमपि स्यात् । यतः क्रियासाध्यत्वं वर्ततेऽतो विनाशित्वमपि वर्तत इत्यनुग्राहकतर्कवाक्यप्रयोगाः सूचिताः । उपलक्षणमिदं दृश्यानित्यत्वानुमानादीनामपि । तानि च यथा— दृश्यमनित्यम् । द्वैतत्वात् । व्यतिरेके ब्रह्मवत् । सत्—अविनाशि । चित्त्वात् । व्यतिरेके जडवत् । चित्—अपरिच्छिन्ना । चित्त्वात् । व्यतिरेके घटवत् । आत्मा परमानन्दः । परप्रेमास्पदत्वात् । व्यतिरेके पटवत् । ब्रह्म—अद्वैतम् । प्रत्यक्त्वात् । व्यतिरेके जगद्वत् । इत्यादीनि यथायथमूह्यानि ।

एतदनुग्राहकाः पञ्चविधान्वयव्यतिरेकास्तूक्ताः सिद्धान्तबिन्दौ—दृग्दृश्यान्वयव्यतिरेकः । साक्षिसाक्ष्यान्वयव्यतिरेकः । आगमापायितदवध्यन्वयव्यतिरेकः । दुःखिपरप्रेमास्पदान्वयव्यतिरेक इति । अनुवृत्तव्यावृत्तान्वयव्यतिरेकोऽपि पञ्चमः । एतच्च सर्वेषां वेदान्तानुकूलतर्काणां चतुर्लक्षणीमीमांसाप्रतिपादितानामुपलक्षणमित्यभियुक्ता इति ।

अत्राऽऽगमापायीत्याद्यन्वयव्यतिरेकद्वये तु न्यायरत्नावली । एवमागमापायितयो-त्पत्तिविनाशवत्त्वरूपया सर्वदृश्यानां कादाचित्कत्वम् । आत्मा तु तेषामवधिरागमा-पायशून्यत्वात् । यथा वृष्टिमतां देशानां वृष्टिशून्या गङ्गाऽवधिरुच्यते । तथा च तेषां तत्र तादात्म्येनानुपपन्नेन व्यतिरेकः । एवं दुःखिन उपलभ्यमानस्याहंकारादेः परम-प्रेमास्पदात्माभिन्नत्वात्तयोस्तादात्म्यरूपान्वयेनानुपपद्यमानेनाऽऽत्मन्यहंकारादि कल्पि-तमिति ॥ ८० ॥

न केवलं मोक्षेच्छाप्रत्यक्षत्वमेव भाष्यादिमतद्वये समानं किंत्वन्यदपीति कथयन्सूत्रयोजनभङ्ग्येकभिन्नत्वं तेन पर्यवसन्नमिति फलितं निगमयति—तस्मादित्यादि-शार्दूलविक्रीतेन—

तस्मात्कर्मफलं क्षयीति विदुषा शास्त्रादितैः साधनै-
युक्तेन प्रमितेः फलं कलयितुं कार्या विचारश्चितेः ।
इत्यर्थः सम एव यद्यपि मतो भाष्ये च मुक्तावलौ
सूत्रस्यास्ति तथाऽपि योजनविधौ भङ्ग्येव भिन्ना परम् ॥८१॥

यस्मान्मोक्षेच्छायाः प्रोक्तनित्यानित्यविवेकादिसाधनत्रयजन्यतया वार्तमानिकत्वात्साक्षिप्रत्यक्षविषयत्वसाम्यं भाष्यसूत्रमुक्तावलीकृदुभयमतसिद्धं तस्माद्धेतोरित्यर्थः । कर्मफलं संध्यावन्दनाग्निहोत्रादिधार्वान्नत्यनैमित्तिककाम्यादिक्रियाफलं स्वर्गादिकमिति यावत् । क्षयि विनाशि । इति विदुषा निरुक्तश्रुत्यादिजन्याबाधितप्रमावताऽधिकारिणेत्यर्थः । एतेन ब्रह्मलोकान्तकर्मफलीभूतविषयसुखस्य विनाशित्वप्रमया ततो निर्विण्णत्वमधिकारिणि द्योत्यते ।

शास्त्रादितैः—परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदिति च श्रुत्यादिशासितैरिति यावत् । साधनैस्तत्त्वज्ञानान्तरङ्गसाधनैरित्यर्थः ।

युक्तेन विशिष्टेन जिज्ञासुना । प्रमितेर्ब्रह्मविदाप्नोति परमित्यादिश्रुतिशतप्रबोधितब्रह्मात्मैक्यविषयकाप्रतिबद्धप्रमाया इत्यर्थः । फलमविद्याध्वस्तिलक्षणस्वप्रकाशाखण्डानन्दाद्वितीयब्रह्मात्मावस्थितिरूपमुक्तिसंज्ञकं साध्यमिति यावत् । कलयितुं संपादयितुम् । चितेरद्वैतब्रह्मात्मनः । विचारः प्रोदाहृतश्रुत्युक्तगुरूपसत्तिपूर्वकं चतुर्लक्षण्युत्तरमीमांसागतश्रीमद्भगवत्पादीयभाष्यादितात्पर्यनिर्णयानुकूलश्रवणाख्यात्मकचित्तवृत्तिव्यापार इत्यर्थः । कार्यः समनुष्ठेय इत्यन्वयः ।

ततः किमागतं प्रकृत इत्यत आह—इतीत्याद्युत्तरार्धेन । इति निरुक्तप्रकारकः । सूत्रस्यार्थः । अथातो ब्रह्मजिज्ञासेति शास्त्रारम्भाधिकरणस्य वाक्यार्थः । यद्यपि भाष्ये श्रीमच्छारीरकभाष्ये । तथा मुक्तावलौ ब्रह्मानन्दविरचितसूत्रमुक्तावल्यां । सम एव तुल्य एवास्ति । तथाऽपि । सूत्रस्य योजनविधावन्वयविरचने । भङ्ग्येव सरणिरेव । परं केवलम् । भिन्ना भवतीति संबन्धः ॥ ८१ ॥

ननु भवत्वेवं भाष्यादौ सूत्रार्थसाम्येऽपि सूत्रयोजन एव केवलं भङ्गीभेदस्तावताऽपि तत्तदवान्तरतात्पर्यं तु किंचित्स्यादेवान्यथा भङ्गीभेदोऽपि नैव भूयादित्याशङ्क्य तत्कथनपूर्वकं तदविरोधमभिदधानः समाधत्ते—मोक्षेच्छेत्यादिस्रग्धरया—

मोक्षेच्छावाद्यर्थमेवापनमति वत तत्र्भमवाद्युक्तिजालै-
र्भाष्यादौ तत्तु मुक्तावलिकृदपि वरं मन्यते स्पष्टमेव ।

भाष्यादेरेतदेवाभिमतमिति परं तस्य तात्पर्यजातं

वक्तुं चाऽऽपातिकार्थं व्युदसितुमपि किं नैष तस्य प्रयासः ॥८३॥

भाष्ये निरुक्तसूत्रगतश्रीमद्भगवत्पादीयभाष्ये इत्यर्थः । मोक्षेति । परमबुभुक्षु-मुमुक्षासमकक्षमोक्षेच्छातीव्रत्वमेवेति यावत् । वर्नेति हर्षे । तदिति । तस्य मोक्षेच्छा-दार्ढ्यस्य यः संभवोऽवश्यंभवनयोग्यतानियमः । आदिना तत्प्रतिपादकश्रुतियुक्ति-विशेषास्तेषां यान्युक्तिजालानि श्रोतुश्चित्तस्य विषयेभ्यः समाकर्षकत्वेन जालतुल्यव-चनवृन्दानि तैरित्यर्थः । उपनमति बुभुत्सुनिकट एव पर्यवस्यतीति यावत् ।

ततः किं तत्राऽऽह—तदित्यादिना । तु पुनः । तन्मोक्षेच्छादार्ढ्यम् । मुक्तेति । ब्रह्मानन्दोऽपि । वरमुत्कटम् । स्पष्टमेव । अत इति ल्यब्लोपे पञ्चमी । एवं च नित्या-नित्यविवेकादिसाधनत्रितयमयी त्यामिमां मुमुक्षामवाप्येति वाक्येन मुमुक्षाया साधनत्र-यप्रयोज्यत्वेनैव दार्ढ्यमिति स्पष्टमेव मन्यते स्वो करोतीत्यन्वयः ।

नन्वथाप्येतावदायासेनास्य को लाभ इत्याकाङ्क्षायामाह—भाष्यादेरित्युत्तरार्धेन । भाष्यादेः प्रकृतसूत्रभाष्यादेः । आदिना पञ्चपादिकादिः । एतदेवाभिमतम् । एव चाथ भाष्यादेः सूत्रयोजनमतः कर्मफलानामनित्यत्वात् । अथ कर्मफलानित्यत्वनिर्णयजन्यनि-त्यानित्यवस्तुविवेकादिमुमुक्षान्तपूर्वपूर्वहेतुकोत्तरोत्तरसाधनचतुष्टयदार्ढ्योत्तरम् । ब्रह्म-जिज्ञासा ब्रह्मविचारः कर्तव्य इति पाठक्रमादर्थक्रमो बलीयानिति न्यायेन सम्मत-मित्यर्थः ।

इत्युक्तप्रकारकम् । तस्य भाष्यादेः । तात्पर्यजातं यावत्स्वारस्यम् । वक्तुम् । तथाऽऽ-पातिकार्थम् । यथाश्रुतप्रतीयमानार्थम् । व्युदसितुं दूरीकर्तुमपि । एष निरुक्तमूलमुक्ता-वल्युपपादितसूत्रार्थादिकथनलक्षणः । तस्य ब्रह्मानन्दस्य । प्रयासः प्रयत्नः । न भवति किमपि तु भवत्येवेति योजना । वैराग्यादिदार्ढ्यमेवेष्टमित्युक्तं वार्तिके—

नरकादिव निर्विण्णो यावन्नाब्रह्मणो नरः ।

न तावदधिकारोऽस्ति कैवल्यज्ञानवर्त्मनि ॥

त्यक्तसर्वक्रियस्यैव संसारं प्रजिहासतः ।

मुमुक्षोरेव चैकात्म्ये प्रत्यन्तेष्वधिकारितेति च ॥

अत्र त्यक्तेत्यनेनैकदण्डग्रहणात्मकं पारमहंस्यम् । जिज्ञासोरिति पाठः ॥ ८२ ॥

किंचैवं भाष्यतात्पर्यवर्णने दूषणान्तरमपि विनिवारितं भवतीति तदुपन्यासपुरः-सरं प्रतिपादयन्ति—एवं चेत्यादिसग्धरया—

एवं चात्रैष दोषोऽप्यपसरति च यः कैश्चिदुच्येत धीरै-
जिज्ञासोद्देशतो वः किल समभिमता कार्यताऽस्मिन्विधेया ।
हेतुस्तत्रास्त्यतो वाग्विवृतिनिगदितः पुण्यजन्यक्षयित्वं
तद्धेतुः पक्षवृत्तिर्न भवति तदसौ साध्यसिद्धिः क वेति ॥ ८३ ॥

एवं चैतादृशभाष्यादिग्रन्थयुगुलतात्पर्यवर्णनपूर्वकमुभयाविरोधपरिशोधनेनेत्यर्थः । अत्र प्रकृतसूत्रभाष्ये । एष वक्ष्यमाणत्वेन बुद्धिस्थः । दोषोऽप्यपसरत्येव दूरं गच्छत्येव । अपिः प्रागुक्तभाष्यसूत्रमुक्तावल्यैक्यसमुच्चये । चोऽवधारणे । तेन दोषापसरणे पुनर्युक्त्यन्तरसद्भावेन तदुपसरणसंभवाभावः सूच्यते । कोऽसावित्यत्राऽऽह—य इत्यादिविशेषणेन । यः कैश्चित्कविकल्पितत्वेनाप्रसिद्धनामकैः । एतादृशैरपि । धीरैः । धियं बुद्धिं श्रोतुरित्यार्थिकम् । ईरयन्ति शास्त्रविचारे प्रेरयन्तीति तथा तैरित्यर्थः ।

एतेन तदुक्तदोषस्य विनोक्तभाष्यतात्पर्यवर्णनं दुरुद्धरत्वं ध्वन्यते । उच्येत उपन्यस्येत । यच्छब्देन सर्वनाम्ना तत्स्वरूपं तु निगूढमेव संपन्नमित्यतस्तद्विशदयति-जिज्ञासेत्यादिना । जिज्ञासापदलक्ष्यब्रह्मविचारोद्देशेनेत्यर्थः । वः श्रीमद्भाष्याद्यनुयायिनां युष्माकम् । अस्मिन्प्रकृते ब्रह्मविचारे कार्यताऽव्यवधानेन विधेयता । किलेति निश्चितम् । समभिमता सम्यङ्मान्याऽस्तीति संबन्धः ।

ततः किं तत्राऽऽह—हेतुरित्याद्युत्तरार्धेन । तत्र निरुक्तब्रह्मविचारपक्षकविधेयतासाधने । अत इत्यादि । अत इति वागथातो ब्रह्मजिज्ञासेति सूत्रस्थातःशब्दस्तस्य या विवृतिर्भाष्यकारविरचितव्याख्यानं तेन निगदितः कथित इत्यर्थः । एतादृशः । हेतुर्लिङ्गम् । पुण्येति । पुण्येन सुकृतेन जन्यं यत्स्वर्गादिविषयसुखं तस्य यत्क्षयित्वं विनाशित्वम् । अस्ति । तस्माद्धेतुः कर्मफलविनाशित्वरूपं लिङ्गम् । पक्षवृत्तिः पक्षीभूतब्रह्मविचारे विद्यमानः । न भवति । तत्तस्माद्धेतोः । असौ कर्मफलनिष्ठक्षयित्वहेतुकत्वेन प्रसिद्धा । साध्यसिद्धिः साध्यस्य ब्रह्मविचारपक्षे कार्यत्वाख्यप्रतिज्ञातस्य सिद्धिः संसिद्धिः । क वा स्यान्न कापि भवेदिति पदं दोषोपसंहारार्थम् । एवं च निरुक्तरीतिकसूत्रयोजनायां नैवैष दोषः प्रसरिष्यतीत्याशयः ॥ ८३ ॥

फलितमाह—तादित्या, उपजात्या—

तद्भाष्यपीयूषनिधेः समुद्धृता
मुक्तावली तेन तु नो विरुद्धा ।
संग्रथ्य सूत्रेषु ततो रसज्ञैः
कण्ठे धृता मुक्तिविलासकामैः ॥ ८४ ॥

तत्तस्मादुक्तरीतिकभाष्यसूत्रमुक्तावल्यविरोधोपपादनाद्धेतोरित्यर्थः । भाष्येति । श्रीमच्छारीरकसूत्रस्थश्रीमद्भगवत्पादीयभाष्यरूपामृतसमुद्रात्सकाशादिति यावत् । समुद्धृता सम्यक्तत्तात्पर्यकान्तिसद्वृत्तादिगुणपरीक्षणपूर्वकमेव निष्काशितेत्यर्थः । ब्रह्मानन्देनेत्यार्थिकम् । ईदृश्यत एव । तु पुनः । तेन भाष्येण सह यतो विरुद्धा प्रतिकूला नो नैव भवति । अत एव । सूक्ष्मदर्शिभिरिति शेषः । एतादृशै रसज्ञैः । रसो वै स इति श्रुतेः शब्दपरब्रह्मनिष्ठैरित्यर्थः । पक्षे स्वकीयाशृङ्गाररसनिष्णातैः । सूत्रेषूत्तरमीमांसासूत्रेषु । पक्षे इति सूक्ष्मक्षौमतन्तुष्विति यावत् । संग्रथ्य संबध्य । ततोऽनन्तरम् । मुक्तीति । जीवन्मुक्तिस्वस्वसुन्दरीविहरणपरायणैः सद्भिरित्यर्थः । कण्ठे धृताऽस्तीति संबन्धः । अत्र पीयूषेति विष्णुविलासालयात्क्षीराब्धेरप्याधिक्यं भाष्ये ध्वन्यते । शान्तशृङ्गारौ रसौ । रूपकाद्वयोऽलंकाराः ॥ ८४ ॥

एवं भाष्यादेर्विरोधपरिहारपुरःसरं वाक्यैकवाक्यताकरणेन संभावितगर्वखर्वीकरणार्थं भाष्यादेर्गम्भीरतात्पर्यकत्वस्वामानित्वं च सूचयति—अद इत्यादिशिखरिण्या—

अदः श्रीभाष्यादेः सकलमुनिबन्धस्य कुधियो
विदुर्नो तात्पर्यं तदिह विमतिं यान्ति सहसा ।
अतो ब्रह्मिष्ठानां सकलमपि शास्त्रं कलयतां
गुरूणामेवाहं सरणिमनुयातोऽस्मि कथकः ॥ ८५ ॥

श्रीति । श्रीरद्वैतब्रह्मात्मैक्यविषयकाप्रतिबद्धापरोक्षप्रमारूपसंपदेव तस्या एव सकलसंसाररूपदारिद्र्यविद्रावकत्वेन मुख्यलक्ष्मीत्वात् । तदुक्तं बृहद्वासिष्ठे—

प्रशान्तमोहदारिद्र्यो दुराशो दोषसंक्षये ।
विवेकधनसंभारात्स्थितोऽस्मि परमेश्वर ॥ इति ।

तत्कार्ये तादृशो यो भाष्यादिः श्रीमद्भगवत्पादीयशारीरकभाष्यप्रमुखस्तस्येत्यर्थः । आदिना पञ्चपादिकादिः । एतादृशस्य । अत एव सकलेति । अदः—अदसस्तु विप्रकृष्टमिति वचनात्कुध्यधिकारिदृष्ट्याऽतिदूरमित्यर्थः । एतादृशं तात्पर्यं कुधियोऽत एव नो विदुर्नैव जानीयुर्यतः । तत्तस्माद्धेतोरिह भाष्यादौ विषये । सहसाऽविचारितप्रवृत्तिमत्त्वेनैव । विमतिं विरुद्धबुद्धिमित्यर्थः । यान्ति प्राप्नुवन्तीत्यन्वयः ।

अतः कारणात् । कथको वादकथाप्रवृत्तः । पक्षे संदेशावबोधकः । एतादृशोऽहम् । सकलमपि सर्वमपि शास्त्रं कलयताम् । शब्दब्रह्मपारंगतानाम् । तत्रापि ब्रह्मिष्ठानाम् । श्रोत्रियमित्यादिश्रुतेरनुभूतब्रह्मात्मैक्यतत्त्वानामिति यावत् । एतादृशाम् । अत एव । गुरूणामाचार्याणामेव । सरणिं पद्धतिं सांप्रदायिकरीतिमनुयातोऽस्मीति ॥ ८५ ॥

एवं शास्त्रारम्भसूत्रभाष्यादौ विरोधशङ्कासमाधानेऽपि तत्प्रसङ्गतः शिष्यस्तत्र विषयवाक्येऽपि शङ्कते—विजिज्ञासस्व त्वमित्यादिशिखरिण्या—

विजिज्ञासस्व त्वं तदिति विषयत्वेन कलितं
वचः श्रीभाष्यादौ यदि भवति सूत्रानुगुणकम् ।
कथं श्रोतव्यादिश्रवणमननादेर्विधितया
वचस्तत्त्वेनोक्तं ननु तदपरैस्तर्हि गुरुभिः ॥ ८६ ॥

तथा च तैत्तिरीयाः समामनन्ति—भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । इत्युपक्रम्य । मध्ये वाक्यद्वयमुक्त्वा—यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेतीति । तत्र हे भृगो ब्रह्मपुत्र त्वं तद्विश्वोत्पत्त्याद्यभिन्ननिमित्तोपादानकारणीभूतं ब्रह्म । विजिज्ञासस्वेति वचः प्रकृतश्रुतिवाक्यम् । विषयत्वेनाथातो ब्रह्मजिज्ञासेति सूत्रस्येति शेषः । श्रीति । श्रीमत्सकलजीवन्मुक्तजीवनु(क्रममुक्तीच्छूपासकतारणार्थं जीवादिति) मुमुक्षुपूज्यत्वेन निरतिशयैश्वर्यशालितयाऽत्यलौकिकशोभावानेतादृशो यो भाष्यादिः श्रीमच्छंकरभगवत्पादीयशारीरभाष्यप्रभृतिसूत्रप्रस्थानीयनिखिलनिबन्धस्तस्मिन्नित्यर्थः । कलितं प्रतिपादितमस्तीत्यार्थिकम् ।

तद्यदि सूत्रानुगुणकं निरुक्तसूत्रोक्तजिज्ञासापदानुकूलमेव भवति । तर्हि तदपरैः श्रीमद्भाष्यकारभिन्नैः प्रायः सर्वैरपि गुरुभिः पूर्वाचार्यैः । श्रवणेति । आदिना निदिध्यासनम् । एतेषां लक्षणानि त्वग्रे मूलादावेवाभिधास्ये । विधितया तव्यप्रत्ययघटितविधित्वेन । श्रोतव्यादि । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । प्रतीकार्थमेव श्रोतव्येति प्रातिपदिकग्रहणम् । वचो मैत्रेयीब्राह्मणवाक्यम् । तत्त्वेन निरुक्तसूत्रविषयवाक्यत्वेन । कथमुक्तं ननु । तथा चेदं वक्तुमयुक्तमेवेति भावः ॥ ८६ ॥

अथोक्तशङ्कां समाधास्यन्गुरुर्जिज्ञासापदेन सिद्धान्तसंमतं वेदान्तविचारमेव लक्षणयेष्टं तद्धेतुतल्लक्षकपूर्वकं स्पष्टयति—इच्छेत्यादिवसन्ततिलकया—

इच्छा गुणैकमितिजेति न पुंविधेया
तल्लक्षितः किल सनाऽत्र विचार उक्तः ।
प्रत्यक्परैक्यविषयश्रुतिशेखराणां
तात्पर्यनिर्णयसमर्थमनःक्रियात्मा ॥ ८७ ॥

गुणैकेति । गुणज्ञानमात्रजन्येत्यर्थः । इति हेतोः । यतः पुंविधेया न भवति । तत्तस्माद्धेतोः । सना जिज्ञासेति सन्प्रत्ययेनेत्यर्थः । अथातःसूत्रे । किलेति भाष्या-

दिप्रसिद्धः । प्रत्यगित्यादि । जीवब्रह्मैक्यविषयकवेदान्तवाक्यानामिति यावत् । तात्पर्येति । एतादृशः । अत्र सौत्रजिज्ञासापदे । विचार एव लक्षितः प्रेक्षितजहत्स्वार्थान्यलक्षणावृत्तिविषयतयाऽङ्गीकृतोऽस्तीत्यध्याहृत्यान्वयः ॥ ८७ ॥

ननु भवत्वेवमथातो ब्रह्मजिज्ञासेति सूत्रे जिज्ञासापदेन भाष्यादिसिद्धान्ते ब्रह्मविचारे लक्षणा तथाऽपि प्रकृते तद्विजिज्ञासस्वेत्यादिविषयवाक्यविषयकाक्षेपे किमागतमित्याशङ्क्य सारस्य कथनेन समाधत्ते—सोऽयमित्यादिशार्दूलविक्रीडितेन—

**सोऽयं न श्रवणं विना न मननं नो वा निदिध्यासनं**
**स्यादित्येव कृपालुभिर्गुरुवरैः श्रोतव्य इत्यादिकम् ।**
**वाक्यं वेदशिरोविचारचतुरैः श्रीन्यायमालादिषु**
**प्रोदाहृत्य विचारितं विवरणं वाञ्छद्भिरुक्तश्रुतेः ॥ ८८ ॥**

स पूर्वग्रन्थप्रकृतः प्रत्यक्परैक्यघटकवेदान्तवाक्यनिष्ठब्रह्मविषयकविचारः । अयं कर्तव्यत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्ष इत्यर्थः । श्रवणं वक्ष्यमाणलक्षणं विना न स्यात्तथा मननं विनाऽपि न स्यात्तथा निदिध्यासनं विनाऽपि नो स्यान्नैव भवेदित्यर्थः । वक्ष्यमाणलक्षणत्वं मननादावपि बोध्यम् । वाशब्दः समुच्चये । इत्येव इति हेतोरेव । कृपालुभिः करुणाशीलैरिति यावत् । गुरुवरैः प्राचीनाचार्यैः । श्रोतव्य इत्यादिषु । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति वाक्यं श्रवणादिविधिवाक्यमित्यर्थः ।

वेदेति । उपनिषदर्थविवेककुशलैरिति यावत् । उक्तेति । तद्विजिज्ञासस्वेति सूत्रानुगुणकविचारविधायकश्रीमद्भाष्योदाहृततैत्तिरीयकश्रुतेरित्यर्थः । विवरणं विवेचनम् । वाञ्छद्भिरिच्छद्भिः । श्रीति । उत्तरमीमांसाधिकरणमालादिग्रन्थेष्वित्यर्थः । आदिनैतद्ग्रन्थप्राचीनार्वाचीनानामुक्तश्रवणादिविधिबोधकोक्तवाक्यमेव निरुक्तसूत्रविषयतया विचारयतां संग्रहः । प्रोदाहृत्य विचारितमस्तीति संबन्धः । तथा च भाष्योदाहृतवाक्यं तद्विजिज्ञासस्वेति विचारैकविधायकमिदं तु तत्साधनश्रवणादिविधायकमित्यविरोध इति बोध्यम् ॥ ८८ ॥

अथ शिष्यः श्रवणादिविधिवाक्येऽत्र किमपूर्वविधिः सिद्धान्ते संमतः किंवा नियमोऽथवा परिसंख्येति पूर्वतन्त्रसंमततल्लक्षणतदुदाहरणपूर्वकं पृच्छति—वाक्येत्यादिस्रग्धरायाः—

**[illegible]प्रापिताऽतिस्फुटतरफलकः किं विधिस्तेऽस्त्यपूर्वो**
**यो [illegible] जैमिनीयैः ।**



पक्षाप्तानाप्तलेशप्रभरणफलकः सोऽथवा वाञ्छितस्ते
व्रीहीनेवावहन्तिप्रभृतिषु नियमः संमतो योऽस्ति तेषाम् ॥८९॥

तत्राप्याद्यद्वयस्य क्रमादेतत्पूर्वोत्तरार्धाभ्यां प्रश्नोऽन्त्यस्य त्वग्रिमपद्येनेति विभागः। अयि श्रीगुरोऽत्र श्रवणादिविधिवाक्ये। ते तव। वाक्येति। वाक्यादन्येन मानेनाप्रापितो वाक्यैकप्राप्तो योऽर्थस्तस्य या प्राप्तिः सैव स्फुटतरं फलं यस्य स तथेत्यर्थः। एतादृशः। अपूर्वो विधिः संमतोऽस्ति किम्। यो जैमिनीयैः पूर्वमीमांसकैः। व्रीहीन्प्रोक्षतीतिप्रभृतिषु वचनेष्वादृतोऽभूदित्यन्वयः।

पक्षेति। पक्षे प्राप्तोऽनाप्तो यो लेश एकांशस्तस्य यत्प्रभरणं पूरणं तत्फलं यस्य स तथेत्यर्थः। सोऽथवा नियमः। ते वाञ्छितः। यो व्रीहीनेवावहन्ति, इतिप्रभृतिषु वाक्येषु तेषां पूर्वमीमांसकानां संमतोऽस्तीति ॥ ८९ ॥

एवमुक्तश्रवणादिविधावपूर्वादिविधिद्वयं सपरिकरं शिष्यः पृष्ट्वाऽथ परिशिष्टं परिसंख्याविधिमपि तथा पृच्छति—अङ्गस्यैवेत्यादिस्रग्धरयैव—

अङ्गस्यैवाङ्गिनोः स्याच्छ्रुतित उपगमो वाऽङ्गयोराङ्गिनि स्या-
द्युक्त्याद्यादृशोऽर्थेऽन्यतरहृतिफलः पारिसांख्यो विधिर्यः।
मन्त्रेणेमामगृभ्णन्निति तदनुगिरा तद्वदश्वाभिधानी-
मादत्ते चेत्यमेष श्रवणविधिपरे प्रोक्तवाक्ये किमिष्टः ॥९०॥

यथा चयनेऽश्वगर्दभयो रशनाग्रहणे 'इमामगृभ्णन्रशनामृतस्य' इति मन्त्रस्येमां पूर्वप्रकृताश्वगर्दभसंबन्धित्वेन प्रकृतामृतस्य साक्षादनुभूतस्याश्वादे रशनां बन्धनरज्जुमगृभ्णन्नध्वर्युर्गृह्णन्सन्निति यथाश्रुतार्थसामर्थ्याविशेषाद्युगपत्प्राप्ते सतीत्यश्वाभिधानीमादत्ते इति तैत्तिरीयकसंहितासप्तमाष्टकस्थयेमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति शेषश्रुत्येति, इमामगृभ्णन्निति मन्त्रेणाध्वर्युरित्यार्थिकमश्वाभिधानीमश्वरशनेत्यश्वनाम्नाऽभिधानं यस्या रशनायास्तां रशनामादत्ते गृह्णीयादित्यभिप्रायया गर्दभरशनाग्रहणमात्रव्यावृत्तिफलकः पञ्च पञ्चनखा भक्ष्या इति श्रुत्या पञ्चसंख्यपञ्चनखतदितरपञ्चनखयोः साधारण्येनोभयोरपि मृगयाकर्तरि क्षत्रिये भक्षणप्राप्तौ सत्यां कूर्मादिस्मृतिपरिगणितपञ्चसंख्याकपञ्चनखान्यपञ्चनखभक्षणव्यावृत्तिमात्रफलकश्च क्रमाद्द्विविधः परिसंख्याविधिः। तदुक्तं सिद्धान्तलेशसिद्धान्तसूक्तिमञ्जर्याष्टीकायाम्—

अपूर्वो नियमोऽन्यस्य परिसंख्येति च क्रमात्।
त्रयो हि विधयस्तेषु श्रोतव्य इति को विधिः ॥ इति।

कारिकाविवरणे—उभयत्रैकस्योभयोर्वैकत्र युगपत्प्राप्तौ, अन्यतरनिवृत्तिफलको विधिस्तृतीय इति। तत्र प्रकृते प्रथमोदाहरणे तु—अश्वगर्दभरशने अग्निन्यो

एव । ग्रहणकालस्य व्यापारत्वेनाङ्गस्य तदन्यतरकर्मकत्वेन प्रधानत्वात् । तेनोभयोस्तयोरेकस्याङ्गस्य ग्रहणाख्यस्य श्रुतित इमामगृभ्णन्रशनामृतस्येत्यश्वा-भिधानमादत्त इति श्रुतिवाक्यत उपगमः प्राप्तिः स्याच्चेदित्यर्थः । चेत्यथवा । अङ्गयोः कूर्मादिपञ्चसंख्याकपञ्चनखतद्भिन्नपञ्चनखयोः प्रधानीभूतभक्षणाभिधा-ङ्गिनः कर्मत्वेनाप्रधानत्वादङ्गयोरुभयोरेकस्मिन्भक्षणाख्येऽङ्गिनि श्रुतितः पञ्च पञ्चनखा भक्ष्या इति श्रुतिवाक्यत उपगमः प्राप्तिः स्याच्चेत्तर्हीति प्राग्वदेव योजनम् । तादृशे निरुक्तलक्षणद्वयान्यतरलक्षण इति यावत् ।

अथ उदाहरणे । इमामगृभ्णन्निति मन्त्रेण । इमामगृभ्णन्रशनामृतस्येति मन्त्रेण तद्वत् । इत्यश्वाभिधानीमादत्ते इति तदनुगिरा तद्वाक्यशेषेणेत्यर्थः । चकारात्पञ्च पञ्चनखा भक्ष्या इति श्रुत्या चेत्येतत् । यः पारिसांख्यः परिसंख्याया अयं पारिसांख्यः । परिसंख्या-संबन्धीत्यर्थः । विधिर्भट्टमतप्रसिद्धभावनैकार्थकलिङ्लोट्तव्यान्यतमघटितवाक्यविशेष इति यावत् ।

ततः किं तत्राऽऽह—इत्थमित्यादिशेषेण । इत्थं निरुक्तलक्षणादिरीत्या । एष परिसंख्याविधिः । श्रवणविधिपरे श्रवणविधिबोधके । प्रोक्तवाक्ये, आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादिवचने । इष्टोऽप्याचार्यश्रीमच्चरणानां संमतोऽस्ति किमिति पृच्छामीत्यध्याहृत्यान्वयः ।

ननु निरुक्तमन्त्रोक्तप्रथमोदाहरणे ग्रहणस्य क्रियात्मकस्याङ्गत्वमश्वादिरशनयोर-ङ्गित्वं तथा पञ्च पञ्चनखा भक्ष्या इति कूर्मादिपरिगणितानां पञ्चानां पञ्चनखानां तद्भिन्नानां च तेषामङ्गत्वं भक्षणस्य क्रियात्मकस्याप्याङ्गित्वं यदुक्तं तत्र किं नियाम-कमिति चेदुच्यते ।

नहि प्रकृते कर्मकाण्डे द्रव्याद्यात्मकत्वेनाङ्गाङ्गिभावव्यवस्था किंतु गुणप्रधानभा-वेन । तत्राऽऽद्योदाहरणे रशनयोरेव कर्मोपयोगित्वात्प्रधानत्वं तेनाङ्गित्वम् । ग्रहणस्य तु तत्र द्वारत्वमात्रं तेनोपसर्जनत्वमेव । एवं द्वितीयोदाहरणेऽपि परिगणितपञ्च-नखानां तद्भिन्नपञ्चनखानां च भक्षणमन्तरा फलाजनकत्वादङ्गत्वमेवाप्रधानत्वात् । भक्षणस्य तु साक्षात्फलजनकत्वेन प्रधानत्वादङ्गित्वमेवेति सर्वमवदातम् ।

एवं च प्रधानयुगावच्छेदेनैकस्याप्रधानस्याप्रधानद्वये वैकस्य प्रधानस्यान्यतरनिवृ-त्तिफलकप्राप्तिमत्त्वं परिसंख्याविधित्वमिति निष्कर्षः । ततः प्रकृते श्रवणविधौ वेदान्त-विज्ञानसुनिश्चितार्था इति तं त्वौपनिषदं पुरुषं पृच्छामि, इति नावेदविन्मनुते तं बृह-न्तमिति च श्रोतव्यः श्रुतिवाक्येभ्य इत्यादिश्रुतिस्मृतिसहस्रैः शास्त्रयोनित्वादित्यधि-करणद्वितीयवर्णकभाष्यादिभिश्चोक्तग्रन्थतस्तथा लोकप्रसिद्धभाषाग्रन्थतश्चाद्वैतात्मश्रव-णप्राप्त्याऽन्तिमग्रान्थिनिवृत्तिफलकत्वमेवेति लक्षणसंगतिः ॥ ९० ॥

एवं शिष्यप्रश्ने प्राप्ते श्रीगुरुर्मतभेदेन तत्समाधित्सुः प्रथमं कुत्रचिन्न्यायेनोक्तविधित्रयमपि यदि सामान्यतः संभवेत्तर्हि प्रकृतश्रवणविधौ कस्तत्र सिद्धान्तसंमत इति भूयादपि स्वत्प्रश्नावसरः । परंतु तदेव प्रायः खण्डितमेव प्राचीनाचार्यैर्ग्रन्थान्तरे तथाऽपि सकलशिष्टसंप्रदायरीत्योक्तविधिविषये प्राच्यमतकथनं प्रतिजानीते—विधिरसायनेतिद्रुतविलम्बितेन—

**विधिरसायनरीतिवशादिदं त्रितयमप्यविचारसहं यतः ।**
**तदपि संव्यवहारपरम्परासरणितोऽत्र वदामि मतान्यलम् ॥९१॥**

विधिरसायनं हि प्रसिद्धमेवाप्पय्यदीक्षितानां तथा तत्र सुखयोजनाख्या व्याख्याऽपि । यतो यद्यपि । अत्र श्रोतव्य इति श्रवणविषये । अलं समर्थं यथा स्यात्तथा वदामीति संबन्धः ॥ ९१ ॥

तत्र प्रथमं प्रकटार्थाख्यग्रन्थकारगुरुवराणां मतं सोपपत्तिकं व्युत्पादयति—सामान्यादितिशार्दूलविक्रीडितेन—

**सामान्याच्छ्रवणं करोति न खलु श्रोतव्यसाक्षात्कृतिं**
**धर्मेऽदर्शनतो न तत्त्वविषयं तच्चेति युक्तं यतः ।**
**दृम्भिष्वन्वयतस्तदन्यत इह श्रीवामदेवादिषु**
**भ्रंशोऽतः प्रकटार्थकाङ्क्षिरुदितस्तत्रास्त्यपूर्वो विधिः ॥९२॥**

आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादिश्रुत्या आत्मसाक्षात्कृतिमुद्दिश्य तत्साधनत्वेनाद्वैतशास्त्रश्रवणं जिज्ञासोर्विधीयत इति निर्विवादमेव । तत्र श्रवणस्य श्रोतव्यार्थसाक्षात्कारकरणत्वव्याप्तिरेव प्रथमं हेतुत्वेन वक्तव्या । अन्यथा निरुक्तविधानामौचित्यात् । सा त्वन्वयव्यतिरेकोभयविधव्यभिचारादपि नैव घटत इत्याह—सामान्यादित्यादिना भ्रंश इत्यन्तेन ।

यतः । सामान्यात्, श्रवणत्वजातिरूपसामान्येन । श्रवणं श्रोतव्यसाक्षात्कृतिं स्वप्रतिपाद्यार्थापरोक्ष्यम् । न खलु करोति नैव संपादयति । कुत इति चेत्तत्र हेतुमाह—धर्मे इत्यादिना । उपलक्षणमिदमधर्मादेरपि । तेषां नित्यातीन्द्रियत्वात् ।

ननु यद्यत्तत्त्वविषयकं श्रवणं तत्तथा । धर्मादेस्तु सिद्धान्ते दृश्यत्वादिना कल्पितत्वादित्याशङ्क्य समाधत्ते—न तत्त्वेत्यादिना । चोऽवधारणे । तत्, श्रवणं तत्त्वविषयमेव स्वप्रतिपाद्यसाक्षात्कृतिं करोतीति युक्तं न भवति । कुत इति चेत्तत्रापि किं यत्र यत्र तत्त्वविषयकश्रवणत्वं तत्र श्रोतव्यसाक्षात्कृतिकारकत्वमित्यन्वयव्याप्तिरुत यत्र यत्र तत्त्वविषयकश्रवणाभावस्तत्र तत्त्वविषयकसाक्षात्कृत्यभाव इति व्यतिरेकव्याप्तिर्वा ।

माऽऽञ्च इत्याह—यत इत्यादिना। यत इह लोके दम्भिषु वेदान्तित्वं लोके मन्याप्योदरंभरिषु पुरुषखरेष्वित्यर्थः। अन्वयतोऽन्वयव्याप्तेरिति यावत्। अंशस्त-त्त्वविषयकश्रवणसत्त्वेऽपि तत्त्वविषयकसाक्षात्कृत्यभावेन भङ्गः। अस्तीति शेषः। तथा च देवदत्तः। तत्त्वसाक्षात्कारवान्। तत्त्वविषयकश्रवणवत्त्वादित्यनुमाने हेतोः साध्याभाववत्सु दम्भिषु विद्यमानत्वेन सव्यभिचारत्वं स्पष्टमेवेति भावः।

नान्योऽपीत्याह—तदन्यत इत्यादिना। इह शास्त्रे। श्रीति। श्रीः प्राग्जन्मकृत-निर्गुणाहंब्रह्मोपासनशालियोगैश्वर्यं तद्वन्तो ये वामदेवादयः। वामदेवः (व)ब्रह्मात्मै-क्यानुभवं प्रकृत्य। गर्भ एवैतच्छयानो वामदेव एवमुवाचेत्यैतरेयोपनिषदि प्रसिद्ध एव। स आदिर्येषामार्षसंज्ञकेन गुरुशास्त्रसामग्रीमन्तरैव जन्मान्तराभ्यस्तनिरुक्तोपा-सनापरिपाकवशादिह जन्मनि स्वयमेव प्रतिबन्धापगमे सति प्रादुर्भूताद्वैतबोधेन युक्ता-नाम्। अहं वृक्षस्य रेरिवेति तैत्तिरीयोपनिषदाम्नातसार्वात्म्यानुभवाविष्करणशालित्रि-शङ्कुनामकमहर्षिप्रभृतियोगीन्द्राणां तेष्वित्यर्थः।

तदिति। व्यतिरेकव्याप्तेः। अंश इत्यादि पूर्ववत्। एवमत्रापि। चैत्रः। तत्त्व-साक्षात्काराभाववान्। तद्विषयकश्रवणशून्यत्वादिति हेतोः साध्याभाववत्सु वामदे-वादिषु विद्यमानत्वेन तथात्वं स्फुटमेव। अतः श्रवणब्रह्मसाक्षात्कारयोः साध्यसाध-नभावस्यानुमानादिप्रमाणान्तरागम्यत्वाद्विधिरत्यन्तमप्राप्ताविति वचनसंमतः प्रकटार्थ-कृद्भिः प्रकटः स्वप्रकाशात्माभिन्नत्वेन स्पष्टोऽर्थः कैवल्यमुक्तिलक्षणश्चरमपुरुषार्थो यस्मिन्ग्रन्थे स तथा तं कुर्वन्तीति तादृशैराचार्यैरिति यावत्। तत्र निरुक्तसाध्यसा-धनभावबोधनविषये। अपूर्वो विधिरुदित उक्तो भवतीति योजना॥ ९२॥

नन्वेतैराचार्यैः प्रकटार्थकारास्यैरपूर्वविधिरेव श्रवणे प्रतिपाद्यते चेन्नियमादिविधिं प्रतिपादयद्भिरन्यैराचार्यैः सह तद्विरुद्धं स्याच्चद्वत्तेषामपि प्रतिपादनमेतद्विरुद्धं स्यादि-त्यद्वैतशास्त्रेऽत्र स्वपूर्वाचार्यविरोधपरिहार एव यदा सुदुर्भणस्तदा शास्त्रान्तरीयस्य तस्य तथात्वं किमुत वक्तव्यमित्यस्मिन्शास्त्रे प्रेक्षावन्मुमुक्षुप्रवृत्त्यभावेनाधिकारिवि-रहाद्विरुद्धत्वादनिर्णायकत्वात्संशयाधायकत्वाच्चानारम्भणीयमेवाद्वैतशास्त्रमित्याशङ्क्य समाधत्ते—अद्वैतेत्यादिस्रग्धरया—

अद्वैतब्रह्मसाक्षात्कृतिरिह न यतो लौकिकी तेन तत्र
कोपायो लौकिकः स्यादिति यदभिमतिस्तादृशं ते मुमुक्षुम्।
प्रोद्धर्तुं मोहपाशादनुपमकरुणाः प्रोचुरुक्तं विधिं त-
त्कान्यैस्तेषां विरोधो न हि शिखरशमीशाखयोश्चन्द्रभेदः॥९३॥

मतो हेतोः । इह संसारे । अद्वैतेति । ब्रह्मात्मैक्यविषयकाप्रतिबद्धापरोक्षप्रमा । न लौकिकी निरुक्तचरमप्रमा प्रत्यक्षादिवल्लौकिकप्रमाणजन्या नैव भवतीत्यर्थः ।

तथा चाऽऽम्नायते—वेदान्तविज्ञानसुनिश्चितार्था इति । नावेदविन्मनुते तं बृहन्तमित्यादि च । तेन हेतुना । तत्र निरुक्तसाक्षात्कृतिविषय इति यावत् । लौकिकः प्रत्यक्षादिप्रमासामग्रीलक्षणः । उपायः साधनविशेषः क स्यात्कालत्रयेऽपि नैव संभवतीत्यर्थः ।

इति प्रोक्तरीतिका । यदभिमतिर्यस्याभिप्रेता निश्चितिरस्तीत्यार्थिकम् । तादृशं मुमुक्षुम् । ते प्रागुक्तप्रकटार्थकाराः । मोहपाशादनाद्यविद्याबन्धात् । मोक्तुं पुनर्द्वैतास्फुरणलक्षणप्रकर्षेणोद्धारकर्मीकर्तुमिति यावत् । अनुपमेति । निरतिशयपरदुःखप्रहरणेच्छवः सन्त इत्यर्थः । उक्तमपूर्वाख्यम् । विधिं श्रोतव्य इति श्रुतिप्रसिद्धं श्रवणविधिम् । प्रोचुः प्रतिपादयांबभूवुरिति संबन्धः ।

तत्तस्माद्धेतोः । अन्यैरुक्तश्रुतावेव नियमविध्यादिस्वीकर्तृभिः प्राचीनाचार्यैः सहेत्यर्थः । क तेषां विरोधः स्यादधिकारिविशेषबुद्धिसमाधानाभिप्रायेणैव तथोक्तेर्न कालत्रयेऽपि विरोधः संभवेदित्यर्थः ।

एतदेवार्थान्तरन्यासेन समर्थयति—न हीत्यादिशेषेण । शुक्लद्वितीयाचन्द्रं दिदृक्षूणां मध्ये कंचित्प्रति कश्चिद्गिरिसुरवरागारान्यतरशिखरावच्छेदेनैव चन्द्रं समुपदिशति । कश्चित्तु कंचित्प्रति तं शमीवृक्षशाखाग्रावच्छेदेनैव समुपदिशति । नैतावतोभयोश्चन्द्रविषयकसाक्षात्कारे सति तद्भेदोऽस्ति लोके । तद्वदपूर्वविधिना वा नियमादिविधिना वा श्रवणे कृते सत्यद्वैतब्रह्मसाक्षात्कारोत्तरं तत्तदधिकारिणोस्तदीयोऽभेदो भवतीति ॥ ९३ ॥

अथैवं श्रीगुरूक्तव्यवस्थया वेदान्तशास्त्रीयतत्तदाचार्यमतविरोधपरिहारेऽपि शिष्यस्तत्रापि तद्विरोधं शङ्कते—सिद्धान्तलेशेत्यादिवसन्ततिलकया—

> सिद्धान्तलेशरचने ननु पूर्वपूर्व-
> दृष्ट्योत्तरोत्तरमतग्रथना प्रसिद्धा ।
> तत्तन्मुमुक्ष्वनुसृतेस्तु मतव्यवस्था
> भावत्कयसौ न किमु दीक्षितवाग्विरुद्धा ॥ ९४ ॥

नन्विति शङ्कासूचकमव्ययम् । सिद्धान्तेत्यादि । सिद्धान्तानामद्वैतशास्त्रीयप्रक्रियांशात्मकनिर्णीतार्थानां लेशः संक्षेपो यस्मिन्प्रसिद्धतरेऽद्वैतशास्त्रीये श्रीमदप्पय्यदीक्षितविरचिते प्रकरणग्रन्थे तस्य यद्रचनं संग्रथनं तस्मिन्नित्यर्थः । पूर्वपूर्वेति । पूर्वपूर्वमतदूषणसरण्यैव । उत्तरोत्तरेति । ऊर्ध्वोर्ध्वमतोपन्यसनेति यावत् । प्रसिद्धाऽस्तीति शेषः ।

तदुक्तं सिद्धान्तलेशसूक्तिमञ्जर्याम्—तत्रोपायापरिज्ञानादलौकिकसमीक्षणे । प्रकटार्थकृतः प्राहुरपूर्वं श्रवणे विधिमिति प्रथमं मतमुपन्यस्य । विचारस्य विचार्यार्थनिर्णयं प्रति हेतुता । अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता । प्राप्तैव किंत्वनियता भ्रान्तिप्राप्ताऽन्यसाधनैः । ततो नियम इत्याहुः सर्वे विवरणानुगा इति । अत्र पूर्वमतेऽलौकिकसमीक्षण उपायापरिज्ञानं यदपूर्वविध्यङ्गीकरणे कारणत्वेनोक्तं तदुत्तरमते तु तत्खण्डनं स्पष्टमेव ।

ततः किं तदाह—तत्तदित्युत्तरार्धेन । तुशब्दो वैलक्षण्यार्थः । असावनुपदोक्ता । तत्तदिति । तत्तद्बुभुत्सुबुध्यनुरोधेनेत्यर्थः । भावत्की यौष्माकीणा । श्लेषेण । भात्यद्वैतात्मतत्त्वं येनेत्यपरोक्षज्ञानं तद्विद्यते येषां तेषामियं तथेति यावत् । एतेन समाधानचौरेयत्वं ध्वन्यते । दीक्षितेति । श्रीमदप्पय्यदीक्षितवाचा सह विपरीतार्थशालिनीत्यर्थः । न भवति किमु, अपि तु भवत्येवेत्यन्वयः ॥ ९४ ॥

श्रीगुरुः साभयं समाधत्ते—शृणवत्रेति तयैव—

शृणवत्र दीक्षितरहस्यमतीव गुप्त-
माचार्यवर्यमतदूषणसिद्धये ते ।
नोपन्यसुः किल मतानि तथेति किंतु
तत्तन्मुमुक्षुधिषणागततारतम्यात ॥ ९५ ॥

अतीवेत्यादिविशेषणं तु सिद्धान्तलेशटीकाकृतामप्यगोचरत्वार्थम् । किं तदित्यत्राऽऽह—आचार्येत्यादित्रिपाद्या । ते दीक्षिताः । आचार्येति । दूषणस्य सिद्धिस्तस्या इत्यर्थः । तथा मतानि न किलोपन्यसुः किंतु । तत्तदिति । तत्तज्जिज्ञासुबुद्धिनिष्ठसंस्कारतारतम्यानुरोधादेव पूर्वपूर्वदोषाभिधानपूर्वकमुत्तरोत्तरमतान्युपन्यसुरिति संबन्धः ।

एवं चोक्ताधिकारिबुद्धिष्वेव तत्तद्दूषणानि न तु तत्तत्प्राचीनाचार्येष्विति नैव दीक्षितोक्त्या सह मद्व्यवस्था विरुध्यतीत्यभिप्रायः । एतेनोत्तरोत्तराचार्याणामपि पूर्वपूर्वाचार्यमतखण्डकत्वेनासुरवासनापत्तिर्व्युदस्ता ॥ ९५ ॥

ननु तत्तज्जिज्ञासुधीवासनानुसारेणैव प्राचीनैराचार्यैः प्रक्रियायां ते ते सिद्धान्ताः प्रतिपादिताः सन्ति, न तु सिद्धान्तलेशे यथाश्रुतं प्रतीयमानपूर्वपूर्वमतदूषणार्थमित्यत्र किं नियामकमित्याशङ्क्य श्रीमत्सुरेश्वराचार्यचरणप्रणीतं वार्तिकमेवेति समाधत्ते—यया ययेत्यादिप्रमाणिकया—

यया यया भवेदिति स्फुटं तथैव वार्तिके ।
निरूपितं सुरेश्वरैर्यतीन्द्रशेखरेश्वरैः ॥ ९६ ॥

यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थितेति हि तद्वार्तिकं प्रसिद्धमेव । नन्वितरे तावदाचार्या यथा स्वस्वमतप्रवर्तकास्तथैवैतेऽपि को वै तेषां विशेषः सिद्धान्तलेशे ह्येतन्मतस्यापि स्फुटं तत्साधारण्येनैव संग्रथितत्वादिति चेन्न । यथोत्तरं मुनीनां प्रामाण्यमिति वैयाकरणसिद्धान्तात्यथा त्रिमुनिव्याकरणं तथा त्रीश्वरमेवेदमद्वैतशास्त्रम् । सूत्रभाष्यवार्तिककाराणां हरिहरचतुराननावतारत्वस्य पुराणमाधवीयशंकरविजयादौ सुप्रसिद्धत्वादित्याशयेन तं विशिनष्टि—यतीन्द्रेत्यादिना । अत एव बहुवचनसार्थक्यमपि । प्रमाणिकालक्षणं तूक्तं वृत्तरत्नाकरे—प्रमाणिका जरौ लगाविति ॥ ९६ ॥

तत्रापि शिष्यः पुनः शङ्कते—नन्वित्यादिहरिण्या—

ननु कथमिदं भूयादार्यैर्यतो बत दीक्षिते-
र्विधिविवरणे स्वाभिप्रेतं रसायनरीतितः ।
तदुपरमणं स्वीकर्तॄणां मतं चरमं कृतं
परिमलमभिप्रोद्गायद्भिर्यथार्थकषट्पदैः ॥ ९७ ॥

नन्विदं प्राक्प्रतिपादितं सप्रमाणं युक्तिजातं कथं भूयात्सुस्थिरं स्यात् । कुत इति चेत्तत्राऽऽह—यत इत्यादिना । बतेति स्वपक्षानुकूलसंव्यवहारलाभाद्धर्षे । यतो हेतोः । आर्यैः परमपूज्यैः । दीक्षितैरप्पय्यदीक्षिताख्यैः सिद्धान्तलेशकारैः । विधिविवरणे प्रथमसूत्रविषयीभूते श्रोतव्य इति श्रुतिचोदिते श्रवणविधिविचार इत्यर्थः । रसायनेति । विधिरसायनरीत्येत्यर्थः । तत्र हि विधित्वावच्छेदकानवच्छिन्नः कोऽप्यपूर्वादिर्विधिनैव संभवतीति तैरुपपादितमिति प्रसिद्धमेव ।

स्वेति । निजसंमतम् । तदुपरमणं श्रवणे विधिसामान्याभावम् । स्वीकर्तॄणां भामतीकृतां वाचस्पतिमिश्राणामित्यर्थः । मतमेव । परिमलं परिमलाख्यं तद्व्याख्याकल्पतरुकल्पतरुव्याख्यग्रन्थव्याख्यानम् । पक्षे जनमनोहरं गन्धम् । अभीति । अभितः सर्वचतुर्लक्षण्यामपि प्रकर्षेण भेदवादिमात्रविदलनलक्षणेनोत्कटमुच्चैरुच्चमात्रहितं यथा स्यात्तथा गायद्भिर्मनोहरमुपपादयद्भिः सद्भिरित्यर्थः ।

पक्षे गुञ्जारवं कुर्वद्भिः । अत एव । यथार्थकेति । यथार्थकं सार्थकमेव षट् श्रुतिस्मृतिशास्त्रेतिहासपुराणार्षकाव्याख्यानि पदानि सर्वदा मननस्थानानि येषां तैरित्यर्थः । पक्षेऽन्वर्थषट्पदैर्भ्रमरैरित्यर्थः । चरममुत्तरमतकृतखण्डनर्हीनं कृतमस्तीति योजना । तस्मान्नाधिकारिबुद्ध्यनुसारेण व्यवस्था साध्वीत्याशयः ॥ ९७ ॥

अशोकशङ्कां शमयिष्यञ्श्रीगुरुरुपोद्घातमाह—अवच्छिन्नेत्यादिभुजंगप्रयातेन—

अवच्छिन्नवादस्तु वाचस्पतीष्टः
स्फुटं चैवमेवास्ति सिद्धान्तबिन्दौ ।
घटेत्यादिवेदोत्तमाङ्गीयरत्नै-
स्तमादिष्टवान्न्यायरत्नावलीकृत् ॥ ९८ ॥

तत्र किं मानमित्यत्राऽऽह—स्फुटं चैवमेवेत्यादिद्वितीयपादेन । ननु भवत्वेवमवच्छिन्नवादस्य वाचस्पतीष्टत्वे सिद्धान्तबिन्दोः प्रामाण्यं परं तु स एवाऽऽदावज्ञातलक्षण इत्यत्राऽऽह—घटेत्याद्युत्तरार्धेन । घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशस्तद्वज्जीवो नभोपमः ॥ इति अमृतबिन्दूपनिषद्याम्नायते । तस्मादेवमादीनि वेदोत्तमाङ्गीयरत्नानि वेदशिरोवाक्यरत्नानि तैरित्यर्थः । तमवच्छिन्नवादम् । न्यायेति । ब्रह्मानन्दाचार्यः । आदिष्टवान्मुमुक्षून्प्रत्युक्तग्रन्थे स्पष्टी चकारेत्यर्थः । विस्तरस्त्वग्रे तत्प्रघट्टक एव स्फुटी भविष्यति ॥ ९८ ॥

ननु भवत्वेवं किं ततः प्रकृत इत्यत आह—पक्ष इत्यादीन्द्रवज्रया—

पक्षः स चेद्दीक्षितसंमतः स्या-
त्किमित्यसौ नाप्युपपादितः स्यात् ।
सिद्धान्तलेशस्य समासिदेशे
तस्मान्न तेषामिदमस्त्यभीष्टम् ॥ ९९ ॥

यदि प्रपूर्वपद्योक्तरीत्याऽत्र श्रवणविधिविचारे श्रवणे कोऽपि विधिरनुचितत्वान्नैवास्तीति वाचस्पतिमतस्यैव चरमीकृतत्वेनाखण्डितत्वाद्विधिरसायने च सर्वस्यापि विधेः सामान्यतो संभावितत्वप्रपञ्चनादप्पय्यदीक्षितेष्टत्वं स्यात्तर्हि सावच्छिन्नवादस्य पक्षः सिद्धान्तलेशस्य समासिदेशे किमिति दीक्षितैरुपपादितोऽपि न स्यात् । यतस्तत्रायमवच्छिन्नवादो नैवोपपादितः । तस्माद्धेतोस्तेषामप्पय्यदीक्षितानाम् ।

इदं निरुक्तवाचस्पतिमतसिद्धश्रवणे विध्यभावपक्षस्यान्त एवोपन्यस्तत्वेनाखण्डितत्वादुत्तरोत्तरपक्षेण पूर्वपूर्वपक्षखण्डनम् । अभीष्टं संमतं नैवास्तीत्यन्वयः । एवं च यथा यथा भवेत्पुंसामित्यादिवार्तिकावलम्बनेन तत्तदधिकारिबुद्ध्युपरिष्टादेव तत्तदाचार्यनिरूपितदोषाणां सावकाशतया सर्वपूर्वपूर्वाचार्योपरि दोषलेशस्याप्यसत्त्वात्सम्प्रदायसर्वमताविरोधव्यवस्थैव ज्यायसीत्याशयः ॥ ९९ ॥

एवं दीक्षितग्रन्थस्यैव स्वारस्यादेव तस्य यथाश्रुतप्रातिभासमानोत्तरोत्तरमतेन पूर्वपूर्वमतनिराकरणे खण्डितेऽपि तत्रापि शिष्याशङ्कां व्युत्थाप्य समाधत्ते—न चेत्यार्याद्वयेन—

न च भामतीनिबन्धप्रभृतय इत्यादिना तु तैस्तत्र ।
वाचस्पतिमतमेव प्रोक्तं परिकरत इति वाच्यम् ॥ १०० ॥

तैरप्पय्यदीक्षितैः । तत्र सिद्धान्तलेशोपसंहारे । भामतीत्यादि । प्रभृतिग्रहणादन्येऽपि तदर्वाचीनग्रन्था ग्राह्याः । तु पुनः । परिकरतः साभिमानमेवेति यावत् । वाचस्पतीत्यादि । प्रोक्तं प्रतिपादितमस्तीति न च वाच्यम् । चोऽवधारणे । नैव वक्तव्यमिति योजना ॥ १०० ॥

कुत इति चेत्तत्र हेतुं द्योतयितुं विवरणमतं संक्षिपति—प्रतिबिम्ब इत्यादिना—

प्रतिबिम्बो जीव इतिप्रभृति तु बिम्बेशवादमुख्यस्य ।
विवरणमतस्य तत्र स्पष्टमुपक्रम्य निगमनतः ॥ १०१ ॥

इतिप्रभृति तु इत्यादिग्रन्थेन तु । बिम्बेशेति । एतादृशस्य । विवरणेति । तत्र सिद्धान्तलेशावसाने । स्पष्टं कण्ठत एव । उपक्रम्योपन्यस्य । निगमनत उपसंहृतत्वादित्यर्थः । तस्मादुक्तहेतोर्नैवात्र पूर्वोक्तशङ्कावकाशलेशोऽपीत्याशयः ॥ १०१ ॥

नन्वेवं चेत्तर्हि भामतीत्यादिना समुदाहृतस्य तद्ग्रन्थस्य का गतिरिति चेत्तदनुवादपूर्वकं तत्तात्पर्यमाह—यत्त्वित्यादिना द्वितीयेतिशब्दात्पूर्वतः शार्दूलविक्रीडितेन—

यत्तूक्तं खलु भामतीप्रभृतयस्तं तेऽनुवर्तन्त इ-
त्यन्ते तैस्तदपि त्वनन्यगतितो बिम्बेशवादः स तैः ।
तत्राऽऽसीदनुमोदितो न तु मतस्तेषामिति स्वाशयं
स्पष्टं द्योतयतीति तत्र गदितं नो दीक्षितैस्तन्मतम् ॥ १०२ ॥

तैरप्पय्यदीक्षितैः । यत्तु पुनः । भामतीति । प्रभृतिग्रहणं कल्पतर्वादिसंग्रहार्थम् । ते पूर्वाचार्यग्रन्थाः । तं बिम्बेशवादम् । अनुवर्तन्तेऽनुसरन्ति । इति एवमानुपूर्व्या । खलु नातोऽधिकम् । अन्ते सिद्धान्तलेशोपसंहारे । उक्तं निगदितमस्ति । तदपि तु । स प्रागुक्तः । बिम्बेशवादोऽविद्याबिम्बीभूतं चैतन्यमीश्वर इति विवरणसंमतो वादः । तैर्भामत्यादिभिः । अनन्येति । प्रकारान्तरेणानिर्वाहादित्यर्थः । तत्रेश्वरादिविचारे । अनुमोदित एवाऽऽसीत् । न तु तेषां भामत्यादीनाम् । मतः संमतः । भवति ।

इत्युक्तप्रकारकम् । स्वाशयं स्वाभिप्रायम् । स्पष्टं स्फुटमेव । द्योतयति अनुवर्तन्त इत्युक्त्या व्यनक्तीति संबन्धः । फलितमाह—इतीत्यादिशेषेण । इति हेतोः । तत्र सिद्धान्तलेशावसाने । दीक्षितैः । तन्मतं वाचस्पतिमतम् । नो गदितं नैवोक्तं भवतीत्यर्थः । तस्मात्तत्तन्मुमुक्षुबुद्ध्युपपर्येव तत्तदुत्तराचार्योक्तदूषणं न तु तत्तत्पूर्वाचार्योपरीति रहस्यम् ॥ १०२ ॥

निगमयति तदेवमित्यादिशिखरिण्या—

तदेवं मत्प्रोक्तं दृढतरमभूत्तत्तदधिक-
न्मतेर्दौर्बल्यार्थं परिमलकृतामेष समयः।
इति ध्येयं धीरैर्यदि तु न भवेदेवमथ ते
भवेयुर्नाऽऽचार्याः श्रुतिशिरसि किं बोधविधुराः॥१०३॥

एवं निरुक्तरीत्या। तत्पूर्वोपन्यस्तम्। तत्तदधिकादित्यादि। तत्तदधिकारिबुद्धेः। दौर्बल्यार्थमेव। परिमलकृतामेतादृङ्महानुभावानामप्पय्यदीक्षितानामित्यर्थः। एष पूर्वपूर्वपक्षदूषणपूर्वकमुत्तरोत्तरपक्षस्थापनात्मकः। समयः सिद्धान्तलेशरचनप्रकारः। इति मत्प्रोक्तं मदुपपादितं तद्रहस्यमिति यावत्। दृढतरमचलमेव। अभूदभवत्। इति दर्शितरूपमभिप्रायजातम्। धीरैर्धियं बुद्धिमीरयन्ति सद्विचारे प्रेरयन्ति ते तथा तैः पण्डितैरित्यर्थः। ध्येयमनुचिन्तनीयमित्यन्वयः।

तत्राप्याग्रहेणानङ्गीकारिणं प्रत्यनिष्टापत्त्या प्रत्याचष्टे—यदि त्वित्यादिशेषेण। यदि तु एवं निरुक्तसिद्धान्ताङ्गीकरणम्। न भवेच्छुष्काग्रहेण न स्याच्चेत्तर्हि। अथ यथाश्रुताङ्गीकृतिपक्षे। ते तत्तत्पूर्वोपन्यस्तमतप्रतिपादकाः। आचार्याः—आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः, इति वचनात्सद्गुरवोऽपि। श्रुतिशिरसि अद्वैतशास्त्रार्थविषये। बोधविधुरा अपरोक्षादिप्रमाविहीनाः। न भवेयुः किमपि तु भवेयुरेवेति भावः। तस्मात्तेषां सर्वेषामपि प्राचीनाचार्याणां मौढ्यापादनार्थमेव सिद्धान्तलेशरचनं मूभात्तदपेक्षया मदुक्तयुक्त्या सर्वाविरोधसाधनमेव निर्बाधमिति राद्धान्तः॥ १०३॥

तत्राप्येकजीववादेऽनिष्टापत्तिमाशङ्कते यद्येवमित्यादिशार्दूलविक्रीडितपूर्वार्धेन—

यद्येवं भवता विरोधकलनं संपाद्यते युक्तित-
स्तत्रापि स्फुटमेकजीवसमये स्याद्घट्टकुट्यादिता।
मैवं तेन विरोधबाधनमलं यस्मान्मया वक्ष्यते
तद्वादे गुरुपादपङ्कजरजःसंजीविनाऽग्रेऽञ्जसा॥१०४॥

घट्टेति। घट्टकुटी आदिर्यस्य घट्टकुटीप्रभातन्यायस्य स तथा तद्भाव इत्यर्थः। अयं भावः। कश्चिद्वणिक्। अधिकारिणा तद्देशमार्गे वणिगादिनीयमानक्रय्यवस्तुनियमितवित्तग्राहिणा घट्टे स्थापितां निजभृत्यविशिष्टकुटीं निशि वञ्चयित्वा सपण्यबलीवर्दो गच्छन्नपि दैवात्प्रभाते निरुक्तकुटीनिकट एवाऽऽयाति तद्वद्यथोक्तदोषावमोचनार्थं युक्त्यन्तरे कृतेऽपि पुनरेकजीववादे दोषतादवस्थ्यमेवेति।

तत्समाधत्ते—मैवमित्याद्युत्तरार्धेन । तत्र हेतुमाह—तेनेत्यादिशेषेण । यस्माद्धेतोः । तेनैकजीववादेन सह । विरोधेति । अलं पर्याप्तम् । अग्रे उत्तरत्र । अञ्जसा कण्ठरवेणैव । गुर्विति । एतेन सांप्रदायिकत्वं सूच्यते । एताद्दृशेन मया । तद्वाद एकजीववादे । वक्ष्यते तस्मादित्यर्थः ॥ १०४ ॥

अथात्र नियमविधिमभिधित्सुराचार्यः पूर्वोक्तापूर्वविधिस्वीकारकारणीभूतं मुमुक्षुविशेषाश्रितं सर्वथाऽप्यद्वैतब्रह्मसाक्षात्कारकारणश्रवणाख्यवेदान्तशास्त्रविचारे तद्विषयीभूताद्वैतब्रह्मात्मैक्यस्यालौकिकत्वाद्यदप्राप्तत्वं तद्दूषयन्नन्यजिज्ञासुसंमतां व्याप्तिमेव सामान्यतो विचारविषयिणीं व्युत्पादयति—लोक इति स्रग्धरया—

**लोके यो यो विचारः स तु निजविषये निर्णयं कर्तुमीशो**
**यद्यत्प्रत्यक्षमानं तदपि किल तथा मां तनोतीति क्लृप्तम् ।**
**तेन ब्राह्मो विचारोऽप्युभयविधतया प्राप्त एवान्यमाना-**
**त्तत्किं गुर्वाश्रयेण स्वयमपि च मया धीमता शास्त्रमीक्ष्यम् ॥ १०५ ॥**

विचारः स्वविषयार्थनिर्णायकः । विचारत्वात् । शुक्तिरजतादिविचारवदिति प्रयोगोऽप्यत्र व्याप्तौ बोध्यः । एवं विचारविषयव्याप्तिमभिधाय प्रमाणविषयिणीं तां कथयति—यद्यदित्यादिद्वितीयपादेन । अत्र मानमित्येव सामान्यतो वक्तव्ये प्रत्यक्षेति विशेषणं तु ब्रह्मसाक्षात्कृतिजनकस्य तत्त्वप्रमापकस्य शब्दात्मकस्यापि तत्त्वमस्यादिमहावाक्यस्य यत्साक्षादपरोक्षाद्ब्रह्मेत्यादिश्रुतेः स्वप्रकाशात्ममात्राश्रयविषयकानादिभावरूपाज्ञानैकनिवर्तकत्वेन नित्यापरोक्षार्थविषयकत्वेन प्रत्यक्षतयैव संग्रहार्थमेव । तथा मां प्रत्यक्षप्रमाम् । क्लृप्तमनुभूतम् । एवमत्रापि प्रयोगः । तत्त्वमस्यादि महावाक्यम् । अपरोक्षप्रमाजनकम् । अपरोक्षार्थविषयत्वात् । चक्षुरादिवदिति ।

ननु भवत्वेवं व्याप्तिद्वयं ततः किं प्रकृत इत्यत आह—तेनेत्यादितृतीयपादेन । उभयेति । निरुक्तव्याप्तिद्वयमूलकत्वेनेत्यर्थः । अन्यमानात् । श्रोतव्य इत्यागमविधिभिन्नानुमानाख्यप्रमाणादिति यावत् । तद्यथा । ब्रह्मविचारः । स्वविषयीभूताद्वैतब्रह्मनिर्णायकः । विचारत्वात् । रज्जूरगविचारवदिति । तस्मादद्वैतब्रह्मनिर्णयकामेन ब्रह्मविचारः कर्तव्य इति निरुक्तानुमानादेव तत्प्राप्तौ सत्यां नोक्तविचारस्याप्यन्ताप्राप्त्युपेतापूर्वविधिसिद्धिरिति बोध्यम् ।

नन्वेवमपि नियमः पाक्षिके सतीति वचनाद्ब्रह्मविचारस्य वेदान्तशास्त्रेतरसाधनैः पाक्षिकप्राप्तिमन्तरा कथं श्रोतव्यवाक्ये नियमविधिः स्यादित्यत्राऽऽह—तत्किमिति चरमचरणेन । यतो विचारस्य विचार्यार्थसाक्षात्कारणत्वं रज्जुभुजंगादीनां विचारेणैव साक्षात्कारणात् । तत्त्वसाक्षात्कारार्थं गुर्वाश्रयेण किं न किमपि प्रयोजनमस्तीत्यर्थः ।

न च तर्हि गुर्वाश्रयणमन्तरा स विचारोऽपि कथं स्यात् । न हि मन्दान्ध-कारस्थितरज्जौ संजातो भुजगभ्रमः प्रदीपानयनमन्तरा निवर्तते । अत एवाऽऽम्ना-यते—तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति वाच्यम् । अस्याः श्रुतेर्मन्दप्रज्ञविषय-त्वाद्घट्यादिताडनेनापि विनैव दीपानयनं रज्जुनिर्णयसंभवाच्चेत्याशयं विशदयति—स्वयमपि चेत्यादिशेषेण । यतो धीमता कुशाग्रबुद्धिमता । मया स्वयमपि शा-स्तारं गुरुमन्तरैव । चोऽवधारणे । शास्त्रमद्वैतशास्त्रमपि । इत्थं ब्रह्मात्मैक्यसाक्षा-त्कारासिद्ध्यर्थं विचार्यं भवति । तत्तस्माद्धेतोः किं गुर्वाश्रयेणेति पूर्वेणान्वयः ॥ १०५ ॥

ननु भवत्वेवं मेधाविनोऽधिकारिणः स्वयमेव शास्त्रविचारलक्षणपक्षप्राप्तिर्नियमविधि-मूलं, मन्दप्रज्ञस्य तु कथमसावित्याशङ्क्य योगलक्षणविधयाऽन्येऽपि लोके भूरितरब्रह्म-साक्षात्कारसाधनमार्गास्तत्तद्भ्रान्तिकल्पिताः सन्त्येव ब्रह्मविचारस्य पाक्षिकत्वसाधका इत्याह—इत्यादीत्यादिस्रग्धरयैव—

**इत्यादिभ्रान्तिलब्धैरपरबहुविधैः साधनैः पाक्षिकोऽसा-**
**वित्येताहृङ्मुमुक्षुं परमकरुणया मोहजालाद्विमोक्तुम् ।**
**प्राहुः श्रोतव्यवाक्ये नियमविधिमिमं श्रीप्रकाशात्मसंज्ञाः**
**कर्मन्दीन्द्राः प्रसिद्धा रचितविवरणाः कोऽनयोस्तद्विरोधः ॥ १०६ ॥**

अपरेति । केचित्तत्तद्देशप्रसिद्धमहाराष्ट्रादिभाषानिबन्धा एव ब्रह्मविचारद्वारा तत्साक्षात्कृतिसाधनमिति मन्यन्ते । अपरे हठादियोगाभ्यासमेव । अन्ये भगव-न्नामसंकीर्तनमेवेत्यादि प्रसिद्धमेव । ततः किं प्रकृत इत्यत आह—साधनैरित्या-दिशेषेण । असौ प्रागुक्तो ब्राह्मो विचारः । पाक्षिकः पक्षप्राप्त एव । यथा मेधाव्यादीनामधिकारिणां स्वयमेवाद्वैतशास्त्रविचारादीनि ब्रह्मसाक्षात्कृतिसाधनानि भवन्ति, तथा गुरूपाश्रयणपूर्वकमद्वैतशास्त्रविचारोऽपि तत्को वाऽत्रैव विशेष इति, एताहृङ्मुमुक्षुमेतादृशभ्रान्तबुद्धिं जिज्ञासुमित्यर्थः ।

परमेति । एतेन ख्यात्यादिप्रयोजनव्युदासः सूचितः । तदाहुर्विवरणाचार्या एव—प्रकाशात्मा यतिः सम्यक्प्राप्तविद्याशुश्रुत्सया । यथामति यथाशक्ति व्या-ख्यास्ये पञ्चपादिकामिति । मोहेति । अत्र जालरूपकेण तस्य दुर्जरत्वं व्यज्यते । विमोक्तुं पुनर्दृश्यानवभासलक्षणविशेषेण मोचयितुम् । श्रीति । एतेन परमादरणी-यत्वं द्योत्यते ।

एतादृशाः कर्मन्दीन्द्राः । भिक्षुः परिव्राट् कर्मन्दीत्यमरात्परकरीश्वरा इति यावत् । अत एव । प्रसिद्धाः सर्वमुमुक्ष्विन्याः । तत एव । रचितेति । ईदृश सन्तः । इमे सिद्धान्तलेशोपन्यस्ताः । श्रोतव्येति । नियमेति । प्राहुः । अनयोः प्रकटार्थकार विवरणकारयोः । तत्तस्माद्धेतोः को विरोधो न कोऽपीत्यन्वयः ॥ १०६ ॥

ननु पूर्वतन्त्रे पुरोडाशार्थं शालितण्डुलाः पिष्टादिद्वारोपयुक्तास्ते च तद्वितुषीकारमन्तरा नैव सिध्यन्ति. तत्तु नखैर्विदलनेनावहननेन वा प्राप्तम्। तत्राऽऽद्यपक्षे भूरिश्रमादिदोषात्पाक्षिकप्राप्तनखविदलनादिन्युदसनेन व्रीहीनवहन्यादिति श्रुत्या नियमविधिरुक्तस्तथा श्रोतव्यवाक्येऽप्यत्रोत्तरतन्त्रेऽस्तु श्रवणाख्यवेदान्तशास्त्रविचारे ब्रह्मसाक्षात्कारसाधने भ्रान्तिप्राप्तचित्तनिरोधाद्यन्यसाधनविधूननाद्विवरणसिद्धान्तितं नियमविध्याश्रयणं तथाऽपि लोकादौ सर्वत्र पुत्रस्ते जातः स्वर्गे सुधाऽस्तीत्यादिशब्दाच्छब्दत्वस्वाभाव्येन यथा परोक्षमेव पुत्रादिविषयं ज्ञानं जायते तथा तत्त्वमस्यादिवाक्यतोऽपि प्राक्परोक्षमेव ज्ञानं शब्दत्वस्वाभाव्येन स्यात्पश्चान्मनननिदिध्यासनक्रमेणापरोक्षं भूयात्।

न च वाच्यं चेतसः करणैर्विना प्रमाजनने कथं स्वातन्त्र्यं स्यादिति। घटादिबाह्यविषयप्रमायां तस्य तथात्वेऽप्यान्तरायामद्वैतात्मविषयकसाक्षात्कृतौ मनननिदिध्यासाख्यसहकारिविशिष्टाद्वासनात्मना चित्ते स्थितशब्दादेव पूर्वप्रत्यक्षाद्विरहिणः स्वरमणीविषयकसाक्षात्कृताविव चेतसः सामर्थ्ये बाधकाभावादित्याशयेन वक्ष्यमाणशङ्कायां हेतुं प्रतिपादयति—शाब्दमित्यादिमन्दाक्रान्तया—

शाब्दं ज्ञानं भवति सकलं प्राक्परोक्षं ततोऽस्मा-
च्छब्दादेव स्वमनननिदिध्यासतश्चापरोक्षम्।
बाह्ये साक्षात्करणरचनाशक्तिशून्येऽपि चित्ते
कान्ताध्यानात्प्रभवति यथा सा तथेहापि भूयात्॥१०७॥

सकलं शाब्दत्वावच्छेदकावच्छिन्नम्। शाब्दं पुत्रस्ते जातः स्वर्गे सुधाऽस्तीत्यादिशब्दैकजन्यम्। ज्ञानं प्रमारूपं संवेदनम्। प्राक्प्रथमम्। परोक्षमेव। भवति शक्तिग्रहादिसकलसामग्रीशालिनोऽधिकारिणः संपद्यत इत्यर्थः। ततस्तदनन्तरम्। अस्मादुक्तपरोक्षप्रमाकरणीभूतात्। शब्दादेव। एका हि सामग्र्येकमेव कार्यं जनयतीति न्यायादुक्तज्ञानाव्यवहितपूर्वक्षण एव तच्छब्दनाशेऽपि संस्कारस्वरूपेणान्तःकरणस्थितात्सूक्ष्मतमशब्दादेवेति यावत्।

स्वेति। स्वस्य निरुक्ततत्त्वमस्यादिशब्दप्रतिपाद्यस्याद्वैतब्रह्मरूपस्याऽऽत्मनो यन्मननं निरुक्तैक्यानुग्राहकलौकिकशास्त्रीययुक्त्यनुसंधानं तथा विजातीयवृत्त्यनास्कन्दिताहं ब्रह्मास्मीति सजातीयवृत्तिप्रवाहीकरणलक्षणं निदिध्यासनमेव निदिध्यासस्ताभ्यामिति तथा निरुक्तोभयसहकृतादित्यर्थः। चोऽप्यर्थेऽपरोक्षमपि ज्ञानं भवतीति संबन्धः।

एवं क दृष्टमित्यपेक्षायां दृष्टान्तेन तत्स्पष्टयति—बाह्य इत्याद्युत्तरार्धेन । बाह्ये देहाद्बहिर्विद्यमाने घटादिविषये । साक्षादित्यादि । साक्षात्कृतिसंपादनसामर्थ्यशून्येऽपीति यावत् । एतादृशेऽपि चित्ते मनसि । यथा कान्ताध्यानाद्विरहिणः स्वरमणीचिन्तनादित्यर्थः । सा चिन्त्यमानविषयसाक्षात्कारशक्तिः । इमां पश्यामीति तात्कालिकाभिमानिकानुभवात्प्रभवति प्रादुर्भवति तथा तद्वत् । इहापि, आत्मैक्यविषयेऽपि भूयाद्भवेदेवेति योजना । तस्मान्नैवात्र वैमत्यगन्धोऽपीति बोध्यम् ॥ १०७ ॥

फलितमाह—चेतोरोधेति—

चेतोरोधप्रभृति तदहं पूर्वमेवाऽऽचरामी-
त्येवं भ्रान्तं कमपि कृपया क्षिप्रमुद्धर्तुकामाः ।
अङ्गी चक्रुः श्रवणनियमं सर्ववेदान्तपङ्क्तेः
केचित्पूर्वे विवरणमतादेकदेशं भजन्तः ॥ १०८ ॥

तत्तस्मादुक्तलक्षणाद्ध्यानस्याचिन्त्यसामर्थ्यजननानुभवलक्षणात्कारणादित्यर्थः । अहं मुमुक्षुविशेषः । चेत इत्यादि । योगश्चित्तवृत्तिनिरोध इति पातञ्जलसूत्राद्योगाभ्यासादीति यावत् । प्रभृतिग्रहणात्प्रागुक्तभगवद्भक्त्यादि । पूर्वमेव वेदान्तविचारात्प्रागेव । आचरामि तस्याप्युक्तरीत्या निदिध्यासनलक्षणमनोनिरोधार्थमन्ततो गत्वा योगाभ्यासाद्यपेक्षणात्प्रथममेव योगाभ्यासादिकमहं ब्रह्मसाक्षात्कारार्थं करोमि किं वेदान्तविचारेणेति । एवमुक्तरीत्या । कमपि भ्रान्तं जिज्ञासुम् । कृपयाऽनुपमपरदुःखप्रहरणेच्छया । क्षिप्रं तूर्णम् । उद्धर्तुकामाः संसारसमुद्रादित्यार्थिकम् । एतादृशः । विवरणेत्यादि । ईदृशः । केचित्पूर्वे आचार्याः । सर्वेति । निखिलाद्वैतशास्त्रावलेः । श्रवणेति । निरुक्तपक्षप्राप्तसाधनाभासफलकं नियमविधिम् । अङ्गी चक्रुः स्वी चक्रिर इत्यर्थः ॥ १०८ ॥

नन्वेवमपि मनसैवेदमाप्तव्यमिति दृश्यते त्वग्र्यया बुद्ध्येति च श्रुतिप्रसिद्धं मन एवाद्वैतब्रह्मात्मैक्यसाक्षात्कारकरणमस्तु किमेतावत्प्रयाससाध्येन शास्त्राभ्यासेन । परोक्षज्ञानं तु भाषाप्रबन्धैरेव सुकरमेव । तस्माद्योगाभ्यासादिना तन्निरोध एव श्रेयानिति कस्यचिन्मुमुक्षोः पूर्वमतास्वारस्यपूर्वकमाशङ्कामाह—मनसैवेत्याद्यार्यया—

मनसैवेत्यादिनिगमशिरोगिराऽद्वैतबोधकरणं तत् ।
तद्भाषाग्रन्थैरपि परोक्षबोधोऽस्तु शास्त्रतः किं मे ॥ १०९ ॥

तत्तस्मादुक्तश्रुतिसिद्धाद्वैतब्रह्मसाक्षात्कारे मनोमात्रकरणत्वादित्यर्थः । शिष्टं तु स्पष्टमेव ॥ १०९ ॥

अनयाऽनया दूषयन्नाचार्यान्तरोक्तिं स्फुटयति इतीयार्ययैव-

इति कंचिन्मूढमतिं शिक्षयितुं केचिदाचार्याः ।
प्राहुः परोक्ष एव ज्ञाने श्रवणस्य नियमविधिम् ॥ ११० ॥

वेद एव द्विजातीनां निःश्रेयसकरः परः इतिस्मृतेस्त्रैवर्णिकानां परोक्षज्ञानार्थमपि नैव भाषाग्रन्थेऽधिकारो भवतीति भावः । अपरं तु सरलमेव ॥ ११० ॥

एवं मनसः प्रत्यग्ब्रह्मैक्यसाक्षात्कारकरणत्वे प्रकृतशिष्यः श्रोतव्यवाक्येन साकं तद्वाक्यविरोधपरिहारं पृच्छति—आस्तामित्यादिवसन्ततिलकया—

आस्तां मनः करणमत्र निजात्मतत्त्व-
साक्षात्कृतौ तदपि च श्रवणं तदीयम् ।
श्रोतव्य इत्यभिहितं तदवेक्षणार्थं
तस्यान्यथा कथमिहास्त्युपपत्तिरार्याः ॥ १११ ॥

भो आर्याः परमपूज्याः श्रीगुरवः । अत्र पूर्वोक्तमुमुक्षुस्वीकृते मते । निजेति । करणम् । निरुक्तसाक्षात्कृत्यसाधारणं कारणम् । मनोऽन्तःकरणमेव । आस्तां तर्कमते तस्यापि सुखाद्युपलब्धिसाधनेन्द्रियतायाः स्वीकृतत्वान्निरुक्तश्रुतिवशाच्च भवत्वित्यर्थः ।

अथ किं तत्राऽऽह—तदपि चेत्यादिशेषेण । च. पुनरर्थे । एवमपि पुनः श्रोतव्य इतीति । आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति श्रुत्या । तदवेक्षणार्थमात्मसाक्षात्कारार्थम् । तदीयमात्मसंबन्धि । श्रवणं श्रोतव्यः श्रुतिवाक्येभ्य इति स्मृत्युक्तोपनिषदेकतात्पर्यावधारणमित्यर्थः । अभिहितं यत्कथितमस्ति । तस्यान्यथाऽऽत्मसाक्षात्कारस्य प्रोक्तरीत्या मनोमात्रकरणकत्वे सति प्रकारान्तरेण । इहाद्वैतशास्त्रे । कथं केन प्रकारेण । उपपत्तिरविरोधेन संगतिरस्तीति संबन्धः ॥ १११ ॥

एवमुक्तशिष्यकृतनिरुक्तश्रुतिद्वयविरोधाशङ्कां परिजिहीर्षुः श्रीगुरुः कस्यचिन्मुमुक्षोः प्रागुक्तमुमुक्षुस्वीकृतमतास्वरससूचनपूर्वकमाशङ्कां प्रतिपादयति—भाते वस्तुनीत्यादिशार्दूलविक्रीडितेन—

भाते वस्तुनि कल्पिताविवरणध्वंस्यागमश्चेतम-
स्तत्साक्षात्करणे श्रुतेस्सचिवतां षड्जादिसाक्षात्कृतौ ।
गान्धर्वादिवदेव च श्रवणतस्तत्सांख्यशास्त्रादितोऽ-
प्यस्त्वेतन्मम चेतसोऽलमिति मे वेदान्तशास्त्रश्रुतेः ॥ ११२ ॥

एवं हि लोकेऽनुभवः । भाते स्वप्राकट्यसामान्यवति । एतादृशे वस्तुनि । कल्पितेति । कल्पितस्य स्वप्रकाशत्वे समारोपितस्य वह्न्यर्थदविवरणमविवेचनं तद्ध्वंसी तन्नाशको य आगम आप्तवाक्यमित्यर्थः । चेतसः श्रोतृमनसः । सदिति । निरुक्तभ्रमाधिष्ठानविषयकप्रत्यक्ष इति यावत् ।

साचिव्यं सहायताम् । षड्जादीति । अयं स्वरः षड्जपदवाच्यः । आदिना निषादर्षभगान्धारषड्जमध्यमधैवताः । पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरोक्तेर्निषादादिः । तद्विषयिणी या साक्षात्कृतिः प्रत्यक्षप्रमा तस्यामित्यर्थः । गान्धर्वादिवदेव गान्धर्वशास्त्रश्रवणमिवेति यावत् । आदिना गान्धर्ववेदाभिधसामवेदोपवेदभिन्नसंगीतरत्नाकरादि । श्रवणत एव । चस्त्वर्थे । श्रवणद्वारैव तु । यतो हेतोः । व्रजेत्प्राप्नुयात् । तत्तस्मात्कारणात् । मम चेतसः । एतत् । स्वप्रकाशत्वेन नित्यस्फूर्यमाणेऽद्वैतात्मवस्तुनि अधिष्ठानेऽनाद्यविद्याध्यस्ताहंकारादिद्वयाविवेकनाशकतत्साक्षात्कारे सहायतामापन्नमागमश्रवणमिति यावत् ।

सांख्येति । आदिना पातञ्जलम् । भेदवादिषु तयोरेव नित्यस्वप्रकाशात्मनादित्वात् । कापिलादिशास्त्रादप्यस्तु । इति हेतोः । मे वेदान्तशास्त्रश्रुतेश्चसुलक्षण्युत्तरमीमांसाशांकरभाष्याद्यद्वैतशास्त्रश्रवणादलं पर्याप्तमेवेत्यन्वयः । आत्मा वा अरे द्रष्टव्यः श्रोतव्य इति श्रुतावात्मन एव दर्शनमुद्दिश्य श्रवणविधानात्तस्य च सांख्यादिशास्त्रेऽप्युक्तत्वात्किमनेन ब्रह्मशास्त्रश्रवणेन गुरुतरेणेति तत्त्वम् ॥ ११२ ॥

ननु भवत्वेवं कस्यचिन्मुमुक्षोरभिप्रायस्तत्र को दोष इति चेन्न । वेदान्तविज्ञानसुनिश्चितार्था इति । तं त्वौपनिषदं पुरुषं पृच्छामीति । नावेदविन्मनुते तं बृहन्तमिति चान्वयादिश्रुतिभिस्तथा श्रोतव्यः श्रुतिवाक्येभ्य इति । शास्त्रयोनित्वादिति स्मृतिसूत्राभ्यामपि चाक्षरतात्पर्याभ्यामपि ब्रह्माद्वैतात्मतत्त्वस्य वेदान्तमात्रगम्यत्वाभिधानादित्यभिप्रेत्याऽऽचार्यान्तरोक्त्यनुवादेन समाधत्ते—इति भ्रान्तमित्यादिशिखरिण्या—

> इति भ्रान्तं कंचित्परमकृपयोद्धर्तुमचिरा-
> न्मुमुक्षुं संप्राहुर्नियमविधिमन्ये गुरुवराः ।
> त्रयीधम्मिल्लस्थस्वरसपरिसंफुल्लविलस-
> न्मतल्लीमल्लीसङ्मधुकरवरेण्यश्रवणगम् ॥ ११३ ॥

इति पूर्वपद्योक्तरीत्या भ्रान्तं प्रोदाहृतश्रुत्याद्युक्ततात्पर्यानभिज्ञत्वेन विभ्रममन्तमित्यर्थः । एतादृशं कंचिन्मुमुक्षुम् । परमेति । न तु ख्यातिलाभपूजाद्यभिलाषेण । तेन वञ्चकत्वव्युदासस्तथा मैत्रः करुण एव चेति स्मृत्युक्तस्तत्त्ववित्स्वभावश्च सूचितः ।

अचिराच्छीघ्रम् । उद्धर्तुं निरुक्तदुःखतापकादित्यार्थिकम् । अन्येऽपरे । गुरवरा आचार्यचूडामणयः । नियमविधिं संप्राहुरिति योजना । श्रोतव्यवाक्य इति शेषः ।

ननु शेषपूरणेन वाक्ययोजनमनुचितमित्याशङ्क्योक्तविधिं विशिनष्टि—श्रयीत्याद्युत्तरार्धेन । श्रुतिः स्त्री धम्मिल्लः स्त्रीत्वात्संयतकचभारवदुपनिषद्भागः । एतेनात्र परमपूज्यत्वं व्यज्यते । तत्र तिष्ठतीत्येतादृशी या । स्वरसेत्यादिस्रगन्तम् । स्वरसेन शारदागमादिस्वभावेन परितः समन्तान्न त्वेकदेशेन संफुल्ला सम्यग्विकसिताऽत एव विलसन्ती परमशोभमाना अत एव मतल्ली मतल्लिकेत्याद्युपक्रम्य प्रशस्तवाचकान्यमूनीत्यमरात्प्रशस्ता । एतादृशी या मल्ली पुष्पे जातिप्रभृतय इत्यमरान्मालतीकुसुमानि तेषां या स्रगिव मालेव श्रीभगवत्पादाभिधभाष्यकारविरचितभाष्यरूपाविवृतिस्तस्यां ये मधुकरा इव करभैक्षोपजीविनः परमामोदलुब्धाः श्रीमद्वार्तिककारादयो मस्करीश्वरास्तेषां मद्वरेण्यं स्वीकर्तुं योग्यमेतादृशं यच्छ्रवणं वेदान्ततात्पर्यावधारणं तत्र गच्छतीति तथा तमित्यर्थः ॥ ११३ ॥

अथात्रापि मुमुक्ष्वन्तराशङ्कां निरुक्तमुमुक्ष्वादृतमाक्रियास्वारस्यसूचिकामनुवक्ति-आत्मेत्यादिस्रग्धरया—

आत्मा श्रोतव्य एवं विधिरिह नु कथं सिद्ध आत्मन्यहो स्या-
च्चेतःसाचिव्यमात्मश्रवणमपि कथं प्राप्नुयाद्बोधहेतुः ।
तस्मादूहादिरूपा श्रवणपदमता मानसी स्यात्क्रियैव
साऽऽक्ता मे तर्कसांख्यागमत इति वृथा सा चतुर्लक्षणीह ॥ ११४॥

आत्मा वा अरे द्रष्टव्यः श्रोतव्य एवंरूपः । इहाद्वैतशास्त्रे कथं नु केन वा प्रकारेण । अहो इत्याश्चर्ये । सिद्धे सत्यं ज्ञानमनन्तं ब्रह्मेत्युपक्रम्य तस्माद्वा एतस्मादात्मन आकाशः संभूत इति तस्यैवाऽऽत्मतया परामृष्टत्वेनाऽऽत्मनि नित्यस्वप्रकाशसन्मात्रत्वेन भासमान इत्यर्थः । स्याद्भूयात् । सर्वत्र विधेः साध्यविषयत्वात्सिद्धे सन्मात्रस्वप्रकाशे आत्मनि स नैव संभवतीति भावः ।

किंच चेतःसाचिव्यमपि ब्रह्मात्मैक्यबोधने चित्तस्य सहायत्वमपि । आत्मश्रवणं बोधहेतुरपि तत्त्वज्ञानकारणमपि कथं प्राप्नुयादिति संबन्धः । तस्य नित्यसिद्धत्वेनाज्ञानाविषयत्वादिति तत्त्वम् । फलितमाह—तस्मादित्याद्युत्तरार्धेन । श्रवणेति । श्रवणपदवाच्या । ऊहादीति । ऊहापोहात्मिकेत्यर्थः । मानसी मनोमात्रजन्या । क्रियैव स्यादिति योजना । ततः किं तदाह—सेत्यादिशेषेण । सा निरुक्तलक्षणश्रवणाख्यमानसी क्रियेत्यर्थः । मे मुमुक्षुविशेषस्य मम । तर्केति । गौतमकणादकपिलप्रणीतशास्त्रेभ्य एवेति

यावत् । आस्तां भवतु । इति हेतोः । सा विश्वविख्याता । चतुर्लक्षणी । उत्तरमीमांसा । वृथा व्यर्थैवास्तीत्यर्थः ॥ ११४ ॥

नन्वेवं चेत्तर्ह्यात्मैक्यप्रमा विना वेदान्तवाक्याख्यप्रमाणराजं कथं स्यादित्यत्राऽऽह—वेदान्तेत्यादीन्द्रवज्रया—

> वेदान्तवाक्याभिधमानजन्यं
> ज्ञानं परोक्षं यदि वाऽपरोक्षम् ।
> निरुक्तरूपश्रवणस्य तत्तु
> फलं न संभावयितव्यमस्ति ॥ ११५ ॥

निरुक्तेति । ऊहापोहात्मकमनःपरिणामविशेषलक्षणक्रियात्वेन कथितरूपस्येत्यर्थः । नहि परोक्षाद्यन्यतरस्वरूपप्रमात्मकं वेदान्तवाक्यैककरणकं ज्ञानं निरुक्तक्रियाफलत्वेन कालत्रयेऽपि संभावयितुं योग्यं भवतीति भावः ॥ ११५ ॥

ननूक्तमुमुक्ष्वाक्षेपस्य किं समाधानमित्यपेक्षायां श्रीमत्संक्षेपशारीरकाचार्यमतेन समाधत्ते—इत्थमित्यादिस्रग्धरया—

> इत्थं कंचिद्भ्रमन्तं नरमतिकृपया मोचयिष्यन्त ऊचुः
> श्रीसर्वज्ञात्मवर्या नियमविधिमिह प्रोक्तवाक्ये मुमुक्षोः ।
> तात्पर्यं वेदमौलेः कलयितुमपरैः शक्यते नैव शास्त्रै-
> स्तद्वेदान्तेभ्य एव श्रवणसमुचितिः सूत्रसंशोधितेभ्यः ॥११६॥

इत्थमनुपदोक्तपद्यद्वयरीत्या । कंचिद्भ्रमन्तं भ्रान्तिशालिनं मुमुक्षुम् । नरं पौरुषशालिनम् । एतेन समुपदिश्यमानसाधनानुष्ठानश्रद्दधानत्वं ध्वन्यते । अतीत्यादि । मैत्रः करुण एव चेति स्मृतेः स्वभावसिद्धपरमानुकम्पयैवेत्यर्थः । तेन ख्यातिलाभपूजादिप्रसङ्गः परास्त इति द्योत्यते । मोचयिष्यन्तः संसारबन्धादित्यार्थिकम् । एतादृशः सन्त इत्येतत् । श्रीति । श्रीर्योगैश्वर्यलक्ष्मीस्तद्वन्तश्च ते सर्वज्ञात्मसंज्ञाश्च ते वर्याः परमपूज्याः संन्यासिन इत्यर्थः । इह लोके । प्रोक्तवाक्ये श्रोतव्यवचने । मुमुक्षोर्जिज्ञासोः । नियमविधिं पक्षप्राप्तार्थव्यावृत्तिफलकं भावनाविशेषमित्यर्थः । ऊचुरवददित्यन्वयः ।

तत्र हेतुं द्योतयंस्तस्मादूहादिरूपेत्यादिना तर्कसाख्यागमत इत्यन्तेन पूर्वमुमुक्षूक्ताक्षेपं क्षपयति—तात्पर्यमित्याद्युत्तरार्धेन । यतो वेदमौलेरुपनिषद्भागस्य । तात्पर्यमुपक्रमादिषोढालिङ्गनिर्णीतवस्तुस्वारस्यमिति यावत् । अपरैरुत्तरमीमांसाश्रीभगवत्पादीयभाष्याद्यात्मकाद्वैतशास्त्रेतरैरित्यर्थः । शास्त्रैः सांख्यादिशास्त्रैः । कलयितुं निश्चेतुम् । नैव शक्यते । तत्तस्माद्धेतोः । सूत्रेति । अथातो ब्रह्मजिज्ञासेत्यारभ्याना-

वृत्तिः शब्दादित्यन्तश्रीमद्बादरायणप्रणीतोत्तरमीमांसाख्यचतुर्लक्षणीनिर्णीततात्पर्येभ्य इति यावत् । एतादृशेभ्यः । वेदान्तेभ्य एवोपनिषद्भागेभ्य एव । मुमुक्षोरिस्यत्राप्यनुकृष्यम् ।

श्रवणेति । तत्स्वारस्यनिर्णयौचित्यम् । अस्तीत्यध्याहृत्य योजना । तदुक्तं श्रीमत्सुरेश्वराचार्यचरणैर्यावद्वेदवादिशास्त्राणामुपनिषत्तात्पर्यानिर्णायकत्वं तन्मतानुवादपूर्वकं मानसोल्लासवार्तिकद्वितीयोल्लासे-

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ।
अनुमानं च तच्चापि सांख्याः शब्दश्च ते अपि ॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः ॥
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
संभवैतिह्ययुक्तानि तानि पौराणिका जगुः ॥
द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायं च काणादाः पदार्थान्षट् प्रचक्षते ॥
नव द्रव्याणि भूतानि दिक्कालात्ममनांसि च ।
चतुर्विंशतिरेव स्युर्गुणाः शब्दादिपञ्चकम् ॥
परिमाणं च संख्या च द्वौ संयोगविभागकौ ।
स्वभावतः पृथक्त्वं च गुरुत्वं द्रवता पुनः ॥
परत्वं चापरत्वं च स्नेहः संस्कार इत्यपि ।
धीर्द्वेषः सुखदुःखेच्छाधर्माधर्मप्रयत्नकाः ॥
संस्कारस्त्रिविधो वेग इष्वादेर्गतिकारणम् ।
दृष्टश्रुतानुभूतार्थस्मृतिहेतुश्च भावना ॥
स्थितिस्थापकता नाम पूर्वावस्थितिकारणम् ।
आकृष्टशाखाभूतादौ स्पष्टमेवोपलभ्यते ॥
उत्क्षेपणमपक्षेपो गमनं च प्रसारणम् ।
आकुञ्चनमिति प्राहुः कर्म पञ्चविधं बुधाः ॥
सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
परं सत्तैव सर्वत्र तदनुस्यूतवर्तनम् ॥
द्रव्यत्वगुणत्वाद्यं सामान्यमपरं विदुः ।
विशेषाः स्युरनन्तास्ते व्यावृत्तिज्ञानहेतवः ॥

रूपस्यैव घटे नित्यं संबन्धः समवायिक. ।
कालाकाशदिगात्मानो नित्याश्च विभवश्च ते ॥
चतुर्विधाः परिच्छिन्ना नित्याश्च परमाणवः ।
इति वैशेषिकमते पदार्थाः षट् प्रकीर्तिताः ॥

मायाप्रधानमव्यक्तमविद्याऽज्ञानमक्षरम् ।
अव्याकृतं च प्रकृतिस्तम इत्यभिधीयते ॥
मायायां ब्रह्मचैतन्यप्रतिबिम्बानुषङ्गतः ।
महत्कालपुमांसः स्युर्महत्तत्त्वादहंकृतिः ॥
तामसात्स्युरहंकाराद्व्योमानिलाग्न्यम्बुभूमयः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धोऽप्यनुक्रमात् ॥
इन्द्रियाणां च विषया भूतानामपि ते गुणाः ।
देवाः सदाशिवश्चेशो रुद्रो विष्णुश्चतुर्मुखः ॥

सात्त्विकात्स्यादहंकारादन्तःकरणधीन्द्रियम् ।
मनो बुद्धिरहंकारश्चित्तं करणमान्तरम् ॥
संशयो निश्चयो गर्वः स्मरणं विषया इमे ।
चन्द्रः प्रजापती रुद्रः क्षेत्रज्ञ इति देवताः ॥

श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियं विदुः ।
दिग्वायुसूर्यवरुणनासत्या देवताः स्मृताः ॥
राजसात्स्युरहंकारात्कर्मेन्द्रियसमीरणाः ।
कर्मेन्द्रियाणि वाक्पाणिपादपायु उपस्थकम् ॥

वचनादानगमनविसर्गानन्दसंज्ञकाः ।
विषया देवतास्तेषां वह्नीन्द्रोपेन्द्रमित्रकाः ॥
प्राणापानसमानाश्चोदानव्यानौ च वायवः ।
भूतैस्तु पञ्चभिः प्राणैश्चतुर्दशभिरिन्द्रियैः ॥

चतुर्विंशतितत्त्वानि सांख्यशास्त्रविदो विदुः ।
महान्कालः प्रधानं च मायाविद्ये च पूरुषः ॥

इति पौराणिकाः प्राहुस्त्रिंशत्तत्त्वानि तैः सह ।
बिन्दुनादौ शक्तिशिवौ शान्तातीतौ ततः परम् ॥
षट्त्रिंशत्तत्त्वमित्युक्तं शैवागमविशारदैः ।
सर्वे विकल्पाः प्रागासन्बीजेऽङ्कुर इवाऽऽत्मनीत्यादि ॥ ११६ ॥

ननु किमेतावता यावद्वेदवादिशास्त्राणामखिलोपनिषद्वाक्यानवधारकत्वं यत्स्वं-क्षेपशारीरकाचार्यैरङ्गीकृतं श्रवणनियमविधौ हेतूकृतं तत्राऽऽयातमित्याशङ्क्य सर्वे विकल्पा मायामयबीजेऽङ्कुर इवाऽऽत्मनीति समुदाहृतार्धश्लोकेनैव सूचितं श्रीमद्वार्तिककारचरणव्याख्यातं संक्षेपशारीरकाभिप्रायं मन्दोऽवगन्तुमशक्तः सन्नुपपादयति - द्वैत इत्यादिशिखरिण्यैव—

द्वैते सत्त्वाभिनिवेशः श्रुतिशिखरगिरामन्यतात्पर्यमोहो

व्युत्पत्तेर्वैपरीत्यं विषयमनवधार्य मत्परीक्षाऽकृतित्वम् ।

इत्याद्या नाधिकारा वचनमुपशमनं मध्य एष्यन्ति नो चे-

दन्येषां दर्शनानां भाति सुपरिचयेऽपीति युक्तेयमुक्तिः ॥११७॥

अत्र हि प्राक्तनेन सृष्टिपूर्वकालात्मकाव्याकृतदशापन्नाविद्यावच्छिन्नं चैतन्यमेव विवर्तत्वेन तु निर्विकारमेव । तथा च सर्वे पूर्वोक्तमतोपलक्षितसकलभेदवादिसंमतविकल्पाः । बीजे मायादिलक्षणे । अङ्कुर इव । आत्मनि अद्वैतचिन्मात्रप्रतीचि । विकल्पा भ्रमा एव । आसन् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतेः सजातीयविजातीयस्वगतभेदरहितदेशकालवस्तुपरिच्छेदशून्यब्रह्मरूपा एव तदेकाश्रयविषयाविद्याविलासत्वेनाभवन्नित्यर्थः स्फुट एव कार्यकारणभावात्मनितः ।

एवं च सूत्रसंक्षेपशारीरकाभिधोत्तरमीमांसाद्वयश्रीमद्बादरायणीयब्रह्मसूत्रोपलक्षितश्रीमद्भगवत्पादीयतद्भाष्यादिसंशोधितोपनिषद्वृन्द एव वाक्यः सकलद्वैतमिथ्यात्वपूर्वकप्रत्यग्ब्रह्मैक्यलक्षणः । एवं नो चेत्तर्हि । द्वैते दृश्ये । सत्त्वेति । सत्यत्वाभिनिवेशः । श्रुतीत्यादि । उपनिषदामद्वैतेतरपरत्वभ्रमः । व्युत्पत्तेरित्यादि स्फुटमेव स आत्मा तत्त्वमसीति श्रुतौ सर्वदर्शनसंग्रहे माध्वमते स्वतत्त्वमसीत्यकारप्रश्लेषादि ।

विषयेति । वैराग्यराहित्यम् । मदिति । सतः प्रोक्तमुमुक्षूक्ताद्वैतब्रह्मणो या परीक्षा मननत्वेन विनिर्णयस्तत्राकृतित्वमकुशलत्वं चेत्यर्थः । पञ्चस्वप्येतेषु पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वं बोध्यम् । इतीत्याचेष्यन्तीत्यन्तं स्पष्टमेव । एवमन्येषामपि स्यात्पर्यन्तमपि । इति हेतोरियं प्राक्पद्योक्ता । उक्तिर्युक्तैवेत्यन्वयः ॥११७॥

तत्रापि कस्यचिन्मुमुक्षोः प्रोक्तमताङ्गीकर्तृमुमुक्षुविशेषदूषिकां शङ्कामनुवदति-चिकित्सेत्यादिशिखरिण्या—

चिकित्साज्ञानार्थं चरकमुखशास्त्रश्रवणतो

नुरन्यो व्यापारो न विरमति यद्वन्मम तथा ।

मतान्तरे वेदान्तश्रवणनियमेऽप्यन्यविरमः

कथं तन्मुक्तिः स्यात्सति मनसि संस्कारनिकरे ॥११८॥

नुर्मनुष्या मानुषा मर्त्या मनुजा मानवा नर इत्यमरान्मनुष्याधिकारस्याऽऽस्थ-स्येति शिष्टव्यवहाराच्च मनुष्यमात्रस्येत्यर्थः । चिकित्सेति । चिकित्सा रुक्प्रतिक्रि-येत्यमराद्रोगपरिहारकारणभूतौषधादिज्ञानार्थमिति यावत् । चरकेति । चरकः पत-ञ्जलिप्रणीतः प्रसिद्ध एव । मुखपदेनाऽऽदिवाचिना सुश्रुतादय एवाऽऽयुर्वेदग्रन्थ-प्रायाः । तादृशशास्त्रश्रवणतस्तदीयतात्पर्यावधारणविधानादपीत्यर्थः ।

अन्यः शास्त्रीयः संध्यावन्दनादिर्नित्यः सूर्योपरागस्नानादिर्नैमित्तिकश्च तथा लौकिकः शुक्लवसनप्रावरणोष्णीषधारणादिर्नित्यः पट्टकूलपरिधानादिर्नैमित्तिकोऽपीति यावत् । एतादृशः सर्वः प्रोक्तव्यापृतीतरव्यापारो यद्वद्यथा । न विरमति निरु-क्तप्रयोजनकनिरुक्तग्रन्थाध्ययनादि कुर्वता तद्भिन्नयावत्कायिकादिव्यापारो नैव कर्तव्य इति निषेधाभावादेव परिवर्जितो भवति । तथा तद्वन्ममापि । वेदान्त-श्रवणेति । अन्येति । तद्भिन्नयावत्कायिकादिव्यापृत्युपशमः । भवेत्किमपि तु नैव भवेदित्यर्थः ।

ननु मा भवत्वन्यव्यापारोपरमस्तथा च का हानिरित्यत्राऽऽह—कथमित्यादि-चरमचरणेन । तत्तर्हि । मनसि चित्ते । संस्कारेति । ऐहिककायिकादिनिखि-लक्रियाज्ञानादिवासनासंघ इत्यर्थः । उपलक्षणमिदमनन्तजन्मनामपि । एवं चैता-दृगनन्तवासनासंघे सति कथं मुक्तिः स्यान्न केनाप्युपायेनाद्वैतात्मावस्थितिरूपविदे-हमुक्तिर्भूयादिति संबन्धः । तथा चाऽऽम्नायते—मन एव मनुष्याणामित्यादि ॥ ११८॥

ननु कथमस्य समाधानमित्यतः श्रीमद्वार्तिकाचार्यचरणाशयावलम्बनेन समाधत्ते-इतीत्यादिमालभारिण्या—

> इति मूढधियं समुत्तरन्तः
> परिसंख्यामिह वार्तिकामृतज्ञाः ।
> रमणीमिव तु स्फुटात्रिदोषा
> मुररीचक्रुरविघ्नबोधसिद्ध्यै ॥ ११९ ॥

इति अनुपदोक्तप्रकारेण । मूढेति । मन्दमतिमित्यर्थः । एतादृशं मुमुक्षुविशेष-मित्याधिकम् । समुत्तरन्तः सन्तः संसारसागरगरलकूपादिति शेषः । एतादृशः । वार्तिकेति । बृहदारण्यभाष्यवार्तिकामृतरसास्यं जानन्तीति तथा । निरुक्तग्रन्थता-त्पर्याभिज्ञाः केचित्पूर्वाचार्यवर्या इत्यर्थः । इह श्रवणविधौ । परिसंख्यामुभयत्रैक-स्योभयोर्वैकत्र युगपत्प्राप्तावन्यतरनिवृत्तिफलकलक्षणविधिपद्धतिमित्येतत् । तदुक्तं वार्तिके—

नियमः परिसंख्या वा विध्यर्थो हि भवेद्यतः ।
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥ इति ।

एतदभिप्राय एवमेव संक्षेपशारीरकेऽप्युक्तः—

आत्मानात्माकारं स्वभावतोऽवस्थितं चित्तम् ।
तत्राऽऽत्माकारतया तिरस्कृतानात्मदृष्टि विदधीतेति ॥

रमणीमिव यावत्स्त्रीगुणविशिष्टस्वतरुणीमिव । तुशब्दोऽप्यर्थः । स्फुटेति । स्फुटं स्पष्टमेव न तु कल्प्यत्वादिना गूढम् । यद्वा । स्फुटाः स्पष्टा एव न तूक्तत्वादिना गूढा एतादृशास्त्रयः स्वार्थत्यागादयो वक्ष्यमाणाः । त्रयो वक्ष्यमाणरजःप्राप्तिनिमित्तकाः- प्रथमेऽहनि चाण्डाली द्वितीये रजकी तथेत्यादिवचनाद्दिनत्रये चाण्डालीत्वादयो दोषा यस्यां सा तथा तामित्यर्थः ।

तथा हि—ऋतौ भार्यामुपेयादित्यादौ परिसंख्याविधिपक्षे स्वपत्नीतरां स्त्रियं नोपेयात्तत्राप्यनृतौ नोपेयात् । तत्रापि—

स्वर्क्षां प्राङ्निट्चतुष्कासमदिनविवरश्राद्धतत्पाग्दिनानि
त्यक्त्वा मूलं मघान्त्ये वसुकलिजनिभाह्नानि पर्वाणि चतौ ।
माद्रीज्यार्केन्दुलग्नैर्विषमभलवगैरुद्गलैर्भो सुताप्त्यै
अपरतैरेतौरिहैवायुगहानि मुदितः कन्यकेच्छो सुचन्द्रे ॥

इत्यादिमुहूर्तमार्तण्डाद्युक्तमूहूर्तभिन्नकाले नैवोपेयादित्येव वाक्यार्थस्तु सकल- शिष्टेष्ट इति निर्विवादमेव । तत्र स्वशक्यार्थत्यागः परार्थकल्पना प्राप्तबाधश्चेति त्रयो दोषाः सुप्रसिद्धा एव । तद्यथा—स्वशब्देनात्र ऋतावित्यादिनिरुक्तवाक्य- मेव । तस्य योऽर्थः शक्यात्मा ऋतुकाले स्वस्त्रियं प्रति गन्तव्यमिति तस्य त्यागः प्रथमो दोषः । एवं निरुक्तलक्षणो यः परोऽन्योऽर्थः स्वपत्नीतरामित्यादिस्तस्य कल्प- नाद्द्वितीयोऽसौ । तद्वत्प्राप्तस्य ऋतुकालिकस्वपत्नीं प्रति गमनस्य बाधः स तृती- यश्चेति ।

पक्षे स्फुटः शास्त्रप्रसिद्ध एव त्रिदिनं रजोदोषो यस्यां सा तथा तामित्यर्थः । मनूदाहृतवाक्येऽत्र निट्चतुष्टयमेव दुष्टत्वेनोक्तमिति चेत्सत्यम् । सर्वत्र तथात्वेऽपि शास्त्रविशेषाणां त्रिरात्रमेव दोषाभिधानात् । प्रसिद्धं चैतद्धिरण्यकेश्याचारभूषणे । इह त्वनावश्यकत्वान्नैतत्प्रतन्यते ।

एवं वैश्याद्यामपि । यतः । अविकेति । न विद्यते विघ्नोऽन्तरायोऽनात्मभान- नादिजन्यो यस्मिन्कर्मणि यथा भवति तथा च बोधेनात्मविषयकज्ञानेनैक्यविषयकेन तत्त्वमस्यादिवेदान्तमहावाक्यैककरणकेनासाधारणकारणेन या सिद्धिरुप्रारब्धकर्मपरिसमाप्ति

प्रातिभासिकदृश्यप्रतीतावपि मूलाविद्याध्वंसेन जीवन्मुक्तिस्तस्या इति यावत् । पक्षे धर्माविरुद्धो भूतेषु कामोऽस्मीति स्मृतेर्बन्धमुक्तमहीपालन्यायेन विवेकिनः स्वरूपावलम्बेऽपि कामशमात् । उररीचक्रुः । उरीकृतमुररीकृतमित्यमरादङ्गी चक्रिर इत्यन्वयः ।

ननु रमणीपक्षे तावदेकवचनेनैकस्यां तस्यां बहवोऽत्राङ्गीकर्तारः प्रतीयन्त इत्यनुचितमिति चेन्न । परिसंख्यामिति तद्विशेषणेन तदवमोषात् । तथा हि । परितः संख्या धर्मभीमार्जुनकुलसहदेवानां संख्या गमनदिनगणना यस्यां सा तथा तां द्रौपदीमित्यर्थः । प्रसिद्धं चेदं महाभारते । अत एव । वार्तिकेत्यादौ श्लेषेण धर्मप्रभृतय एव । वार्तिकेन कौरवान्प्रति मध्यस्थत्वदशायां वार्ताहरेण भगवता श्रीकृष्णेन बोधितं यदमृतं कैवल्यरूपं ब्रह्म तज्जानन्तीति तथेति व्युत्पत्तेः ॥ ११९ ॥

नन्वात्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादिश्रवणविधावुक्तमुमुक्षवङ्गीकृतपरिसंख्याविधिपक्षे तावदनात्मश्रवणादेव न कर्तव्यमित्येव वाक्यार्थ उक्तस्वार्थत्यागपरार्थकल्पनाप्राप्तबाधाभिधदोषत्रयमपि स्वीकृत्य जीवन्मुक्तिफलकाप्रतिबद्धबोधसिद्धिलोभाल्लक्षणयैवाङ्गीकार्यस्तदपेक्षया सिद्धान्ते शब्दापरोक्षवादाच्छ्रवणपदार्थस्तत्त्वमाक्षात्कारो वाच्यस्तस्य वस्तुतन्त्रो भवेद्बोध इति वार्तिकात्प्रमेयमात्रपरतन्त्रत्वान्नैव तत्र विधेयतेति शङ्कते—ज्ञानं चेत्यादिशार्दूलविक्रीडितेन—

ज्ञानं चेच्छ्रवणं न तत्र तु विधिर्नासौ विचारात्मके
दृष्टत्वान्नियमेऽप्यभीष्टविरहो द्वैतश्रुतेः संभवात् ।
तच्छास्त्रे विफलत्वमित्यधिषणं गुर्वाप्तविध्यादिना
तत्साफल्यमबोधयच्छ्रुतिविधिध्वंसेऽपि वाचस्पतिः ॥ १२० ॥

न च वाच्यं मा भवतु श्रवणस्य ज्ञानरूपत्वेन विधिगोचरत्वमथापि विचाररूपत्वे त्वेतन्निर्बाधमेवेति । संदिग्धे मन्दान्धकारगरज्ज्वादौ लोके दीपानयनादीनां तन्निर्णयसाधनानां प्रत्यक्षदृष्टत्वादित्याह—नासावित्यादिना ।

नन्वेवमपि श्रवणे नियमविधौ को बाध इत्यत्राऽऽह—नियमेऽपीत्यादिना । नियमेऽपि नियमविध्यङ्गीकारे सत्यपि । द्वैतेति । द्वैतस्य दृश्यस्य या श्रुतिस्तत्प्रतिबोधकशब्दतदर्थविषयकज्ञप्तिस्तस्या इत्यर्थः । संभवात् । सर्वात्मना श्रवणेन्द्रियरोधाभावेनोक्तशब्दाकर्णनयोग्यत्वानपहारादिति यावत् । उपलक्षणमिदं मननादेरपि । अभीष्टेति । अभीष्टं यन्निर्विघ्नात्मज्ञानेन जीवन्मुक्तत्वं तस्य विरहः संस्कारादिसंभवादभाव एवास्तीति योजना । ततः किं तदाह—तदित्यादिना । तत्तस्माद्दुक्तहेतोः

रित्यर्थः । शास्त्रेऽद्वैतशास्त्रे । विफलत्वं निष्प्रयोजनत्वमेवेति पूर्वपक्षः । सिद्धान्तमति इतीत्यादिविशेषेण । इति निरुक्तप्रकारेण । अधिषणमज्ञं प्रति । गुर्वातीति । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्युक्तविध्यादिनेत्यर्थः । आदितः प्रश्नं कुर्वीतेत्यादि । श्रुतीति । श्रवणविधिविवादेऽपि । वाचस्पतिर्भामतीकारः । तदिति । अद्वैतशास्त्रसाफल्यम् । अबोधयत्प्रबोधयामासेति संबन्धः ॥ १२० ॥

अथाऽऽचार्यः स्वशिष्यं प्रति, अथातो ब्रह्मजिज्ञासेति सूत्रार्थीभूतश्रीमच्छंकराचार्यभगवत्पादीयभाष्यवर्णितवर्णकचतुष्टयाभिज्ञयर्यसर्वपूर्वाचार्यसंमतश्रवणविधिवादैक्योपपत्तिं निगमयति— इतीत्यादिप्रबोधितया—

इति सर्वमतैकवाक्यता विधिवादे निपुणं समर्थिता ।
शिवतेव यथाऽष्टमूर्तिभिः प्रथितैवं श्रुतिरष्टमाङ्गिभिः ॥ १२१ ॥

इति बोधैक्यसिद्धिप्रथमोल्लासे प्रथमसूत्रविचारात्मकश्रवणविधिमतैक्योपपत्तिः ॥ १ ॥

---

अयि मुमुक्षो इत्यार्थिकम् । इति पूर्वोक्तरीत्या । विधिवादे प्रथमसूत्रनिर्णीतश्रोतव्य इति श्रवणविधिविचार इत्यर्थः । सर्वेति । सर्वेषां क्रमादपूर्वविधिवादिप्रकटार्थकारनियमविधिवादिविवरणकारतदेकदेशिमननादिसहितशब्दापरोक्षवादिश्रवणनियमविधिवादिपरोक्षज्ञानजनकश्रवणनियमवादिषड्जादिवन्मानसब्रह्मसाक्षात्कारसविवेकान्तशास्त्रश्रवणनियमवादिसंक्षेपशारीरकाचार्यनियमविधिमिलिततद्विधिपञ्चकवार्तिककारेष्टपरिसंख्याविधिवादिवाचस्पतीष्टश्रवणविध्यसंभववादिसंपूर्णप्राचीनाचार्याणां यानि मतानि तेषामेकवाक्यता निरूपिततत्तन्मुमुक्षुमतिरीतिलक्षणयुक्त्यैकतात्पर्यकतेत्यर्थः । विधिवादैकानुकूल्यं द्योतयितुं निपुणमिति क्रियाविशेषणम् । समर्थिता निरुक्तानेकयुक्तिभिः प्रतिपादिताऽस्तीत्यर्थः । अष्टेत्यपकृष्याऽत्रापि योज्यम् । आदरातिशयार्थं बहुवचनम् । एवं च स्वस्मिन्नमानित्वमीदृगतिविचित्ररचनचणत्वं चान्यर्भामिण्येवेति सूच्यते । तत्रानुरूपामुपमामभिधत्ते—शिवतैवेत्यादिना । यथाऽष्टमूर्तिभिः पृथ्व्यादिपरमेश्वराष्टव्यक्तिभिः शिवतैव प्रथिता प्रसिद्धाऽस्त्येवं श्रुतिः श्रवणक्रियाऽपि । अष्टेति । निरुक्ताष्टसंख्याकश्रवणविधिप्रक्रियासरणिभिः प्रथिता प्रसिद्धा भवतीत्येतत् ।

अपूर्वः प्रकटार्थेष्टोऽन्यः संक्षेपान्तसंमतः ।
अन्त्यो वार्तिककृन्मान्योऽस्याभावो भामतीमतः ॥ १२१ ॥

इत्यद्वैतात्मप्रबोधे प्रथमोल्लासे श्रवणविधिमतैक्योपपत्तिः ॥ १ ॥

---

अथ प्रकृतशिष्यः श्रीगुरुं प्रति वृत्तानुवादपूर्वकमतिव्याकुलतयाऽग्रिमसूत्रार्थवि-षयकसंशयनिरसिसिषया समभ्यर्थयन्नर्थान्तरन्यासेन कारुण्यमुत्पादयति—जिज्ञासेत्यादिस्रग्धरया—

जिज्ञासासूत्र एवं परमकरुणया श्रीमदाचार्यवर्य
ध्वान्तं विध्वंसितं मे भवदमलपदाम्भोजयुग्मारुणिम्ना
यद्वज्जन्मादिसूत्रेऽप्यथ तदपहृतिस्तद्वदेवास्तु सद्यः
सर्वेति प्रार्थयेऽहं न हि कलितपयाः स्तन्यपोऽन्यामुपैति॥ १॥

भोः श्रीमदाचार्यवर्य । यावद्योगैश्वर्यविशिष्टत्वे सति सकलवेदादिशब्दपरब्रह्मा-नुभावितृत्वपूर्वकतदनुभावयितृगुरुवरशिरोमणे इत्यर्थः । एतेनात्र निखिलस्वसमीहित-हितसंसाधकत्वं सूचितम् । भवदिति । भवतां युष्माकमादरातिशयार्थमेवात्र बहु-वचनम् । अमलं मृत्तिकाशौचेन यथाशास्त्रक्षालितत्वादतिनिर्मलम् । एतादृशं यत्पदा-म्भोजयुग्मं पादपद्मद्वयं तस्य योऽरुणिमाऽरुणवर्णातिशयस्तेनेत्यर्थः ।

एतेनात्र प्रतिज्ञाताचार्यपदध्वनितसदाचारसंपत्तिः सामुद्रिकप्रसिद्धपदाम्भोजेत्या-दिध्वनितमहापुरुषलक्षणोपपत्तिश्च द्योत्यते । परमेति । निरुपमानिर्निमित्तपरदुःखपरि-जिहीर्षयेति यावत् । एतेनात्राद्वेष्टा सर्वभूतानां मैत्रः करुण एव चेत्यादिस्मृतिप्रसिद्धं जीवन्मुक्तलक्षणं व्यज्यते । जिज्ञासेति । अथातो ब्रह्मजिज्ञासेति प्रथमसूत्रार्थीभूतश्री-मद्भगवत्पादीयभाष्यादिप्रसिद्धवर्णकचतुष्टयार्थविषयकमित्यर्थः । एवं प्रथमोल्लासोक्त-रीत्या । मे मम । ध्वान्तमावरणादिशक्तिमहागाढान्धकारवदज्ञानम् । विध्वंसित-मरुणोदयो हि ध्वान्तविध्वंसकः प्रसिद्ध एव तद्वन्निर्मूलितमस्ति यद्वदेव न तु तन्न्यूनम् । अथानन्तरम् । जन्मादीति । जन्माद्यस्य यत इति द्वितीयाधिक-रणार्थविषयेऽपीत्यर्थः । तदिति । निरुक्ताज्ञानध्वस्तिः । तद्वदेव । सद्य एव । एते-नौत्कण्ठ्यादतिभवभीरुत्वं भाव्यते । सर्वाऽपि समूलोन्मूलिकाऽपि । तेन यौक्तिक-ज्ञानव्युदासो व्यज्यते । इति उक्तप्रकारम् । अहं प्रार्थये । तत्र हेतुद्योत्यर्थान्तर-न्यासः । नहीत्यादिशेषेण । अन्यां गाम् ॥ १ ॥

ननु किमत्र जन्मादिसूत्रे संदिग्धमित्याशङ्क्य तद्विवक्षुः संक्षेपतो वृत्तानुवादपू-र्वकं प्रकृतसूत्रप्रवृत्तिनिमित्तं प्रतिपादयति—मुमुक्षोरित्यादिभुजंगप्रयातपूर्वार्धेन—

मुमुक्षोर्विचार्यं हि यद्ब्रह्म कीदृक्
तदित्यत्र जन्मादिसूत्रं प्रवृत्तम् ।
यतो वा इमानीति तल्लक्षकेऽस्मि-
न्व्यचिन्त्येव भाष्ये वचस्त्वादृशं यत् ॥ २ ॥

पूर्वसूत्रे हि मुमुक्षुणा वेदान्तैर्ब्रह्मविचारः कर्तव्य इत्येव निर्णीतमिति त्वविवाद-मेव । अथैवं निर्णयश्रवणानन्तरम् । मुमुक्षोर्जिज्ञासोः । यद्ब्रह्म विचार्यम् । हिर-वधारणे । अन्वेषणीयमेव वेदान्तैः । तत्कीदृक् किंलक्षणमस्ति । नहि लक्षणज्ञानं विना किं तद्ब्रह्मपदशक्यतावच्छिन्नं वस्तु किमात्माऽनात्मा वेति वेदान्तरूपकरणे-ऽपि विचारयितुं शक्यते । इति एवम् । तल्लक्षणाकाङ्क्षायां सत्याम् । अत्र विषये । जन्मादीति । जन्माद्यस्य यत इति सूत्रं द्वितीयाधिकरणं प्रवृत्तं भवती-त्यन्वयः ।

ननु कोऽत्र विमर्शः । यद्वेदान्तैरेव तल्लक्ष्म कथितमस्ति तेनैव लक्ष्यसिद्धिः कर्मोऽत्राऽऽह—यतो वेत्याद्युत्तरार्धेन । तदिति । तस्य ब्रह्मणो लक्ष्के लक्षणसमर्पके । अधिकजन्माद्यस्य यत इति द्वितीयाधिकरणविषयक इत्यर्थः । भाष्ये श्रीमद्भ-गवत्पादीयशारीरकभाष्याद्यखिलशङ्करनिबन्धवृन्देऽपीति यावत् । यत इत्यादि । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेतीति ।

इति निरुक्तरूपम् । तादृशम् । भृगुर्वै वारुणिः वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाचेत्य-न्त्यपूर्वप्रस्तावे भृग्वाख्यसुपुत्रेण वरुणाख्यस्वपितरं प्रति पृष्टब्रह्मलक्षणसमर्पकमेवेत्यर्थः । एतेन श्रुतिसूत्रयोरैकार्थ्यमावेद्यते । वचो निरुक्तवाक्यम् । व्याचिन्त्येव विशेषेणा-चिन्त्य चिन्तितं यदस्तीति ॥ २ ॥

ननु वर्तत एवैवमथापि किमत्र प्रष्टव्यमायुष्मत इत्याशङ्क्य तद्विशदयति—इदंशब्दे-त्यादिशिखरिणीपूर्वार्धेन—

इदंशब्दामृश्यं किमु निखिलदृश्यं ह्यभिमतं
श्रुतेः सूत्रस्यापि प्रकृत इह किंवा सजनि तत् ।
अविद्याद्युत्पत्त्या पुनरपि तथात्वेन विफलः
प्रयासः शास्त्रादेः परिणतिमतापत्तिरपि च ॥ ३ ॥

इहाद्वैतब्रह्मलक्षणवाक्ये यतो वेत्यादिरूपे प्रकृते । श्रुतेर्यजुर्वेदारम्भीभूततैत्तिरी-यशाखाभिमानिन्या देवताया इत्यर्थः । तथा सूत्रस्यापि जन्माद्यस्य यत इति तद्द्वि-तीयाधिकरणस्यापि । इदमिति । श्रुतौ इमानि भूतानीति भूतविशेषणीभूतेन सूत्रे अस्येति जन्मादिधर्मप्रतियोगिकधर्मितावच्छिन्नाभिधायकेनेदंशब्देनाऽऽ-मृश्यं परामृश्यमित्यर्थः । निखिलेति । हिरवधारणे । यावद्द्वैतमेव । अभिमतं श्रुतिसूत्रकर्त्रोरीश्वरबादरायणयोः संमतमस्ति किमु । किंवा यद्वा । सजनि साधेव [illegible] । अभिमतमित्यादि प्राग्वदेव [illegible]ः ।

ननु भवत्वन्यतरः पक्षः किं तेनेत्यत आह—अविद्येत्यादिसार्धया तथैव । आदिना । जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥ इत्यभियुक्तकारिकोक्तानादिजीवादिदृश्यचतुष्टयं ग्राह्यम् । एवं चाविद्याजीवेशतद्भेदाविद्याचित्संबन्धाभिधानादिदृश्यपञ्चकस्याप्युत्पत्त्येति यावत् । पुनरपि, इदानीं नित्यानित्यविवेकादितत्त्वसाक्षात्कारान्तमोक्षसामग्र्यूर्ध्वमपीत्यर्थः ।

तथात्वेन संभाविताविद्याद्युत्पत्तिमत्त्वेन । शास्त्रादेः । अद्वैतशास्त्रतत्प्रकरणाध्ययनादेरित्यर्थः । उपलक्षणमिदं यावद्विवेकादिसाधनानामपि । प्रयासः प्रयत्नश्रमः । विफलो निष्फल एव स्यात् । परिणतीति । इत्थमात्रशुद्धब्रह्मणः सकाशादेव साधनादिसाधारणं सकलं दृश्यं सृष्टिकाले जायते चेदद्वैतब्रह्मेतरसामग्र्यभावात्परिणामवादिनां सांख्यादिपक्षः परिणामवाद इति संक्षेपशारीरकोक्तेः सांख्यादीनां मतप्रसक्तिः स्यादित्यर्थः ॥ ३ ॥

न केवलमेतावदेव किंत्वपरमप्यस्ति दोषजातमित्याह—अनिर्मोक्ष इत्यादिना—

अनिर्मोक्षो जन्तोरकृतफलभुक्त्यादिरपि च
स्वभावापत्तिः स्यात्प्रथम इह पक्षेऽथ चरमे ।
न किं संकोचः स्यादिदम उत सृष्टेरपि पुरा
सदेवेत्याद्युक्तं सदपि बत सिध्येत्किल कथम् ॥ ४ ॥

अन्तोर्जीवस्य प्रतिप्रलयोत्तरमविद्याद्युत्पत्त्या कदाऽपि मोक्षो नैव भवेदिति भावः । तथा । अकृतेति । जीवस्य प्रलयोत्तरं सृष्टिसमकालमेवोत्पत्त्या प्रागकृतानामेव पुण्यादिकर्मणां सुखादिफलोपभोगप्रसङ्गः स्यादित्यर्थः । आदिना प्रलये जीवस्य विध्वंसेन कृतानां सुकृतादिकर्मणां सुखादिफलोपभोगं विनैव विनाशप्रसङ्गश्च स्यादिति ग्राह्यम् ।

तथा । स्वभावेति । ब्रह्मेतरसामग्र्यभावेन ब्रह्ममात्रमेव चिज्जडप्रपञ्चनिचयं कथं रचयतीति पृष्टे सति स्वभावादेवेत्युत्तरमावश्यकमायुष्मतः स्यात्तथा चोर्णनाभिदृष्टान्तेन स्वभाववादापातश्चेति संप्रतीह पूर्वश्लोकपूर्वार्धकृतप्रश्नद्वयमध्ये प्रथमपक्षे दृश्यत्वावच्छेदकावच्छिन्नं साधनाद्यखिलमपि दृश्यं यतो वेत्यादिश्रुताविदंपदाविवक्षितं भवतीत्यास्मके दूषणपञ्चकं भवेदिति भावः । अथान्त्यपक्षेऽपि दोषोपन्यासार्थमुपक्रमते—अथेत्यादिना । अथ प्रथमपक्षदूषणोक्त्यनन्तरम् । चरमे साधैव दृश्यं यतो वा इमानि भूतानि जायन्त इति श्रुताविदंपदार्थ इत्यन्तिमेऽपि पक्ष इत्यर्थः । इदम इदंत्वावच्छेदकावच्छिन्नदृश्यमात्रशक्तस्येदंपदस्य । संकोचः शक्तिखर्वीभावः । न स्यात्किमपि तु स्यादेवेति भावः ।

न केवलमेकमेवेदं दूषणं किंत्वन्यदपि महत्तरं तदस्तीत्याशयेन तदभिधत्ते—उतेत्यादिशेषेण । उतेति प्राक्तनदूषणेन सह समुच्चायकमव्ययम् । सदेवेत्यादीति । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादि च्छान्दोग्योपनिषदः षष्ठाध्यायारम्भे श्वेतकेत्वभिधपुत्रं प्रति पित्रा भगवतोद्दालकेनोक्तमित्यर्थः । सृष्टेरपि पुरा सादिद्वयरचनात्प्रागपि । सदपि देशिकादिपरिच्छेदत्रयस्वगतादिभेदत्रयावियुक्तं सच्चिदानन्दाद्वितीयं ब्रह्मापीति यावत् । उतेति खेदे । तदानीमविद्याधनादिद्वयस्य सत्त्वे कथं किञ्च सिध्येत्र कथंचिदपि सेत्स्युमुचितं भयादित्यन्वयः ॥ ४ ॥

ननु सृष्टेः पुरा छान्दोग्यश्रुत्युक्तसन्मात्रसिद्धौ किं बाधकमित्याशङ्क्य तच्छ्रुत्यर्थकथनपूर्वकं तदाह—तत्राऽऽहेत्यादिस्रग्धरया—

तत्राऽऽह श्वेतकेतुं श्रुतिरतुलरसादेकमेवाद्वितीय-
मेवं ह्युद्दालकोक्त्या सति सकलभिदां वक्तुमेव व्युदासम् ।
तादृग्भूयात्कथं सत्यति जनिरहिते पञ्चधा दृश्यजाते
माया तज्ज्ञाप्यजीवेश्वरतदुभयभिद्ब्रह्ममायायुगाख्ये ॥ ५ ॥

श्रुतिश्छान्दोग्यश्रुतिः । तत्र प्रलयकाले । सति सन्मात्रे प्रत्यगभिन्नब्रह्मणि । श्वेतकेतुं प्रति एतन्नामकं पुत्रं प्रति । अतुलरसादनन्तप्रेम्णेत्यर्थः । एकमेवाद्वितीयम् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । एवमनयाऽऽनुपूर्व्या । उद्दालकोक्त्या उद्दालकाख्यपितृगिरेति यावत् । सकलभिदां स्वगतसजातीयविजातीयभेदानाम् । उपलक्षणमिदं देशकालवस्तुपरिच्छेदानामपि । व्युदासं पर्युदासम् । वक्तुमेव न त्वन्यप्रयोजनार्थमित्यर्थः । आहावोचदिति संबन्धः ।

ननु भवत्वेवं श्रुत्यर्थस्ततः किं प्रकृते प्रतिज्ञातविरोध इत्यत्राऽऽह—तादृगित्यादिशेषोत्तरार्धेन । मायेत्यादि । माया च तज्ज्ञाप्यौ तदुपाहितचिद्रूपौ यौ जीवेश्वरौ मायाप्रतिबिम्बिततद्बिम्बीभूतचिदात्मानौ च तदुभयोर्भेदश्च ब्रह्ममाययोर्या युग्योग आध्यासिकसंबन्धश्चेत्याख्या संज्ञा यस्याविद्याचित्संबन्धावधिनिरुक्तदृश्यजालस्य एतादृश इत्यर्थः । पञ्चधा प्रतिपादितरीत्या पञ्चप्रकारके । ईदृशे । दृश्यजाते द्वैतसंबन्धे । जनिरहिते ।

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति श्रुतेः शक्यार्थैकोक्तमायादिपञ्चके जन्मराहित्येनानादिसिद्ध इत्यर्थः । एतादृशे सति वर्तमान इति यावत् ।

तादृक्प्रलयकालावच्छेदेनैकमेवेत्यादिश्रुतिप्रतिपादितमित्यर्थः । सत् सत्पदाभिधेयं ब्रह्म कथं मृषा।सिध्येदिति योजना । एवं च यतो वेत्यादिश्रुत्युक्तेदंशब्दार्थीभूतं सजन्येव दृश्यमिति द्वितीयपक्षेऽपि तच्छक्तिसंकोचः प्रलयेऽनादिदृश्यपक्षके सत्यद्वैतत्वेन श्रुत्युक्तसच्छब्दवाच्यब्रह्मासिद्धिश्चेति दोषद्वयं ज्ञेयमित्याशयः ॥ ५ ॥

एवं शिष्यस्य दोषसप्तकात्मकं संप्रश्नद्वयं श्रीगुरुः समाकर्ण्य समाधानरहस्यावधानार्थं तमभिमुखी करोति–शृण्वत्रेत्याद्युपजात्या—

शृण्वत्र तादात्म्यत एव दृश्यं मायाद्यनादिप्रलये चितीष्टम् ।
सितेव तोये तदिहान्त्यपक्षे सुषुप्तवत्कोऽपि न दोष एति ॥६॥

अयेऽन्तेवासिन् । अत्र प्रकृतत्वदुक्तदोषसप्तकाक्रान्तप्रश्नद्वयोपन्यस्तपक्षद्वयाविषयविशेष इत्यर्थः । त्वमित्यार्थिकम् । शृणु वक्ष्यमाणं रहस्यं समाधानमवधारयेति यावत् । किमवधार्यं समाधानमित्यत्राऽऽह—तादात्म्येत्यादिना । चिति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितिश्रुतिप्रतिपादिते सन्मात्रेऽद्वितीयब्रह्मचैतन्य इत्यर्थः । मायादीति । आदिना जीवेशतद्भेदमायाचित्संबन्धा ग्राह्याः ।

अन्येऽप्यत्र जीवेशभेदस्वदविद्येशभेदाविद्याजीवभेदाविद्याचित्संबन्धभेदाविद्याजीवेशभेदभेदाविद्याचिद्भेदचिदीशभेदचिज्जीवभेदचिदविद्याचित्संबन्धभेदाचिज्जीवेशभेदभेदेशाविद्याचित्संबन्धभेदेशजीवेशभेदभेदजीवचिद्भेदजीवजीवेशभेदभेदजीवाविद्याचित्संबन्धभेदादयः सर्वेऽपि षण्णां यथासंभवमनादीनां भेदा अपि भेदत्वेन जीवेशभेद एवान्तर्भूताः । एतादृक्पञ्चतापन्नमनादिदृश्यमजामित्यादिश्रुतिप्रतिबोधितं प्रागभावाप्रतियोगिद्वैतमिति यावत् । प्रलये महाप्रलये । तादात्म्यत एव तादात्म्येनैव । अवधारणेन संयोगसमवायादिसंबन्धान्तरव्युदासः ।

तल्लक्षणं तु भेदसहिष्णुरभेदस्तादात्म्यमिति प्रसिद्धमेव । तोये सितेव जले चषकादिगतेऽतिविशुद्धशर्करेव । किंचायं दृष्टान्तः सर्वनरानुभवसाधारणो न भवति, किंतु श्रीमत्प्रेक्षावदेकगम्य इत्यस्वरसात्तादात्म्यविषये दृष्टान्तान्तरमपि स्पष्टयति–सुषुप्तेति । यथा निर्मलराजतपानपात्रगतजले विनिहिताऽतिनिर्मलशर्करा जलादिभिन्नाऽपि स्वाधारीभूतोक्तराजतगतसितरूपमात्रावभासात्तत्तादात्म्यलक्षणैक्येनैव तिष्ठति ।

यथा वा सुप्तो देवदत्तः सुप्त्याकारपरिणतमूलाज्ञानीयतमोगुणतादात्म्येनैवावतिष्ठति तद्वत्तुल्यमेव मायाद्यनादिदृश्यं प्रलयकालावच्छेदेन सन्मात्राद्वैतब्रह्मचैतन्ये तादात्म्येनैव तिष्ठतीति यत इदं सर्वपूर्वाचार्यसंमतं भवति । तत्तस्माद्धेतोरिह त्वत्कृतप्र-

भावयमध्ये । अन्त्यपक्षे यतो वा इमानीत्यादिश्रुताविदंपदपरामृश्यं सजन्येत्र दृश्यमिष्टमिति चरमविकल्पे कोऽपि दोषो नैति नैव प्रसरतीत्यन्वयः ।

एवं च यतो वा इमानि भूतानि जायन्त इति श्रुतौ जायन्त इत्याख्यातस्यानादीन्यविद्यादिपञ्च दृश्यानि प्रादुर्भवन्ति सादीन्याकाशादीन्यनन्तदृश्यानि त्वाद्यक्षणसंबन्धलक्षणामुत्पत्तिं प्राप्नुवन्तीति सिद्धान्तास्वीकारे न कोऽपि दोषः प्रसरतीत्यभिप्रायः । इदंशब्दसंकोचस्य निरुक्तयुक्तेरभावात्प्रलये ब्रह्मणः परिच्छेदत्रयभेदत्रयशून्यत्वावच्छेदेनापि वर्तमानतायाः संभवाच्चेति भावः ॥ ६ ॥

अथ शिष्यः प्रोक्तदृष्टान्तद्वयमध्ये एव विषमत्वमाशङ्कते—तोये सितेत्यादिवसन्ततिलकया—

तोये सिता न खलु यद्यपि चाक्षुषी स्या-
त्तत्राप्यसौ रसनया स्फुटतामुपैति ।
एवं प्रबोधसमये स्मरणात्सुषुप्तौ
सौख्यादिकं स्फुटमतो विषमत्वमत्र ॥ ७ ॥

तोये रजतादिचषकस्थिते जले । सिता वसन्तादौ पानकार्थं विनिक्षिप्ताऽतिविशुद्धशर्करेत्यर्थः । यद्यपि । चाक्षुषी चक्षुःप्रत्यक्षा । न खलु स्यान्नैव भवति । तत्रापि एवं सत्यपि । सा निरुक्तशर्करा । रसनया जिह्वया । स्फुटतां प्रत्यक्षताम् । उपैति निरुक्तपानकरसास्वादसमये प्रकटी भवतीत्यर्थः । ततः किं तत्राऽऽह—एवमित्याद्युत्तरार्धेन । एवं शर्करायाः कथितप्रत्यक्षवत् । प्रबोधसमये जाग्रदवस्थाप्राप्तिकाले । स्मरणात्सुखमहमस्वाप्सं न किंचिदवेदिषमित्याकारकसुषुप्त्यनुभूतसुखादिविषयकस्मरणाद्धेतोरिति यावत् ।

सुषुप्तौ सुषुप्त्यवस्थावच्छेदेनानुभूतमित्यर्थः । सौख्येति । आदिना अज्ञानादि । स्फुटं स्पष्टं निरुक्तस्मरणान्यथानुपपत्त्याऽनुभूतत्वेन विनिर्णीतं भवतीत्यर्थः। तथा च शर्करा तु जाग्रद्दशायामेवोक्तजले निक्षिप्ता सत्युत्तरक्षणे त्वप्रत्यक्षाऽपि पानकरसास्वादसमये रासनप्रत्यक्षा भवति । निद्रितदेवदत्तेन तद्दशायां साक्ष्याकारसुखाकाराज्ञानाकारसूक्ष्माविद्यावृत्त्यनुभूतं जाग्रद्दशायां संजातनिरुक्तस्मृत्यन्यथानुपपत्त्या सुखादि निर्णीयतेऽत्र दृष्टान्तद्वयेऽन्योन्यविषमत्वमस्तीति संबन्धः । तेन दार्ष्टान्तिकेऽप्येतदित्याशयः ॥ ७ ॥

एवं शिष्यकृतवैषम्याक्षेपमाकलय्य श्रीगुरुस्तन्मनोभङ्गभियैवार्धाङ्गीकारपूर्वकं स्वाभिप्रायं विशदीकृत्यैतद्रहस्यं सकलपूर्वाचार्यमतभेदेन पुरतः प्रकाशयिष्यमाणत्वेन प्रतिजानन्नुक्तदृष्टान्तादिवैषम्यविरहमेव विस्पष्टयति—सत्यमित्यादिशार्दूलविक्रीडितेन—

सत्यं तत्प्रकृतेऽपि सृष्टिकलनात्तत्कारणं कल्प्यते
योग्यं तच्च विशुद्धचित्तदनुगं मायादिदृश्यं श्रुतेः।
तत्प्राचां मतभेदतोऽत्र इह ते संबोधयिष्याम्यलं
वैषम्यं तदिहास्ति रे वद कथं दृष्टान्तदार्ष्टान्तयोः॥ ८॥

अये मया यदुक्तं सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुत्याश्रयतः सृष्टेः प्राक्सृष्ट्यादिकार्यैकलिङ्गकाजामित्या तद्वदजामेकामित्यादिश्रुत्या चाविद्याद्यनादिदृश्यपञ्चकमपि परिच्छेदभेदत्रयाविमुक्तेऽपि ब्रह्मणि तोये सिन्धव सुखे सुखादीव तादात्म्येनैव वर्तत इत्यत्र भवतोक्तं दृष्टान्तयोः शर्करासुखाद्योः शर्करायां रासनप्रत्यक्षगम्यत्वात्सुखादेस्तु स्मृत्युन्नेयत्वाच्च यद्वैषम्यं तेन दार्ष्टान्तिकेऽप्यसिद्धिलक्षणवैषम्यं च तद्वत्तु तथाऽपि शर्करायास्तोयमिश्रणदशायां सर्वथाऽप्यप्रतीतत्वेऽपि तत्र तादात्म्येन सत्त्ववदेवं सुखादेः सुप्तदशायां सर्वथाऽप्यप्रतीतत्वेऽपि तत्र तादात्म्येन सत्त्ववच्च प्रलयेऽद्वैतब्रह्मण्यविद्याद्यनादिदृश्यपञ्चकमस्त्येवेत्यत्र किं नाम वैषम्यमित्याशयः।

एवमक्षरयोजना—अत्यन्तेव सिन्। यत्त्वया प्राङ्मदुक्तसिद्धान्तदृष्टान्तयोर्वैषम्यमुक्तं तत्सत्यमित्यर्धाङ्गीकारे। भवतु यथा कथंचिन्मदुक्ततात्पर्यानभिज्ञत्वेन। तथाऽपि। प्रकृतेऽपि प्रलयावच्छिन्नाखण्डब्रह्मचैतन्येऽपि। सृष्टीति। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा इति श्रुतेः दृष्ट्युपलक्षितजन्यजगज्जनिजीवनजरणकार्यकलनेरित्यर्थः। योग्यं तत्कारणं कल्प्यत इत्यन्वयः।

तत्कीदृशं तत्राऽऽह—तच्चेत्यादिना। सत्त्वर्थे। तत्कारणतावच्छेदकावच्छिन्नं तु। श्रुतेः सदेवेत्याद्यजामेकामित्यादिवेदादित्यर्थः। विशुद्धेत्यादिदृश्यान्तम्। ननु नेदं मामकमभिमतीत्यत आह—तदित्यादितृतीयपादेन। निगमयति—वैषम्यमित्यादि चरमचरणेन॥ ८॥

नन्वेवमिह जन्यजगज्जनिजीवनजरणकारणत्वान्यथानुपपत्त्या तद्वदजामित्यादिश्रुत्या च प्रलयेऽप्यद्वितीये ब्रह्मणि ब्रह्मविदाप्नोति परमिति ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतिशतेभ्यः प्रत्यग्ब्रह्मैक्यप्रमैकप्रतिबाध्यमनाद्यज्ञानादिदृश्यपञ्चकमाध्यासिकतादात्म्येन वर्तमानमुररी क्रियत इति मा भवत्विदंशब्दसंकोचः सदेव सोम्येत्यादिश्रुतिविरोधश्च तथाऽपि विरक्तजगदुत्पत्त्यादयोऽप्युत्पत्त्यादिमन्त एव तथा चानवस्थेति पुनः प एव शिष्यः शङ्कते—अनिस्थितीत्यादिपृथ्वीपूर्वार्धेन—

जनिस्थितिलया इमे जनियुताः सतां संमता-
स्ततः किमनवस्थितिर्ननु भवेत्र जन्मादिषु।

तथाऽत्र यत लक्ष्यमप्युपहितं भवत्येव तु-
 द्विचार्यमपि चेन्मतं घटविदां न मुक्तिः कुतः ॥ ९ ॥

नन्विति शङ्कान्तरसूचकमव्ययम् । इमे प्रकृतश्रुतिसूक्तोक्ताः । जनीति । जगदुत्पत्तिस्थितिसंहृतयोऽपि । जनियुताः, उपलक्षणमिदं स्थित्यादेरपि । एतादृशा एव सतां पण्डितानां जन्मस्थित्योः सादिभावधर्मत्वेन विनाशस्यापि स्वमतेऽ(जायतेऽस्त्यादुपक्रमस्य विनश्यतीति यास्केन भावविकार एव नाश उक्तः )नेनैव परमते प्रध्वंसाभावत्वेन च । संमताः सन्ति । ततो जन्मादिषु जगज्जन्मादयोऽपि जन्मादिमन्त एव । ततस्तेऽपि तथेत्यपर्यवस्थितिलक्षणाऽनवस्थितिरनवस्थेन न भवेत्किमपि तु नियतं स्यादित्यन्वयः ।

एवं शङ्कान्तरमप्याह—तथेत्युत्तरार्धेन । तथा निष्कलशङ्कावत् । बतेति खेदे । अत्र प्रकृताद्वैतशास्त्रे । लक्ष्यमपि जगज्जन्मादिकारणत्वलक्ष्यमपि ब्रह्मेत्यर्थः । उपहितमेव लक्ष्यतावच्छेदकीभूतमायावच्छिन्नमेव भवति । तदेव निरुक्तोपाध्यवच्छिन्नमेव ब्रह्म, अथातो ब्रह्मजिज्ञासेति न्यायात्तद्विजिज्ञासस्वेति श्रुतेश्च विचार्यमपि चेन्नित्यानित्यविवेकादिसाधनत्रयानुगृहीततीव्रतमाजिज्ञासावत्कर्तृकश्रवणनिष्ठाचार्यपर्वकर्मकयथाविध्युपसत्त्या तावदद्वैतशास्त्रेणैव निर्णेयं यदि मतं संमतमस्तीत्यर्थः । तर्हि घटविदां घटज्ञानवतां पामराणामपि कुतो न मुक्तिर्भवति । मायोपहितब्रह्मत्वस्य घटेऽपि सत्त्वात्तज्ज्ञानान्मुक्तिः कुतो हेतोर्न जायत इति वक्तव्यमिति संबन्धः । तस्मादयमप्यपरोऽत्र दोष एवेति भावः ।

न च घटे जगज्जन्मादिकारणतावच्छिन्नमायोपहितब्रह्मत्वं घटते किमिति सांप्रतम् । घटस्य जगदन्तःपातित्वेनोपादेययोरभेदादित्याशयः ॥ ९ ॥

एवं निरुक्तरूपे तटस्थलक्षणे दोषयुगमभिधायेदानीं स्वरूपलक्षणेऽपि तदाह—यद्यत्यादिशार्दूलविक्रीडितेन—

यद्यत्रास्ति तटस्थलक्षणमिवाभ्यर्हितं स्वरूपं च त-
 त्सत्यं ज्ञानमनन्तमित्युपनिषद्गम्यं मुनीनां तदा ।
सत्यत्वाद्युपलक्षितत्वकलनेऽप्येतेषु दोषः पुन-
 र्धर्मित्वं चित इत्यलक्ष्यवपुषः कान्वेष्यता स्वात्मनः ॥ १० ॥

अत्र प्रकृतेऽद्वैतशास्त्रे । तटस्थेति । तटस्थलक्षणवत्स्वलक्ष्येतरव्यावर्तकमित्यर्थः । मुनीनां सूत्रभाष्यवार्तिककृतां हरिहरचतुराननावतारीभूतभगवद्बादरायणशंकरभग-

[illegible]मित्यर्थः। स्वरूपं च। चोऽप्यर्थे। स्वरूपमपि। सत्यमित्यादि-गम्यमित्यन्वयः। सत्यं ज्ञानमनन्तं ब्रह्मेत्याकारेणोपनिषदि तैत्तिरीयशाखास्थब्रह्म-[illegible]पनिषदि। उप। उपोपसर्गः सामीप्ये। तत्प्रतीचि समाप्यत इति वार्ति-[illegible] विषये निषीदति तात्पर्येण पर्यवस्यतीति तथा। एतादृशे निरुक्तप्रमे-[illegible] परमेश्वरमाविष्कारिभिः सद्गुरूक्तविवृत्त्याऽवाप्यत इति तथेति यावत्।

तल्लक्षणम्। यदभीष्टं संमतम्। अस्ति वर्तते। तदा। सत्यत्वादीति। सत्य-त्वादिभिः। आदिना ज्ञानत्वादि। तैर्यदुपलक्षितत्वं शाखया चन्द्रत्वमिव यदा कदा-चिद्यथाकथंचित्संबद्धेन वस्तुनेतरव्यावृत्तधीविषयत्वमित्यर्थः। तस्य यत्कलनं ज्ञानं तस्मिन्सत्यपि। एष पूर्वपद्योक्तो लक्ष्यस्योपहितत्वलक्षणः। दोष एति प्राप्नोती-त्यर्थः। तटस्थलक्षणे हि लक्ष्ये जन्यजगज्जन्यादिप्रतियोगिकाभिन्ननिमित्तोपादान-कारणतावच्छेदकावच्छिन्नमायोपहितचित्त्वस्य लक्ष्यत्वेन विचार्यत्वे यथा घटस्याप्यु-पादानोपादेयाभेदात्तत्त्वेन तज्ज्ञानादपि मुक्त्यापत्तिः।

तथा पुनः स्वरूपलक्षणपक्षेऽपि। सत्यत्वाद्युपलक्षितत्वज्ञानेऽङ्गीकृते सत्यपि। चि[illegible]। धर्मित्वं सत्यत्वाद्युपलक्षितत्वरूपं भवति इति हेतोः। [illegible]वि। निरुक्तधर्महीनस्य। स्वात्मनः स्वाभिन्नाद्वैतब्रह्मरूपप्रतीच इत्यर्थः। [illegible] मुमुक्षुविचार्यता सिध्यतीति संबन्धः॥ १०॥

एवं प्रकृतशिष्यस्य जिज्ञास्यब्रह्मणस्तटस्थस्वरूपलक्षणद्वयविषयकं श्लोकद्वयेन कृतं प्रश्नजातं क्रमात्परिजिहीर्षुः श्रीगुरुः प्रथमपद्यपूर्वार्धकृतं जगज्जन्मादिष्वनवस्थाकलक्ष-णमाक्षेपं प्रत्याक्षिपति—उत्पत्तीत्यादिप्रहर्षिण्या—

उत्पत्तिस्थितिविलयास्तु कल्पितानां
तत्तच्चित्तनव इति स्फुटं मृगाप्सु।
तेनैषामपि न हि तेऽपरे भवन्ति
ज्ञानेऽर्थेऽपि च यदिहास्ति तुल्यसत्ता॥ ११॥

तुशब्दः मोक्षशङ्काव्यावृत्त्यर्थः। कल्पितानामध्यस्तानां यावत्पदार्थानां सादीना-मिति यावत्। उत्पत्तिस्थितिविलयास्तु। तत्तदिति। तत्तज्ज्ञानस्वरूपा एव न स्वाव-रणसंबन्धादिलक्षणा इत्यर्थः। इति, एवमेव। मृगाप्सु मृगपदाभिधेयग्रीष्माद्युष्मसं-[illegible]वच्छिन्नाज्ञाततरणिकिरणाधिकरणकभ्रमावभासमानजलेष्वि-त्यर्थः। स्फुटं स्पष्टमेवास्तीत्यन्वयः।

अयमाशयः । इदं रजतमित्यादिरजतादिभ्रमे सिद्धान्तेऽनिर्वचनीयं रजतं शुक्त्यव-च्छिन्नचैतन्याज्ञानपरिणामभूतं बोधबाधयोरर्थमन्तराऽन्यथानुपपत्त्या भ्रमसमानसत्ताकं समुत्पन्नमित्यङ्गीकृतमेवानिर्वचनीयख्यातिवादिभिस्तेन तदुत्पत्तिस्तु तद्विषयकं भ्रमा-त्मकं स्फुरणमेव न त्वाद्यक्षणसंबन्धः । क्षणस्यापि जन्यत्वेन तदुत्पत्तिलक्षणप्रश्न एव पुनरनवस्थातादवस्थ्यात् । न चोक्तज्ञानस्यापि तथात्वेन न तद्दण्डवारितमिति सांप्र-तम् । प्रकृते ज्ञानार्थयोः समानसत्ताकत्वेन ज्ञानोत्पत्तेरर्थरूपत्वाभ्युपगमात् । न चान्योन्याश्रयः । अविद्यादिदोषमहिम्ना तयोः समानसत्ताकत्वेन परस्परानपे-क्षणादिति ।

फलितमाह—तेनेति । एषामपि जन्यजगज्जन्मादीनामपि । ते उत्पत्त्यादयः । अपर इति च्छेदः । अन्य इत्यर्थः । न हि भवन्ति । हिरवधारणे । निरुक्तरीत्या कल्पितत्वावच्छेदकावच्छेदेन ज्ञानार्थसमानसत्ताकत्वात्प्रकृते च जगति कल्पितत्व-स्यैव सिद्धान्तितत्वाद्वक्ष्यमाणत्वाच्च नैव भवन्तीति योजना । तत्र हेतुं व्युत्पादयति—ज्ञान इत्यादिचरमचरणेन । यद्यस्माद्धेतोः । इहानिर्वचनीयख्यातिवादेऽस्मत्सिद्धान्त इति यावत् । ज्ञाने भ्रम इति तदवच्छिन्नसाक्षिचैतन्यरूपस्फुरणे । तथा—अर्थे भ्रमः-पदार्थेऽपि । चोऽवधारणे । तुल्येति । समानसत्त्वैवास्तीति संबन्धः ॥ ११ ॥

नन्वेवमपि सादिदृश्यस्योत्पत्त्यादीनां कथं लक्षणानीत्यपेक्षायां संक्षेपेणोत्पत्ति-स्थित्योर्लक्षणे व्युत्पादयति—आद्येत्यादिमन्दाक्रान्तापूर्वार्धेन—

आद्या स्फूर्तिर्जनिरभिमता प्रोक्तदृश्यस्य तद्वृ-
त्तामारभ्याऽऽप्रलयमपि या सा स्थितिः संमता नः ।
आद्यन्तावप्यलमभिमतौ तत्पदैकाभिधेयौ
कौचिन्मायापरिणतिविशेषाविहाऽऽब्रह्मबोधात् ॥ १२ ॥

प्रोक्तेति । सादिद्वैतस्य । आद्या प्राथमिकी । स्फूर्तिः साक्षिचितिरेव । नः । अद्वैतिनामस्माकम् । जनिः । जनिरुत्पत्तिरुद्भव इत्यमरादुत्पत्तिरित्यर्थः । अभिमता संमताऽस्तीति यावत् । कालस्त्वविद्यैव । तस्या एव सर्वाधारत्वादिति सिद्धान्तबि-न्दूक्तेः । क्षणात्मना परिणताविद्याप्रतिबिम्बितत्वेन साक्षिचितः क्षणिकत्वेऽपि बिम्बरू-पस्य तस्य स्थिरत्वमेवेति भावः । एवं च प्रथमक्षणरूपाविद्यापरिणामप्रतिबिम्बितबि-म्बमेवोत्पत्तित्वमिति तल्लक्षणं फलितम् । वक्ष्यमाणेऽत्र स्थितिलक्षणेऽतिव्याप्तिव्यावृ-त्तये प्रथमेति । देशादिवारणाय क्षणेति । तार्किकसंमतकालव्युदासाय रूपेत्यादि-परिष्करणम् । शिष्टं तु स्पष्टीकृतमेव । एवं क्रमप्राप्तां स्थितिमपि लक्षयति-तद्वृदित्यादिना ।

अथ निरुक्तलक्षणोत्पत्त्यनन्तरम् । तामुत्पत्तिम् । आरभ्याऽऽप्रलयमपि या मोक्तदृश्यस्य स्फूर्तिर्निरुक्तकालात्मकाविद्यापरिणामप्रतिबिम्बितसाक्षिचितिरिति यावत्। सैव नः स्थितिः संमतेति संबन्धः । तथा चोत्पत्तिमारभ्य यावत्प्रलयं मध्यस्थकाला-त्मकाविद्यापरिणामप्रतिबिम्बितसाक्षिचित्त्वमेव स्थितित्वमिति तल्लक्षणमपि । पदकृ-त्यादिकं तु प्रागुक्तदिशा स्वयमेवोह्यम् ।

नन्वाद्येत्यत्राऽऽदिपदार्थस्तद्वदन्तपदार्थोऽपि क इत्याकाङ्क्षायां तावपि लक्ष-यति—आद्यन्तावपीत्युत्तरार्धेन । आद्यन्तावपीह, आ ब्रह्मबोधाद्यावदद्वैतात्मतत्त्वसा-क्षात्कारपर्यन्तम् । तत्पदैकेति । आद्यन्तपदमात्रशक्यतावच्छेदकावच्छिन्नावित्यर्थः । एतादृशौ । अलम् । ईदृशावेव । कौचित् । मायेति । अत्रापि प्राग्वदेव प्रतिबि-म्बितसाक्षिचित्त्वं बोध्यम् । अभिमतौ भवत इत्यन्वयः । अपरं तु सरलमेव ॥ १२॥

ननु भवत्वेवं सामान्यतः सादिद्वैतस्योत्पत्तिस्थित्योस्तथाऽऽद्यन्तयोरपि लक्षण-निरूपणमथापि श्रुतस्य तल्लयस्य किं लक्षणमित्यपेक्षायां तत्संक्षिपति—तादात्म्ये-नेत्यादिशालिन्या—

तादात्म्येनानादिदृश्यैकभा या
सैवास्माकं तस्य सादेर्लयः स्यात् ।
सौर्याभावत्सैव शुद्धाऽस्त्यसङ्गा
क्वैवं ते स्याद्दूषणस्यावकाशः ॥ १३ ॥

या तादात्म्येन भेदसहिष्णुरभेदस्तादात्म्यं यथा मृद्घटस्तन्तुः पट इत्यादिप्रसि-द्धलक्षणेन संबन्धविशेषेणेत्यर्थः । अनादीति । जीवादिदृश्यपञ्चकस्येति यावत् । एकपदं तदन्यभानविनिवारणार्थम् । भा चिद्रूपा स्फूर्तिः । सैव निरुक्तचितिरेव । अस्माकमद्वैतिनाम् । सादेस्तस्य सादिदृश्यस्य । लयः । सौर्याभावत्सूरस्येयं सौरी । सूरसूर्येत्याद्यमरात्सूर्यसंबन्धिनी । एतादृशी या भा कान्तिस्तद्वदित्यर्थः । लयः स्यादिति योजना ।

यथा मृगजलादयसादिद्वैतस्य मिथ्यात्वेनोभयवादिसंमतस्य लयस्तद्भासप्रयोजकदे-शकालानवच्छिन्नसूर्यालोक एव तद्वदाकाशादिसकलव्यावहारिकदृश्यस्य लयोऽना-दिदृश्यपञ्चकावच्छिन्नचैतन्यमेवेति भावः । कर्त्रादिलभोऽर्थाज्ञो चेद्गुणोऽर्थान्तरगैक-वागित्यादिपदीपसाहित्यसारोक्तेर्नैवात्रार्थान्तरैकवाचकत्वदोषः । विस्तरस्तु तदीयटी-कायामेव द्रष्टव्यः ।

नन्वेवं यद्यपि महाप्रलयेऽत्राविद्याद्यनादिदृश्यपञ्चकावच्छिन्नचितश्चेतरमात्रशून्यत्वेनोक्तलक्षणसमन्वयेऽपि तरङ्गादेः सादिदृश्यैकरूपस्यापि तोये लये, तदितरानेकसादिदृश्यमानसत्त्वात्तत्राव्याप्तिरिति चेन्न । सादिदृश्यत्वावच्छेदकावच्छिन्नप्रतियोगिकलयत्वस्य लक्ष्यत्वात् । तस्य तु महाप्रलय एव सत्त्वान्नैवोक्ताव्याप्तिः ।

न च तर्हि तत्तद्दृश्यलयः कथं लक्ष्य इति वाच्यम् । स्वोपादानावस्थैव लय इति तत्सामान्यलक्षणात् । तस्य तूभयत्रापि साम्यात्त । एवं स्वोपादाने प्राथमिककार्यस्फूर्तिरुत्पत्तिस्तथा कार्यस्य स्वोपादानतादात्म्यं स्थितिरित्युत्पत्त्यादेरपि ते साधारणे बोध्ये ।

नन्वेवं तर्हि सदेव सोम्येति श्रुतशुद्धाद्वैतचित्सिद्धिः कथमिति चेत्तत्राऽऽह—सैवेत्यादिना । असङ्गाकाशादिदृश्यकार्यान्यथानुपपत्तिकल्पितकारणत्वंवदविद्यानादिदृश्यतादात्म्याध्यासलक्षणसङ्गशून्या सत्याकाशवत्सैव चितिः शुद्धा सकलपरिच्छेदादिद्वैतविधुराऽस्तीति संबन्धः । उपसंहरति—केत्यादिशेषेण ॥ १३ ॥

एवं लक्षणदोषमवमोष्याथ लक्ष्यदोषमपि निःशेषयति—लक्ष्यं यद्यपीत्यादिमन्दाक्रान्तया—

लक्ष्यं यद्यप्युपहितमभूत्तद्द्विधाऽप्युक्तरीत्या
तत्रापि स्यात्किमु न भवतः शुद्धवस्तूपलब्धिः ।
शाखाग्रेऽयं परममधुरश्रीः प्रकृष्टप्रकाश-
श्चन्द्रः पश्येत्युदितवचसा किं न तं वेत्सि शुद्धम् ॥१४॥

अये जिज्ञासो इति संबुद्ध्यध्याहारस्त्वार्थिक एव । यद्यपि । उक्तरीत्या । यतो वा इमानि भूतानि जायन्त इत्यारभ्य तद्ब्रह्मेत्यन्तवाक्यैस्तथा सत्यं ज्ञानमनन्तं ब्रह्मेति च प्रसिद्धतटस्थस्वरूपलक्षणावबोधकतैत्तिरीयकश्रुतिपद्धत्येत्यर्थः । ब्रह्मविदाप्नोति परमिति तदीयप्राथमिकसूत्रवाक्ये समुपन्यस्तमिति यावत् । द्विधाऽपि निरुक्तलक्षणभेदेन द्विप्रकारकमपीत्यर्थः ।

एतादृशम् । लक्ष्यं लक्षितुं योग्यमद्वैतं ब्रह्म । उपहितं शुद्धसत्त्वप्रधानाविद्याख्यमायाकल्पितसत्यत्वादिजन्यजगज्जनिजीवनजरणाभिन्ननिमित्तोपादानकारणत्वोपाध्यवच्छिन्नमेवाभूदिति यावत् । तत्राप्येवं सत्यपि । भवतस्तव । शुद्धेति । शुद्धाद्वैताबाधितचिन्मात्रात्मप्राप्तिः । न स्यात्किमु, अपि तु स्यादेवेत्यन्वयः ।

तत्र हेतुं द्योतयन्दृष्टान्तेनानुभूतिं स्पष्टयति—शाखाग्रेऽयमित्याद्युत्तरार्धेन । अयं मत्प्रत्यक्षः । शाखाग्रेऽश्वत्थादिशाखाग्रोपलक्षित इत्यर्थः । परमेति । अतिप्रशस्त-

कान्ति: । अत एवं । प्रकृष्टेति । प्रकृष्टश्चासौ प्रकाशश्चेति कर्मधारयतः स्वानित-कारकान्तमाध्यैनात्युत्कटव्यावहारिकस्वप्रकाशतेजःपुञ्ज इत्यर्थः । चन्द्रः । अयमेव चन्द्रपदशक्यतावच्छेदकावच्छिन्न इति यावत् । अतः पश्येत्युदितवचसा शुद्धद्वितीयाचन्द्रप्रदर्शकाप्तप्रोक्तानुपूर्वीकवाक्यकरणकाखण्डवाक्यार्थविषयकशाब्दबोधेनेत्यर्थः ।

तं चन्द्रं शुद्धं शाखाग्राख्योपलक्षणपरममधुरश्रीप्रकृष्टप्रकाशात्मकस्वलक्षणावच्छेदकीभूतयत्किंचिद्धर्मानाक्रान्तमेव । न वेत्सि किं पश्य मृगो धावतीत्यादिवत् । प्रकृतेऽपि । शाखाग्रेऽयं परममधुरश्रीः प्रकृष्टप्रकाशश्चन्द्रः पश्येत्युदितवचसाऽपि त्वं तं शुद्धं न वेत्सि किमपि तु वेत्सि जानास्येवेत्यन्वयः । एवं चोभयविधलक्ष्यस्योपहितत्वेऽपि शुद्धवस्तुविषयकः शाब्दबोधो लोकेऽनुभूयमानत्वेन नैवापह्नववार्ह इति भावः ॥ १४ ॥

नन्वेवमपि । किं प्रकृते यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेर्जन्माद्यस्य यत इति सूत्रस्य च मुमुक्षुजिज्ञास्यब्रह्मजन्यजगज्जनिजीवनजरणकारणमुपादानतयोत निमित्तमात्रतया । नाऽऽद्यः । असज्जडदुःखात्मकमनिरुक्तकार्यप्रतियोगिकोपादानीभूतस्य ब्रह्मणोऽपि कटककनकन्यायेनासत्त्वाद्यापातात् । नान्त्यः । एतस्य चेतनत्वेन कुलालादिवन्निमित्तविशेषोचितत्वेऽपि तदन्यस्योपादानस्यानुपलभ्यमानत्वात् ।

प्रत्युत । सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद५ सर्वमसृजत । यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं चेत्यादिना परमात्मन एव यावत्कार्योपादानत्वाम्नानाच्च । न च वाच्यं मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति श्रुत्यन्तराद्ब्रह्मनिमित्तकारणमेवास्तु चेतनत्वात्कुलालादिवन्माया तु मृदादिवज्जडत्वादुपादानमेवास्त्विति । समुदाहृतश्रुत्योरेवमपि विरोधानुद्धारादित्यत्राऽऽह—उपादानेत्यादिशिखरिण्या—

उपादानाभिन्नं यत इह निमित्तं श्रुतिमतं
विवर्ते स्वप्नादौ जगति सुखसुप्तोपममिदम् ।
यतो वा इत्यादि प्रवदति तथैव श्रुतिवचः
कुलालः पञ्चम्या स्फुरति न कपालं किमथवा ॥१५॥

इह जन्यजगज्जन्मादिरूपे । विवर्ते ब्रह्मविदाप्नोति परमित्युपक्रमवाक्यसूत्रिते यावद्द्वैतस्य ब्रह्मात्मैक्यविषयकाविचारिततत्त्वमस्यादिमहावाक्यकरणकचरमप्रमाबाध्यत्वनान्तरीयकसिद्धतदेकदेशात्मककार्यरूपेऽप्यतात्त्विकान्यथाभाव इति यावत् ।

उपादानेति । स्वाभिन्नकार्यजनकानातिरिक्तसत्ताकमित्यर्थः । एतादृशम् । निमित्तं सहकारिकारणम् । श्रुतिमतं समुदाहृततैत्तिरीयकवाक्यसंमतम् । जगति लोके । स्वाप्नादौ विवर्ते भ्रमे । आदिना सर्पादिभ्रमः । सुखेति । स्वस्थनिद्रितदेवदत्तवदित्यर्थः । यतो हेतोः । इदं कारणं भवति । अतः । यतो वा इत्यादि श्रुतिवचस्तथैव प्रवदतीति संबन्धः । नन्वत्र यत इति पञ्चम्या निमित्तमेव प्रतीयत इत्यत आह—कुलाल इत्यादिचरमचरणेन ॥ १५ ॥

अथ जन्मादिसूत्रयोजनं केषांचिद्भेदवादिनामन्यथैव संमतमिति तद्बुभुत्सुबुद्धिबाधकं मा भवत्विति धिया तदनूद्यत्वेनाभिधाय दूषयति—आद्यस्येत्यादिप्रहर्षिण्या—

आद्यस्य प्रथमशरीरिणोऽत्र जन्म
संपन्नं यत इति सूत्रयोजनं तु ।
केषांचिन्मतमपि तत्तु नैव युक्तं
जिज्ञासाश्रुतिवचसाऽतथाभिधानात् ॥ १६ ॥

प्रथमेति । एवं चास्मिन्कल्पेऽन्यः शरीरी कश्चिज्जीव एतज्जनुषः प्राक्नैव प्रादुर्भूत इत्यस्यैव प्रथमप्रादुर्भूतत्वादाद्यत्वमुचितमेवेत्याशयः । हिरण्यगर्भस्येत्यर्थः । यद्वा स वै शरीरी प्रथमः स वै पुरुष ईश्वरः। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत इति स्मृतेश्चतुराननस्येति यावत् । प्रथमपक्षे हिरण्यगर्भः समवर्तताग्र इति श्रुतिरेव मूलम् । अत्र सृष्टिसमये । यतः सकाशाज्जन्म संपन्नम् । इति सूत्रयोजनं तु । केषांचिन्न्यायशिखामणौ पूर्वपक्षत्वेनोक्तभेदवादिविशेषाणामित्यर्थः । मतमपि, इष्टमपि तत्तु ।

जिज्ञासेति । भृगुर्वै वारुणिरिति तैत्तिरीयोपनिषद्युपक्रम्य । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेतीत्यथातो ब्रह्मजिज्ञासेति पूर्वसूत्रे विचारविषयत्वेन विवक्षितब्रह्मजिज्ञासाविधायकवेदवाक्येनेत्यर्थः । अतथेति च्छेदः । तदुक्तरीतिकब्रह्मलक्षणानवबोधनाद्धेतोरिति यावत् । नैव युक्तं योग्यं नैव भवतीति योजना ।

अनया हि श्रुत्या जन्यजगज्जनिजीवनजरणाभिन्ननिमित्तोपादानकारणत्वमेव ब्रह्मणस्तटस्थलक्षणमुक्तमिति तु निर्विवादमेव । तादृशब्रह्मैव भृग्वाख्यपुत्रं प्रति वरुणाख्यपित्रोपनिषत्सु विचार्यतया विहितं भवति । तथा च श्रुतिविरुद्धत्वादुक्तसूत्रयोजनं तु न योग्यं भवतीति भावः । अनेन व्याख्यानान्तराण्यपि दूषितानि ।

तानि च । श्रीमद्विद्यारण्यीयसर्वदर्शनसंग्रहे रामानुजमतं प्रकृत्य किं पुनस्तद्ब्रह्म विजिज्ञासितव्यमित्यपेक्षायां लक्षणमुक्तम्—जन्माद्यस्य यत इति । जन्मादीति सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः । अस्याचिन्त्यविविधरचनारूपस्य नियतदेशकालभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य यतो यस्मात्सर्वेश्वरात्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसंकल्पाद्यनवधिकातिशयासंख्येयकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः पुंसः सृष्टिस्थितिलयाः प्रवर्तन्त इति सूत्रार्थ इति ।

तत्रैव माध्वमतमपि प्रकृत्य जिज्ञास्यब्रह्मणो लक्षणमुक्तम्—जन्माद्यस्य यत इति । सृष्टिस्थित्यादि यतो भवति तद्ब्रह्मेति वाक्यार्थ इति । पञ्चमस्तु भागवतीकारम्भ एव । आद्यस्याऽऽकाशस्य । जन्म, आत्मन आकाशः संभूत इति श्रुतेर्यतो भवतीत्याह । प्रयमप्येतचिन्त्यम् ॥ १६ ॥

एवमद्वैतब्रह्मलक्षणयोधकसूत्रार्थसिद्धान्तसिद्धे जगत्कारणवादे वैशेषिकादीनिखिलभेदवादिनामपि निराकरणमप्यार्थिकमेवाभूदित्याह—एतेनेति वसन्ततिलकया—

> एतेन खण्डनमभूत्किल कारणत्वे
> वैशेषिकादिविदुषां जगतोऽखिलानाम् ।
> अज्ञानकल्पितमिदं यदि चेन्न दृश्यं
> ज्ञानैकनाश्यमपि नो भयदं द्वितीयात् ॥ १७ ॥

एतेनाथातो ब्रह्मजिज्ञासेति शास्त्रारम्भाधिकरणसूत्रविचारविषयीभूतनिरुक्तश्रौतीवाक्यस्वारस्यसिद्धब्रह्मलक्षणवादिजन्मादिसूत्रार्थनिर्णयेनेत्यर्थः । अखिलानां निरवशेषाणां यावद्भेदवादिनामपि । एतादृशाम् । वैशेषिकादीति । काणादादिमतवादिनामिति यावत् । जगतो विश्वस्य । कारणत्वे विश्वकारणविनिर्णयविषय इत्यर्थः । खण्डनं किल निरसनमेव । अभूदासीदिति संबन्धः ।

तत्र हेतुं प्रतिपादयति—अज्ञानेत्याद्युत्तरार्धेन । यदि द्वितीयाद्भयदम् । द्वितीयाद्वै भयं भवतीति श्रुतेर्द्वैतत्वावच्छेदेन दुःखदमिति यावत् । एतादृशं परमानर्थमूलजीवेश्वरादिपञ्चविधभेदोपलक्षितं दृश्यम् । अत्रेदमस्तु संनिकृष्टमिति वचनान्निरतिशयसंनिकर्षस्य साक्ष्याद्यदृग्विषयत्वमन्तरा कुत्राप्यदर्शनादिदंपदेनैव सकलभास्यसंग्रहे यद्यपि दृश्यपदं पुनरुक्तमिव भात्यथापि, अयमात्मा ब्रह्मेत्यादिश्रुतावपि इदमात्मेऽहं स्यास्मानि स्वप्रकाशत्वेन नित्यापरोक्षत्वविवक्षयाऽपीदंपदप्रयोगदर्शनात्तद्व्यावर्तकत्वेन तन्निराकरणीयमेव ।

अज्ञानेति । न तं विदाथ य इमा न आनान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीति श्रुतेरज्ञानकल्पितं ब्रह्मात्मैक्याश्रयविषयकानादिभावरूपाविद्यामात्रप्रतिभासितं न चेत्तयात्तर्हि ज्ञानैकनाश्यमपि । ब्रह्मविदाप्नोति परम् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । ज्ञात्वा देवं मुच्यते सर्वपाशैः । ज्ञात्वा देवं सर्वपाशापहानिः । ज्ञात्वा शिवं शान्तिमत्यन्तमेति । ब्रह्म वेद ब्रह्मैव भवति । तरति शोकमात्मवित् । ब्रह्मैवेदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् । ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामित्यादिश्रुतिसहस्रेण ।

ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परमित्यादिस्मृतिसहस्रेण चोक्तं ब्रह्मात्माभेदबोधकवेदान्तमहावचनजन्यापरोक्षाप्रतिबद्धप्रमामात्रबाध्यमपि नो भवेदित्यन्वयः ॥ १७ ॥

तदेवं समुपन्यस्तश्रुतार्थापत्त्या फलितं निगमयति--ज्ञानेनैवेत्यादिशार्दूलविक्रीडितेन--

ज्ञानेनैव विमुक्तिरित्यविरतं वेदान्तविश्वंभरा-
नाथस्यातुलदुन्दुभिध्वनिरयं ब्रह्माण्डहृन्मण्डले ।
तच्छ्रीशंकरदेशिकेश्वरमताद्वैतात्मविद्यानुग-
द्वैतध्वान्तविवर्तवादविरहे कस्यापि काऽन्या गतिः ॥१८॥

यतः । ज्ञानेनैव निरुक्तरूपब्रह्मात्मैक्यविषयकवेदान्तमहावाक्यकरणकाप्रतिबद्धापरोक्षचरमप्रमयैवेत्यर्थः। प्रसंख्यानादिसाधनान्तरं मत्याख्यातुमेवावधारणम् । विमुक्तिः। अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृत इति वार्तिकोक्तेर्विशिष्टा सगुणसायो(यु)-ज्यायपेक्षया विलक्षणा।ऽद्वैतस्वप्रकाशब्रह्मात्मानन्दरूपविदेहात्मिका मुक्तिः । मुक्तिः कैवल्यमित्यमरान्मोक्ष इति यावत् । इत्येवंप्रकारकः । अविरतमखण्डं न तु क्षणमात्रम् । वेदान्तेति । उपनिषद्भागभूपतेरित्यर्थः । अतुलेति । विश्वविजयजन्यत्वेन तुलारहित एतादृशो यो दुन्दुभिध्वनिर्भेरीविराव इति यावत् ।

अयं सर्वविद्वत्प्रत्यक्षो ब्रह्माण्डहृन्मण्डले वर्वर्तीत्यन्वयः । ततः किं तत्राऽऽह--तदित्याद्युत्तरार्धेन । तत्तस्माद्धेतोः। श्रीत्यादि । इह श्रीर्निरतिशयस्वाभाविकैश्वर्यसंपदेव तद्वान्यः शंकरः पार्वतीपतिरेव स चासौ देशिकेश्वरश्चेति । तथा चतुर्भिः

यह शिष्येषु शंकरोऽवतरिष्यतीति वायुपुराणोक्तेर्जगद्गुरुत्वेन लक्ष्यसार्वभौमवर्ती तस्य या मता शुद्धवैदिकसिद्धान्तीभूतमुक्तिसाधनत्वेन संमता, एतादृशी याऽद्वैतात्मविषयिणी विचारितविचारिततत्त्वमस्यादिवाक्यजन्यापरोक्षाप्रतिबद्धप्रमा तामनुगच्छति तदुदयसमसमयमेव त्रैकालिकनिरस्तं भवत्येतादृशं यद्द्वैतं नामरूपात्मकं दृश्यं तथा तन्मूलीभूतं ध्वान्तमनादिभावरूपं ब्रह्मात्मैकाश्रयविषयमज्ञानं चैतल्लक्षणः सर्वोऽपि कार्यकारणात्मकः संसारो विवर्तोऽतात्त्विकोऽन्यथाभावः । प्रोक्तप्रमाप्रबाध्यत्वेन भ्रम एवेत्याकारको यो वादस्तत्त्वबुभुत्सोः कथावाद इति तल्लक्षणाद्वस्तुजिज्ञासुमनोबप्रबोजकः कथाविशेषस्तस्य यो विरहो राहित्यं तस्मिन्सतीत्यर्थः । निरुक्तसिद्धान्तानङ्गीकारे सतीति यावत् ।

कस्यापि वादिनोऽन्या निरुक्तसिद्धान्तेतरा का गतिरस्ति । ज्ञानैकसाध्यमुक्तिश्रुत्याद्यन्यथानुपपत्त्या यावद्द्वैतस्य ज्ञाननिवर्त्यत्वलक्षणमिथ्यात्वाङ्गीकरणमन्तरेण नैवेतरः स्वप्नेऽप्युपाय इत्याशयः ॥ १८ ॥

एवं प्रासङ्गिकं परिसमाप्याथ प्रकृतं ब्रह्मलक्षणं कथयितुं तल्लक्षणमेव ( लक्षणपरो ह्ययं तच्छब्दः । तथा च लक्षणसंबन्धि यावल्लक्षणेष्वेवानुगतं धर्मजातमित्यर्थः ) । सामान्यतः सर्वधर्मविधुरे ब्रह्मण्यद्वैतत्वात्कालत्रयेऽपि नैव संभवतीत्याक्षेपं कस्यचिन्मुमुक्षोरुपन्यस्य तल्लक्षणसंभवं युक्त्या संक्षिपति श्रीगुरुः कौमुदीकारमतानुवादेन—स्वस्मिन्नित्यादिस्रग्धरया——

स्वस्मिन्नन्येतरत्वं व्यवहृतिमपि यत्साधयेल्लक्षणं त-
न्निर्भेदे ब्रह्मणीदं कथमिति विविधोत्तर्कचित्रार्कतप्तम् ।
जीवं जीवं प्रतीदं श्रुतियुवतिशिरोमालतीमञ्जुमरन्दं
सद्यः संयोतयेयुः करगतममृतं कौमुदीकृद्द्विजेन्द्राः ॥१९॥

यत् धर्मजातम् । स्वस्मिन्स्वलक्ष्ये वस्तुनि । अन्येतरत्वं स्ववाचकवाच्यतावच्छेदकावच्छिन्नभिन्नत्वावच्छेदकशालिभेदप्रतियोगित्वमित्यर्थः । ( स्वं घटादि लक्ष्यं तद्वाचकं घटादिपदं तद्वाच्यतावच्छेदकं घटत्वादि तदवच्छिन्नो निखिलघटस्तद्भिन्नत्वावच्छेदकं तद्भिन्नान्योन्याभावप्रतियोगितावच्छेदकावच्छिन्नत्वं तच्छालिनः सर्वेऽपि स्वेतरे तद्भेद० ) । तथा व्यवहृतिमपि व्यवहारमपि । साधयेत्संपादयेत् । तत्तथाभूतं धर्मजातं लक्षणं भवतीति संबन्धः ।

अत एवाऽऽहुः—व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति । तन्निरुक्तलक्षणं व्यावृत्त्याद्यन्यतरजनकधर्मजातम् । इदं प्रागुपन्यस्तं तटस्थलक्षणादित्वेन बुद्धिस्थ-

भृगुं पुत्रं प्रति । आशु शीघ्रं बोद्धुमुपदेष्टुम् । शाखेत्यादि । शुक्लद्वितीयाचन्द्रमुपदेष्टुं यथा चैत्रेण मैत्रं प्रत्यश्वत्थादिशाखाग्रं चन्द्रे कदाऽप्यसंबद्धमप्युपदिश्यते तद्वदेवेत्यर्थः । अवोचत् । अकथयत् ।

तत्र हेतुं प्रतिपादयति—नोक्तेत्यादिना । उक्तं भृगुर्वै वारुणिरित्यादिनोपक्रम्य यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेत्यन्ततैत्तिरीयकोपनिषद्ग्रन्थे निरूपितं यज्जगत्तद्ब्रह्मविवर्तीभूतं विश्वं तस्येत्यर्थः । जन्म उत्पत्तिः । स्थितिर्वा लयः संहृतिर्वा । तस्मात्ब्रह्मणः सकाशात् । पृथगन्यत् । नो अस्ति तत्पृथग्भावे तस्य शशशृङ्गत्वापत्तेर्नैव विद्यत इति हेतोस्तन्निरुक्तजगज्जन्मादि । प्रत्येकमेव जगतोऽस्य जन्माद्येकैकमेव । अस्य प्रकृतत्वेन बुद्धिस्थस्य स्वप्रकाशात्माभिन्नत्वेन नित्यापरोक्षस्य वा ब्रह्मण इति यावत् । इदं प्रकृतत्वेन बुद्धिस्थं लक्षणमस्त्विति योजना ॥२०॥

निरुक्तमुमुक्षोः संमतेऽपि जगज्जन्मादिप्रत्येकलक्षणवादेऽत्र दूषणोपन्यासमुखेन मुमुक्ष्वन्तराक्षेपपूर्वकमाचार्यान्तरकृतसमाधानं बोधयति—कपाल इत्यादिशिखरिण्या—

> कपाले संलीनः स्थितिमुपगतो मस्करिकरे
> कुलालाद्दण्डादेर्जनित इह कुम्भस्तु न तथा ।
> ततो नेदं लक्ष्मेत्यतिविकलमूचुस्त्रयमिदं
> निमित्तत्वज्ञत्वे प्रवदितुमुपादान इतरे ॥ २१ ॥

इह लोके । कुम्भो मुद्गरप्रहारादिना भग्नः सन् । कपाले संलीनो भवति । ततः पूर्वं तु । मस्करिकरे सदण्डयतिहस्ते । स्थितिं प्रायेणावस्थानम् । उपगतः प्राप्तोऽभूत् । ततोऽपि प्राक् । कुलालस्कर्तुः । दण्डादेः सव्यापारदण्डचक्रादिकरणाभिन्ननिमित्तादित्यर्थः । जनितः समुत्पन्नोऽपि । तुशब्दोऽप्यर्थे । तथा स्वजन्मस्थितिलयरूपैकैकलक्षणेनैककारणलक्षक इति यावत् ।

न यतो नैवास्ति । ततो हेतोः । इदं प्रोक्तजगज्जन्माद्येकैकम् । लक्ष्म ब्रह्मलक्षणं संभवति । इति हेतोः । अतिविकलं परमव्याकुलं जिज्ञासुं प्रति । इतरेऽन्य आचार्याः । उपादाने उपादानकारणे । निमित्तेति । करणत्वचेतने । प्रवदितुं प्रतिबोधुम् । त्रयमेवेदं जगज्जन्मादित्रिकमेव ब्रह्मलक्षणम् । ऊचुरित्यन्वयः । तदभिन्नैव जगदभिन्ननिमित्तोपादानेत्याकूतम् ॥ २१ ॥

नतु किमादावद्वैते ब्रह्मण्युपादानत्वमेवेत्याशङ्क्य प्रसिद्धतार्किकादिसंमतोपादानत्ववैलक्षण्यकथनपुरःसरं स्वसंमतं तल्लक्षणं संक्षिपति—नैवेत्यादिशार्दूलविक्रीडितेन—

नैवारम्भकताऽणुवच्छ्रुतिमता भूयादुपादानता
नापि स्यात्परिणामिता प्रकृतिवत्संघातवत्कौघता ।
किंतु स्वानतिरिक्तहीनविलसत्सत्तो विवर्तोऽत्र यः
सुप्ते स्वप्न इवाद्वयात्मनि तथाऽज्ञानादुपादानता ॥ २२ ॥

अणुवत्तार्किकसंमतपरमाणुवत् । आरम्भकता परमाणुभिरेवेश्वरेच्छादिवशाद्द्व्यणुकादिक्रमेण महापृथिव्याद्यारभ्यत इति तत्सिद्धान्तादारम्भकता निरुक्तरूपा, उपादानता, उपादानकारणता । श्रुतिमता-यतो वा इमानि भूतानि जायन्त इत्यादिभृगुवल्लीसंमता । नैव भूयान्नैव संभवेदित्यर्थः ।

ननु सत्कार्यवादित्वेन तार्किकाभिमताऽऽरम्भकतालक्षणोपादानता मा भवतु श्रुतिमताऽथाप्यसत्कार्यवादित्वेन सांख्यसंमताऽसौ तु भवतु तयेत्यत्राऽऽह-नापीत्यादिना । प्रकृतिवत्कापिलसंमतप्रधानवत् । परिणामिताऽपि तात्त्विकान्यथाभावलक्षणपरिणामस्वरूपाऽपि । उपादानता श्रुतिमता नैव स्यादित्यनुकृष्यान्वयः ।

यदा चास्तिकयोस्तार्किककापिलयोरप्यभिमतोपादानता श्रुतिसंमता न भवतदा नास्तिकविशेषाभिमताऽसावतथेति कैमुत्यसिद्धमित्याह--संघातेत्यादिना । संघातवादवदित्यर्थः । ओघता समूहं प्रकृत्य स्तोमौघनिकरव्रातवारसंघातसंचया इत्यमरात्पृथिव्यादिचतुष्टयपरमाणुसमूहतारूपोपादानता क श्रुतिमता स्यादपि नैव सा तथाऽस्तीति योजना ।

तदुक्तं संक्षेपशारीरके-आरम्भवादः कणभक्षपक्षः संघातवादस्तु भदन्तपक्षः सांख्यादिपक्षः परिणामवादो वेदान्तपक्षस्तु विवर्तवाद इति । भदन्तश्चार्वाकः सिद्धान्तबिन्दौ तु तत्खण्डनं प्रकृत्य यद्यपि वादिना प्रत्येकं भूम्यादिरात्मत्वेनाभ्युपेयते । संघातस्यैव तदभ्युपगमादित्युक्तेः । एवं तर्हि कीदृगुपादानता श्रुतिमतेत्यत आह-किंत्वित्याद्युत्तरार्धेतः । अत्र वेदान्तपक्षे । स्वेति । स्वमधिष्ठानं तदनतिरिक्ता तदैक्यशालिनी तथा हीना ततो न्यूना बाधितत्वावस्था प्रतिबिम्बादिष्वौपाधिकभ्रमस्थले बाधोत्तरमपि यावदुपाधि विलसन्ती भासमाना च सत्ता यस्य तथेति यावत् । एतादृशो यः सुप्ते पुंसि स्वप्न इव विवर्तो भ्रमः स इव । अद्वयेति । अज्ञानात्तथा तादृशी, उपादानताऽस्तीति संबन्धः । अध्यस्ते दोषविशेषव्यावृत्त्यै-स्वानतिरिक्तेति । अधिष्ठानेऽध्यस्तविवर्तत्वहानाय-हीनेति ॥ २२ ॥

उपसंहरति-इतीत्यादिप्रबोधितया-

इति लक्षणवाद ईरिता मतयुग्मस्य मयैकवाक्यता ।
मिथुनस्य चिरंतनस्य सा प्रथिताऽस्तीह यथाऽद्वितीयता ॥२३॥

इति बोधैक्यसिद्धिप्रथमोल्लासे द्वितीयसूत्रविचारगत-
ब्रह्मलक्षणवादमतैक्योपपत्तिः ॥ २ ॥

---

लक्षणेति । ब्रह्मलक्षणविचारे । तत्र दृष्टान्तं स्पष्टयति—मिथुनस्येत्युत्तरार्धेन । चिरंतनस्यानादिरूपस्य । मिथुनस्य शिवशक्त्यात्मनः । सा, अर्धनारीश्वरत्वेन श्रुता ॥ २३ ॥

इत्यद्वैतात्मप्रबोधे प्रथमोल्लासे द्वितीयसूत्रविचारगतब्रह्मलक्षणवादमतैक्योपपत्तिः ॥२॥

---

एवं जन्यजगज्जन्मादिविवर्ताभिन्ननिमित्तोपादानत्वं ज्ञेयब्रह्मलक्षणं निर्णीयाथ शिष्यस्तत्रापि शङ्कमानः श्रीगुरुं प्रति तदुच्छित्तिं याचते—उपादानमित्यादिशिखरिण्या—

> उपादानं शुद्धं भवति शबलं वोक्तजगतोऽ-
> न्यय ईशो वा जीवः किमु सकलजीवा उत तमः ।
> न पञ्चाप्येते स्युर्मितिविषयताऽत्यन्तविरहा-
> त्तथाऽऽत्मा तु ज्ञेयः परिहर गुरो संशयमिमम् ॥१॥

अक्षेत्यादिकम् । शबलं, शबलैताश्च कर्बुर इत्यमरात्कर्बुरवत्, अविद्यादिविजातीयपदार्थान्वितं वेत्यर्थः । उक्तेति । जन्याद्विवर्ततयाऽभिहितदृश्यस्येति यावत् । तथा चात्र शुद्धस्योपादानत्वमाद्यविकल्पोक्तं शुद्धत्वादेवासंभावितं मत्वाऽन्येऽपि कोटिचतुष्टयमुद्दिशति—अन्य ईशो वेत्यादिद्वितीयपादेन । तमो मूलाज्ञानम् । केवलस्य तस्य कालत्रयेऽपि स्वरूपाद्याभात्सविद्यवच्छिन्नत्वेनैव तस्य शबलकोटिनिविष्टत्वमिति तत्त्वम् ।

एवमुद्दिष्टपक्षपञ्चकमपि क्षपयति—नेत्यादितृतीयपादेन । तत्र हेतुं प्रतिपादयति—मितिरित्यादि । मितिः प्रमा तद्विषयत्वं तु निरुक्तोपादानेऽवश्यं वाच्यम् । अन्यथा यतो वा इत्याद्यारभ्य तद्विजिज्ञासस्व । तद्ब्रह्मेतीत्यन्तं तैत्तिरीयकोक्तब्रह्मलक्षणमुक्तमसंभावितमेव स्यात् । तत्तु शुद्धे शुद्धत्वादेव व्याहतम् । अवशिष्टपक्षेष्ववस्तुचतुष्टये तु मिथ्यात्वसाधकदृश्यत्वेनैव तदसंभावितमिति भावः । ननु शबलकोटौ मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदिति श्रुतेराद्यचरमपक्षयोरौचित्येऽपि मध्यमयोस्तयोर्मिथ्यात्वमेवेति चेन्न । वक्ष्यमाणैकशरीरैकजीववादे तथा भामतीकृन्मते च क्रमाज्जगति जीवोपादानत्वस्यैवोपपादयिषितत्वात् ।

नन्वेवं चेत्तर्ह्यस्तु तार्किकसंमताः परमाणवः सांख्यसंमतं प्रधानं वोपादान-मित्यत आऽऽह—तथाऽऽत्मा त्वित्यादिना। प्रोक्तशङ्काशान्त्यर्थस्तुशब्दः। तथा जन्य-जगज्जन्माद्यभिन्ननिमित्तोपादानत्वोपलक्षित आत्मैव तु ज्ञेयः श्रुत्या ब्रह्मत्वेन बोद्धु-मुपदिष्टोऽस्ति न तु परमाण्वादिकम्। ब्रह्मविदाप्नोति परमित्युपक्रमे ब्रह्मज्ञानस्यैव मोक्षप्रदत्वोक्तेरित्यभिप्रायः। ततः किं तदाह—परीत्यादिश्लोकेन॥ १॥

एवं शिष्यप्रार्थनानन्तरं श्रीगुरुस्त्वादृशमेव संदिहानं मुमुक्षुविशेषं प्रति कृपया श्रीमत्सर्वज्ञात्ममुनीश्वरचरणकृतसाधनकथनमेवमस्तीत्याह—विज्ञेयेत्याद्युपजात्या—

विज्ञेयलक्ष्मोक्तिरियं कथं भवेच्छुद्धं विनेत्याकुलमुद्दिधीर्षवः।
तज्ज्ञेयलक्ष्मोक्तित एव शुद्धं संक्षेपशारीरकृतः समूचिरे॥ २॥

इयं यतो वा इमानीत्यादितैत्तिरीयोपनिषत्प्रसिद्धा। एतेनोक्तमुमुक्षोः सर्वदा तच्चिन्तकत्वं सूच्यते। विज्ञेयेति। ब्रह्मविदाप्नोति परमित्युपक्रमे शुद्धब्रह्मज्ञानादेव मुक्तिश्रवणात्किंलक्षणं ब्रह्मेत्याकाङ्क्षायां जन्यजगज्जनिजीवनजरणाभिन्ननिमित्तोपा-दानं कारणत्वोपलक्षितं सत्यज्ञानानन्तानन्दात्मवस्त्वेव ब्रह्मेति मुमुक्षुजिज्ञास्यार्थिक-शुद्धब्रह्मलक्षणनिर्णीतिरित्यर्थः। शुद्धं, अद्वैतं ब्रह्म विना। कथं केन प्रकारेण। भवेत्पर्यवस्येत्। इति, अनेन संदेहेन। आकुलं विह्वलम्। ईदृशं कंचिज्जिज्ञासुं प्रति। उद्दिधीर्षवः। करुणयैव संशयसमुद्रात्समुद्धर्तुमिच्छवः सन्त इति यावत्। एतादृशः। संक्षेपेति। श्रीमत्सर्वज्ञात्ममुनीन्द्राः। ज्ञेयेति। भृगुवल्ल्याख्यतैत्तिरीयो-पनिषदि भृग्वाख्यस्वपुत्रं प्रति यतो वा इत्यादिश्रुत्या प्रागुपक्रान्तस्य ज्ञेयस्य ज्ञातुं योग्यस्य शुद्धब्रह्मण एव निरुक्तजगदभिन्ननिमित्तोपादानरूपलक्षणकथनादेवेत्यर्थः। शुद्धमद्वैतं ब्रह्मैव। तन्निरुक्तजगदुपादानं समूचिरे सम्यक् स्वग्रन्थे प्रतिपादयामासु-रिति संबन्धः॥ २॥

तत्रापि प्रागुक्तां शिष्याशङ्कां देशिकेशः प्रकृतः स्वयमेवानूद्य तद-ङ्गीकारपूर्वकं शुद्धत्वाबाधेऽभिनवयुक्तिकथनं प्रतिजानन्नुक्तान्तेवासिनं तत्राभिमुख-यति—मितीत्यादिहरिण्या—

मितिविषयताऽत्यन्ताभावोऽधुनाऽत्र मयोदितः
कथमिति भवेज्ज्ञेयं शुद्धं न बाध्यमिति त्वया।
मितिविषयता शाबल्येऽपि प्रयाति न शुद्धता
कथमपि यथा तादृग्युक्तिं वदाम्यवधारय॥ ३॥

अये जिज्ञासो, इत्यध्याहृत्यम्। भो आचार्य। अत्र ज्ञेयब्रह्मणि विषये। मितीति। मितिः प्रविचारितस्वाचार्योपदिष्टा तत्त्वमस्यादिवेदान्तमहावाक्यजन्या, अहं ब्रह्मा-

त्मीति निर्विकल्पकापरोक्षप्रमितिवद्चरमप्रमा तस्या या विषयता स्वार्थस्फोरकता तस्या योऽत्यन्ताभावः शुद्धस्वन्याघातप्रयुक्तलक्षणाक्षिकासंभव इति यावत् । मया । प्रपूर्वपक्ष एव । उदितः कथितः । इति हेतोः । ज्ञेयं ज्ञातुं योग्यम् । शुद्धं ब्रह्मैव । कथं भवेत् । ज्ञेयत्वमेव शुद्धे ब्रह्मणि यदा मितिविषयताविरहान्न संभवति तदा तत्र निरुक्तजगदुपादानस्वरूपं लक्षणं नैव संभवतीति कैमुतिकसिद्धमेवेति त्वया न वाच्यमित्यन्वयः ।

तत्र हेतुं द्योतयति—मितिविषयतेत्याद्युत्तरार्धेन । अये बुभुत्सो । ब्रह्मणि । मितीति । निरुक्तप्रमितिविषयतावैशिष्ट्ये सत्यपीत्यर्थः । यथा येन प्रकारेण शुद्धता, असङ्गचिन्मात्राद्वैतरूपता । कथमपि केनापि प्रकारेण न प्रयाति नैव नश्यति यथा । तत्तद्युक्तिम् । अहं त्वां प्रति वदाम्युपपादयामि । त्वं तु तामवधारयेति योजना ॥ ३ ॥

अथ श्रीगुरुः प्रतिज्ञातां युक्तिं व्युत्पादयति—लोक इत्यादिशार्दूलविक्रीडितेन—

लोके रत्नपरीक्षकस्य नयनं शुद्धेऽपि रत्ने यथा
वीक्षायां प्रतिबिम्बितं तदपि तच्छुद्धं न किं वेत्त्यसौ ।
तत्तद्वाक्यजशेमुषीविषयता सत्त्वेऽपि शुद्धं न किं
ब्रह्मास्मीत्यपि याति यास्यति यथा को वा मुमुक्षुः क्षणात् ॥ ४ ॥

यथा लोके लोक्यतेऽवलोक्यते हीरकादिरत्नं यत्रेति लोकोऽत्र रत्नापणस्तस्मिन्नित्यर्थः । जगति वा । रत्नेति । मणिगुणादिनिर्णयनिपुणस्येति यावत् । नयनं नेत्रम् । एकवचनं त्वत्र वक्रितभावं हि वक्रदृष्ट्या वै रत्नं परीक्षन्तीति तत्स्वाभाव्यज्ञापनार्थमेव । वीक्षायां सत्याम् । यद्यपि । रत्ने शुद्धेऽपि निर्दोषेऽपि । प्रतिबिम्बितं प्रतिफलितं तु भवत्येव । तदपि तथाऽपि । असौ निरुक्तरत्नपरीक्षकः । तत्तद्रत्नम् । शुद्धं स्वनेत्रप्रतिबिम्बतः कृष्णबिन्दुसंदूषितमिव प्रतिभासमानमपि तस्य मिथ्यात्वाध्यवसायादतुलविमलमिति यावत् । एतादृशं न वेत्ति किं न प्रमिणोति किम्, अपि तु प्रमिणोत्येवेत्यर्थः ।

एवं ध्वन्यमानत्वेन वक्ष्यमाणानुमानसाधकं दृष्टान्तमभिधाय दार्ष्टान्तिकं स्पष्टयति—तद्वदित्याद्युत्तरार्धेन । तद्वत्तथा । वाक्येति । वाक्येन शब्दपरमपरमनिगुरूपदिष्टसुविचारितस्वशाखोपनिषन्महावाक्येन जायत इत्येतादृशी या शेमुषी, धीः प्रज्ञा शेमुषी मतिरित्यमराद् ब्रह्माहमस्मीत्यपरोक्षाबाधितचरमवृत्तिरूपनिर्विकल्पकाखण्डप्रमा तस्या या विषयता, अद्वैतब्रह्मात्मैक्यविषयकानादिभावरूपतन्मात्राभिव्यावर्तकाज्ञानविनाशकत्वविमूकाज्ञानभ्रंशनक्षमतदेकाकारतेत्यर्थः । तस्याः सत्त्वे विद्य-

भानत्वेऽपीति यावत् । को वा मुमुक्षुः सकलसाधनसंपत्परिपाकवान्प्रमातेत्यर्थः । क्षणाभिरुक्तवृत्तिप्रयुक्तविषयाकारताक्षणावच्छेदेनैवेति यावत् । अहं ब्रह्मास्मीति श्रुत्युक्तानुभूत्यनुसारतः शुद्धमपि, अद्वैतात्मतत्त्वम् । न याति किं न यास्यति किं न ययौ च किं, अपि तु सर्वोऽपि मुमुक्षुः प्रोक्तरीत्या तत्तत्कालावच्छेदेन शुद्धं ब्रह्म प्राप्नोत्येवेत्यन्वयः ।

अत्र क्षणादित्युक्त्या निरुक्तवृत्तिविषयतानुभूत्यविद्यास्तीनामेककालिकत्वं ध्वन्यते । तदुक्तं कल्पतरौ—शुद्धं ब्रह्मेतिविषयीकुर्वाणा वृत्तिः स्वस्येतरोपाधिनिवृत्तिरुदयते । स्वस्या अप्युपाधित्वाविशेषादिति । एतेनेदमत्रानुमानं फलति—अद्वैतात्मवस्तुविषयकापरोक्षाप्रतिबद्धप्रमा स्वतदाकारस्वरूपप्रतिफलनलक्षणविषयताश्रयापि तदवच्छिन्नविशुद्धतन्मात्रप्रापिका । अपरोक्षप्रमात्वात् । रत्नपरीक्षकचाक्षुषतद्विषयकप्रमावदिति । सा हि चक्षुःप्रतिबिम्बं हीरकादिरत्ने संपादयन्त्यपि शुद्धस्य तस्य प्रापिकेति प्रसिद्धमेव । न चात्र घटप्रमायां हेतोरनैकान्त्यम् । तद्विशेषणस्य स्वविषयिचित्तवृत्तिप्रमाप्रतिबिम्बग्राहकत्वस्य तत्र विवक्षितत्वात् । नापि पक्षतावच्छेदकादि गौरवम् । तयोस्तत्स्वरूपकथनार्थत्वात् ॥ ४ ॥

अथात्रापि श्रीगुरुरेव शिष्याशयं प्रश्नं व्युत्थाप्य समाधातुं प्रतिजानीते—किमित्यादिभुजङ्गप्रयातेन—

किमद्वैतसाक्षात्कृतौ साक्षिताऽऽस्ते
न वाऽऽद्ये सखण्डत्वमन्त्ये न भानम् ।
तदीयं भवेत्माऽपि न स्वप्रकाशा
स्वसिद्धान्तभङ्गादितः प्रोच्यतेऽत्र ॥ ५ ॥

विषयसप्तमीयम् । एवं विकल्पद्वयमपि क्रमाद्दूषयति—आद्य इत्यादिना । प्रमाता च प्रमाणं च प्रमेयं प्रमितिस्तथा । यस्य भासा विभासन्ते मानं ज्ञानाय तस्य किमित्यभियुक्तोक्तेश्चरमप्रमारूपब्रह्मात्मैक्यसाक्षात्कृतेरपि साक्षिभास्यत्वावश्यकत्वात्तदङ्गीकृतिलक्षणप्रथमपक्ष इत्यर्थः । सखण्डत्वं घट इत्यादिज्ञाने त्रिपुट्यादिभानेन विशकलितभानादैकरस्यराहित्यमिति यावत् । एवं तर्ह्यन्त्य एव पक्षोऽस्त्वित्यत्राऽऽह—अन्त्य इत्यादि । अन्त्ये तत्त्वसाक्षात्कृतौ विषये साक्षिता नास्तीति द्वितीयपक्ष इत्यर्थः । तदीयं निरुक्तवृत्तिसंबन्धि । भानमेव न भवेदिति संबन्धः । तथा चाऽऽभासमाना वृत्तिरज्ञाननिवर्तिकाऽपि कथं भूयात् । तत्राप्याग्रहेऽनुत्पन्नाऽपि तथा सा कुतो । नास्तीत्यापत्तिः स्यादित्याकूतम् । नन्वेवमुभयतोऽपि दोषभेदस्तूक्तवृत्तिरेव स्वप्रकाश-

श्रुत्यात्मैक्यविषयकत्वात्स्वप्रकाशेत्यत आह—साऽपीत्यादिना । तत्र हेतुः—स्वेति । आदिना प्राभाकरमतापत्तिः ॥ ५ ॥

( अधुना प्रतिज्ञातं समाधानमभिधत्ते—प्रेयोर्कमित्यादिशार्दूलविक्रीडितेन—

प्रेयोर्कं नवपद्मिनीव चरमा साक्षात्कृतिः साक्षिता
संशून्यं विषयी करोति विगतद्वैतं स्वयं ज्योतिषम् ।
यद्यप्येवमपि स्वयं तु परिमात्यस्यैव भासा ततो
वृत्त्यस्फूर्तिसखण्डताद्युपमरद्दोषावमोषो न किम् ॥ ६ ॥

चरमा ब्रह्मात्मैक्यमात्रविषयिणी । तदूर्ध्वमपरोक्षादिप्रमाया एवाभावादाकाशादेर्व्यावहारिकसत्त्वापन्नद्वैतस्यापि तदूर्ध्वं मृगजलादिवन्मिथ्यात्वेनानुभवाच्च । ईदृशी। साक्षात्कृतिः। तत्त्वमस्यादिशब्दजन्यापरोक्षप्रमितिः । नवेति । शरत्कालीनकमलिनी । पक्षे प्राथमिकान्तःपुरोगतत्रिपुरसुन्दरी भगवती पार्वतीत्यर्थः। तस्या एव—विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्स्विति मार्कण्डेयवचनेन सकलसुरतकूटस्थत्वात् । सा यथा प्रेयोर्कम् । प्रेयान्स्वप्रीतिविषयीभूतः स चासावर्कश्चेति तथा तं दिनायकं सूर्यमिति यावत् ।

पक्षे स्वीयप्रीतिविषयीभूतशिवस्यैव स्वप्रकाशत्वात्प्रेयानेवार्कस्तमित्यर्थः । एतेनाशिवे जडत्वं व्यज्यते । पक्षान्तरे । तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मेति श्रुतेः प्रेयानद्वैतसत्यस्वप्रकाशप्रत्यक्परमानन्दरूपत्वेन निरतिशयप्रीतिविषयत्वेनाऽऽत्मानमित्येतत् । साक्षितेति । साक्षाद्द्रष्टरि संज्ञायामिति पाणिनिस्मरणात्साक्षादव्यवधानेन द्रष्टा साक्षी तस्य भावः साक्षिता तया सम्यक् शून्यो हीनस्तम् । ममायमव्यवधानेन द्रष्टाऽस्तीत्येतादृशस्वप्रतियोगिकद्रष्टृत्वधर्मविधुरमेवेति यावत् । पक्षेऽप्येवमेव । नहि कमलिनीकात्यायन्योः सूर्यशिवयोः प्राथमिकदर्शने निरुक्तधर्मवैशिष्ट्यप्रतीतिस्तत्र संभवति । तथा विगतेति । सजातीयद्वितीयाभावादद्वितीयमित्यर्थः ।

पक्षे तद्देशकालयोरपरासंभवादद्वयमिति यावत् । तत्रापि । स्वयमिति । व्यावहारिकप्रत्यक्षस्वप्रकाशत्वशालिनमित्यर्थः । पक्षे दिव्यानन्तस्वतःकान्तिमन्तमेव । पक्षान्तरेऽनन्याधीननित्यभानमित्येतत् । अत एव । विषयी करोति—अविषयोऽपि विषयो यथा तदाकारतामात्रतया तदेकाश्रयविषयकानादिभावरूपावरणविक्षेपशक्तिशालिमूलाज्ञानैकध्वंसेन विषय इव यथा संपेदे तथैव यद्यपि करोतीत्यन्वयः। पक्षे मुखपद्मविकसनतः प्रत्यक्षी करोतीत्यर्थः । नहि पद्मिनीपार्वत्योः सूर्यशिवविषयकसाक्षा-

त्कारक्षणे स्वमुखपद्ममात्रविकसनमन्तरा व्यापारान्तरं संभवतीति भावः । एवमपि स्वयं तु निरुक्तसाक्षात्कृतिः । पक्षे कमलिनी कात्यायनी च । तुशब्दः प्रोक्तरा-कृकाद्यान्यस्यर्थः ।

अस्यैव । अद्वैतप्रकाशात्मन एव । अवभासनं स्वत्राम्ययोगव्यवच्छेदार्थकमेव । भासा—न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः स्वाभिव्यक्तिरेवे-त्यर्थः । तथा च षष्ठीयं राहोः शिरः पुरुषस्य चैतन्यं गङ्गाया जलमित्यादिवदौप-चारिक्येव । परिभाति स्वाकारतामात्रप्रयुक्तस्वतादात्म्येनैव संस्फुरतीव क्षणमिति योजना । पक्षद्वयेऽप्येवमेव । नहि पद्मिनीपार्वत्यौ सूर्यशिवेतरभासा भासत इत्याकूतम् । ततः किं प्रकृत इत्यत्राऽऽह—तत इत्यादिशेषेण । ततः प्रोक्तसदृष्टान्तप्रतिपादनेन । सार्वविभक्तिकोऽयं तसिः । वृत्तीत्यादि । पूर्ववत्पूर्वपार्श्वसाम्यपक्ष इत्यार्थिकम् ।

वृत्तेरुक्तब्रह्मात्मैक्यविषयकाप्रतिबद्धापरोक्षप्रमात्मकचरमचित्तवृत्तेर्या, अस्फूर्तिर-भानम् । तथा सखण्डतानिरुक्तपद्मायमानपक्षमपक्षापादितसर्वकृत्स्नापातिश्च । आदिना तत्रैवाभ्युपेत्यवादेनोक्तवृत्तेः स्वप्रकाशत्वाङ्गीकारे प्राभाकरमतापातादद्वैत-सिद्धान्तभङ्गश्च ग्राह्यः । ते च ते उपसरन्तः प्रसज्जन्तो दोषास्तेषां योऽवनीपः प्रध्वंसः स न भवति किं, अपि तु भवत्येवेति भावः ।

अत्र श्रेयःपदेनोपमेये परमप्रेमास्पदत्वेन यावद्दुःखानास्कन्दितानिर्विकल्पकानि-रतिशयाद्वैतानन्दमोक्षरूपत्वमात्मनि ध्वन्यते । एवं तत्रार्थक्षेपेण वास्तविकं स्वप्रका-शत्वमुपमानयोः सूर्यशंकरयोर्थ्यावहारिकं च तद्व्यज्यते । तथा कमलिन्यां नवेति-विशेषणाच्चिरकालिकत्वं तद्वद् गौर्यां प्रकृष्टतरुणिमत्वं तेन परमरमणीयत्वं चोक्त-श्लेषसंसिद्धोभयविधोपमानयोरपि च सूच्यते । एवं साक्षात्कृतिरिति विशेष्योक्त्या तत्त्वज्ञाने परोक्षत्वं व्युदस्यते । तद्वत्साक्षितेत्यादिप्रथमविशेषणेन तत्र चिन्मात्रत्वं विगतेत्यादिद्वितीयेन तेनाखण्डैकरसत्वं स्वयमित्यादितृतीयेन तेन निरपेक्षप्रकाशरू-पत्वं चाऽऽवेद्यते । विषयीत्यादिविवृतरीतिकाख्यातेनाखण्डत्वं च ।

नन्वेवं पद्मात्मनोऽसङ्गत्वं नैसर्गिकं तर्हि कथं निरुक्तवृत्त्याऽपि तद्विषयकमज्ञानं निवर्ततेति चेन्न । तस्य तु स्वप्रकाशपद्मरागारोपितवह्निवत्कल्पितत्वेन तदसंस्पर्शि-त्वात् । तदुक्तं श्रीमत्सुरेश्वराचार्यचरणैस्तैत्तिरीयकवार्तिके— सत्यादिलक्ष्या ज्ञानोत्था ब्रह्मयाथार्थ्यविषयधीः । स्वर्मेवाऽऽसमाप्नोति केवलज्ञानहानतः । एवं ज्ञातं विद्या-मुक्ति विमुक्तश्च विमुच्यते । निवर्तते निमृत्वं च त्रिभिः सम्प्रत्यायाद्भवतीति । वार्ति-कान्तरेऽपि—अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः । नित्यविरस्य मौद्गल्य

ज्ञातत्वेनोपलक्षित इति च । कल्पतरावपि—शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिरुदयते । स्वस्या अप्युपाधित्वाविशेषात् । एवं च नानुपहितस्य विषयता । वृत्त्युपरागोऽत्र सत्तयोपयुज्यते न भास्यतया विषयकोटिप्रवेशेनेति ।

विवृतं चेदमद्वैतसिद्धावुदाहृत्य । अयमभिप्रायः । यथा-अज्ञानोपहितस्य साक्षित्वेऽपि नाज्ञानं साक्षिकोटौ प्रविशति जडत्वात् । किंतु साक्ष्यकोटावेव । एवं वृत्त्युपहितस्य विषयत्वेऽपि न वृत्तिर्विषयकोटौ प्रविशति । स्वविषयत्वानुपपत्तेः । किंतु स्वयमविषयोऽपि चैतन्यस्य विषयतां संपादयतीति न काऽप्यनुपपत्तिरिति ।

इदमत्रास्ति रहस्यम्—कालत्रयानबाध्यमेव प्रत्यगभिन्नं द्वैतानास्कन्दितं निरतिशयसुखमेव पुरुषार्थ इति तु निर्विवादमेव । तच्च सत्यादीत्यादिवार्तिकसंमतमद्वैतब्रह्मात्मैक्यविषयकचरमप्रमोपलक्षितमूलाज्ञानध्वंसाभिन्नत्वोपचरितं प्रेय इत्यादिना तत्प्रमासमये साक्षिभानसत्त्वासत्त्वादिशङ्कायाः सदृष्टान्तशमनपूर्वकं कल्पतर्वद्वैतसिद्धिकृतादिवृत्तिसांप्रदायिकमेवोक्तमस्ति तेनात्र न कपोलकल्पितत्वादिकुतर्कप्रसर इति । अत्र रूपकपूर्णोपमालंकाराभ्यामद्वैतत्वं स्वप्रभत्वं चाऽऽत्मनि ब्रह्मविद्यायां त्वनुपमसुखदत्वं च सूचितम् । तेन शान्तशृङ्गारौ रसावपि ॥ ६ ॥

नन्वेवमपि द्वितीयश्लोके श्रीमत्सर्वज्ञात्ममुनीश्वरचरणाशयाज्जिज्ञासुज्ञेयशुद्धब्रह्मण एव जन्यजगज्जनिजीवनजरणाभिन्ननिमित्तोपादानत्वं यदुक्तं तत्कथं व्यवस्थाप्येतेति शङ्कते—नन्वित्यादिहरिणीवृत्तेन—

> ननु कथमुपादानं भूयाद्विशुद्धमिहाद्वयं
> क्वचिदपि विवर्तेऽपि द्वैतादृशोऽसिति चेन्न तत् ।
> तदलमद्वैरेवास्माकं यतोऽस्ति तथा मतं
> तम इह महाद्वारं कृत्वा मृदि प्रतिमोपमम् ॥ ७ ॥

इहास्मिन्नद्वैतशास्त्रे । संक्षेपशारीरक उक्तमपीति शेषः । विशुद्धमविद्यादिदृश्यमकारणम् । आकाशस्य व्यावहारिकतथात्वेऽपि शब्दनैरन्तर्योपादानत्वदर्शनव्यवहारणाय पुनर्विशिनष्टि—अद्वयमिति । तत्राविद्याद्यनादिदृश्यपञ्चकात्मकान्याञ्ज्यादृश्यसत्त्वात्तद्व्युदासः । ब्रह्मेति विशेष्यं त्वार्थिकमेव । उपादानं कथं भूयादपि तु कथमपि नैव भवेदित्यन्वयः ।

यतो वा इमानीत्यादिश्रुत्यवष्टम्भाशामहं सहेत्याशङ्कां प्रतिक्षिपति-क्वचिदपीत्यादिना । नन्वारम्भपरिणामवादिनामदर्शनेऽपि विवर्तवादिनामस्माकं स्वमादौ शतशस्तथैवानु-

भवादित्यत्राऽऽह—विवर्तेऽपीति । उभयवादिसंमतस्वप्नशुक्तिरजताद्युदाहरणस्थलेऽपि क्वचिदपि द्वैतेऽद्दष्टेरदर्शनादित्यर्थः । एवं च तत्रापि सुषुप्तिजाग्रत्संस्कारशुक्त्यज्ञा-नादिरूपद्वैतसंभव एवेति भावः । तथा चोक्तमुमुक्षुस्वीकृतमते मुमुक्षुविशेषाक्षेपं श्रीगुरुः सयुक्तिकत्वेनानूद्य समाधत्ते—इतीत्यादिपूर्वार्धशेषेण । तत्र हेतुमाह—यदि-त्यादितृतीयपादेन । यतो हेतोः । अस्माकं वेदान्तिनामित्यर्थः । तदद्वैतं शुद्धं ब्रह्मैव । अद्दष्टेरेवानादिभावरूपाज्ञानादेव । तथा निरुक्तोपादानम् । मतं संमतमस्तीत्यर्थः ।

नन्वाहार्यवादापत्तिरत आह—तम इत्यादिना हेतुविवृत्यात्मकचरमचरणेन । इहाद्वैत-वादे । तमः प्रागद्दष्टेरेवेति हेतुतयोक्तमव्याकृताख्यमज्ञानम् । मृदि, आरम्भवादि-तार्किकसंमतोपादानोदाहरणीभूतमृत्तिकायामित्यर्थः । महाद्वारमत्युच्चं द्वारकारणम् । अविमोपमम् । घटाकारत्वसमम् । कृत्वाऽङ्गीकृत्य तथा मतमस्तीति पूर्वेण संबन्धः ॥ ७ ॥

ननु भवत्वेवमज्ञानं द्वारीकृत्य शुद्धमेव ब्रह्मोपादानमथापि किमत्र द्वारत्वेन विशे-षणं विवक्षितं किं वोपलक्षणं यद्वोपाधिरथवा स्वरूपलक्षणमुतोपरञ्जकमिति पक्षपञ्चका-त्मतलक्षणमवर्णनपूर्वकमाशङ्क्य दूषयन्नाक्षिपति—लोक इत्यादिशार्दूलविक्रीडितप्र-तिपद्यभिः—

लोके हन्त विशेषणं तदुदितं यद्बुद्धितः स्वक्षणे
धीर्भूयाद्विषयत्वरूपितविशेष्यत्वान्विता भेदिका ।
गोत्वादीव विशेष्य एव सति किं तादृक्तदिह भवे-
दज्ञानं न ततो विशुद्ध इह सा सिध्येदुपादानता ॥८॥

सिद्धान्त्युक्तशुद्धब्रह्मोपादानत्वमविद्याद्वाराऽपि कथं संभवेदिति चिन्ताक्रान्तः खेद एव हन्तशब्दार्थः । सति । मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर इति तैत्तिरीयकभाष्योक्तस्य शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति पतञ्जलिलक्षितस्य विकल्पस्य व्यावर्तके व्यावहारिकादिस-त्त्वावच्छिन्न इत्यर्थः । एतादृशे विशेष्य एव विशेष्यतायोग्यतावच्छिन्न एवेत्यर्थः । एतेन गगनारविन्दं सुरभि । अरविन्दत्वादित्याश्रयासिद्धादेर्व्युदासः । यद्बुद्धितो यद्विषयकज्ञानेनेत्यर्थः । स्वेति । निरुक्तज्ञानसमकालमेव । विषयत्वेति । निरुक्तवि-शेषणनिरूपितविशेष्यत्वावच्छिन्नविषयिणीति यावत् ।

भेदिका तदितरव्यावर्तिकेत्यर्थः । एतादृशी च । धीः प्रमा । भूयात् । गोत्वा-दीव । अनादि घटत्वादि । तल्लिङ्गकलक्षणम् । विशेषणमुदितं प्रसिद्धं भवतीत्यर्थः ।

सतः किं तत्राऽऽह—किमित्यादिना। तादृक्, निरुक्तलक्षणविशेषणस्वरूपमित्यर्थः। तत्पूर्वोक्तं शुद्धब्रह्मण एव जगदुपादानत्वे द्वारीभूतम्। ज्ञानम्। इष्टं सिद्धान्ते संमतमस्तीत्यर्थः। ओमिति चेत्तत्राऽऽह—नेत्यादिशेषेण। ततो निरुक्तलक्षणविशेषणीभूतेनाज्ञानेन। शुद्धे ब्रह्मणि। सा प्रागुक्ता। उपादानता न सिध्येन्नैव स्यादिति योजना। विशेषणलक्षणं तूक्तमद्वैतसिद्धौ—येन हि स्वोपरागाद्विशेष्ये व्यावृत्तिबुद्धिर्जन्यते तद्विशेषणम्। व्यावृत्तिबुद्धिकाले विशेष्योपरञ्जकमित्यर्थः। यथा गोत्वादीति। विस्तरस्तु गुरुचन्द्रिकादौ॥ ८॥

अथोद्देशक्रमप्राप्तमुपलक्षणलक्षणमपि सिद्धान्तसंमतमेवाभिदधानः प्रकृते शुद्धब्रह्मण एव जगदुपादानत्वे द्वारीकृतस्याज्ञानस्य पूर्वोक्तरीत्या विशेषणत्वासंभवेऽप्युपलक्षणत्वं तु स्यादेवेत्याशङ्कामप्युपलक्षणस्य कादाचित्कत्वेन मृधाद्वैतावद्द्वारत्वमेव न संभवतीत्याशयेन शमयति—व्यावृत्तिधीत्यादिवसन्ततिलकया—

व्यावृत्तिधीजनकधीविषयो हि धर्मो
यस्तस्य बोधकधियो विषयत्वमेव।
काकादिवत्किल भवेदुपलक्षणत्वं
तद्द्वारमत्र घटते न तमः कथंचित्॥ ९॥

व्यावृत्तिधीः, उपलक्ष्येतरवस्तुमात्रादुपलक्ष्ये भिन्नत्वविषयकप्रमा तस्या जनिका या धीः काकाद्युपलक्षणविषयकप्रमा तस्या विषयः काकादिरित्यर्थः। एतादृशो यो धर्मः काकादिरेव देवदत्तगृहादवधर्मिनिष्ठस्तादितरव्यावर्तकः पदार्थः। हिरवधारणे। तस्यैव। बोधकेति। बोधिका प्रमापिका या धीस्तस्या इत्यर्थः। विषयत्वमेव। काकादिवत्किल। काकवन्तो देवदत्तस्य गृहा इत्याद्युदाहरणे काकादिमत्त्वमेव। आदिनाऽस्मिन्नश्वत्थशाखाग्रे चन्द्र इत्याद्युदाहरणगतशाखाग्रादि ग्राह्यम्। एतदेवोपलक्षणत्वं भवेदित्यन्वयः। फलितमाह—तदित्यादितुरीयपादेन। तत्तस्माद्धेतोः। अत्र शुद्धब्रह्मण एव जगदुपादानत्वे प्रकृत इति यावत्।

तमोऽज्ञानम्। कथंचिदपि केनापि प्रकारेण। द्वारं द्वारकारणम्। न घटते। अथाहत्विककत्वेनोपलक्षणत्वामावान्नैव संभवतीति संबन्धः। तदप्युक्तमद्वैतसिद्धावेव—येन च स्वोपरागमुदासीनं कुर्वता विशेष्यगतव्यावर्तकधर्मोपस्थापनेन व्यावृत्तिबुद्धिर्जन्यते तदुपलक्षणम्। यथा काकादीति॥ ९॥

ननु मा स्तो विशेषणोपलक्षणे तद्विलक्षण उपाधिरस्तु तत्स्यादेवेत्याशङ्कय तस्यापि प्राग्वदेव लक्षणाभिधानपूर्वकमेव प्रकृते ह्यसंभवं कथयति—विशेषणेत्यादिपञ्चचामरेण—

विशेषणोपलक्षणेतरो विभेदबोधक-
न्मतेर्हि योऽत्र गोचरो भवेदुपाधिरेव सः।
न चाऽऽश्रयत्वमिष्यते नभःपदस्य योजने
परैर्यथा तथाऽत्र चेत्तमः क्व शुद्धता तदा ॥ १० ॥

विभेदेति। स्वेतरभेदजनकबुद्धेरित्यर्थः। गोचरो विषयः। परैस्तार्किकैः। न चेति। शब्दाश्रयत्वम्। नभःपदस्य योजने प्रयोगे। यथा दृष्यत उपाधिः स्वीक्रियते तथाऽत्र प्रकृते शुद्धब्रह्मण एव जगदुपादानत्वे द्वारीभूतं तमो मूलाज्ञानं चेत्तदा शुद्धता क्वेति योजना। तदप्युक्तं तत्रैव—यत्तु विशेष्ये नोपरञ्जकं न वा धर्मान्तरोपस्थापकम्। अथ च व्यावर्तकं तदुपाधिरित्युपक्रम्य प्राभाकराद्युदाहरणमुक्त्वा। तार्किकाणां त्वाकाशशब्दप्रयोगे शब्दाश्रयत्वमुदाहरणम्। अत एवाविद्यादिकं साक्षित्वादावुपाधिरिति सिद्धान्तो वेदान्तिनामिति ॥ १० ॥

एवं चेत्तर्हि निरुक्तजगदुपादानत्वद्वारीभूतमज्ञानं सद्वस्तुनः पृथकारे तुच्छमेव भवत्यतस्तत्र द्वारत्वं स्वरूपत्वमेव भवत्वित्याशङ्कामपि शमयंस्तल्लक्षणमप्यभिधाय तस्यापि तत्रासंभवं बोधयति—स्वेत्यादिभुजंगप्रयातेन—

स्वबुद्ध्यैव यत्स्वान्यभेदस्य बुद्धिं विधत्ते स्वरूपे तथा लक्षणं तत्।
यथा खं नभस्तोयमेव द्रवः स्यादितीदं तमश्चेत्स्वसिद्धान्तभङ्गः॥११॥

यत्स्वरूपे। स्वबुद्ध्यैव स्वविषयकप्रमयैव। स्वान्येति। स्वेतरभेदस्य बुद्धिम्। यथा खं नभः। आकाशमेव नभःपदशक्यम्। तोयमेव द्रवः स्यादित्यादिवदित्यर्थः। प्रथमोदाहरणे नभोऽन्तरिक्षं गगनमित्यादिकोशप्रसिद्धस्वरसादुदाहरणान्तरम्। विधत्ते तत्तथा लक्षणं स्वरूपलक्षणं भवतीत्यन्वयः। ततः किं तदाह—इतीत्यादिवरमचरणेन। इति निरुक्तस्वरूपलक्षणम्। इदं प्रकृतम्। तमः शुद्धब्रह्मण एव जगदुपादानत्वे द्वारीभूतमज्ञानमित्यर्थः। चेद्यदि स्वी क्रियते तर्हि। स्वेति। विमतं मिथ्या दृश्यत्वात्। शुक्तिरजतादिवदिति प्रयोगे। ब्रह्मप्रमेतराबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नमिति चिद्भिन्नत्वाघटितस्यैवाद्वितसिद्धौ विमतपदार्थरूपपक्षतावच्छेदकावच्छिन्नत्वाभिधानादित्याशयः॥११॥

अस्तु तर्ह्युपरञ्जकत्वमेव तस्येति पक्षमपि प्रागुक्तदेव प्रतिक्षिपति—न विभेदेत्यादिप्रबोधितया—

न विभेदधियं समोति यः स्वधियाऽसावुपरञ्जकः परैः।
इह धर्म उदीरितो यथा खलु नैल्यमतस्तथा न तत् ॥१२॥

यः स्वधिया स्वविषयकबुद्ध्या विभेदधियं स्वेतरभेदबुद्धिम् । न तनोति नैव करोति । असौ धर्मः परैस्तार्किकादिभिः । इह लोके । उपरञ्जकः केवलान्वयित्वेन संबन्धमात्रघटकः । उदीरितः । कथितोऽस्तीत्यर्थः । तमुदाहरति—यथेत्यादि । यथा मेयत्वं खलु स्वेतरभेदाजनकधर्मत्वेन केवलान्वयित्वं प्रसिद्धमेवेति भावः । अतः कोऽर्थः प्रकृत इत्यत आह—अत इत्यादिशेषेण । अत उपरञ्जकधर्मस्य संबन्धमात्रघटकत्वेन केवलान्वयिधर्मत्वादनेकव्यक्तिनिष्ठतया प्रकृतैकव्यक्तिनिष्ठधर्मत्वाभावादित्यर्थः । तत् । शुद्धब्रह्मण एव जगदुपादानत्वे द्वारत्वेन संमतमज्ञानमिति यावत् । तथा निरुक्तलक्षण उपरञ्जको धर्मः । न नैव भवतीति संबन्धः ॥ १२ ॥

एवं मुमुक्षुविशेषाङ्गीकृते संक्षेपशारीरकप्रपञ्चिते मायिकद्वारकशुद्धब्रह्मनिष्ठजगदुपादानाभिन्ननिमित्तकारणत्ववादे मुमुक्षुविशेषो हि तद्द्वारत्वासंभवं विकल्पपञ्चकेन प्रकृतस्वशिष्याच्छङ्कितमाकर्ण्य श्रीगुरुः किमुक्तवितवानित्यपेक्षायां तत्संक्षिपति—इत्थमित्यादिशार्दूलविक्रीडितेन—

इत्थं संशयसंकुलं विवरणाचार्याः समाधित्सवः
प्राहुर्मायिनमेव तन्नियतता सार्वज्ञ्यसार्वात्म्ययोः ।
यः सर्वज्ञ इति श्रुतिप्रभृतिषु स्पष्टं हि तत्रैव यत्
किं द्वारत्वमुपाधिताऽपि न भवेत्तेनाविरोधोऽनयोः ॥ १३ ॥

अये शिष्य । इत्थं निरुक्तपञ्चप्रकारविकल्पपर्यवसितमायाद्वारकशुद्धब्रह्ममात्रगतजगदुपादानाभिन्ननिमित्तकारणत्ववादविषयकसंदेहशालितद्वदेवेत्यर्थः। संशयेति । संदिहानं मुमुक्षुविशेषं प्रतीति यावत् । समाधित्सवः समाधातुमुत्सुकाः । एतादृशाः । विवरणेति । श्रीमत्प्रकाशात्ममुनीश्वरश्रीचरणा इत्यर्थः । मायिनमेव । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदितिश्रुतिप्रसिद्धमायोपहितमीश्वरमेवेति यावत् । इत्थमितिपदमत्राप्यनुकृष्य काकाक्षिगोलकन्यायेन योज्यम् । तेन इत्थं प्रकृतं जन्यजगदभिन्ननिमित्तोपादानमित्यर्थः । प्राहुः प्रतिबोधयामासुरिति योजना ।

ननु तार्किकादिभिरीश्वरस्य कुलालकुविन्दादिवन्निमित्तकारणत्वमेव जगदाख्यकार्ये स्वी क्रियते । सयुक्तिकं चैतत् । कटकादिमत्स्यक्षित्याविकार्येष्वचेतनस्य कनकादेरेवोपादानत्वदर्शनाचेति चेन्न । वैदिककार्यकारणभावेऽग्निहोत्रस्वर्गादाविव जगदादेरवैदिकप्रमाणस्यानवबोधकत्वादित्यभिप्रायेण प्रतिज्ञातेऽर्थे हेतुं व्युत्पादयति—तदित्यादिना

भविष्यन्तेन । यस्माद्धेतोः । य इत्यादि । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इत्युक्तश्रुतिशेषः । सर्वज्ञः सामान्यतः । सर्ववित्विशेषतः । अथात्र वेद एवेष्टः । प्रभृतिग्रहणात् ।

अन्तस्तद्धर्मोपदेशात् । सर्वत्र प्रसिद्धोपदेशादिति चाधिकरणभाष्यादौ तेषु सर्वस्याम तदुक्तं तच्चक्षुरित्यादिसर्वोपादानत्वमयुक्तसार्वात्म्यस्य जीवव्यावृत्तेश्वर एव ·प्रतिपादकश्रुतिर्ज्ञेया । हिरवधारणे । स्पष्टमेव न तु लक्षणादिना । तत्रैव ईश्वर एव । सार्वज्ञ्येति । सर्वं निखिलद्वैतजालं जानाति साक्षित्वेन प्रकाशयतीति तथा तस्य भावः सार्वज्ञ्यम् । सर्वस्य सकलद्वैतस्य आत्माऽधिष्ठानत्वेनाबाधितं स्वरूपं यस्य भावस्तथात्वं तच्च तच्चेति द्वंद्वस्तयोरित्यर्थः । नियतता निर्णीतत्वमित्यर्थः । तस्मात्कारणादीश्वरमेव प्रकृतजगदुपादानं प्राहुरिति पूर्वेणान्वयः ।

ननूपाधित्वपक्षः प्राग्दशमश्लोके खण्डित एवेति चेन्न । कार्यतर्कितोपाधिभूताज्ञानसत्त्वेऽपि स्वरूपया शुद्धत्वानपायादित्याशयेन द्वारोपाधिपक्षयोरविरोधमपि बोधयति—किमित्यादिशेषेण । उपाधिताऽपि द्वारत्वं न भवेत्किमपि तु भवेदेवेत्यर्थः । उपाध्युदाहरणस्य प्रागुदाहृताद्वैतासिद्धपङ्क्तिस्य, आकाशपदप्रयोगे छन्दाश्रयत्वस्य । तथा, ब्रह्ममात्रमुपादानं माया तु द्वारकारणम् । मृच्छ्लक्ष्णतावत्संक्षेपशारीरककर्ता मत इति द्वारोदाहरणीभूतमृत्तिकाद्वैतायाश्चोपधेयस्वरूपानन्तर्गतत्वे सति तत्संश्लिष्टत्वमात्रेण कार्यकारित्वं समानमेव यतो भवतीति भावः ।

यदुक्तं मायोपहितब्रह्मणः कारणत्वं प्रकृत्याद्वैतरत्नरक्षणेऽपि । विवरणकृतस्तु त्रैविध्यमत्र संभवति । रज्ज्वाः संयुक्तसूत्रद्वयवन्मायाविशिष्टं ब्रह्म जगत्कारणमिति वा । देवात्मशक्तिं स्वगुणैर्निगूढामिति श्रुतेर्माया शक्तिमत्कारणमिति वा जगदुपादानमायाश्रयतया ब्रह्म कारणमिति चेति । तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायाया निष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः । उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात्तत्कार्यमपि ब्रह्मपरतन्त्रं भवति । यथांशुतन्त्रतन्त्वारब्धोऽपि पटोंऽशुतन्त्रः प्रतीयते तत्रश्चोत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षणं च तद्ब्रह्मेति विशुद्धब्रह्मलाभ इत्याहुः ।

तत्र च प्रथमपक्ष उभयोरेव समप्राधान्येनोपादानत्वम् । तन्तुद्वयस्येव । द्वितीयपक्षे तु ब्रह्मणः प्राधान्यं मायायाश्चोपसर्जनत्वम् । तृतीयपक्षे तूपादानत्वं मायाया एव । ब्रह्मणस्तु तदधिष्ठानत्वमिति विवेचितं वृद्धैरिति ।

अत्रेदं विवेचनीयम् । किमिदं मायाया उपादानत्वम् । न तावत्कार्य-प्रत्याधारत्वम् । प्रथमपक्षाद्विशेषापत्तेः । नापि कार्ये प्रत्यजनकत्वम् । मायाया अनुपयोगापत्तेः । नापि कार्ये प्रत्यनाधिकरणत्वम् । तत्पक्षव्याख्यानरूपविवरणविरोधात् । नापि निमित्तत्वम् । तदाश्रयत्वव्याख्यानविरोधादेव । न हि निमित्तकारणं कार्यमाश्रयते ।

अत्र वदामः । उपाधित्वमेव मायाया अप्रधानत्वं नाम । तथा चोपाधिसमवधान-अपि कार्यमुपाधौ प्रतीयत इति तदाश्रयतोक्तिः । वस्तुतस्तु प्रथमपक्षे ब्रह्मनिष्ठमेव कार्यमिति ध्येयमिति ॥ १३ ॥

एवमीश्वर एव जगदुपादानमित्याकर्ण्याऽऽशङ्कते—अन्वेत्यादिस्रग्धरया—

अन्वोपादानमीशो भवतु परमयं लिङ्गतज्जेषु जीवोऽ-

न्यास्ते द्वेधाऽपि दृष्टेः श्रुतिशिरसि न वेत्याकुलं कोऽपि बुधः ।

मायाविद्याविभेदं मनसि दृढतयाऽऽधाय लिङ्गेषु जीवः

जीशोऽप्यन्यत्र स स्यान्न तु म इति तदा क्व श्रुतीनां विरोधः ॥ १४ ॥

ओः श्रीगुरो । ईशः प्राचुकरीत्या मायोपहित आत्मा । अन्वेति । आकाशादि-कारणत्वाभिन्ननिमित्तोपादानकारणमित्यर्थः । भवत्वस्तु । परं तु । अयमहमिति साक्षिप्रत्ययः । लिङ्गेति । अपञ्चीकृतपञ्चमहाभूतात्मकपञ्चकर्मेन्द्रियज्ञानेन्द्रियपञ्च-कमनोबुद्ध्यभिधसप्तदशांशरूपसूक्ष्मदेहतज्जन्यकामादिधर्मेष्वित्यर्थः । जीवोऽपि । जीव प्राणधारण इति स्मरणात्प्राणप्रधानलिङ्गशरीराद्यभिमानी प्रमातेत्यर्थः । अपिः समुच्चये । श्रुतीति । उपनिषद्भागे । द्वेधाऽपि ।

अस्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्तीति श्रुतौ कलाशब्देन प्राणादुक्तलिङ्गदेहात्मानां ज्ञानिनः प्रारब्धप्रध्वंससमयेऽविद्याकार्यसूक्ष्मपञ्च-महाभूतपरिणामत्वाभिप्रायेण विषयोच्छेदोक्तेर्जीवमूलत्वम् । गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतास्तु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्तीत्यत्र च मायाकार्यमहाभूतपरिणामित्वाभिप्रायेण प्रतिष्ठाशब्देष्टतदेकत्वो-क्तेस्तदुपाधिकेश्वरोपादानकत्वं चेति द्विप्रकारकत्वेनापि । दृष्टेः परोक्षत्वेनानुभूतत्वा-दित्यर्थः । आद्यस्त उपादानं भवति न वेत्याशिकाध्याहारेणान्वयः ।

इति तदुपन्यस्तसंशयवत् । आकुलं संदेहविह्वलं कश्चिन्मुमुक्षुं प्रति । केचि-त्पूर्वाचार्योः । मायेत्यादि । चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्त्व-

गुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते । मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधे-तिसत्त्वविवेकमूलीभूतं मायादिविभेदमित्यर्थः। मनसीत्यादि । किमेषु देहेषु। उपलक्ष-णमिदं कामादितद्धर्माणामपि । जीवः। तथा श्रीशोऽपि ईश्वरोऽपि। उपादानमस्तीति शेषः ।

अन्यत्राऽऽकाशादिसादिलिङ्गादीतरदेहे तु । स ईश एव उपादानं स्यात् । स जीवस्तूपादानं न स्यान्नैव भवेदित्यूचुस्तदा श्रुतीनां समुदाहृतश्रुतिभ्यां सह यतो वा इमानि इत्यादिश्रुतीनां विरोधः परस्परं प्रातिकूल्यविशेषः क भवति न कुत्रा-प्यस्तीति संबन्धः ॥ १४ ॥

अत्राप्याशङ्कते—कपालेत्यादिशिखरिण्या—

कपालद्वंद्वाभं यदि भवति जीवेशयुगल-

मुपादानं लिङ्गे घट इव तदाऽत्र द्विविधता ।

प्रतीयात्सत्त्वादेरिति विकलचित्तं प्रति अगु-

र्न लिङ्गादौ जीवेतर इति तदेकांशमतयः ॥ १५ ॥

अयि सद्गुरो । यदि लिङ्गे लिङ्गदेहे । घटे । कपालेति । जीवेशयुगलमुपादानं भवति। तदा घट इव । सत्त्वादेः सितासितत्वाभ्यां सुरभित्वासुरभित्वाभ्यां वा रम्यत्वादेः । पक्षे सत्त्वगुणादेः । अत्रापि लिङ्गदेहे । द्विविधता द्विप्रकारता । प्रतीयात्साक्षिम-त्यक्षविषयीभूयात्सा तु न प्रतीयत इत्यनुभवविरोध एवेति भावः । ततः किमत्र समाधानमित्यत आह—इतीत्यादिशेषेण । इति स्वसुख्यमेव । विकलचित्तं प्रति व्याकुलमानसं कंचिच्छिष्यं प्रतीत्यर्थः । तदेकांशेति । प्रागुक्तसिद्धान्तैकदेशिन इति यावत् । लिङ्गादौ सूक्ष्मशरीरतद्धर्मादिकार्ये जीवेतर उपादानं न किंतु जीव एवोपादानमस्तीति अगुरवदन्निति योजना ॥ १५ ॥

नन्वेवं तर्हि गताः कलाः पञ्चदश प्रतिष्ठामिति तत्त्वनिष्ठकैवल्यकालिकलिङ्ग-नाशस्य महाभूताख्यमायाकार्यैकाधिकरणकत्वोक्तेः का गतिरित्यत्राऽऽह—गता इत्या-युपेन्द्रवज्रया—

गताः कलाः पञ्चदश प्रतिष्ठामित्यादिवाक्यं किल लोकदृष्ट्या ।

प्रकृत्तामित्याहुरिमे यतोऽत्र विदो मृतौ देहलयः पृथिव्याम् ॥१६॥

[illegible] । [illegible] ॥ १६ ॥

अत्रापि श्रुतिविरोधमाशङ्क्य स[illegible] [illegible]मेवामिति शिखरिण्या—

अजामेकामेवं श्रुतिवचसि मायैक्यकलना-
दविद्यायास्तस्याः कथमिह भिदत्याकुलधियम्।
तदैक्यज्ञाः प्राहुस्तदविरततादात्म्यभवना-
दुपादानं लिङ्गे स निजभुवि जीवो मत इति ॥ १७ ॥

तस्या मायाया अविद्यायाश्च। इह शास्त्रे। भिदा पूर्वोक्तभेदः। कथं कथंचिदपि नैव संभवतीत्यर्थः। अन्यथा श्रुत्युक्तं तदैक्यं बाधितं भवेदिति भावः। इति त्वदुक्तप्रकारेणैव। आकुलधियं कंचिन्मुमुक्षुं प्रति। तदैक्यज्ञाः। मायाविद्यैक्यवादिनः। केचित्प्राचीनाचार्या इत्यर्थः। तदिति। तस्या अविद्यारूपिण्या मायाया यदविरतमखण्डं तादात्म्यं तादात्म्यरूपोऽहमज्ञ इत्यध्यासस्तस्य भवनं संभवस्तस्मादित्यर्थः। स प्रागुक्ताविद्योपहितो जीव एव। निजभुवि प्रागुक्तश्रुतेः स्वजन्ये। लिङ्गे सूक्ष्मदेहे। उपादानम्। मत इति प्राहुः सुसमादधुरिति संबन्धः। शिष्टं तु स्पष्टमेव ॥१७॥

ननु भवत्वेवम्। असतोऽधि मनोऽजायत। मनः प्रजापतिमसृजत। प्रजापतिः प्रजा असृजतेत्यादितैत्तिरीयकश्रुत्यनुसारेणापि लिङ्गदेहतद्धर्मेषूपादानत्वमथापि सर्वमिदं शुक्तिरजतादिप्रातिभासिकं जैवं जीवमात्रकल्पितं तथा ऐशमपि जीववदीश्वरकल्पितमपि अस्ति, किंवा अन्यतरीयं कदाचिज्जीवेन कल्पितं कदाचिदीश्वरेण कल्पितं भवति। आद्ये जीवेश्वरोभयकल्पितत्वपक्षे यदा जीवस्य शुक्त्याद्यधिष्ठानज्ञानं तदा बाधो भवेदीश्वरकल्पितत्वेनाऽऽकाशादिप्रपञ्चवत्तदधिष्ठानीभूताद्वैतब्रह्मप्रमाभावान्नैव बाधो भवेदिति विरोधापत्तिः स्यात्। तथा चरमान्त्यपक्षे चरमाख्यान्यतरीयपक्षान्तर्निविष्टेश्वरकल्पितत्वपक्षे स्वबुद्धेरद्वैतात्मप्रमाया विरहे कदाऽपि बाधो नैव भवेदिति शङ्कते—किमित्यादिवसन्ततिलकया—

किं प्रातिभासिकमिदं रजतादि सर्वं
जैवं तथैशमथवाऽन्यतरीयमाद्ये।
बाधो भवेच्च न भवेच्चरमान्त्यपक्षे
बाधः कदाऽपि न भवेद्विरहे स्वबुद्धेः ॥१८॥

स्पष्टम् ॥ १८ ॥

तत्र किं तत्राऽऽह—इत्यादीत्यादिवसन्ततिलकयैव—

इत्यादिसंशयवशं प्रति केचिदूचुः
सर्वं प्रतीतिवपुरत्र तु जैवमेव।

मंव्यावहारिकमथैशमिति व्यवस्था
बोधान्यबाध्यतद्बाध्यतया क्रमेण ॥ १९ ॥

आदिना विनिगमनाविरहोऽन्यतरीयपक्षे द्रष्टव्यः। बोधेति। अद्वैतबलात्स्वैक्यम-मेतदधमासु सर्वत्र प्रमाभासत्वाभिप्रायकमेवात्र बोधपदम्। एवं च अन्यभिधर्मकबो-धान्यबाध्यत्वतदेकबाध्यतयेत्यर्थः। सर्वं प्रतीतिवपुः प्रातिभासिकम्। अत्र तु जैवमेव जीवकल्पितमेव। अथ तत्तुसंव्यावहारिकं प्रत्यक्षादिप्रमाणप्रमेयत्वादिसंव्य-वहारसिद्धं सर्वं घटपटादि, ऐशमेवेति व्यवस्थां केचिदाचार्याः। त्वाद्दशमेव। इत्यादिपूर्वपद्योक्तरीत्या। संशयेति। संदेहविकलं कंचिन्मुमुक्षुं प्रति। ऋजुः क्ष्मा-वद्गुरिति पूर्वेणान्वयः ॥ १९ ॥

तथापि शङ्कते—किं नीलमित्यादिप्रहर्षिण्या—

किं नीलं नभ इति विभ्रमेऽन्यदीये
भाति द्रागनिजकलितेतरः पदार्थः।
बाढं चेत्किमपि न भिन्नरूपताऽत्र
प्रत्येतीत्यत इदमप्ययुक्तमेव ॥ २० ॥

सर्वं प्रातिभासिकं जीवकल्पितं सर्वं च व्यावहारिकमीश्वरकल्पितमस्तीति विभ-गेऽपि वैषम्येण दृष्ट एव घटादिर्मया दृश्यत इत्यादिप्रमाणप्रमेयत्वादिव्यवहारसिद्धस्य व्यावहारिकस्यापि। नीलं नभ इत्यन्यदीयेऽपि विभ्रमे। निजेत्यादि। स्वभ्रान्तिवि-षयान्यः पदार्थः। द्राक्। द्राङ् मंक्षु सपदि द्रुतमित्यमरात्छीघ्रम्। भाति किमपि तु स्वकल्पितान्यूनानतिरिक्त एव नभस्तादात्म्यापन्नो नीलिमा प्रतीयत इत्यर्थः। अन्य एव स्वकल्पितनीलिमभिन्नोऽपरस्य प्रतीयते सामग्रीसाम्यादेव साद्दश्यमवभासितेत्याशङ्किनं प्रत्याह—बाढं चेदिति ॥ २० ॥

तथा च किमत्र समाधानमित्यत आह—इत्यादीत्यादिवसन्ततिलकया—

इत्यादिमोहविवशं प्रति बोद्धुमेके
स्वाज्ञानतः सकलदृश्यमहाभ्रमस्य।
जीवस्त्वमेव परिकल्पक एक एव
स्वप्नोपमा प्रकृतिरस्यलमेवमाहुः ॥ २१ ॥

रे शिष्य त्वदुपन्यस्तरीत्यैवेति द्योतनायेतिपदम्। आदिना स्वाभिप्रायसंभा-वितःपातो भावः। तस्य स्वप्नत्वेन जीवैकानिर्मितत्वात्प्रातिभासिकत्वेऽपि प्रत्यक्षा-दिगम्यत्वाद्व्यावहारिकत्वमपि प्रतीयते। एवं चानुपदोक्तत्वत्संशयसमानाशङ्कमेव

केचिन्मुमुक्षुं प्रतीत्यर्थः । बोद्धुमुपदेष्टुम् । एक आचार्यो । स्वेति । उक्तं चैवमेव संक्षेपशारीरके— स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावा ।

स्वाभाविकस्वमहिमस्थितिरस्तमोहा प्रत्यक्चितिर्विजयते भुवनैकयोनिरिति ।

त्वमेव परिकल्पक एक एव । त्वमेति । त्वमतुस्येत्यर्थः । प्रकृतिरुपादानम् । जीवोऽहमनन्यनिमित्तमिति यावत् । असि भवसि । एवमनेन प्रकारेण बोधयामासुरिति योजना । तथा च कोक्तशङ्कावकाश इति भावः । तदुक्तमद्वैतसिद्धौ—दृष्टिसृष्ट्युपपत्त्यनन्तरमेव । स च द्रष्टैक एव । तन्नानात्वे मानाभावात् । ननु कथमेक एव जीवः । प्रतिशरीरमहं सुखी अहं दुःखी अहं संसारी अहमस्य स्वामीत्याद्यनुभवाविरोधादिति चेन्न ।

अविद्यावशाद्यद्येकं संसरति स एव जीवः । तस्यैव प्रतिशरीरमहमित्यादिबुद्धिः । स्वान्यशरीरेऽयं सुखी अयं दुःखीत्येव यत्र बुद्धिर्न त्वहं सुखीत्यादि तन्न निर्जीवं, यत्र त्वहमित्यादि तत्सजीवम् । जाग्रच्छरीरान्तरेऽहमिति प्रतीत्यवच्छेदके सजीवतोक्तिर्न द्वितीयेन जीवेन सजीवत्वमित्यभिप्रेत्य । तत्र मानाभावात् । बन्धमोक्षादिव्यवस्थानुपपत्तिस्तत्र मानमिति चेन्न । बन्धमोक्षगुरुशिष्यादिव्यवस्थायाः स्वप्नवद्यावद्विद्यमुपपत्तेरिति ।

नन्वत्रैवाग्रे समष्ट्यभिमानिनो मुख्यजीवस्येत्यादिसिद्धान्तस्वारस्येनात्मपदादेरमुख्यजीवत्वेन जीवाभासत्वं पर्यस्यति । त्वं तु ममैकस्यैव जीवस्य जगदुपादानत्वं बोधयसीति चेन्न । सिद्धान्तबिन्दौ तैरेव तथैव निर्णीतत्वादुक्तपक्षस्य त्वभ्युपेत्यवादत्वादन्यथा जाग्रच्छरीर इत्यादिनाऽन्यजीवस्यैवाभावेन चैवं तस्मिन्नेकस्मिन्नेव जीवे सुप्ते समस्तजगदप्रतीत्यापात इति शङ्काया एवानुत्थानाच्च ।

सिद्धान्तबिन्दुः स यथा—अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः । अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः । इममेव च दृष्टिसृष्टिवादमाचक्षते । अस्मिंश्च पक्षे जीव एव स्वाज्ञानवशाज्जगदुपादानं निमित्तं च । दृश्यं च सर्वं प्रातीतिकम् । देहभेदाच्च जीवभेदभ्रान्तिः । एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यादात्मसाक्षात्कारे सति मोक्षः । शुकादीनां च मोक्षश्रवणमर्थवाद इत्यादि ॥ २१ ॥

तत्रापि शङ्कते—जीवैक्येत्यादीन्द्रवज्रया—

जीवैक्यवादे किमहं त्वदीयः स्यां कल्पकोऽस्मि त्वमुतास्मदीयः ।
अशक्यमेवं विनिगन्तुमत्रेत्यादिस्तु दोषो दुरपह्नवः स्यात् ॥२२॥

अध्याचार्येति शेषः । त्वदीयस्त्वत्संबन्धी । शिष्टं तु स्पष्टमेव ॥ २२ ॥

अथाऽऽचार्यः समाधत्ते—इत्थमित्यादिशार्दूलविक्रीडितेन—

इत्थं मुग्धधियं मुमुक्षुमपरं मायां त्विति श्रौतवा-
गप्यस्तीति जगत्यसावपि कुतो नेयादुपादानताम् ।
सत्ताजाड्यगुणानुवृत्तिकलनायुक्तं तथैवेक्षितुं
योग्यत्वादिति तत्त्वनिर्णयकृतः प्राहुः प्रबोद्धुं बुधाः ॥ २३ ॥

इत्थं त्वदुक्तशङ्काप्रकारकम् । मुग्धेति । भ्रान्तमतिम् । मुमुक्षुं कंचिज्जिज्ञासुम् । अपरमिति मुमुक्षुविशेषणमेव । प्रबोद्धुं समुपदेष्टुम् । बुधाः । शब्दपरब्रह्मनिष्णातत्वेन सद्गुरव इत्यर्थः । मायां त्वितीति । मायां तु प्रकृतिं विद्यादित्यादीत्यर्थः। श्रौतेति । श्रुतिवचनमपीत्येतत् । तथा च नायमर्थः केवलं वक्ष्यमाणयुक्तिसिद्ध एवेति भावः । अस्तीति हेतोः । असावपि मायाऽपि ब्रह्मवत् । जगति जन्यदृश्य इत्यर्थः । उपादानतां कुतो नेयान्न प्राप्नुयादपि तु प्राप्नुयादेवेत्यन्वयः ।

तामेव युक्तिं व्युत्पादयति–सत्तेत्यादिना । सत्ता हि ब्रह्मधर्मः । जाड्यं मायाधर्मः । गुणपदं धर्मपरम् । एवं चोक्तजगति सत्ताद्युभयधर्मानुवृत्तिदर्शनादिति यावत् । सर्वत्र कटकाद्युपादेये तदुपादानीभूतकनकनिष्ठपीतरूपानुवृत्तिप्रसिद्धेरिदमेवोचितमित्याह-युक्तमित्यादिना । न केवलं जगति कार्ये सत्तादिधर्मानुवृत्तिज्ञानेनैव ब्रह्ममायोभयोपादानकत्वं किंतु योग्यत्वाच्चित्रनानातन्तुभ्य एव चित्रपटोत्पत्तिदर्शनेन व्याप्त्यहत्वादपि तथैवेक्षितुं निश्चेतुं युक्तं श्लाघ्यं भवतीति योजना । इति तत्त्वनिर्णयकृत आचार्याः प्राहुरिति संबन्धः ॥ २३ ॥

ननु किमनयोस्तन्तुदृष्टान्तेन साम्येनैवोपादानत्वं नेत्याह—उपादानमितिशिखरिण्या—

उपादानं प्रत्यङ्मम इह विवर्त्यैव गदितुं
तथा माया ज्ञेया तदपि परिणाम्येव सुधिया ।
निजाभिन्नं कार्यं जनयति च यत्तत्त्वमुभयो-
रनुस्यूतं बोध्यं सपदि हृदि तल्लक्षणमपि ॥ २४ ॥

विवर्त्येवेति रज्जुभुजगादिवद्विवर्तोपादानमेवेत्युपादानविशेषणम् । गदितुं वक्तुम् । इहाद्वैतशास्त्रे । प्रत्यक् परमात्मा । मतः संमतोऽस्तीत्यर्थः । तदप्येवमपि । परिणाम्येव उपादानं कार्यादौ [illegible] ज्ञेयेत्यन्वयः । एवमपि [illegible] न्यलक्षणमत [illegible] । [illegible] सामा-न्यलक्षणमपि उभयोर्निरुक्तप्रकारकोपादानयोरनुस्यूतं सपदि हृदि बोध्यम् ॥ २४ ॥

नन्वेवमपि यतो वा इमानि भूतानि इत्यादिश्रुत्या जन्यजगज्जन्माद्यभिन्ननिमित्तोपादानमेव ब्रह्म मुमुक्षुज्ञेयमुक्तमुपादानत्वं तु विवर्तादिसाधारणं स्वाभिन्नकार्यजनकत्वमित्यनुपदमेव लक्षितम्। तथा च कार्यभूतघटादिब्रह्मयैवाद्यापि जीवानां किमिति मुक्तिर्नास्त्याशङ्क्य सद्गुरुः समाधत्ते—मायेत्यादिस्रग्धरया—

मायाब्रह्मोभयं चेज्जगति निगदितं स्यादुपादानमेवं
ज्ञेयं तत्स्यात्तथात्वे किमिति न घटविन्मुक्त इत्याकुलार्थम्।
जीवैकालम्ब्यविद्याविषय इति उपादानमद्वैतमेव
प्राहुस्तासां समष्टिर्नयनतिमिरवत्स्यात्सहायेति मिश्राः॥२५॥

इतिपदं शिष्याशङ्कानुवादि। एवं त्वदुक्ताशङ्कासमसंशयव्याकुलो यः कश्चिन्मुमुक्षुस्तनुद्धारणार्थमेवेत्यर्थः। मिश्रा भामतीकाराः। इतः सार्वविभक्तिकस्तसिः। तेनेह जगतीत्यर्थः। जीवैकेति। जीवमात्राश्रिताविद्याविषयीभूत इति यावत्। एतादृशम्। अद्वैतं ब्रह्मैव। उपादानम्। नन्वेवं तर्हि मायां तु प्रकृतिमित्यादिश्रुतेः का गतिरिति चेत्तत्र प्रकृतिशब्दो गौण एवेत्याह—तासामित्यादिना। ब्रह्मविषयकजीवाश्रिताविद्यानामित्यर्थः। समष्टिः संघाख्यमायापदवाच्या। नयनेत्यादि। रज्जूरगभ्रमे नेत्ररोधकान्धकारवत्। सहाया निमित्तम्। स्यादिति प्राहुरिति संबन्धः॥२५॥

नन्वेवं चेत्तर्हि मायाया एवोपादानकारणत्वं ब्रह्मणस्तु कार्यकारणरहितत्वं कथं श्रुतं संगतं स्यादित्याशङ्क्याऽऽह—मायां त्वित्यादिप्रहर्षिण्या—

मायां तु प्रकृतिमिति श्रुतं तदेत-
द्ब्रह्मापूर्वमिति न तस्य कार्यमेवम्।
इत्थं चेदिति सुधियं विभूषयन्तः
श्रीमुक्तावलिकृत एव मुद्गिरन्ति॥ २६॥

इत्थं मित्थकरीत्या। मायां तु प्रकृतिं विद्याविति तथा तदेतद्ब्रह्मापूर्वमनपरमिति तथा न तस्य कार्यं करणं च विद्यत इति च श्रुतिवचनम्। जगदुपादानत्वस्योक्तरूपब्रह्मण एव सिद्धत्वात्क्षतं बाधितं स्यात्किमपि विगदव्याख्यातमेव। सुधीरत्वात्तमेव कश्चिन्मुमुक्षुः॥ २६॥

तदेवाऽऽह—उपादानमित्यादिभुजङ्गप्रयातेन—

उपादानमत्रास्ति मायैव मुख्यं
तदाधारतो ब्रह्म तद्गौणमेव।

यथा शुक्त्यविद्यैव रूप्यस्य मुख्यं
तदाधारतः सा तु गौणं तथेति ॥ २७ ॥

सरलमेवेदम् ॥ २७ ॥

उपादानवादमुपसंहरति—इतीत्यादिस्रग्विण्या—

इत्युपादानवादे मया दिङ्मित-
प्राज्ञतानां हृदैक्यं समासादितम् ।
शंभुदोष्णां यथा प्राथमिक्यां रतौ
हैमवत्यास्तु देहेन तद्गामिना ॥ २८ ॥

इति बोधैक्यसिद्धिप्रथमोल्लासे द्वितीयसूत्रविचारगत-
जगदुपादानवादमतैक्योपपत्तिः ॥

---

दिङ्मितेत्यादि । दिक्संख्याकानि दश यानि प्राचामाचार्याणां मतानि तेषा-मित्यर्थः । हैमवती गौरी । तदिति । शंकरैकानुसारिणेत्यर्थः ॥ २८ ॥

इत्यद्वैतात्मप्रबोधे जगदुपादानम् ॥

एवं श्रीमद्गुरुचरणैरुपादानवादमतैकवाक्यतां तत्तन्मुमुक्षुकाङ्क्षासंक्षयप्रवृत्त-तत्तदाचार्यचक्रवर्तिचरणाभिप्रायैकतयोक्तामाकर्ण्य प्रकृतान्तेवासीश्वरः प्रोक्तवादे जीवे-श्वरयोस्तत्र प्रासङ्गिकत्वेनोपक्षेपात्तत्स्वरूपं जिज्ञासुः संप्रणयात्मेव संप्रीणयन् संपृ-च्छते—नन्वित्यादिशिखरिण्या—

ननूक्तोपादानस्फुटनवशजीवेशकथना-
त्क ईशः को जीवः श्रुतिमत इति ज्ञातुकमनः ।
भवत्पादाम्भोजे भ्रमर इव सौरभ्यरसिको
गुरोऽहं श्रीमद्भिस्तदलमभिपाल्यः स्वरसतः ॥ १ ॥

अयि गुरो । अहम् । नन्विति शङ्के । किं तदित्यतस्तद्विशदयति—उक्तेत्या-दिना । उक्तमव्यवहितपूर्वं प्रतिपादितम् । एतादृशं यदुपादानस्य जन्यजगदभि-न्ननिमित्तोपादानकारणस्य स्फुटनं प्रकटनं तस्य वश आधीनत्वं तेन यज्जीवेशयोः कथनं प्रासङ्गिकं प्रतिपादनं तस्माद्धेतोरित्यर्थः । क ईश इत्यादि । ईशः किं-लक्षणः श्रुतिमतस्तथा जीवोऽपि कः किंस्वरूपः श्रुतिमतः सर्ववेदसंमतोऽस्ति । इति अनेन प्रकारेण । ज्ञातुकमनः कम्रः कामयिताऽभीकः कमनः कामनोऽभिक इत्यमरात् , ज्ञातुमवबोद्धुं कमनः कामुक इति यावत् ।

नन्वेवमपि जिगीषा चेज्जीवन्मुक्तानामस्माकं यद्वादेर्विवेपदर्शनात्कथं स्वरसमाधाने प्रवृत्तिः स्यादित्यतः पुनर्विशिनष्टि—भवदित्यादिशेषेण । भवतां युष्माकं यत्पादावेव मिलितयोगासनविशेषे संपुटितचरणावेवाम्भोजं प्रातःकालिकेषद्विकसत्कोकनदं तस्मिन्नित्यर्थः । यतो भ्रमर इव सौरभ्यरसिक एवास्मि तदस्माद्धेतोः । श्रीमद्भिः स्वरसतोऽद्वैतात्मतत्त्वरसप्रदानेन । पक्षे मकरन्देन । अलं पर्याप्तं यथा स्यात्तथा । अभीति । सर्वदाऽनुग्राह्योऽस्मीत्यन्वयः ॥ १ ॥

अथ निरुक्तजीवेश्वरस्वरूपानुवृत्त्यामुक्तिसाधयिषुराचार्य. कस्यचिन्मुमुक्षोस्तद्विषयकं शङ्कान्तरमपि तत्स्वरूपप्रतिपिपादयिषया व्युत्पादयितुमनुवदति—मिथ्यात्व इत्यादिशार्दूलविक्रीडितेन—

मिथ्यात्वे जगतोऽपि शांकरमते जीवेशयोः सत्यता
वक्तव्यैव यदन्यथा नहि भवेत्किं शून्यवादापितम् ।
तादात्म्येन तयोस्तदैक्यमपि किं यद्वाऽभिदेष्यते
स्यादाद्ये गुणतादिदोषनिचयो नान्त्योऽप्यसंभूतितः ॥२॥

शांकरेति । अद्वैतसिद्धान्त इत्यर्थः । अत्र ननु इत्यार्थिकम् । जगत आकाशादिजडवर्गस्य । मिथ्यात्वे सत्यपि यद्यस्मात्कारणाज्जीवेशयोश्चेतनयोः सत्यता वक्तव्यैव । कुत इत्यत्राऽऽह—अन्यथेत्यादिना । जीवेश्वरयोश्चेतनयोरपि यदि सत्यत्वं नाऽऽद्रियते चेत्तर्हि सर्वस्यापि वस्तुनो बाधितत्वेन । शून्येति । शून्यवादापत्तिर्न भवेत्किमपि तु भवेदेवेति भावः ।

ननु जीवत्वाद्यवच्छेदेन तयोर्बाधितत्वेऽपि चिन्मात्रत्वेन तयोरैक्यस्याबाधितत्वात्कोक्तापत्तिरिति चेन्न । तदसंभवात् । तथा हि । किं जीवेश्वरचिन्मात्रयोरैक्यं तादात्म्येनोताभेदेन श्रीमतां संमतम् । नाऽऽद्यः । नीलो घट इत्यादौ सर्वत्र तादात्म्योदाहरणेष्विव गुणगुणिभावाद्यापत्तेः । नान्त्यः । असंभूतेरित्याह—तादात्म्येनेत्यादिचतुर्थेन । गुणतादीत्यत्राऽऽदिना तार्किकाणां हि सिद्धान्ते तावदवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये च समवायाश्रयत्वेन पञ्च द्वंद्वानि विवक्षितानि ।

मीमांसकानां तु तत्र विशेषानङ्गीकारात् । चतुर्विधद्वंद्वेष्वेव तैस्तादात्म्यस्यैव समवायस्थानीयस्य संबन्धस्याङ्गीकृतत्वादवयवावयव्यादिव्यवहारे भट्टपादैर्विनामपि चित्रादिप्रतिभासन्यायेन बाधितान्येव सर्वाण्यपि तत्संमतान्येव द्वंद्वानि ज्ञेयानि । एवमेव भेदासंभूतिस्तु तस्य भेदपूर्वकत्वेनान्योन्याभावरूपस्य धर्मिप्रतियोगिभेदासिद्धिपूर्ववत्त्वेनाऽऽत्माश्रयादिदोषदूषितत्वादेवेति भावः ॥ २ ॥

ततः किं तत्राऽऽह—इतीत्यादिप्रबोधितया—

इति मूढधियं भवार्णवात्कृपयैवाऽऽशु समुद्दिधीर्षवः ।
प्रकटार्थकृतः समूचिरे प्रतिबिम्बत्वमथ द्वयोरपि ॥ ३ ॥

इति उक्तप्रकारेण । मूढेति । संदिहानं कंचिन्मुमुक्षुमित्यर्थः । भवेति । संसारसागरात्सकाशादिति यावत् । अत एव । कृपयैव । न तु ख्यातिलाभपूजादिनिमित्तेन । एतेन मैत्रः करुण एवेति स्मृतेरज्ञप्रबोधाच्चैवान्यत्कार्यमस्तीह तद्विद इत्यभियुक्तोक्तेश्च प्रकृताचार्ये गुरुत्वसामग्री सूच्यते । तत्राप्याशु शीघ्रम् । एवं चोपासनाद्युपदेष्टृत्वं व्युदस्तम् । अत एव । समित्यादि । अद्वैतात्मतत्त्वापरोक्षबोधेन प्रोद्धर्तुमिच्छन्तः सन्त इत्यर्थः । एतादृशाः । प्रकटेति । प्रकटार्थनामकाद्वैतशास्त्रीयग्रन्थविशेषकर्तारः केचित्पूर्वोक्ता आचार्या इति यावत् । अथ निरुक्तशिष्यशङ्काश्रवणानन्तरम् । द्वयोरपि जीवेश्वरयोः । प्रतिबिम्बत्वम् । समूचिरेऽवोचन्निति संबन्धः ॥ ३ ॥

ननु किमुक्तजीवादिप्रतिबिम्बाश्रयीभूतं वस्त्वेकमेव घटपटयोरादर्शवदुत जलचन्द्रवदनेकमित्याशङ्क्याद्यान्त्यमङ्गीकृत्य विशदयति—अनादीत्यादीन्द्रवज्रया—

अनादिविश्वप्रकृतिस्तु माया
चिन्मात्रगाऽन्या तु तदेकदेशः ।
विक्षेपसंछादनशक्तियुक्ता
तयोः क्रमात्तत्प्रतिबिम्बयुग्मम् ॥ ४ ॥

तथा च श्रूयते—मायां तु प्रकृतिं विद्यादिति । अनादिमायया सुप्तो यदा जीवः प्रबुध्यत इति च । एवमपि किमधिष्ठानाऽसावित्यत्राऽऽह—चिन्मात्रगेति । ननु भवत्वेवं विश्वप्रकृतित्वादेवेयमीश्वरप्रतिबिम्बोपाधिस्तथापि कोऽसौ जीवप्रतिबिम्बाधार इत्यत आह—अन्या त्विति । अविद्या त्वित्यर्थः । तुशब्दोऽयं यथा पटादिकार्यप्रकृतिभूततन्त्वादितन्त्वादिवैलक्षण्यावद्योती प्रथमपादगस्तुशब्दस्तथाऽत्र ततोऽपि विश्वप्रकृतित्वाभावलक्षणवैलक्षण्यसूचको बोध्यः । तच्छब्दो निरुक्तमायाभिधायी ।

ननु कनकैकदेशोऽपि किमयस्त्वमित्यतस्तां विशिनष्टि—विक्षेपेति । यान्त्यात्र विक्षिपति संस्फुरदात्मरूपमित्यादि संक्षेपशारीरकोक्तेरावरणविक्षेपशक्तिमतीत्यर्थः । आवरणशक्तेः पञ्चकोशाध्यासात्मकविक्षेपशक्तिलक्षणकार्यविषयकसाक्षिप्रत्यक्षान्यथानुपपत्तिसमुन्नयनीयत्वेन प्रथमोपस्थितत्वादेवं मूले विन्यास इत्याशयः । नन्वेवमपि निरुक्तमायैकदेशरूपायामप्यविद्यायां तद्वैलक्षण्यप्रयोजकं शक्तिद्वयं विक्षेपादिप्रयोजकं [illegible] संभवेत्कथमन्यथा [illegible] क्वचिदपि तदपेक्षयापादि [illegible] [illegible] । सैषैकदेशरूपाप्युत्कटत्वाद्दृष्टिदृष्टायामेव विषयदर्शनेनोक्तहेतोरसिद्धत्वात् ।

फलितमाह—तयोरित्यादिचरमचरणेन । तयोर्निरुक्तरूपयोर्मायाविद्योपाधिभूतयोरित्यर्थः । क्रमादनुक्रमेण । तदित्यादि । तस्य स्वाधिष्ठानीभूतचिन्मात्रस्य यत्प्रतिबिम्बयुग्ममेकमहापर्वापरानेकपर्वघटितकाचविशेषे मुखप्रतिबिम्बवदीश्वरादिरूपं प्रतिबिम्बद्वयं भवतीत्यन्वयः ॥ ४ ॥

ननु भवत्वियं युक्तिः प्रागाक्षिप्तजीवेश्वरसत्यत्वापत्तिनिवर्तिका शांकराणामथापि किमत्र मूलमिति चेन्न । मूलाविद्यां प्रकृत्य जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीत्याथर्वणिकनृसिंहोत्तरतापिनीयश्रुतेरित्यभिप्रेत्योक्तश्रुतिमेवार्थतः संग्रथयति—जीवेशावित्यादिप्रहर्षिण्याः पूर्वार्धेन—

> जीवेशौ रचयति या स्वगावभासा-
>
> दित्यादिश्रुतिवचसोऽपि युक्तमेतत् ।
>
> आभासत्वमपि च बिम्बनिघ्नसत्त्वे
>
> सत्येतत्समपरिभासमात्रतैव ॥ ५ ॥

या मूलाविद्या । स्वेति । पूर्वपद्योक्तं यन्मायादिसंज्ञं निजपरिणामद्वयं तत्र गच्छति स्वाध्यस्तामादिसंनिधिमात्रेण प्रतिफलत्येतादृशो योऽवभासः स एवोत्तरार्धवक्ष्यमाणाभासत्वजात्यभिप्रायादेकरूपश्चिदाभासस्तस्माद्धेतोरिति यावत् । जीवेशौ रचयति सा मूलाविद्येति योजना । इत्यादीति । निरुक्तरूपोऽर्थोऽस्त्यादिः प्रथमो यत्रैतादृशं यच्छ्रुतिवचोऽनुपदमेवोदाहृतमुपनिषद्वाक्यं तस्माद्धेतोरित्यर्थः । अपिः प्रोक्तयुक्तिसमुच्चयार्थः । एतन्निरुक्तरूपं जीवेश्वरप्रतिबिम्बद्वयम् । युक्तमनवद्यमेवास्तीति संबन्धः ।

नन्वुक्तश्रुतावाभास एवोक्तो न प्राक्प्रतिज्ञातप्रतिबिम्बस्तथाऽपि तस्यैवाऽऽदौ किंलक्षणमित्यपेक्षायां तत्संक्षिपति—आभासत्वमपि चेत्यादितदुत्तरार्धेन । बिम्बं वक्ष्यमाणमुत्तरश्लोकोत्तरार्धे । तन्निघ्नं तदधीनं यत्सत्त्वं अधीनो निघ्न आयत्त इत्यमरात्बिम्बपरतन्त्रसत्ताकत्वं तस्मिन्सतीत्यर्थः । एतदित्यादि । बिम्बतुल्यप्रतिभासमात्रत्वमेवेति यावत् । एतावतैवालमिति चेच्चित्रेऽतिव्याप्तिव्यावृत्तये पूर्वदलम् । तावत्युक्ते वक्ष्यमाणलक्षणे प्रतिबिम्बे व्यभिचारवारणायोत्तरदलमिति सकलमतिविशदम् । व्युत्पत्तिपक्षेण परिभासपदेऽपि तत्त्वे मात्रच् ॥ ५ ॥

नन्वनादिबिम्बेत्यादिप्रपूर्वपद्ये तु जीवेश्वरयोरविद्यादिप्रतिबिम्बरूपत्वमेवोक्तं तत्र प्रमाणाकाङ्क्षायां जीवेशावाभासेन करोतीत्यादिश्रुत्युदाहरणप्रसङ्गप्राप्तमाभासलक्षणमुक्तं तदपि श्रीभारतीतीर्थैः कूटस्थदीपे तावदाभासप्रतिबिम्बयोः सामान्यलक्षणापेक्षायाम्—ईषद्भासनमाभासः प्रतिबिम्बस्तथा न किम् । बिम्बलक्षणहीनः सन्बि-

भवद्भासते स हीति तस्य संक्षिप्तत्वाद्युक्तमेवाथापि निरुक्ताभासलक्षणवद्भवता प्रतिबिम्बलक्षणमपि विशिष्य निर्वक्तव्यमेवेति चेत्सत्यम् ।

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिभिः क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मेति । एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति । रूपं रूपं प्रति रूपो बभूवेत्यादिषु प्रतिबिम्बवादमूलभूतासु श्रुतिषु कण्ठतः प्रतिबिम्बपदग्रहणादेतासामाभासवादेऽपि योजनसंभवान्नेह तु कण्ठत एवाऽऽभासपदोक्तेस्तद्वादस्यैव श्रुत्या मुख्यत्वेन ध्वनितत्वात्प्रतिबिम्बादिवादानामप्यत्रैवान्तर्भावसंभवस्य वक्ष्यमाणत्वाच्च मयेहोपक्रान्तप्रतिबिम्बलक्षणमनुक्त्वैव तत्प्रमाणप्रसङ्गसंगत्याऽऽभासलक्षणमेवोक्तमिदानीं प्रासङ्गिकसमाप्त्युत्तरं प्रागुपक्रान्तोपपादनावसर एवेत्याशयवानाचार्यः सिंहावलोकनन्यायेन प्रतिबिम्बलक्षणमेव संक्षिपति—अथेत्यादिमबोधितापूर्वार्धेन—

अथ सा प्रतिबिम्बता मता यत बिम्बैकयकने तदर्हता ।
विमलोपधिसंनिधानता तदभीप्सद्बुद्धिमतेऽपि बिम्बता ॥ ६ ॥

अथ प्रासङ्गिककथनानन्तरम् । सा अनादीत्यादिश्लोकोपक्रान्तप्रतिबिम्बत्वजातिरूपा । बिम्बेत्यादि । बिम्बेन वक्ष्यमाणलक्षणेन वस्तुना सह यदैक्यं स्वोपाधिविरहे सत्येकत्वं तदर्थमित्यर्थः । तदिति । तत्त्वेन वक्ष्यमाणदर्पणादिनिर्मलद्रव्यप्रतिहतत्वेन परावृत्तनयनकिरणकरणग्रीवास्थमुखैकग्रहणलब्धबिम्बरूपत्वेनार्हता योग्यतेत्यर्थः । प्रतिबिम्बता । मता प्राचीनाचार्यसंमता । एतादृशी अस्ति । यतेति । लघुतरलक्षणकाभार्थसूचकमिदमव्ययम् । एवं च बिम्बैक्यानुकूलत्वं प्रतिबिम्बत्वमिति लक्षणं पर्यवसितम् ।

नन्वाभासादिलक्षणद्वयेऽप्यत्र बिम्बपदार्थः संनिविष्टस्तस्यैवात्र किं लक्षणं तद्भाव्यमादौ पश्चात्तसिद्ध्यनन्तरं प्रतिमानं प्रतिबिम्बमिति कौशिकशक्त्या प्रतिकूलं प्रत्यङ्मुखत्वेन विपरीतम्बिम्बमिति यौगिकशक्त्या च सिद्धस्य प्रतिबिम्बपदशक्यतावच्छेदकावच्छिन्नस्य वस्तुनः सिद्धिः स्यादेवेत्यतस्तं लक्षयति—विमलेत्यादितदुत्तरार्धेन । विमलेति । शुद्धात्मप्राप्त्यनुकूलसूक्ष्मतमप्रश्नकारित्वान्निर्मलान्तःकरणस्यसूचकं शिष्यसंबोधनमेव न तूपधिविशेषणम् । उपधीयते निकटवर्तित्वेन स्थाप्यते प्रतिबिम्बोऽस्मिन्नित्युपधिर्दर्पणादिः । उपधीयते निकटवर्तित्वेन योग्यवस्तुन्यारोप्यते स्वधर्मोऽनेनेति वोपधिः । स्फटिकादौ कुङ्कुमाद्येव संनिहितं तथेत्युभयथाऽपि व्यवस्थाया विनाऽपि विमलेति विशेषणं निरुक्तव्युत्पत्त्यैव सिद्धेः । उपाधिपदप्रयोगे तूपधिरेवोपाधिरिति स्वार्थिकप्रत्ययान्तो बोध्यः ।

एवंलक्षण उपधौ अविद्यामायादौ संनिधानमनाद्याध्यासिकनैकट्यं अविद्यावच्छितोर्योगः षडस्माकमनादय इत्यभियुक्तोक्तेर्यस्य स तथा तस्य भावः। तदिति। तावभासप्रतिबिम्बावभीप्सितः स्वीकुरुत एतादृशौ यौ द्वौ। वार्तिकविवरणाचार्यौ तयोर्यन्मतं तत्रेत्यर्थः। बिम्बता भवतीत्यन्वयः। एवं चोपाधिसंनिधानत्वमेव बिम्बत्वमित्यात्मसुखादावनुगतं बिम्बलक्षणमिति संक्षेपः। मधुसूदनाचार्यैस्तु बिम्बप्रतिबिम्बयोर्लक्षणे बिम्बे तमो निपतितप्रतिबिम्बकेवेति संक्षेपशारीरकद्वितीयाध्यायगतप्रान्तेऽन्तिमषट्सप्ततितमश्लोकीयतृतीयचरणटीकायां प्रकारान्तरेणैवोक्ते।

तथा हि—उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिविभेदाश्रयत्वे सति औपाधिकपरिच्छेदरहितत्वं बिम्बत्वमिति प्रतिबिम्बावच्छिन्नादिव्यावृत्तये विशेषणानि। अर्थात् प्रतिबिम्बत्वविशिष्टं चैतन्यं जीव इत्युक्तं भवतीति। उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदवत्त्वे सति उपाधिपरिच्छिन्नत्वं प्रतिबिम्बत्वमिति च। अयमर्थः। सिद्धान्तबिन्दौ हि—अज्ञानोपहितं बिम्बचैतन्यमीश्वरः। अज्ञानप्रतिबिम्बितं जीव इति वा। अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः। अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्य इति प्रतिपादितमुख्यवेदान्तसिद्धान्तगाद्यमतसिद्धेश्वरलक्षणमिदम्।

उपाधीति। उपाधिरज्ञानं तन्निमित्तं यस्य एतादृशो यः स्वप्रतियोगिकोऽहं ब्रह्म न भवामीत्यनुभवे भेदस्य प्रतियोगिता ब्रह्मणि भात्यनुयोगिता च जीव इति हेतोः स्व ईश्वरः प्रतियोगी निरूपको यस्य एतादृशोऽत एव व्याप्ये स्वोपाधिप्रतिबिम्बिते जीवे वृत्तिर्वर्तनं यस्य एतादृशो यो विभेदस्तदाश्रयत्वं हि निरुक्तप्रतियोगितासंबन्धेन बिम्बीभूतेश्वरे वर्तत एव तत्त्वे सति। औपाधिकः प्रकृताज्ञानाख्योपाधिजन्य एतादृशो यः परिच्छेदस्तद्रहितत्वम्।

प्रतिबिम्बेत्यादि। प्रकृते चित्त्वमेव बिम्बत्वमित्युक्ते प्रतिबिम्बेऽतिव्याप्तिरिति सत्यन्तम्। तावन्मात्रोक्तावच्छिन्ने सा। तथात्वेऽप्यादिपदगृहीताज्ञानेऽसाविति चित्त्वेति त्रीणि विशेषणानीत्याशयोऽवभाति। सिद्धान्तबिन्दावेवोक्तम्—अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः। बुद्धिप्रतिबिम्बितं चैतन्यं जीवः। अज्ञानानुपहितं तु बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककारा इति मूलकृन्मतं तदिष्टेश्वरं लक्षयति—तमोनिपतित इत्यादिना।

उपाधीति। उपाधिरज्ञानं तन्निमित्तं यस्य एतादृशो यः स्वप्रतियोगिकोऽहं ब्रह्म न भवामीत्यनुभवे भासमानभेदे प्रतियोगी ईश्वर एवेति तत्प्रतियोगिकः। एतादृशोऽत

एव व्याप्ये स्वोपाध्यज्ञानकार्यभूतं बुद्धिप्रतिबिम्बितत्वेन परिच्छिन्ने जीवे वर्तत एतादृशो यो जीवानुयोगिको भेदस्तद्वान्प्रतियोगितासंबन्धेनेश्वरस्तत्त्वे सति । उपाधिरज्ञानं तेन परिच्छिन्नत्वं प्रतिबिम्बेश्वरत्वमित्यर्थः। उत्तरदलमात्रोक्तावज्ञानावच्छिन्नेश्वरेऽतिव्याप्तिरिति पूर्वदलम्। तावन्मात्रोक्तौ बिम्बेश्वरे चेत्युत्तरदलमिति।

नन्वथाप्यत्र सिद्धान्तबिन्दुलिखितमलक्षणन्मतैक्यं कथमिति चेत्तद्विशदीकरणमत्रैवाग्रे कृतम्। तद्यथा—अत्र चाज्ञानमात्रप्रतिबिम्बत्वमीश्वरत्वं विवक्षितम्। अहंकारतादात्म्यापन्नाज्ञानप्रतिबिम्बत्वं जीवत्वमिति द्रष्टव्यमिति। बुद्ध्यहंकारैक्याभिप्रायादेवैक्यं सिद्धान्तबिन्दुना सहैतद्ग्रन्थस्येति रहस्यम्। ब्रह्मविद्याभरणे तु द्वितीयाध्यायस्य तृतीय[illegible]गते पञ्चाशत्संख्ये आभास एव चेति सूत्रे प्रतिबिम्बलक्षणमन्यथैवोक्तम्। तदिदम्—अधिष्ठानातिरेकेणोपाध्यन्तर्गततया प्रतीयमान आरोप्यविशेष एव प्रतिबिम्ब इत्युच्यत इति।

नन्विदं भवदुक्ते आभासत्वमपि च बिम्बभिन्नत्वे सत्येतत्समपरिभासमात्रलेवेस्याभासलक्षणेऽतिव्याप्तमिति चेद्बाढम्। निरुक्तसूत्रे कण्ठत आभासस्यैव कथितत्वात्। तृतीयाध्यायस्य द्वितीयपादे तु—अत एव चोपमा सूर्यकादिवदिति सूत्रे प्रतिबिम्बत्वस्यार्थत एव। यथा ह्ययं ज्योतिरात्मा विवस्वानित्यादिश्रुत्यवष्टम्भेन जीवादौ प्रतिपादितत्वाच्चेत्याभासवाद एव मुख्यत्वं यथोत्तरं मुनीनां प्रामाण्यमिति वैयाकरणपरिभाषयाऽद्वैतशास्त्रे भगवतो वार्तिककारस्यैव चरममुनित्वेन तत्परिगृहीताभास एव प्रतिबिम्ब इति द्योतयितुं तथोक्तमिति दिक्। विस्तरस्त्वग्रे तत्प्रकृते द्वितीयपरिच्छेदे च सपरिकरं भविष्यतीत्युपरम्यते ॥ ६ ॥

ननु भवत्वेवं जीवादावाभासत्वं वा प्रतिबिम्बत्वं वा, तथाऽपि—अनादिविश्व[illegible]विस्तु मायेत्यादिचतुर्थश्लोके तावदनादिभावरूपा मूलाविद्यैव सादिदृश्यकारणं तदेकदेशस्य क्रमान्मायाविद्ये भवतस्तयोर्यौ स्वाधिष्ठानीभूतब्रह्मणः प्रतिबिम्बौ तावेवेश्वरजीवपदशक्यावित्युक्तं तत्र मूलीभूतायाम्। मूलाविद्यां प्रकृत्य। जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति श्रुतौ जीवेश्वरयोर्मूलाविद्यापरिणामरूपमायाविद्याप्रतिबिम्बलक्षणचिदाभासमात्रत्वमभिहितं तदिदमेकदेशमात्रस्याविद्यात्वं श्रुत्युक्तमपि युक्तिसिद्धं चेद्ब्रूयाअपि।

न च सर्पैकदेशीभूताश्यास्यतदीयताद्दंष्ट्राहृष्टान्तेनैकदेशेऽपि विचित्रशक्तिमत्त्वस्य दर्शनरूपा युक्तिः प्रागुक्तैवेति वाच्यम्। तत्कारणस्यैव प्रष्टव्यत्वात्। न ह्याकाशस्य साधारणे जलादौ प्रतिबिम्बे सत्यपि जलैकदेशे तद्विशेषो(तस्यैकदेशीभूतजलप्रतिबिम्ब-

ताकाशस्येत्यर्थः ) । विनोपाधिभूतजलादौ लाक्षारागादिसंपर्कमुपपद्यते । तथात्वं चेह किंप्रयुक्तमिति कस्यचिन्मुमुक्षोराक्षेपम्--चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते । मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधेति पञ्चदश्याः प्रथमप्रकरणे तत्त्वविवेकाख्ये पूर्वाश्रमे श्रीमन्माधवाचार्याभिधा उत्तराश्रमे श्रीविद्यारण्याः सत्त्वादितत्स्वरूपभूतत्रिगुणशुद्ध्यादितारतम्यादेव समादधुरिति प्रकृतं शिष्यं प्रत्याह प्रकृतश्रीगुरुः—मायेत्यादिमत्तमयूरेण—

मायाविद्ये जायत एषा स्वयमेवं
श्रुत्यां जीवस्तद्वशगः क प्रतिबिम्बः ।
एवं भ्रान्तः सत्त्वविशुद्ध्यादिविभेदा-
द्विद्यारण्यैस्तत्त्वविवेके समशिक्षि ॥ ७ ॥

एषा उपक्रान्ता । प्राङ्मूलाविद्यैव प्रकृत्याख्येत्यर्थः । श्रुत्यां श्रुतौ । तदिति । अविद्याख्ये चतुर्थपद्यव्याख्याते तदेकदेशे गत इत्यर्थः । एतादृशः । प्रतिबिम्बः क कथमुपपद्यत इति यावत् । निरुक्तमूलाविद्याख्यप्रकृत्यैकदेशे प्रतिबिम्बितचैतन्ये किंचिज्ज्ञत्वाद्यवच्छिन्नजीवत्वप्रयोजकं किमस्तीति ॥ ७ ॥

ननु श्रीमद्विद्यारण्याचार्याः पूर्वोक्ताक्षेपं प्रतिचक्षिरे तत्प्रकारापेक्षायां तं प्रतिपादयति--रजस्तमोभ्यामित्यादीन्द्रवज्रया—

रजस्तमोभ्यामभिभूतसत्त्वा भवेदविद्या न तथा तु माया ।
जीवेश्वरौ तत्प्रतिबिम्बरूपौ ब्रह्मात्मनः शुद्धचितेः क्रमेण ॥८॥

ब्रह्मेत्यादिनाऽनन्तानन्दत्वं शुद्धचितौ बोध्यम् । स्पष्टमेवावशिष्टम् ॥ ८ ॥

ननु किं मायाविद्याविभेदोऽयं निरुक्तमूलाविद्यायाः सत्त्वादिगुणशुद्धितारतम्याद्युत पराऽस्य शक्तिर्विविधैव श्रूयत इति श्रुत्युक्तानेकनिजशक्तिमत्त्वाद्वा । नाद्यः । सत्त्वादिगुणविशुद्ध्याद्यपि किंमूलकमिति शङ्कासत्त्वात् । अन्त्यपक्षस्य तु श्रौतत्वेऽपि ब्रह्मशास्त्रविषयकत्वेन कर्मशास्त्रवदाज्ञामात्रसमाधेयत्ववैधुर्येण युक्तिसापेक्षत्वात्का सेत्यत आह शुद्धिरूपाज्ञानेऽनेकशक्त्यनुभवेनापर्यनुयोज्यत्वात्समङ्गीकुर्वतां केषांचिदाचार्याणां मतमाह—पराऽस्येत्यादीन्द्रवज्रोपजात्युपजात्या—

पराऽस्य शक्तिर्विविधेतिवाक्या-
च्छक्तेर्भिदा प्रोक्तशुद्धेर्भिदा वा ।

तयोर्भेदः स्यादिति व्यग्रबुद्धिं
केचित्प्रोचुः शक्तिभेदाद्व्यवस्थाम् ॥ ९ ॥

शिष्यमिति शेषः । अपरं तु सरलमेव ॥ ९ ॥

अथ तत्प्रकाराकाङ्क्षायां तं संक्षिपति विक्षेपेत्यादीन्द्रवज्रया—

विक्षेपशक्तिः प्रकृतेऽस्तु माया
भवेदविद्या तु पिधानशक्तिः ।
तयोश्चिदात्मप्रतिबिम्बभूतौ
जीवेश्वरौ व्युत्क्रमतस्तदिष्टौ ॥ १० ॥

पिधानमावरणम् । तुशब्दद्वयं क्रमादवधारणवैलक्षण्ययोरेव । व्युत्क्रमतो व्युत्क्रमेण । तदिष्टौ मूलाविद्याख्यप्रकृतिशक्तिभेदान्मायादिव्यवस्थावादिसंमतौ जीवेश्वरौ स्तः ॥ १० ॥

अथोक्तमतेऽपि कश्चिन्मुमुक्षुः शङ्कते—नैवेत्यादिवसन्ततिलकया—

नैवाहमावरणशक्तिविशिष्टमाया-
संबिम्बितं त्वनुभवामि निजस्वरूपम् ।
विक्षेपशक्तिगतमेवममुष्य रूपं
संभावयाम्यथ कथं वितथं न वैतत् ॥ ११ ॥

नु इति वितर्के । अहम् । आवरणेत्यादि । आवरणशक्त्यवच्छिन्नमायाभिधप्रकृत्याख्यमूलाविद्याप्रतिबिम्बितत्वेन जीवत्वापन्नमात्मस्वरूपं नैवानुभवामीत्यन्वयः । एवं विक्षेपशक्तिगतममुष्य नित्यपरोक्षस्येश्वरस्यापि रूपं स्वरूपं नैवानुभवामीति संबन्धः । किंतु निरङ्कुशाज्ञवशादेव तादृशं जीवादिरूपमस्तीति केवलं संभावयाम्येव यतोऽतः । अथ निरूपितसंभावनोत्तरम् । एतत्पूर्वोक्तरूपं जीवादिव्यवस्थाजातं कथं न वितथमनृतं न भवेदपि तु भवेदेवेति योजना ॥ ११ ॥

ततः किमुक्ताक्षेपे समाधानमित्यत आह—एवमित्यादिशार्दूलविक्रीडितेन—

एवं भ्रान्तमतिं कृपापरवशाः संक्षेपशारीरक-
कर्तारो गुरवः समंजगदिरे संबोद्धुमत्यादरात् ।
कार्योपाधिरितिश्रुतेर्मतिगतो जीवोऽस्त्यविद्यागतः
स्यादीशः प्रतिबिम्ब आत्मन इति प्राप्यः स मुक्तैः शुचिः ॥ १२ ॥

एवं पूर्वपक्षोक्तरीत्या । भ्रान्तेति । अविचारपरिपाकपरवशबुद्धिं कंचिन्मुमुक्षुं वीक्ष्येत्यार्थिकम् । अत एव कृपेति । मैत्रः करुण एव चेत्यादिस्मृत्युक्तजीवन्मु-

केस्वाभाव्याधीनाः सन्त इत्यर्थः । संक्षेपेति । गुरव आचार्याः । एवं प्राप्तेत्याद्यप्यनुकृष्य योज्यम् । निरुक्तलक्षणमुमुक्षुं प्रतीति यावत् । प्रतीति । आशिषः कुशलं क्रियादिति वचनात्प्रागुक्ततर्कोपाक्षेपे कोपानुदयपूर्वं सप्रेम तन्निरतिशयहितोपदेष्टृस्वरूपाचार्यत्वात्तद्घातत्तस्योत्कर्षाद्धेतोरित्यर्थः । संबोद्धुं फलाव्यभिचारित्वेनात्मतत्त्वसाक्षात्कारं जनयितुमित्येतत् । अत एव इति उत्तरार्धवक्ष्यमाणव्यवस्थयेत्यर्थः ।

इदंपदं चरमचरणनिविष्टमप्यत्रापकृष्टम् । सुसंजगदिरे स्वसिद्धान्तत्वेनैव प्रतिपादयामासुरिति संबन्धः । इतिपदनिर्दिष्टार्थापेक्षायां तमेव संक्षिपति—कार्येत्याद्युत्तरार्धेन । कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति विस्पष्टश्रुतिवाक्याद्धेतोरित्यर्थः । मतिगतः । एतादृश । आत्मनोऽद्वैतप्रमाण । प्रतिबिम्बो योऽस्ति स जीवः स्यात्तत्पदाभिधेयो भूयादिति यावत् । तथाऽविद्यागतो य आत्मनः प्रतिबिम्बोऽस्ति स ईश एतत्पदवाच्यः स्यात् । तथा स्तोऽद्वैतप्रत्यक् । श्रुतिस्तत्त्वबोधेन मूलाज्ञानकृतकार्यकारणभावोपलक्षितनिखिलाविद्याद्प्रतिबिम्बप्रयुक्तबिम्बत्वादिद्वैतस्यापि निवृत्तेर्बाधाद्वा विशुद्धरूप एवेत्यर्थः ।

मुक्तैकरूपाद्वैतविषया सद्योमुक्तेर्जीवन्मुक्तेश्चेति यावत् । प्राप्यः स्यादित्यन्वयः । नन्वसतोऽधि मनोऽजायत इति श्रुतेर्मनउपलक्षितचित्तादिचतुष्टयस्यापि जन्यत्वेन तत्प्रतिबिम्बस्य जीवस्यापि जन्यत्वापत्तिः । इष्टापत्तौ वैषम्याद्यापत्तिः सकलशास्त्रविरोधापत्तिश्चेति चेन्न । अधस्तादेव संक्षेपशारीरकटीकायामहंकारतादात्म्यापन्नाज्ञानप्रतिबिम्बत्वं जीवत्वमित्युक्तत्वेन प्रलयेऽव्याकृताख्यतमोगुणाकारपरिणतकारणाज्ञाने बीजन्यायेन सर्वबुद्धीनां सूक्ष्मरूपेणावस्थानाङ्गीकारादित्यनवद्यमेवेदम् ॥ १२ ॥

अत्रापि कस्यचिन्मुमुक्षोः शङ्कामनूद्य तच्छामकश्रीमद्विद्यारण्यकृतचित्रदीपप्रपञ्चितविद्याचातुर्विध्यात्मकभगवद्वार्तिकाचार्यचरणसंमताभासवादोपन्यासेन समाधत्ते—अन्तर्यामीत्यादिस्रग्धरया—

अन्तर्यामी किमीशो भवति यदि न वा नाऽऽद्य आत्मस्वभावा-
न्यान्योऽतत्त्वानुभूतेरिति विकलधियं शिक्षितुं चित्रदीपे ।
विद्यारण्या वदेयुः श्रुतिसमभिमतं वार्तिकाचार्यमुक्तं
चिज्ज्ञातुर्विध्ययुक्तं द्विविधसरणितः स्पष्टमाभासवादम् ॥ १३ ॥

नन्वेवमपि यः पृथिव्यां तिष्ठन्नित्यादिबृहदारण्यकोक्तान्तर्यामिब्राह्मणप्रतिपादितस्तथाऽन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यधिकरणनिर्णीतश्च योऽन्तर्यामिपदवाच्यः संमतोऽस्त्यद्वैतिनां भवतामिति प्रश्नः । ननु किमत्र प्रमाणम् । बृहदारण्यको-

चतुर्दशपर्यायैरीश्वरस्यैव सिद्धत्वादित्याशङ्क्य तत्पक्षं प्रतिक्षिपति—नाऽऽथ इत्यादिना। एवं द्विकोटिकेऽन्तर्याम्युद्देश्यकेश्वरत्वतदभावरूपविधेयपक्षद्वयमध्येऽन्तर्यामीश्वर एवेति प्रथमपक्षो नैव सिध्यतीत्यर्थः । तत्र हेतुमभिधत्ते—आत्मत्वेति । पूर्वपक्षे मायायां प्रतिबिम्ब एवाऽऽत्मन ईश्वर इत्युक्तत्वेनेश्वरे शुद्धात्मत्वाभावात् । एष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तमिति स्पष्टमेव तस्याऽऽत्मत्वाभिधानाच्च ।

अथान्त्यमपि निराचष्टे—नान्त्य इति । अन्तर्यामी ईश्वरो नेत्यपि पक्षो नैव संभवतीति भावः । तत्रापि हेतुमाह—अतत्त्वेति । अनीश्वरत्वस्य तत्र श्रुत्या युक्त्या वाऽननुभवादित्यर्थः । ततः किं तदाह—इतीत्यादिशेषेण । इति निरुक्तसंदेहव्याकुलबुद्धिं कंचिद्बुभुत्सुं प्रतीति यावत् । शिक्षितुं शासितुम् । अनुशासनं कर्तुमिति यावत् । विद्यारण्याः प्रसिद्धा एव । चित्रदीपे पञ्चदशीषष्ठप्रकरणे । किं कपोलकल्पितमेते निरुक्ताक्षेपे समाधानमभिदधुर्नेत्याह—श्रुतीति । जीवेशावाभासेन करोतीत्यादिश्रुतिसंमतमित्यर्थः ।

किमत्रापि मानमित्यतः पुनर्विशिनष्टि—वार्तिकेति । चिदित्यादि । तदुक्तं सिद्धान्तबिन्दौ वार्तिककारचरणमतं प्रकृत्य—अयमेव च पक्ष आभासवाद इति गीयत इति । अत्र टीका न्यायरत्नावली । आभासवाद इति । एतदग्रे मूल एव स्फुटिष्यति । आभासेति । स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति वाद आभासवादः । स्वरूपतः सत्यं प्रतिबिम्बत्वरूपेण मिथ्याभूतं बिम्बमेव प्रतिबिम्बमिति वादस्य विवरणोक्तस्य वक्ष्यमाणस्य प्रतिबिम्बवादत्वमिति भाव इति । वदेयुरवदन् ॥ १३ ॥

अथ दिङ्मात्रनिर्दिष्टाभासवादं निरुक्तग्रन्थे प्रोक्ताचार्याः कथं प्रक्रियाद्वयेन प्रोचुरिति तत्प्रकारजिज्ञासायां तं संक्षिपति—आदावित्यादिशार्दूलविक्रीडितेन—

आदौ चित्रपटीनिदर्शनमिषादग्रे घटाकाशत-
द्वारिस्थप्रतिबिम्बखाभ्रगततच्छायादिदृष्टान्ततः ।
चैतन्यस्य चतुर्विधत्वमुदितं कूटस्थजीवेशचि-
च्छुद्धब्रह्मभिदा मृषात्वमनयोर्जीवेशयोः सर्वथा ॥ १४ ॥

आदौ प्रकरणारम्भे । चित्रेति । यथा चित्रपटे दृष्टमवस्थानां चतुष्टयम् । परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् । यथा धौतो घट्टितश्च लाञ्छितो रञ्जितः पटः । चिदन्तर्यामी सूत्रात्मा विराडात्मा तथेर्यते इति चित्रपट[illegible]ः । [illegible] । आद्ये [illegible] । [illegible] । कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा । घटाकाशमहाकाशौ जलाकाशाभ्रखे यथेति श्लोकोक्तरीत्या । घटादिकेषु आकाशौ

घटाकाशः स च तत्र यद्यार्युदकं तत्र तिष्ठतीति तथा । एतादृशं यत्प्रतिबिम्बितं प्रतिफलितमाकाशं च । तथा । अभ्रं मेघस्तद्गता या तच्छाय। तद्रूपोदकगतमहाकाशप्रतिबिम्बश्च । तथा । अभ्रं मेघस्तद्गता या तच्छाया तद्रूपोदकगतमहाकाशप्रतिबिम्बश्च । तथा । आदिपदेष्टो महाकाशश्चेति ते तथा तेषां दृष्टान्तेनेत्यर्थः ।

ननु कूटस्थ इत्यादिसमुदाहृतचित्रदीपश्लोके कूटस्थब्रह्मजीवेश्वरचैतन्यानां दृष्टान्तीकृतघटाकाशमहाकाशजलाकाशाभ्राकाशक्रमवैपरीत्यमेवात्र त्वयोपन्यस्तं तदनुचितमिति चेन्न । कूटस्थ इत्याद्युद्दिष्टदार्ष्टान्तिकक्रमानुसारे तत्र तथोक्तवत् । कूटस्थजीवेशाचिच्छुद्धब्रह्मेति मयाऽत्रोद्दिष्टदार्ष्टान्तिकक्रमानुकूलमेवं दृष्टान्तीकृतघटाकाशजलाकाशाभ्राकाशमहाकाशक्रमस्योक्तत्वेन सुतरामनौचित्याभावात् । न चैवमपि दार्ष्टान्तिकक्रमवैपरीत्यं तु तदुक्ततत्क्रमेण सहात्र तदवस्थमेवेति वाच्यम् । कूटस्थे जीवस्य प्रथमं कल्पितत्वे बुद्ध एव पश्चादीश्वरस्यापि ब्रह्मणि कल्पितत्वबोधसंभवात् । ततः किं तदाह—मृषात्वमित्यादिशेषेण ॥ १४ ॥

ननु भवत्वेवमन्तर्यामिस्वरूपविषयकसंशयशालिनं कंचिद्बुभुत्सुं बोद्धुमत्राऽऽचार्योणां पद्धतिद्वयमथापि कथमनयोरैक्यमित्याशङ्क्य प्रथमसरणिमनुवदति—पटो धौत इत्यादिशिखरिण्या—

> पटो धौतो ब्रह्म स्फुटितमथ संघट्टित इह
> क्षणादन्तर्यामी पुनरपि ससूत्रं सलिखितः ।
> विराड्वर्णैः पूर्णस्तदुपरि पटाभाससदृशो
> मतो जीवस्तस्माद्भवति न तु चित्पञ्चविधता ॥ १५ ॥

ब्रह्म शुद्धत्वेन ब्रह्मविषयकदृष्टान्त इत्यर्थः । न चात्र निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितमित्यादिश्रुतिविरोधः । तस्याः पारमार्थिकत्वाभिप्रायकत्वात् । प्रकृतदृष्टान्तादेस्तु व्यावहारिकत्वाच्च । अत एव शुद्धस्य कथायामप्रवेश एवेति राद्धान्तः मायाम् । स्फुटितं निरुक्तदृष्टान्ते स्पष्टीकृतमिति यावत् । एवमेवाग्रेऽपि ।

सलिखितो लाञ्छितेनानेकचित्रनिचयेन सहित इत्यर्थः। मतः पटाभाससमोऽसुभृदिति तद्वचनान्तरसंमतोऽस्तीत्येतत् । फलितमाह—तस्मादित्यादिशेषेण । तुरवधारणे । एवं चात्र शुद्धब्रह्मान्तर्यामीश्वरसूत्रात्माविराडात्मभेदेन चिच्चातुर्विध्यं बोधितम् । द्वितीयसरण्यां तु कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधेति प्रकारान्तरेण तदित्यनयोर्विरोधः ॥ १५ ॥

एवं शिष्येण प्रकृतपद्धत्योर्विरोधे प्रश्नोतिते सति तं समाधातुं प्रकृतश्रीगुरुः समाधानवंशमेवाभिमुखयति—आकर्णयेत्यादिवसन्ततिलकया—

> आकर्णयैक्यमनयोः शुभयोः सरण्यो-
> र्यल्लाञ्छिततत्त्वमुदितं बत चित्रशाट्याम् ।

सूक्ष्मे निदर्शनमतः क्व पटावभासो
भूयात्पृथक्समरसस्तदिहैव जीवः ॥ १६ ॥

पुरुषयोर्जीवजगदीशानां त्रयाणामपि मिथ्यात्वोपपादनात्तयोः सर्वात्मैक्यरूपत्वा-त्कल्याणरूपयोरित्यर्थः । शिष्टं तु स्पष्टमेव ॥ १६ ॥

प्रतिज्ञातसामरस्यमेव विशदयति–पटेत्यादिशिखरिण्या -

पटाभासो रेखारचनमिति नैवात्र विमति-
स्तथा जीवः सूत्रात्क नु किल समष्टेरपि परः ।
अथो वर्णैः पूर्णः पट इव विराड्यो निगदितो
जगत्स्थानीयोऽसौ तदपि च विचार्यं यत इह ॥ १७ ॥

ननु व्यष्टिसमष्टिन्यायेन भवतु जीवस्य सूत्रात्मसामरस्यमथापि योऽयं विरा-डात्मा रञ्जितपटदृष्टान्तेनोक्तः स क द्वितीयपद्धताविमत्राऽऽह–अथो इत्यापुत्तरार्धेन । अपेक्षितहेतुं प्रतिपादयति -तदपि चेत्यादिशेषेण ॥ १७ ॥

अथ शिष्यः श्रीगुरूक्तं समाधानमङ्गीकृत्यापीश्वरविषये साक्षात्पूर्वैराचार्यैस्तदी-येतिवेराकथ्य तत्रापि तदाशङ्कामनूद्य समाधत्ते–भवत्वेवमित्यादिशिखरिण्यैव—

भवत्वेवं जीवे जगति च समाधानमुचितं
तथाऽपीशे किं स्यादिति न यदभावव्यतिसमः ।
विशेषस्त्वेतावान्प्रथमकथितादीशवपुषो
द्वितीये तद्रूपं परमिव विभात्यक्षमनसः ॥ १८ ॥

तर्हि कोऽत्रापि विशेषोऽतिसमपदेन सूचित इत्यतस्तं स्पष्टयति–विशेषस्त्वि-त्याद्युत्तरार्धेन । द्वितीये पक्ष इति शेषः ॥ १८ ॥

नन्वत्रापि परमिवेत्यादिना ध्वनितं पद्धतिद्वितीयेऽपीश्वरैकरूप्यं तत्कथमित्यपे-क्षायां तत्कथयति—योऽयमित्यादिशार्दूलविक्रीडितेन सानुवादम्—

योऽयं घट्टितवस्त्रवन्निगदितो मायी पुराऽस्त्यादरा-
दन्तर्याम्यभिधो महेश इह धीसंस्कारसंबिम्बितः ।
उक्तोऽसौ घनबिम्बिताम्बरसमस्तत्रापि चेच्चिन्त्यते
नो भेदोऽस्त्यनयोर्लवादपि परं भङ्ग्येव भिन्ना खलु॥१९॥

पुरा प्रथमसरण्याम् । इह द्वितीयसरण्यां घटाकाशेत्यादिकक्षणायाम् । धीत्यादि । सर्वबुद्धिसंस्कारेषु परमसूक्ष्मेषु सम्यक्प्रतिबिम्बितः परमात्मेत्यर्थः । कथमसावुक्त इत्यतस्तं विशिनष्टि–घनेति । घनशब्दवाच्यं मतुषारनिकररूपमुदकं तत्र बिम्बितं

यदम्बरमाकाशं तेन समः । मेघाशरूपमुखकं तुषाराकारसंस्थितम् । तत्र सप्रतिबिम्बोऽयं नीरत्वादनुमीयत इति तदुक्तेस्तुल्य इति यावत् ।

ननु भवत्वेवं पद्धतिद्वितयोक्तेश्वरस्वरूपानुवादस्तथाऽपि किं प्रकृत इत्यत्राऽऽह—तथेत्यादिशेषेण । निरुक्तेश्वरस्वरूपद्वयविषयेऽपीत्यर्थः । चिन्त्यते विचार्यते वेदनयोक्तप्रक्रियातात्पर्ययोर्ऐक्यादपि ईषदपि लेशेनापि भेदो नोऽस्ति । परंतु प्रकृत्येव रीतिर्भेद । भिन्ना लक्ष्यति प्रसिद्धमिति संबन्धः ॥ १९ ॥

तत्र भेदाभावप्रबोधकविचारमेव संक्षिपति–रेखा एवेत्यादि तेनैव—

रेखा एव धियो मताः किल ततः संस्कारसंघाः पटे
ये जाताः परिघट्टिते स तु न ते किं तैः परिच्छिद्यते ।
एवं तेऽपि समष्टिधीप्रकृतिमन्मायैकगास्तेन त-
द्भेदः कः प्रतिबिम्बिताद्भुद परिच्छिन्ने निरुक्ते भवेत् ॥२०॥

स त्वित्यादि । परिघट्टितपटस्तु ते तव मते तैः संस्कारैर्न परिच्छिद्यते, अपि तु परिच्छिद्यत एवेत्यर्थः । तथाऽपि किं तदाह -एवमित्याद्युत्तरार्धेन । एवं पटरेखासंस्कारवत् । तेऽपि सर्वजीवबुद्धिसंस्कारा अपि । समष्टीत्यादिस्समष्टिबुद्धिकारणत्वविशिष्टमायामात्रस्था इत्यर्थः । अपरं तु सरलमेव । तेन नात्र भेद इति भावः ॥२०॥

एवं चाऽऽद्यपक्षे रेखादार्ष्टान्तिकबुद्ध्यावच्छिन्नत्वकथनादन्त्यपक्षेऽपि समष्टिबुद्धिकारणीभूतमायानिविष्टबुद्धिसंस्कारनिष्ठचित्प्रतिबिम्बत्वाभिधानाच्च सर्वजीवबुद्धिसंस्कारावच्छिन्नचित्त्वमेवेश्वरस्वरूपमुक्तमन्त्ये तु सर्वबुद्धिसंस्कारप्रतिबिम्बमेव तदित्यतोऽनयोः प्रायः प्रोढीकृतावैक्यमेव पर्यवस्येदथापि किमित्येवं कुसृष्टिकल्पनेत्याशङ्क्य स्वारस्यं स्पष्टयति--अवच्छिन्न इत्यादिशिखरिण्या—

अवच्छिन्नो जीवो ननु निगदितो भामतिकृता
प्रतिच्छायाऽऽत्माऽसौ विवरणकृदाद्यैरपि ततः ।
कथं नो भेदः स्यादिति न हृदयानाकलनतो
द्वयोरप्याद्दत्ये गुरुभिरियमुक्ताऽत्र सरणिः ॥ २१ ॥

ननु भामतिकृता भगवता वाचस्पतिमिश्रेण । जीवोऽवच्छिन्नो बुद्ध्यवच्छिन्न आत्मेत्यर्थः । भामतिकृत्त्वेन तत्रापि मान्यत्वं ध्वन्यते । निगदितः स्वग्रन्थे तात्पर्यतः प्रतिपादितोऽस्तीत्यर्थः । अथ किं तत्राऽऽह–प्रतिच्छायेत्यादिना । तेनापि किं तदाह–तत इत्यादिना । निरुक्तहेतोः । जीवस्वरूपे विषये भेदः कथं नो

न स्यादपि तु स्यादेवेति चेन्न। तत्र हेतुमाह—त्वदयेति । तात्पर्यनिर्धारणादिति यावत्। फलितमाह—द्वयोरपीत्यादिचरमचरणेन। आहत्य। आदरार्थम्। गुरुभिः, आचार्यैः ॥ २१ ॥

ननु भवत्वेवं महानुभावसंमतत्वाद्वादद्वयस्यापि अत्राऽऽभासवादे निरुक्तप्रक्रियाद्वयस्यैवेनाऽऽदरणसूचनमथापि द्वितीयप्रक्रियायामुक्तस्य कूटस्थस्याऽऽपातेऽ कान्तर्गौव इत्याशङ्क्य समाधत्ते—कूटस्थ इत्यादिमहर्षिण्या—

कूटस्थस्तदपि कथं पुरासरण्यां
संसिध्येद्घटखसमो न चेति वाच्यम् ।
यो रेखाद्यभिलिखितः पटावभास-
स्तन्मात्रः शुचिरपि किं पटो न यस्मात् ॥ २२ ॥

न च तदपि एवमपि। पुरेति। प्रथमपक्षे। घटेति। घटाकाशतुल्य इत्यर्थः। कथं सिध्येदिति। वाच्यमिति योजना। तत्र हेतुमाह—य इत्याद्युत्तरार्धेन। यो रेखाद्यभिलिखितो रेखावर्णपूरणादिनिर्मितः। एतादृशः। पटेति। पटलिखितनरादिपरिव्यापिचित्राभास इत्यर्थः। यस्मात्तन्मात्रस्तदवच्छिन्नः पटः शुचिरपि स्वरूपतः शुद्धोऽपि न भवति किमपि तु भवत्येवेत्यन्वयः। एवं च स्वरूपतः शुद्धत्वं प्रतिबिम्बावच्छिन्नयोरुभयोरपीति तावुभावाभासवाद एवान्तर्भवेतामिति भावः ॥ २२ ॥

नन्वाभासवादेऽत्र बाधासामानाधिकरण्यमपि संमतमास्ति तत्कथमित्यत आह—चोरोऽयमित्यादिस्रग्धरया—

चोरोऽयं स्थाणुरेवेत्यभिवदति गुरौ चोरधीः स्थाणुबुद्ध्या
बाध्या दृष्टेह तद्वत्किल समभिमतं तत्त्वमस्यादिवाक्ये ।
बाधायामेव सत्यां सममधिकरणं स्याद्द्वयोस्तत्त्वमेवं
शुद्धस्याऽऽभासयोगाद्भवकलनमतो बद्धमुक्तव्यवस्था ॥ २३ ॥

कस्यचिन्मुनेश्छात्रः प्रत्यूष एव व्युत्थायाऽऽश्रमान्मन्दान्धकार एव बहिर्दिशं वेगमिषुस्तत्र स्थाणुशब्दशक्ये कस्मिंश्चित्पुरुषाकारपाषाणे भ्रमाच्चोरोऽयं चोरोऽयमिति कोलाहलं कुर्वन्नेवाऽऽश्रमसमीपमागतः सन्नाचार्येण लोके प्रतिबोध्यते चोरोऽयं स्थाणुरेवेति प्रसिद्धमेव। ततस्तद्वाक्यजन्यया स्थाणुबुद्ध्या चोरधीर्भ्रमात्मिका बाध्या दृष्टाऽनुभूतैव। इह शास्त्रेऽपि तत्त्वमस्यादिवाक्ये । आदिनाऽहं ब्रह्मास्मीत्यादि। तद्वत्किल समुदाहृतवाक्यवदेवेत्यर्थः। बाधायामेव सत्यां स्थाणुबुद्ध्या चोरबुद्धौ भ्रान्तिरूपत्वेन बाधितपदाभिधमिथ्यात्वेनैव निश्चिता यथा भवति तथा तत्पदलक्ष्यब्रह्मबुद्ध्या त्वंपदवाच्यदेहादिपञ्चकोशचिदाभासाख्यजीवबुद्धौ बाधितत्वेन परमतुच्छायां स्यामिति यावत्।

अवधारणं मृद्घट इति नीलमुत्पलमिति सोऽयं देवदत्त इति च क्रमात्कार्यकारण-गुणगुण्यत्यन्ताभेदाभिधापरसामानाधिकरण्यत्रयव्याख्यय एवेदम्। सममेकरूपम्। अधिकरणं पर्यवस्थानस्थलम्। ययोः शब्दयोस्तद्वाच्ययोरर्थयोश्च स्यात्तत्त्वम्। एक-विभक्तिकत्वे सत्येकार्थप्रतिपादकत्वलक्षणं सामानाधिकरण्यं समभिनन्तमस्तीत्यन्वयः। ननु—योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव। ब्रह्मास्मीति धियाऽशेषा ह्यहंबु-द्धिर्निवर्तत इति नैष्कर्म्यसिद्धिवचनात्सांप्रदायिकोदाहरणविपरीतमिदमुदाहरणमिति चेत्सत्यम्।

नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन इति भगवद्वचनात्। स्नानव्याकुलगोपि-वृन्दमुपादायागमुपारूढं व्यादित्सन्तीरथ दिग्वसास्ता आदातुमुपाकर्षन्तम्। निर्धूत-द्वयशोकविमोहं बुद्धं बुद्धेरप्यन्तःस्थं सत्तामात्रशरीरं प्रणमत गोविन्दं परमानन्दमिति श्रीमद्भगवत्पादपादारविन्दवर्णितरीत्या श्लेषेण चोरशब्दशक्यः प्रकृते गोपकन्यानि-चोलचोरः श्रीगोपालः। अयं स्वबुद्धिस्थेन प्रत्यक्षः स्थाणुः कूटस्थोऽद्वैतपरमात्मैव चोरत्वादिबाधेन ब्रह्मैवेति वाक्यार्थविशेषलाभार्थमेवाविरुद्धस्य निरुक्तविपरीतोदाहरण-स्यापि मयाऽङ्गीकृतत्वादिति बोध्यम्।

ननु साभासज्ञानवाची यदि भवति पुनर्ब्रह्मशब्दस्तथाऽहंशब्दोऽहंकारवाची भवति तु जहती लक्षणा तत्र पक्ष इति संक्षेपशारीरकोक्तेरत्राऽऽभासवादे बाधायां सामा-नाधिकरण्यपक्षे महावाक्ये जहल्लक्षणैव वाच्या। तच्च श्रीमद्भाष्यकारसुरेश्वराचार्य-प्रभृतिसर्वपूर्वाचार्यविरुद्धमिति चेत्। बाढम्। अयमेव हि नोऽस्मर्थो यत्संप्रदायादर-र्शनमिति वार्तिकवचनादत्रापि मते जहदजहल्लक्षणैवेत्याह—एवमित्यादिश्लोकेन।

शुद्धस्य ब्रह्मणोऽपि। आभासेति। अविद्यादिचिदाभासतादात्म्यादेरित्यर्थः। भवकलनं जीवत्वेन संसारानुभवनम्। अङ्गीकृतं भवतीति शेषः। ततः किं तत्राह—बद्धेति। एवं च बन्धो येनानुभूतः स एव मोक्षभागिति शुकादयो मुक्तास्तत्त्व-ज्ञानादन्ये त्वद्य बद्धा इति च भागत्यागलक्षणानेकजीववादाभ्यां संधित्सतीत्यभि-प्रायः। विस्तरस्त्वत्र वक्ष्यत एवाग्रे बद्धमुक्तव्यवस्थोपपत्तावाभासवादस्तत्र तत्रै-वोपरस्यत इति दिक्॥ २३॥

ननु भवत्स्वेवमाभासवादे बद्धमुक्तव्यवस्था तथाऽप्याभासलक्षणमेव दस्तुरं कुतः। आभासत्वमपि च बिम्बनिम्नतत्त्वे सत्येतत्समपरिभासमात्रतैवेति। तत्र बिम्बेत्यादिना तावदाभासस्यापि प्रतिबिम्बत्वमार्थिकमायात्येव। परं त्वेतावानेव विशेषोऽस्त्याभासप्र-तिबिम्बत्वयोर्यदाभासस्योपाधिप्राधान्येन स्वरूपतोऽपि मिथ्यात्वं प्रतिबिम्बस्य तु

स्वरूपतः सत्यत्वमेवेति । एवं च प्रागुक्तप्रतिबिम्बलक्षणमेवान्योन्याश्रयदुष्टमिति मन्दाशङ्कते—नन्विरयादिसानुवादं प्रबोधितया—

> ननु बिम्बचिदैक्ययोग्यता
> प्रतिबिम्बत्वमुदीरितं पुरा ।
> प्रतिबिम्बत एव बिम्बता
> यदि चेत्तर्हि परस्पराश्रयः ॥ २४ ॥

अक्षरार्थस्तु स्पष्ट एव ॥ २४ ॥

यथोक्तशङ्कैव विस्मरणैकमूलिका यतः प्रागेवाऽऽभासलक्षणकथनात्यवहितोत्तरमेव मया, अथ सा प्रतिबिम्बता मता यत बिम्बैक्यकृते तदर्हतेति प्रतिबिम्बलक्षणमप्युक्तं तस्सादृश्यकारणात्संवर्ण्य तदपेक्षितबिम्बलक्षणमपि विमलोपाधिसंनिधानता तदभीप्सदृढिमतेऽपि बिम्बतेत्युत्तरार्ध एव संक्षिप्तमस्ति । तत्र बिम्बतायां प्रतिबिम्बप्रयुक्तत्वानुक्तेरुपाधिसांनिध्यामिधलक्षणस्यापि निर्दोषमुक्तत्वेत्यभिसंधायाऽऽचार्यः प्रकारान्तरेणैव बिम्बं लक्षयति—यदीयेत्यादिभुजंगप्रयातेन—

> यदीयप्रमा स्वप्रयुक्तं भ्रमं नं
> प्रबाधेत तद्बिम्बमाराडुपाधेः ।
> स्वधर्मोद्यदारोपकत्वं हि तत्त्वं
> मुखादौ तु तद्दृश्यते दर्पणादेः ॥२५॥

यदीयेति । विषयतया यत्संबन्धिनी प्रमा । आरात् समीपे । उपाधेरादर्शादिसंनिधिमित्तात् । स्वप्रयुक्तं भ्रमं न प्रबाधेत । पूर्वार्धे स्वपदमत्र लक्ष्यपरिचायकमेव न तु बिम्बाभिधायकम् । तेनात्र नाऽऽत्माश्रयः । यद्विषयकप्रमायां संनिहितोपाधिनिमित्तकस्वप्रयुक्तभ्रमाबाधकत्वं तत्त्वं बिम्बत्वमित्यर्थः ।

नन्वेवमपि लक्षणकुक्षिनिक्षिप्तोपाधेरपि किं लक्षणमित्याकाङ्क्षायां तत्संक्षिपति—स्वधर्मेत्यादितृतीयपादेन । स्वो मुकुरकाश्मीरादिः । तस्य उद्यन् प्रकट एतादृशो यो धर्मः प्रत्यङ्मुखत्वारक्तत्वादिस्तम् । अत्र मयूरव्यंसकादिवत्समासः । आरोपयति स तथा तस्य भावस्तथेत्यर्थः । हिरवधारणे । आरादित्यत्राप्यनुकृष्यम् । संनिहितयोग्यवस्तुनि स्वप्रत्यक्षधर्मारोपकत्वमेवोपाधित्वमित्यर्थः । तदुदाहरति—मुखादावित्यादिशेषेण । दर्पणेति । उपाधित्वमित्यार्थिकम् ॥ २५ ॥

ननु भवत्वेवमुपाधेर्भ्रमकारणीभूतस्य लक्षणमथापि भ्रम एवाऽऽदौ सामान्यतः कतिविध इत्याशङ्क्य सोदाहरणं तं विवृणोति—सोपाधिक इत्यादिसप्ते( पदि )न्द्रवज्राभिः—

सोपाधिकोऽथो निरुपाधिरेवं
भ्रमो द्विधाऽऽद्यः प्रतिबिम्ब एव ।
अन्त्योऽपि चैकः करणैकदोषा-
ज्जातस्तथाऽन्यो विषयैकदोषात् ॥ २६ ॥

भ्रमोशब्दोऽत्र मङ्गलानन्तरारम्भप्रभकात्स्न्येऽथो अवेत्यमरादुपाधिपदार्थ-प्रसङ्गात्सामान्यतस्तत्कार्यभूतसोपाधिकभ्रमप्रसङ्गवत्सोपाधिकभ्रमोद्देशानन्तरमित्यर्थः । उपाधिप्रयुक्तसोपाधिकभ्रमज्ञानसंभावनानिरुपाधिकभ्रमज्ञानस्यापि सोपाधिकभ्रम-ज्ञानैकायत्तसंभवज्ञानत्वादिति भावः । ततः किं तदाह—एवमित्यादिना । तत्राद्यस्य किमुदाहरणमित्यपेक्षायां यदर्थमयमुपन्यासस्तदेवेत्यर्थशेषेण समाधत्ते—आद्य इत्यादिना । ननु द्वितीयस्य निरुपाधिकभ्रमस्य कतिविधत्वमित्यत्राऽऽह—अन्त्य इत्याद्युत्तरार्धेन ॥ २६ ॥

ननु भवत्वेवं निरुपाधिकभ्रमस्य करणैकदोषजत्वविषयैकदोषजत्वाभ्यां द्वैविध्यम-थापि किमाद्यस्य लक्षणमित्यपेक्षायां तत्संक्षिपति—आद्य इत्यर्धेन—

आद्यः परोक्षप्रमया निरस्ते
तत्त्वेऽपि यादोषमिह प्रतीतः ।
तिक्तो गुडो द्वौ शशिनौ च पीतः
शङ्खः सुषिर्भास्वति वंशसर्पः ॥ २७ ॥

परोक्षप्रमाबाधितत्वेऽपि यावत्करणदोषं भासमानत्वं निरुपाधिककरणैकदोषजन्य-त्वमिति तल्लक्षणं पर्यवस्यति । तमुदाहरति—तिक्त इत्याद्येकेन । तिक्तो गुड इत्याद्य-नुभूते भ्रमेऽनुभवितुश्चैत्रस्य रसनेन्द्रिये सति पित्तदोषदूषिते यावत्तद्दोषोपशमं देश-भाषया कडुरेव सुरगिरा तिक्तो गुडः प्रतीयत इति प्रसिद्धमेव । तत्र पूर्वं स्वयमप-रोक्षप्रमया शतशः समनुभूतोऽपि मधुरो गुडस्तथेदानीमन्यैर्निर्दोषैराप्तैः सहस्रधा मधुर एव गुडः समुपदिश्यते । तथा परोक्षप्रमया तस्य तिक्तत्वे बाधितेऽपि यावत्पित्ता-ख्यरसनेन्द्रियदोषं तत्प्रतीतिस्तु वर्तत एवेति लक्षणसंगतिः ।

एवं चक्षुर्दोषजन्यमपि तमुदाहरति—द्वौ शशिनावित्यादिशेषेण । तदाहुर्भगवत्पू-ज्यपादचरणारविन्दपरागाः—एकश्चन्द्रः सद्वितीयवदिति । ननु पीतः शङ्ख इति भ्रमस्तु सोपाधिक एव । कामलादिदोषान्नेत्रस्थितपित्तपीतिम्न एव शङ्ख आरोपात् । तदुक्तमद्वै-तसिद्धौ प्रतिबिम्बनिरूपणे—नन्वविवादस्तावद्भेदसाक्षात्कारे । अन्यथा त्वयाऽपि कस्य भ्रमत्वमुच्येत । न च भेदं भेदकं च साक्षात्कुर्वन्नभेदं साक्षात्कुर्वाणो दृष्ट इति चेन्न ।

नैत्यव्याप्यशङ्खत्वसाक्षात्कारे पीतसाक्षात्कारवदुपाधिमाहात्म्यादभेदं साक्षात्करोतीत्यङ्गी क्रियते । अनुभवस्य दुरपह्नवत्वादिति ।

तस्मात्पीतः शङ्ख इति भ्रमः सोपाधिक एवेति प्रकृते तस्य निरुपाधिभ्रमकोटयन्तर्गतकरणैकदोषजातकोटिकत्वमुक्तमसांप्रदायिकमेवेति चेत्सत्यम् । अद्वैतसिद्धेरामूलचूडं त्वयैवानाकलनात् । तथा हि । तत्रैव । वस्तुतस्तु भ्रमे न सादृश्यापेक्षानियमः । निरुपाधिकेऽपि पीतः शङ्ख इत्यादौ व्यभिचारादित्युक्तम् । विवृतं चेदं गुरुचन्द्रिकायाम्--निरुपाधिकेऽपीति । न च पीतः शङ्ख इत्यादौ नेत्ररश्मिसंसृष्टपित्तद्रव्यस्य शङ्खादौ संसर्गात्तदीयं पीतत्वमनुभूयमानमारोप्यत इति सोपाधिकाध्यास एवायमिति वाच्यम् ।

एतत्कल्पनायां मानाभावात् । परम्परासंबन्धेन लोचनगोलकावच्छिन्नतत्रस्थपित्तादिदोषाणामेव शङ्खादौ स्मर्यमाणपीतत्वादिभ्रमहेतुत्वस्यैव युक्तत्वात् । अन्यथा पुरुषान्तरेणापि तादृशे पित्तस्य शङ्खादिस्थस्य ग्रहणापत्तेः । यदा यन्नेत्रस्थं तदा तेनैव गृह्यत इति नियमकल्पने गौरवादिति । किंचाद्वैतसिद्धावेवात्रैव विषयेऽग्रिमग्रन्थे विवरणमपि संमत्या उपन्यस्तम् । तथा चान्यतः संस्कारोद्बोधे सादृश्यमनुपयोगि । तदुक्तं विवरणे -निरुपाधिकभ्रमकार्यदर्शनमेव गुणावयवसामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इतिवत्सादृश्यान्तरं वा शङ्खपीतिमादाविव कारणान्तरं वा कल्पयतीति ।

तस्मात्पीतः शङ्ख इत्यादिभ्रमो निरुपाधिकः । सुषिरिति । तदुक्तं पञ्चपादिकायां श्रीमत्पद्मपादाचार्यचरणैः—तद्यथौत्पातिकः सवितरि सुषिर्यथा वा माहेन्द्रजालकुशलेन प्रासादादेर्निगरणमिति । एतेनाग्रिमार्धोक्तवासवजालपदं व्याख्यातम् । वंशेति । नागार्जुनादिकौतुकग्रन्थविशेषप्रसिद्धतैलवर्तिकापात्रविशेषसाधितप्रदीपप्रकाशावच्छिन्नाः सर्वेऽपि वेणवो यावत्तत्प्रकाशं पश्यतां सर्पा एव प्रतीयन्त इति प्रसिद्धमेव लोके ॥ २७ ॥

केशोण्ड्रकं नौस्थितवृक्षयानं
गन्धर्वपूर्वासवजालमुख्यः ।
भ्रम्योऽप्यधिष्ठानमिति प्रबाध्य-
नाश्यत्वभेदाद्द्विविधोऽनुभूतः ॥ २८ ॥

केशोण्ड्रकमिति । सौरालोकाभिमुखं गतेनाङ्गुलीभ्यां स्वनेत्रयोः प्रमार्जने क्रियमाणे सद्यश्चक्षुरुन्मीलने पुरतः शिखिपित्तसदृशं प्रतीयते यत्तस्यैव शास्त्रे केशोण्ड्रकमिति भ्रमविशेषस्य संज्ञा । नौस्थितेत्यादि । नावि नौकायां स्थितस्य देवदत्तादेर्नौकायां

गच्छन्त्यां सत्यां तीरस्था एव वृक्षादयो गच्छन्तः प्रतीयन्त इति प्रसिद्धमेव । गन्धर्वेति । शरत्कालिकाभ्रेषु विचित्राकारवर्णेषु बालकल्पितगन्धर्वनगरभ्रमोऽपि लोकादिप्रसिद्ध एव । एवं वासवजालमिन्द्रजालं मन्त्रबाधे प्रसिद्धमेव । मुख्य-पदेनाऽऽदिपदपर्यायीभूतेनैवंजातीयकान्यपरभ्रमजातान्यप्यत्र संग्राह्याणि ।

न चौत्पातिके सवितुश्छिद्रदर्शने कथं करणदोषजन्यभ्रमत्वमिति वाच्यम् । द्रष्टुरेव भविष्यदुत्पातप्रयुक्तदृग्विपर्यासस्संभवात् । एतेन वंशसर्पे मन्त्रौषधादिशक्तिः केशो-ण्डूके नेत्राङ्गुल्यादियुक्तिः पोतगतिर्बालमतिर्मन्त्रशक्तिश्च क्रमाद्वंशोरगादिभ्रमपञ्च-केऽपि नयनविपर्यासहेतुर्व्याख्यातः । एवं करणैकदोषजं निरुपाधिकभ्रमं समुदा-हृत्य विषयैकदोषजमन्त्यं तमभिधातुं पुनस्तथैव भिनत्ति—अन्त्योऽपीत्यर्धेन । अधि-ष्ठानेति । भ्रमोपादानाज्ञानविषयत्वं अधिष्ठानत्वं तद्विशिष्टविषयिणी या मितिः प्रमा तया ये प्रबाध्यनाश्यत्वे तयोर्यो भेदस्तस्मादित्यर्थः ॥ २८ ॥

अथैवं प्रतिज्ञातमधिष्ठानमिति प्रबाध्यत्वनाश्यत्वाभ्यां द्विविधयोर्विषयैकदोषजयो-र्निरुपाधिकभ्रमयोर्मध्ये प्राथमिकमुदाहरति—चित्रं चेत्यादिना प्रथम इत्यन्तेन—

चित्रं च रक्तः स्फटिको मृगाम्बु
मेघेषु गच्छत्सु गतिर्हिमांशोः ।
शोणेन्दुमुख्यः प्रथमोऽत्र चान्त्यः
संवाद्यसंवादिभिदा द्विधैव ॥ २९ ॥

चित्रमालेख्यं भित्त्यादौ निर्मितं प्रसिद्धमेव । रक्तः स्फटिक इत्यादि । इदमप्युक्त-द्वैतसिद्धावेव—एवं स्फटिकलौहित्यस्योपाधिसंनिधानसापेक्षत्वं च । न च लौहित्यं स्फटिके न मिथ्या, किंतु धर्ममात्रप्रतिबिम्ब इति न पृथगुदाहरणमिति वाच्यम् । धर्मभूतमुखादिनैरपेक्ष्येण तद्धर्मभूतमुखादिप्रतिबिम्बादर्शनात् । प्रतिबिम्बस्यान्या-प्यवृत्तित्वनियमेन लौहित्यस्य स्फटिके व्याप्यप्रतीत्ययोगाच्च । लौहित्ये स्फटिक-स्थत्वारोपे तस्य प्रतिबिम्बत्वम् । स्फटिके लौहित्यारोपे तु तस्य मिथ्यात्वमिति विवेकः । स्फटिकमणेरिवोपधाननिमित्तो लोहितिमेति लोहितिम्नो मिथ्यात्वं दर्शितं प्रतिबिम्बसत्यत्ववादिभिः पञ्चपादिकाकारैरिति ।

मृगेति । ऊषरधरण्यवच्छिन्नतरणिकिरणेषु हरिणप्रभृतिसतृष्णजीवादिदृष्टजल-मित्यर्थः । मेघेष्वित्यादि । दैवात्पाश्चात्यवातेन मेघेषु प्राचीं गच्छत्सु सत्सु प्रतिक्षणं तैरावृतत्वाविवृतत्वाभ्यां द्रष्टृदृष्ट्या चन्द्रोऽपि प्राचीं गच्छतीव प्रतीयते । सोऽप्ययमधि-ष्ठानमितिप्रबाध्यविषयैकदोषजो भ्रमः । शोणेति । संध्यारागाच्चन्द्रेऽपि रक्ता-

विदरणः प्रतीपतेऽसौ भ्रमो निरुक्तजातीयक एव । मुख्यपदेन नीलं नभः शुभ्रं भ्रम इत्यादिर्बोध्यः । अत्र लोके । प्रथमोऽधिष्ठानमिततः प्रबाध्यो निरुपाधिको विषयैकदोषजो भ्रम इत्यर्थः । अन्त्यो विनाश्यः । संवादीत्यादि ॥ २९ ॥

तत्राऽऽद्यमुदाहरति-रत्नेत्यादिना-

रत्नप्रदीपप्रभयोः प्रवृत्त्या
रत्नैकबुद्ध्या यदि रत्नलाभः ।
तदादिराद्यश्चरमोऽपरोऽत्र
रज्जूरगस्वप्नकशुक्तिरूप्यम् ॥ ३० ॥

आदिना मुकुरे कान्ताप्रतिबिम्बे तद्धियोपसृतस्य निकटे तल्लाभः । चरमोऽसंवादी । अपरो नाश्यः । तमुदाहरति-रज्ज्वित्यादित्रिपाद्याऽनन्तत्वेन ॥ ३० ॥

स्थाणुः पुमाञ्शो दशमोऽहमस्मि
राधेय इत्यादिरनन्तरूपः ।
द्वैतभ्रमः केवलमोहजन्यः
कथं गुरो स्यादुपपन्न एषः ॥ ३१ ॥

शिष्टं तु स्पष्टमेव । तत्रायं संग्रहः । सोपाधिः प्रतिबिम्ब एव निरुपाधिर्दुष्टरज्ज्वादिजः । पीतः शङ्ख इहास्ति दुष्टविषयोद्भूश्चित्रमाबाधितः । संवादी मणिधीमितौ मणिधिय। तत्पाषणे स्यात्त्विसंवादी शुक्तिमुखाभि(म)ताधिकरणे रूप्यादिरूपस्तथेति । एवमुक्तसोपाधिकत्वादिपक्षसामान्यैर्लोकप्रसिद्धं(द्धं) भ्रमं निरूप्य द्वैतभ्रमे शिष्यः शङ्कते-द्वैतेत्यार्धेन । एष साक्षिप्रत्यक्षः ॥ ३१ ॥

एवं शिष्याशङ्कामाचार्यः सिद्धान्तानुगुणकत्वेन समाधिरसुरप्यथभङ्गी करोति-सत्यमित्यादिशार्दूलविक्रीडितेन-

सत्यं संविदि मोहमात्रजनितो नेयं प्रमेत्यादिको
दृष्टो विभ्रम इत्यसावपि तथा संविद्भ्रमत्वान्न किम् ।
वैचित्र्यं भ्रमहेतुमुक्तमिति तन्नैयत्यमंशून्यता
व्यक्ता श्रीमधुसूदनप्रभृतिभिः सिद्धान्तबिन्द्वादिषु ॥ ३२॥

तदेव समाधानं स्फुटयति-संविदीत्यादिना । संविदि सामान्यतः सर्वसाधारणे ज्ञानलक्षणे विषय इत्यर्थः । इयमयं घट इत्यादिवृत्तिः । प्रमा न यथार्थानुभवो नैव भक्तीत्यादिकः कस्यचिदेवञ्चस्य । मोहमात्रेति । मुह वैचित्त्य इति स्मरणात्म-

मादमोहौ तमस इति भगवद्वचनाच्च तमोगुणपरिणामविशेषरूपयथावद्वस्तुतत्त्वानवधारणात्मकान्तःकरणवृत्त्येकानिर्मित इति यावत् । एतादृशो विभ्रमोऽयथार्थानुभवः । दृष्टो लोके शतशोऽनुभूतो यथाऽस्ति तद्वत् । असावपि प्रकृतस्वच्छचित्तो द्वैतभ्रमोऽपीत्यर्थः । तथाऽनादिभावरूपमूलाज्ञानलक्षणमोहमात्रजनित इति यावत् । संविद्भ्रमत्वान्न भवति किमपि तु भवत्येवेत्यन्वयः ।

ननु दृष्टान्ते हेतोः स्वरूपासिद्धिरेव । जीवन्मुक्तस्यैकशरीरैकजीववादात्मकदृष्टिसृष्ट्यङ्गीकृत्य सर्वासामपि चित्तवृत्तिरूपसंविदां भ्रमत्वात् । एवं नास्तिकेष्वपि शून्यवादिनां विज्ञानवादिनां च तत्र तथात्वस्यैव संमतत्वाच्चेति चेन्न । मुमुक्षोः शुद्धवैदिकस्यैव प्रकृते प्रष्टृत्वेन तद्दृष्ट्या व्यवहारे भट्टनयाङ्गीकारेण तद्रीत्यैव समाधातुमौचित्यात् । जीवन्मुक्तदृष्टेस्तु तेन स्वप्नेऽप्यश्रुतत्वात् । निरुक्तनास्तिकसिद्धान्तयोस्तु तेन भट्टादिमतपरिशीलनतः पुरैव तृणीकृतत्वाच्च ।

न च मोहमात्रेत्यत्र मात्रचः सामग्र्यन्तरव्यावर्तकत्वमवश्यं वाच्यम् । तच्च न संभवति । सर्वस्यापि भ्रमस्य रज्जुसर्पाद्युदाहरणेषु मन्दान्धकारस्थितत्वरूपविषयमात्रदोषजन्यत्वस्यैव पीतशङ्खाद्युदाहरणेषु करणमात्रदोषजन्यत्वस्य च दृष्टेः । तस्माद्विषयादिदोषजन्यत्वस्यापि भ्रमे दृष्टत्वेन प्रकृते मोहमात्रेति मात्रजनर्थक एवेति वाच्यम् । सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति मीमांसकसिद्धान्तेन संवित्पदशक्ये ज्ञाने स्वप्रकाशत्वेन विषयदोषस्य करणदोषस्य च कालत्रयेऽप्यसंभावितत्वा नेयं प्रमेति व्यवहारात्मकभ्रमस्य केवलमोहजन्यज्ञापनार्थं तत्सार्थक्यात् ।

अत्रायं प्रयोगः । इयं संविदप्रमेत्यादिको व्यवहारः । मोहैकमूलकः । संविद्भ्रमत्वात् । संविदन्तरविषयकतद्व्यवहारवदिति दृष्टान्तसिद्धौ सत्याम् । द्वैतभ्रमः । मोहमात्रमूलकः । संविद्भ्रमत्वात् । इयं संविदप्रमेत्यादिसाधितसंविद्भ्रमवदिति । तदुक्तं संक्षेपशारीरके—विषयकरणदोषान्न भ्रमः संविदि स्यादपि तु भवति मोहात्केवलादेवमेव । भगवति परमात्मन्यद्वितीये समस्ताद्भ्रमातिरिप्मस्तु भ्रान्तिरज्ञानहेतुरिति ।

ननु भवत्वेवं संसारभ्रम सोपाधिकादिमदुपन्यस्तपंचविधभ्रमसामग्रीविलक्षणमोहमात्रसामग्रीजन्यः संविद्भ्रमत्वात्तथापि तदितरः सर्वोऽपि भ्रमस्तु निरुक्तपञ्चविधभ्रमान्यतम एवेति नियमस्तु स्यादेवेति चेन्न । सांप्रदायिकैः पूर्वाचार्यैस्तद्वान्यस्यैव सूचितत्वादित्यभिसंधाय तथात्वे श्रीमन्मधुसूदनसरस्वतीसंमतिं संप्रथयति—वैचित्र्यमित्याद्युत्तरार्धेन । तदुक्तं सिद्धान्तबिन्दौ—ननु नीरूपस्य निरवयवस्याऽऽत्मनः कथं प्रतिबिम्ब इति चेत्काऽत्रानुपपत्तिर्भ्रमहेतूनां विचित्रत्वादिति ।

अयमर्थः । अत्र नीरूपस्येत्येवोक्ते यद्यत्सरूपं तत्प्रतिबिम्बनार्हं यथा मुखादीत्यन्वयव्याप्तौ सत्यामपि यद्यत्प्रतिबिम्बनायोग्यं तदरूपमिति व्यतिरेकव्याप्तिर्न भवति । आदर्शनाऽऽभासनीलिमप्रतिबिम्बे क्षणेन तद्बिम्बीभूते निरुक्तनीलिमनि प्रतिबिम्बनयोग्यत्वेऽपि रूपाभावस्य संदिग्धत्वेन तत्र व्यभिचारात्तन्निरासार्थं तां व्याप्तिं विहाय निरवयवस्येत्युक्तं तत्र यत्सावयवं तत्प्रतिबिम्बनार्हं यथा मुखादीत्यन्वयव्याप्तावपि यद्यत्प्रतिबिम्बनार्हं तन्निरवयवमिति व्यतिरेकव्याप्तौ वायौ प्रतिबिम्बानर्हत्वेऽपि निरवयवत्वाभावेन तत्र व्यभिचारात्तदर्थमुभयमप्युक्तम् । तथा च यत्र यत्र सरूपत्वे सावयवत्वं तत्र प्रतिबिम्बार्हत्वं मुखादिवदित्यन्वयेन यत्र यत्र प्रतिबिम्बानर्हत्वं तत्र निरवयवत्वमिति व्यतिरेकेण च व्याप्त्या नीरूपस्य निरवयवस्याऽऽत्मनः प्रतिबिम्बो न युक्त इति । प्रमृतिपदेनाऽऽचार्यान्तरं संगृह्यते । तच्च स्वयमेवान्वेष्यम् । विस्तरभयान्नेह प्रपञ्च्यते । व्यक्ता घोतिताऽस्तीति संबन्धः । आदिना त्वाचार्यान्तरग्रन्थः ॥ ३२ ॥

एवमाभासवादं प्रासङ्गिकं समाप्य प्रकृतशिष्य एव पुनः शङ्कते—आस्तामेवमित्यादिमन्दाक्रान्तया—

आस्तामेवं तदपि भवता येऽत्र माण्डूक्यवाक्ये
जीवा विश्वप्रभृतय इमे तत्र विश्वः क इष्टः ।
नैवाऽऽभासो जनकविरहान्नापि कूटस्थ एष्यां
विक्षिप्तत्वादिति विमनसं भारतीतीर्थ आह ॥ ३३ ॥

एवं निरुक्ताचार्योक्तिप्रकारेण क्रमेणाऽऽभासत्वमास्तां भवतु तथापि । येऽत्र माण्डूक्यवाक्ये । विश्वेति । विश्वतैजसप्राज्ञविराड्हिरण्यगर्भा इत्यर्थः । एतादृशाः । इमे प्रोदाहृतोपनिषत्प्रसिद्धाः । जीवाः सन्ति । तत्र तेषु मध्ये विश्वः स्थूलदेहावच्छिन्नजाग्रदवस्थाभिमानी चैतन्यविशेषः क इष्ट इति प्रश्नः । ननु कोऽत्र संदेह इत्यत्राऽऽह—नैवाऽऽभास इत्यादिना । चिदाभासश्चिदाभासः । तत्र हेतुः । जनकेति । एवं तर्हि भवत्वसौ कूटस्थ इति चेत्तत्रापि नेत्याह नापीत्यादिना । तत्रापि हेतुः—विक्षिप्तत्वादिति । तत्र किं मन्ये तदाह—इतीत्यादिशेषेण । इति त्वदुक्तशङ्काप्रकारेण विमनसं संदिहानं कंचिन्मुमुक्षुं प्रति । भारतीतीर्थनामा तृप्तिदीपादिनवप्रकरणीकर्ता आचार्यः । आह वक्ष्यमाणमर्थमवोचदिति संबन्धः ॥ ३३ ॥

किं तदित्यपेक्षायां तद्विशदयति—ब्रह्मानन्द इत्यादिस्रग्धरया—

ब्रह्मानन्दे हि विश्वप्रमुखा उदिताः षट्चितो व्यष्टिमुख्या-
स्तत्रान्त्येशोऽपरास्तु स्फुटतरमुदिताः पञ्च जीवास्ततोऽन्या ।

कृत्वा स्यात्सप्तमी चित्रिषु फलति ततोऽनुक्रमात्पूर्वपूर्वं
बिम्बं तेनोत्तरं तु प्रतिकृतिमणिवरस्फाटिकादौ करण्डे ॥३४॥

सदानन्दनामकेऽन्तिमकूटात्मके पञ्चदशाक्षरमपञ्चमकरणरूपे ग्रन्थ इत्यर्थः । कुन्मपदेनाऽऽपर्थकेन समष्टिचिद्महः । उदिताः कथिताः क्रमाद्विश्वतैजसप्राज्ञ-विराट्सूत्रात्मेश्वराभिधाः समुपदिष्टाः सन्तीत्यार्थिकेनान्वयः । ततः किं तदभि-धत्ते—तत्रेत्यादिना चिदित्यन्तेन । पर्यवसितमाह—त्रिष्वित्यादिशेषेण । ततो हेतोः । अनुक्रमाद्व्यष्टिसमष्ट्यनुक्रमेणेत्यर्थः । त्रिषु व्यष्ट्यात्मकविश्वादित्रिषु समष्ट्यात्म-कविराडादित्रिविधेषु चोपाधिष्विति यावत् । सप्तमी चित्फलति प्रतिफलतीत्यनु-कृष्य योज्यम् । फलितं कथयति—पूर्वपूर्वमित्यादिना । तेन प्रतिफलनेन । पूर्व-पूर्वं स्फाटिकादौ करण्डे मणिनरत्नप्रभरत्नवद्बिम्बमुत्तरं तु प्रतिकृतिप्रतिबिम्बं च स्यादिति संबन्धः ॥ ३४ ॥

उक्तदृष्टान्तं स्पष्टयति—रत्नमित्यादिशार्दूलविक्रीडितेन—

रत्नं स्वप्रभमेकमास्ति विहितं चर्मालकाचात्मके
शुभ्रं चारुकरण्डके तदपि चन्द्रकोऽस्य तत्स्फाटिके ।
तत्रेन्द्रोपलविभ्रमादुपगतस्तत्तत्क्रमाद्वीक्षते
तत्तद्व्यष्टिसमष्टिजीवनिगमे ब्रह्म स्वयं नेश्वरः ॥ ३५ ॥

तदपि निरुक्तं रत्नविशिष्टं करण्डकमपि । उपगतो देवदत्त इति शेषः । दार्ष्टा-न्तिके योजयति—तद्वदित्यादिशेषेण । स्वयमिति । विश्वादिपञ्चजीवानां विवेकेन मिथ्यात्वे सतीत्यर्थः ॥ ३५ ॥

ननु सर्वेऽपि पूर्वाचार्याः सांप्रतिकाश्च संन्यासिनः पारमहंस्योत्तरं मुमुक्षुं प्रति प्रणवमेवोपदिशन्त्यतस्तज्जपादिनैव मम कैवल्यं भविष्यत्येवेति किमपरविचारेणेति प्रकृतशिष्याशङ्कते—प्रणवमित्यादिमालिनीपूर्वार्धेन—

प्रणवमुपदिशन्ति न्यासिनो देशिकेशा-
स्तदलमितरचिन्ताजालतो मेऽद्य मुक्त्यै ।
इति गतमतिमुच्चुर्गौडपादाः शमीशाः
कृतललितनिबन्धाः किंच माण्डूक्यशास्त्रे ॥ ३६ ॥

अथोक्त एवाऽऽचार्यः प्रकृतशङ्कासमकक्षं कंचिन्मुमुक्षुमुद्दिश्य माण्डूक्योप-निषदि कृतकारिकात्मकनिबन्धाः श्रीगौडपादाचार्याः समाधानमाहुरित्याह—इतीत्याद्यु-

परार्थेन । इति प्रागुक्तत्वच्छङ्कासममेव । गतमतिं नष्टप्रेक्षं कंचिन्मुमुक्षुं प्रतीत्यर्थः । शमीशाः संयमीन्द्रा इत्यर्थः । एतादृशाः । श्रीमद्गौडपादाचार्याः सपदि वक्ष्यमाण-रीत्येति शेषः । ऊचुः समादधिरे इत्यन्वयः ॥ ३६ ॥

किमूचुरित्यपेक्षायां तत्संक्षिपति—विराडित्यादिशिखरिण्या—

विराट्सूत्राव्यक्तैः प्रणवगतमात्राभिरभितः
सहालं विश्वादीनपि किल विलाप्य क्रमवशात् ।
तुरीयो विज्ञेयः परमसुखरूपः श्रुतिमतो
गतद्वैतः प्रोक्तः सपदि परमात्मा शिव इति ॥ ३७ ॥

विराट् समष्टिस्थूलशरीराभिमानी चिदात्मेत्यर्थः । सूत्रं समष्टिसूक्ष्मशरीराभिमानी स इति यावत् । अव्यक्तं समष्टिकारणशरीराभिमान्येष एव । स च तच्च तचेति द्वंद्वः । तैर्विराड्हिरण्यगर्भेश्वरैः सह । प्रणवेति । ओंकारसंबन्धिनीभिरकारोकारमका-राख्यमात्राशब्दवाच्यावयवव्यक्तिभिश्च सहेत्यर्थः । अभितः समन्ताद्भागेन । विश्वा-दीन्विश्वतैजसप्राज्ञाख्यान् । जाग्रदाद्यवस्थाभिमानिनो जीवानिति यावत् । क्रम-वशादनुक्रमेण । अलंभावनोत्कर्षेण निरवशेषं यथा स्यात्तथा । विलाप्य किल । ऐक्य-भावनयैकीकृत्यैवेत्यर्थः । तुरीय इत्यादि स्पष्टमेव ॥ ३७ ॥

ननु चित्रदीपादिविचारे प्राक् कूटस्थो य उक्तः स एव जीवः कुतो नोच्यत इति शङ्कमानं प्रकृतशिष्यं प्रति श्रीगुरुः समाधत्ते—कूटस्थ एवेत्यादिवसन्ततिलकया—

कूटस्थ एव न कुतो भविताऽत्र जीव-
स्तत्राप्युपाधिवशतांशलवस्य सत्त्वात् ।
इत्यादिसंशयवशं प्रति भाष्यकारः
श्रीपादपद्मपरमाणव आहुरेवम् ॥३८॥

ननु कुतोऽस्य जीवत्वशङ्केत्यत्राऽऽह—तत्रापीत्यादिद्वितीयपादेन । उपाधीति । उपाधेः स्वधर्मारोपकलक्षणस्यान्तःकरणादेर्या वशता आधीनत्वं तस्य योंऽशः प्राब-ल्यप्रयोजकः । घुणुप्यवच्छेदेन विलीनान्तःकरणादिकारणतादात्म्यापन्नचित्स्वरूपो वि-भागविशेषस्तस्य लवस्तत्साक्षित्वोपलक्षितचित्स्वरूपस्तस्येत्यर्थः । भाष्येत्यादि । एवं वक्ष्यमाणरीत्येत्यर्थः । अपरं तु सरलमेव । अत्र श्रीत्यादिपूजार्थमेव । एवं च स्वाद-शस्य शङ्कमुमुक्षुसमाधानं तु श्रीमद्भगवत्पादैरेवाकारीति भावः ॥ ३८ ॥

ननु कथं तन्माहङ्मुमुक्षुशङ्कोपशमनं श्रीमद्भाष्यकारचरणारुणसरोरुहपरागैः कृत-मित्येऽकारीत्यपेक्षायां तत्संक्षिपति—य इत्यादिशार्दूलविक्रीडितेन—

यो दृग्दृश्यविवेकतोऽत्र फलितः कूटस्थ आत्मा स तु
स्याज्जीवः परमार्थतः स्वपनतस्तस्मिंस्तु यस्तैजसः
स प्रातीतिक एव जीव उदितो जागर्त्ययं चेद्भवे-
द्विश्वाख्यो व्यवहारतो निगदितो जीवः परस्त्रिधा ॥३९॥

य । अत्राद्वैतवादे । दृगिति । रूपं दृश्यं लोचनं दृक्तद्दृश्यं दृक् मानसम् । दृश्या धीवृत्तयः साक्षी दृगेव न तु दृश्यत इति सुप्रसिद्धश्रीमद्भगवत्पादकृतप्रकरण-विशेषत इत्यर्थः । फलितः पर्यवसन्नः । आत्मा कूटस्थः । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्, इत्यमरात्कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यत इत्यभियु-क्तोक्तेश्चायोघनवन्निर्विकार इति यावत् । स तु स एव । परमार्थतः पारमार्थिकः कूटस्थब्रह्मणोर्भेदो नाममात्रादृते नहीति वचनादद्वैतब्रह्माभेदयोग्यतया वास्तविक इत्यर्थः । स्यादिति संबन्धः । तस्यैव मुक्तिभागित्वादिति भावः ।

नन्वस्य पारमार्थिकजीवत्वेऽन्यः प्रातिभासिको व्यावहारिकश्च स वाच्य एवेत्या-काङ्क्षायामाह—स्वपनत इत्यादिना व्यवहारत इत्यन्तेन । स्वपनतः स्वप्नावस्थया । तु पुनस्तस्मिन्कूटस्थे यस्तैजसः स्वप्नप्रयोजकापराख्यतेजःकल्पितः स इत्यादि स्पष्टमेव । उपसंहरति—निगदित इतिप्रभृतिशेषेण । तत्तस्मादुक्तव्यवस्थालक्षणा-त्कारणात् । परः परमात्मैव । पूर्वोक्तस्वप्रकाशरत्ननीलारक्तासितकाचकरण्डकत्रयदृ-ष्टान्तेन । त्रिधा पारमार्थिकादिभेदेन त्रिप्रकारक एव जीवो निगदितः प्रतिपादितोऽ-स्तीति योजना । एवं चोक्तशङ्का त्विष्टापत्त्यवलम्बनेनैव प्रयुक्तेत्याकूतम् ॥ ३९ ॥

नन्वथाप्यनयोः श्रीमद्गौडपादभगवत्पादमतयोरीश्वरस्य किं स्वरूपमित्यतस्त-त्राह—श्रीगौडपादेत्यादीन्द्रवज्रया—

श्रीगौडपादेज्यपदाम्बुजानां श्रीभाष्यकाराङ्घ्रिसरोरुहाणाम् ।
ईशस्तु मायाप्रतिबिम्ब एव समीहितोऽर्थादिति बोध्यमार्यैः ॥४०॥

ईज्येत्यादि पूजार्थम् । शिष्टं तु स्पष्टमेव ॥ ४० ॥

निगमयति—इतीत्यादिप्रबोधितया—

इति दन्तिमिताः प्रदर्शिताः प्रतिबिम्बेश्वरवादिनां मया ।
हरमूर्तिवदेकरस्यतो बत पक्षाः सकलाः सतां मताः ॥ ४१ ॥

इति प्रतिबिम्बेश्वरवादिमतैक्योपपत्तिः ॥

———

दर्शीति । अष्टदिग्गजपरिगणिता इत्यर्थः । वेतेत्युक्तेकरस्यलाभहर्षे । हरेति । मूरुम्मासीरयादिदक्षिणामूर्तिस्तोत्रीयनवमश्लोकप्रसिद्धाष्टमूर्तिवदित्येतत् । अपरं तु स्पष्टमेव ॥ ४१ ॥

इति प्रतिबिम्बेश्वरवादिमतेऽक्षोपपत्तिः ।

एवं प्रतिबिम्बेश्वरवादिमतेऽक्षोपपत्तिमाक्षिप्य प्रकृतशिष्य एव स्वाचार्यं प्रति पृच्छति—ईशोऽपीत्यादिशार्दूलविक्रीडितेन—

ईशोऽपि प्रतिबिम्ब एव यदि चेद्भूयात्स्वतन्त्रः कथं
स्वोपाध्युज्ज्वलतयाऽपि न ह्यनघतस्ताहृक्म चिन्तामणौ ।
किं चोपाधिनियामकोऽपि क इह स्यादित्यतिव्याकुलं
चित्तं मत्यवदन्मुदा विवरणाचार्योऽस्तु बिम्बेशतां ॥ १ ॥

भो गुरुवरशिरोमणे । ईशोऽपि परमेश्वरोऽपि । अपिना जीवस्य प्रतिबिम्बत्वे-ऽस्वातन्त्र्येऽपि जीवत्वादेव न क्षतिः, परमेश्वरस्य त्वनुचितमेवेति सूच्यते । तदेव विशदयन्नाक्षिपति—प्रतिबिम्ब एवेत्यादिना । यदि प्रतिबिम्ब एव चेत्तर्हि स्वतन्त्रः कथं भूयादपि तु नैव स्वतन्त्रः स्यात् । सर्वत्र मुखप्रतिबिम्बादौ बिम्बपारतन्त्र्यस्यैव दर्शनादित्यध्याहृत्यैवान्वयः ।

नन्वीश्वरस्य प्रतिबिम्बत्वेऽपि तदुपाधेर्महामायायाः परमविचित्रशक्तिमत्त्वेन तत्प्र-तिबिम्बस्य तस्य भवतु स्वातन्त्र्यमित्याशङ्क्य विचित्रशक्तिमत्त्वमुपाधौ प्रतिबिम्ब-स्वातन्त्र्याधाने अप्रयोजकमेव । स्वसंप्रार्थनमात्रेण सद्यः सर्वेष्टदानदक्षे स्कान्दा-दिपुराणप्रसिद्धे चिन्तामण्याख्यरत्नविशेषे तथात्वेऽपि तत्प्रतिबिम्बितवस्तुनः स्वातन्त्र्यादर्शनान्नैवामिरयाह—स्वेत्यादिद्वितीयपादेन ।

असौ प्रतिबिम्बः । ताहृक् स्वतन्त्रः । चिन्तामणावपि प्रसिद्धरत्नविशेषेऽपि । अनघधृतः हिरवधारणे । नैव निर्णीतोऽस्ति यतस्तस्मात्प्रतिबिम्बस्योपाधिमहत्त्वेऽपि नैव स्वातन्त्र्यमिति संबन्धः । प्रतिबिम्बेश्वरवादे दूषणान्तरमप्याह—किंचेत्यादिना । यदि मायायुपाधौ प्रतिबिम्ब एवेश्वरस्तदुपाधिनियामकोऽपीह संसारे कः स्यात्तत्स्व-रूपाधिपरतन्त्रत्वादन्यस्य बिम्बीभूतचैतन्यस्य तु शुद्धत्वाङ्गीकारेण तदभावाच्च न कोऽपि भूयादिति योजना ।

ततः किमत्र समाधानमित्यत आह इतीत्यादिशेषेण । इति स्वदुक्तप्रकारीत्येव । अतिव्याकुलं परमविकलम् । चित्तं मुमुक्षुं ब्राह्मणं प्रति । मुदा उक्तो वेदलक्षणपार्थः ।

विवरणेति । प्रकाशात्मश्रीचरणाख्याः श्रीमद्विवरणकारा इत्यर्थः । बिम्बेति । बिम्बेश्वरवादमेव । मुदा हर्षेणैव । अवदन्नाहुरित्यर्थः । एतेनोक्तमेधातिथ्यपसंतोषो व्यज्यते ॥ १ ॥

कथमवदन्नित्यत्राऽऽह—अज्ञान इत्याद्युक्तवृत्तेनैव—

अज्ञाने प्रतिबिम्ब एव तु मतो जीवोऽस्य कार्ये हृदि
व्यक्तिस्तस्य विसृत्वरेऽपि सवितुस्तेजस्यसौ दर्पणे ।
दृष्टा तद्वदमुष्य रूपममलं मुक्तयन्वयीष्टं ततो
मिथ्यात्वेऽपि न काऽपि च क्षतिरिह स्यान्नापि चिद्गौरवम् ॥२॥

अस्याज्ञानस्य । तस्य जीवस्य । व्यक्तिरहमज्ञ इत्यभिव्यक्तिः । तत्र दृष्टान्तं स्पष्टयति—विसृत्वर इत्यादिना। दृष्टेत्यन्तेन । सवितुः सूर्यस्य तेजसि आलोके । विसृत्वरे प्रसरणशीले सत्यपि । असौ सवितुर्व्यक्तिः । दर्पणे निरुक्तसूर्यालोकानुग्राहकत्वेन तत्कार्यभूत आदर्श इत्यर्थः । दार्ष्टान्तिके योजयति—तद्वदित्यादिना । अमुष्य प्रतिबिम्बस्य । अमलं शुद्धम् । मुक्तीति । मिथ्यात्वेऽपि मलिनरूपस्येत्यार्थिकम् । लाभान्तरमप्याह—नापीत्यादिशेषण । चितेर्द्वैविध्यजं गुरुत्वम् ॥ २ ॥

तत्रापि शङ्कते—नन्वित्यादिहरिण्या—

ननु कथमिदं नीरूपायाश्चितेः प्रतिबिम्बनं
निरवयवतो निर्धर्मत्वात्क्वचित्तदनीक्षणात् ।
न निरवयवं नीरूपं वा क्वचित्प्रतिबिम्बितं
जगति कलितं वस्तु क्वापि श्रुतं च तथाविधम् ॥३॥

काऽत्रानुपपत्तिरिति चेत्तां द्योतयितुं तत्र हेतुं द्योतयति—निरवयवत इत्यादिद्वितीयपादेन । यद्यप्यत्र प्रथमपाद एव चितेर्नीरूपाया इति विशेषणेन चितिः प्रतिबिम्बनानर्हा । नीरूपत्वाद्वायुवदित्यनुमित्या हेतुर्द्योतित एव । तथाऽप्यसौ नीरूपत्वलक्षणो हेतुर्जपाकुसुमरूपे स्फटिके प्रतिबिम्बमाने रक्तः स्फटिक इति भ्रान्तिमयोजकेऽभिचार्येव । तत्र भ्रान्तिप्रतिबिम्बयोरुभयोरपि संभवात् ।

तथा चोक्तमद्वैतसिद्धौ—लौहित्ये स्फटिकस्थत्वारोपे तस्य प्रतिबिम्बत्वं स्फटिके लौहित्यारोपे तु तस्य मिथ्यात्वमिति विवेक इति । अत इदं हेत्वन्तरं तत्र सावयवजपाकुसुमादितादात्म्येन प्रतिबिम्बनार्हत्वेऽपि चितेर्निरवयवतः सावयववस्त्वन्तरतादात्म्याभावेन निर्धर्मत्वात्सर्वधर्मविधुरत्वादिदं पूर्वपद्योक्तमविद्यायां कथं प्रति-

बिम्बनं घटत इत्यन्वयः । एतदेवोपपादयति--नेत्याद्युत्तरार्धेन । पाठक्रमादर्थक्रमो बलीयानिति न्यायोऽत्र ज्ञेयः ॥ ३ ॥

अथ प्रकृतश्रीगुरुः समाधत्ते—नीरूपमित्यादिप्रहर्षिण्या—

नीरूपं निरवयवं हि कुङ्कुमादे-
लौहित्यं स्फटिकमणौ स्फुटं प्रतीतम् ।
शब्दस्य प्रतिरव ईदृशस्य दृष्ट-
स्तत्कस्मादकलनमत्र तस्य तेऽस्ति ॥ ४ ॥

एवमपि निरुक्तरीत्याऽत्र कुङ्कुमादेर्लौहित्ये सावयवतादात्म्याद्यस्वरसान्निदर्शनान्तरं विशदयति—शब्दस्येत्यादितृतीयपादेन । ईदृशस्य कुङ्कुमादिलौहित्यवन्नीरूपस्य निरवयवस्यापि निरवयवाकाशाभिधद्रव्यतादात्म्यापन्नस्येत्यर्थः । शब्दस्य प्रतिरवः प्रतिशब्दो दृष्टो गुहाद्यवच्छेदेनानुभूत इति यावत् । उपसंहरन्नुक्तरूपवस्तुप्रतिबिम्बादर्शनं यच्छिष्येण प्रतिज्ञातं तस्य प्रतिनिदर्शनप्रदर्शनान्निरुक्तेऽर्थे हेतुं पृच्छति—तदित्यादिचरमचरणेन ॥ ४ ॥

तत्रापि सिद्धान्ती प्रतिवादिनः शङ्कान्तरं स्वयमेव व्युत्थाप्य निराकरोति—न चे-त्यादीन्द्रवज्रया—

न चेन्द्रियग्राह्यमिदं द्वयं तु
ब्रह्मास्ति तेनैव तथेति वाच्यम् ।
अनीन्द्रियग्राह्यमपीह साक्षि-
भास्यं नभोऽप्सु प्रतिबिम्बितं यत् ॥ ५ ॥

द्वयं जपाकुसुमादिरूपं शब्दश्चेति त्वदुदाहृतनिदर्शनयुगमित्यर्थः । तुशब्दो वैलक्षण्ये । तदेवाऽऽह—ब्रह्मास्मीत्यादिना । ते सिद्धान्तिमतस्तव । ब्रह्म । तथा इन्द्रियग्राह्यं नैवास्तीति हेतोर्नोक्तरीत्या प्रतिबिम्बतीति वाच्यमिति संबन्धः । तत्र हेतुं प्रतिपादयति—अनिन्द्रियेत्याद्युत्तरार्धेन । यद्यस्माद्धेतोरिह लोके । अनिन्द्रियग्राह्यं, अथ किं तर्हि मानसप्रत्यक्षं नेत्याह—साक्षीति ।

न प्रमाणं मनोऽस्माकमित्यभियुक्तोक्तेर्मनसः प्रमाकरणत्वाभावाद्भ्रमप्रमोभयसाधारणसाक्षिमात्रप्रत्यक्षमिति यावत् । एतादृशम् । नभ आकाशम् । अप्सु जले प्रतिबिम्बति । अतोऽनिन्द्रियग्राह्यं यत्तन्नैव प्रतिबिम्बतीति नैव नियमो भूयादिति भावः । एतेनेदं परानुमानं परास्तम् । ब्रह्म न बिम्बम् । अनिन्द्रियग्राह्यत्वादाकाशवत् । तस्य जलादौ प्रतिबिम्बदर्शनेन हेतोरप्रयोजकत्वात् ॥ ५ ॥

अथोक्तहेतुमन्वाकाशप्रतिबिम्बरूपमुपपादयति—नो चेदित्यादिस्रग्धरया—

नो चेत्तज्जानुदघ्नेऽपरिचितसलिले या प्रतीतिर्गभीरं
नीरं भातीति सा स्यात्कथमुचिततरा न भ्रमः सेति वाच्यम् ।
बाधाभावान्न चेदं भवति समुदितं बाधकं तस्य तत्त्वे
स्यादेतद्बाध्यमस्य प्रभवति च तथात्वेऽथ तच्चेति दोषात् ॥६॥

यथाकाशस्याप्सु नैव प्रतिबिम्ब इति वदसि चेत्तर्हि जानुदघ्ने जानुपरिमितेऽपि । अपरिचितेति । गभीरं नीरं भातीति या प्रतीतिः सा कथमुचिततराऽतियोग्या कथं स्यादित्यन्वयः । तत्र भ्रमत्वमाशङ्क्य निराकरोति नेत्यादिशेषेण । तत्र हेतुमाह—बाधेति । बाधाभावासिद्धिं व्युद्राव्य शमयति—न चेदमित्यादिना । इदं प्रागुक्तं यद्यन्निन्द्रियग्राह्यं तदबिम्बमिति व्याप्तिरूपं बाधकं समुदितं भवतीति च न वाच्यम् । तत्र हेतुं द्योतयति—तस्येत्यादिना ।

तस्य निरुक्तबाधकस्य । तत्त्वे बाधकत्वे सति, एतदुक्तप्रतीत्यादि बाध्यं स्यात् । अस्योक्तप्रतीत्यादेः । तथात्वे बाध्यत्वे प्रभवति सति, अथानन्तरं तद्बाधकं स्यादिति निरुक्तरीत्या । दोषादन्योन्याश्रयरूपदोषाद्धेतोरित्यर्थः ॥ ६ ॥

एवमपरिचिते जानुमात्रे जले गभीरं नीरमिति या प्रतीतिर्जायते तद्गाम्भीर्यमाकाशीयमेव तत्र तत्प्रतिबिम्बितत्वं गमयति । यथा दिवाऽभुञ्जानस्य देवदत्तस्य पीनत्वं रात्रिभोजनमित्यर्थापत्त्या ह्यनिन्द्रियग्राह्यस्याप्याकाशस्य प्रतिबिम्बनं ब्रह्मप्रतिबिम्बदृष्टान्तार्थमुपपादितं तत्रोक्तप्रतीतेर्भ्रान्तित्वशङ्काऽप्यन्योन्याश्रयरूपदोषसूचनेन निराकृता, तथाऽपि मन्दजिज्ञास्वनुजिघृक्षया तमेवान्योन्याश्रयदोषं विशदयति—अनिन्द्रियेत्यादीन्द्रवज्रया—

अनिन्द्रियग्राह्यमिहास्ति यद्यत्तन्नैव लोके प्रतिबिम्बतीति ।
व्याप्तेर्भवेद्बाधकता यदीदं भूयाद्भ्रमस्तेन च तत्त्वमत्र ॥ ७ ॥

इदं निरुक्तप्रतीतिजातं यदि भ्रमो भूयात्तर्हि इति पूर्वार्धोक्ताया व्याप्तेर्बाधकता भवेत् । तेन निरुक्तव्याप्तेर्बाधकत्वेनात्रोक्तप्रतीतौ भ्रमत्वं भविष्यतीति स्पष्ट एव परस्पराश्रय इत्यन्वयः ॥ ७ ॥

तत्राप्याशङ्कान्तरं व्युद्राव्य तत्खण्डनप्रतिज्ञानं तद्धेत्वादि चाऽऽह—चेदित्यनुकूलवृत्तयुग्मेन—

चेत्साक्षिभास्यं गगनं तदीयस्तथैव वाच्यः प्रतिबिम्ब एषः ।
कथं तथात्वेऽक्षितदीक्षणे ते समीप्सितं भाति न चेति वाच्यम् ॥८॥

एष त्वदुपपादितत्वेन मद्बुद्धिस्थः । ननु भवतु साक्षिभास्याकाशस्य प्रतिबिम्बोऽपि साक्षिभास्य एव । काऽत्रानुपपत्तिरित्यत आह--कथमित्यादिना । तथात्वे आकाशप्रतिबिम्बस्यापि साक्षिभास्यत्वे सति । तदीक्षणे निरुक्तप्रतिबिम्बावलोकने । ते सिद्धान्तिनः । अक्षि नेत्रम् । कथं समीप्सितं भाति । इति च एवमपि न वाच्यमिति संबन्धः ॥ ८ ॥

तत्र हेतुं प्रतिपादयति—खमित्यादिना—

खं साक्षिभास्यं तदपि प्रकाश-
तमोन्तराऽस्य स्फुरणं न यस्मात् ।
स्वभावतस्तद्ग्रहणाय चक्षु-
स्तमोऽपि सालोकमिहेषितं नः ॥ ९ ॥

अस्याऽऽकाशस्य । तत्रापि हेतुः स्वभावत इति । तद्ग्रहणायाऽऽलोकग्रहणाय । नन्वेवमपि तमोवच्छिन्नाकाशग्रहणार्थं कथं चक्षुरपेक्षेत्यत्राऽऽह—तमोऽपीत्यादिशेषेण । इहाऽऽकाशविशेषणत्वे । सालोकमालोकसंवलितम् ॥ ९ ॥

ननु यद्येवमालोकान्धकारान्यतरान्वितस्यैवाऽऽकाशस्य साक्षिभास्यत्वं तत्राऽऽलोकस्य रूपवत्त्वेन तद्ग्रहणार्थं भवतु तत्र चक्षुरपेक्षा, तथा तमोवच्छिन्नाकाशस्य साक्षिभास्यत्वपक्षे कथं चक्षुरपेक्षेत्याकाङ्क्षाप्रतिक्षेपणं प्रकृतस्थले नक्षत्रादिक्षुद्रालोकावच्छिन्नतमोविवक्षयैव कृतं तथाऽप्यन्धकारस्यापि सिद्धान्ते साक्षिभास्यत्वात्तत्र कथं चक्षुरपेक्षेति चेन्न । एतेनैव तत्रापि दत्तोत्तरत्वादिति द्योतयति—अत इत्यादिभुजंगप्रयातपूर्वार्धेन—

अतः साक्षिभास्ये कथं तेऽन्धकारे
स्फुटा चक्षुरिच्छेति शङ्का न कार्या ।
ततः साभ्रनक्षत्रसालोकखस्य
जलादौ प्रतिच्छायबुद्ध्यैतदिष्टम् ॥ १० ॥

ननु भवत्वेवं प्रासङ्गिकमथापि किं प्रकृते जलादिप्रतिबिम्बिताकाशग्रहणे चक्षुरपेक्षाकाङ्क्षायामायातमित्यतस्तदाह—तत इत्यादितदुत्तरार्धेन । अत्र नक्षत्रपदनान्तरीयकतयैवान्धकारसिद्धिः । प्रायेण दिवसे नक्षत्राप्रतिभासात् । एवमालोकपदेनात्र सौरालोक एव । तदितरालोकस्य नक्षत्रपदेनैव सिद्धेः । जलेति । आदिना दर्पणादि । प्रतीति । प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छायेत्यमरात्प्रतिच्छायानां प्रतिबिम्बानां समूहः । छायाबाहुल्य इति सूत्रात्तथा तद्विषयिणी या बुद्धिस्तस्यै तदर्थमित्यर्थः । तच्चक्षु ॥ १० ॥

अन्यदप्यस्यैतत्प्रयोजनमित्याह—आधारेत्यादिस्रग्धरापादेन—

आधारादेर्ग्रहार्थं तदिह समुचितं साक्षिभास्येऽपि तस्मिं-
स्तेन व्याख्यातमेव स्फुटमसितमिदं खं विभातीति मोहे।
क्लृप्तं तस्यान्वयादिद्युतिमितिकृतये तस्य संवाञ्छितत्वा-
दादर्शादाविवेति प्रतिफलनमिह ब्रह्मणः स्यादुपाधौ ॥११॥

जलाद्याधारीभूतभूम्यादेः प्रमार्थमिति यावत्। इह जलादिप्रतिफलिताकाशा-दिज्ञान इत्यर्थः। तस्मिन्प्रकृतप्रतिफलिताकाशादौ। अथोक्तव्यवस्थां भ्रमान्तरेऽप्य-तिदिशति- तेनेत्यादिनेवेत्यन्तेन। निरुक्तचक्षुरपेक्षोपपादनेन। असितमित्यादि। नीलं नभ इत्यादिभ्रमे। तस्य चक्षुषः। क्लृप्तमनुभूतम्। अन्वयेति। आदिना व्यति-रेकः। स्फुटं स्पष्टम्। व्याख्यातमेव विवृतमेवेति संबन्धः। तत्र हेतु—द्युतीत्यादिना। आदर्शादाविव दर्पणप्रतिफलिते नीलं नभ इति भ्रम इव। द्युतीति। तत्प्रयोजकपु-ष्पवदन्यतरप्रकाशप्रमार्थम्। तस्य चक्षुषः। संवाञ्छितत्वात्। अवश्यापेक्षितत्वा-दित्यर्थः। निगमयति—इतीत्यादिशेषेण। इति प्रोक्तदृष्टान्तेन ॥ ११ ॥

पुनरप्यत्र शङ्कते—भवतीत्यादिहरिण्या—

भवति यदवच्छेदाल्लोके ननु प्रतिबिम्बनं
न खलु तदवच्छेदादन्तर्गतं किमपीक्ष्यते।
इति तु मुकुरे दृष्टं तोये वियत्प्रतिबिम्बने
तलगतमणिः प्रत्यक्षोऽयं कथं विमलेऽचले ॥ १२ ॥

ननु लोके लोकव्यवहारे। यदवच्छेदात् पञ्चमीयं तृतीयार्थे। प्रतिबिम्बनं मुखा-दिप्रतिफलनं भवति। तदिति प्राग्वत्। अन्तः किमपि वस्तु न ईक्ष्यते खलु नैव दृश्यते। इति तु मुकुर आदर्शे दृष्टम्। तोये जले। वियदिति। आकाशप्रतिफ-लनस्थलेऽपीत्यर्थः। तलेति। तदाधारीभूतभूतलनिपतितरत्नविशेषोऽयं कथं प्रत्यक्ष इति वक्तव्यमित्यध्याहृत्यान्वयः। ननु चञ्चलाविलादिजले नासौ प्रत्यक्ष इत्यतस्त-द्विशिनष्टि—विमल इत्यादिशेषेण ॥ १२ ॥

समाधत्ते—यथेत्यादिभुजङ्गप्रयातेन—

यथा साक्षिभास्येऽपि खे चाक्षुषोऽर्क-
स्तथा तस्य बिम्बेऽपि तादृङ्मणिः स्यात्।

त्वयोदाहृते दर्पणादौ तु चक्षु-
ग्रहार्हस्य सोऽस्तीति वैषम्यमेव ॥ १३ ॥

तस्य खशब्दोक्ताकाशस्य । बिम्बेऽपि प्रतिबिम्बेऽपि । तावकमतस्यक्षः । शङ्कमते दृष्टान्तवैषम्यं स्पष्टयति त्वयेत्याद्युत्तरार्धेन । चक्षुरित्यादि । मुखादेरित्यर्थः । स प्रतिबिम्बः । एवं च साक्षिभास्याकाशादिप्रतिबिम्बस्थले जलगतमण्यादिप्रत्यक्षं भवत्येव। दर्पणे तु मुखादि न साक्षिभास्यं, किंतु चाक्षुषमेवेति वैषम्यमेवेति भावः । शिष्टं तु स्पष्टमेव ॥ १३ ॥

नन्वेवमपि पुनः प्रतिबिम्बस्थले बिम्बवामस्कन्धस्थितयज्ञोपवीतादि दक्षिणस्कन्धादौ किमिति प्रतिभाति[illegible]स्य समाधत्ते--आदर्श इत्यादिशार्दूलविक्रीडितेन-

आदर्शे प्रतिबिम्बिते खलु मुखे यो दक्षिणस्यां श्रुतो
रुद्राक्षो निहितः स भाति नियतं वामाभिधायां ततः ।
संस्कारात्कटवद्दृशोस्तु किरणाः स्वच्छात्पराभूतितो
व्यावृत्ताः कलयन्ति बिम्बमिति तद्व्याख्यं न चान्या गतिः ॥१४॥

वामेति । श्रुतिपदाभिधेयेऽत्र इत्यर्थः । ततो हेतोः । दृशोर्दक्षिणवामाक्ष्णोः किरणास्तु स्वच्छान्निर्मलादादर्शादिद्रव्यात्पराभूतितः पराभवाद्धेतोर्व्यावृत्ताः पराङ्मुखाः सन्तः कटवत्संस्कारात् । वामदक्षिणाक्ष्णोः क्रमाद्वामदक्षिणादिभागग्रहणसंस्कारतो हेतोस्तन्निष्ठकविपरीतं बिम्बमेव कलयन्ति जानन्ति, इति इत्येव वाच्यं वक्तव्यम् । अत्र अन्या अपरा गतिर्व्यवस्था न च नैवास्तीति संबन्धः । अपरं तु सरलमेव । प्रपञ्चितं चेदं मया सिद्धान्तरत्नशुद्धान्तेऽप्यग्रे वक्ष्याम इति दिक् ॥ १४ ॥

उक्तमेवार्थमतिदुरवगाहत्वाद्विशदयति—वाममित्यादिना तेनैव वृत्तेन—

वामं दक्षिणमेव दक्षिणमथो वामं विभागं नृणां
पश्यत्याक्षिपुरोगतस्य नियमात्तत्संस्कृतेस्तादृशम् ।
गृह्णाति प्रतिबिम्बभानसमये व्यत्ययस्तमेवाखिलं
काणस्यापि तथैव दृग्द्वयमभूदेकत्र यद्गोलके ॥१५॥

नृणां वाममक्षि पुरोगतस्य देवदत्तादेर्दक्षिणमेव भागं नियमात्पश्यति । अथो एवं दक्षिणं नृणामक्षि पुरोगतस्य नियमाद्वामं विभागं पश्यतीत्यन्वयः । ततः किं प्रकृत इत्यत आह—तत्संस्कृतेरित्यादाखिलमित्यन्तेन । तदिति । नियतभानसंस्कारात् ।

प्रतीति । तादृशं पूर्वसदृशं व्यत्यस्तमेव विपरीतमेव वामादिभागमाखिलं संपूर्णं चेत-नाचेतनसाधारणं वस्तु गृह्णातीति संबन्धः । अत्राखिलपदेन निर्मलनिम्नजलतीर-स्थितदेवदत्तदेवालयादेस्तत्र प्रतिबिम्बभाने शिरःशिखराद्यधोभागभानलक्षणं वैपरी-त्यमपि व्याख्यातम् ।

तीरस्थितत्वेन स्वशिरादिप्रतिबिम्बं पश्यतोऽधोमुखस्य चक्षुःकिरणानां निम्नप्र-तीतिकपरावृत्त्या प्रथमं शिरःप्रभृतिग्रहसंस्कारस्यैव सत्त्वे प्रकृतेऽधःशिरोभानोपपत्तेः। नन्वेवमपि काणस्य कथमुक्तभानोपपत्तिरित्यत्राऽऽह—काणस्यापीत्यादिचरमचरणेन । तत्र हेतुं व्युत्पादयति—दृगित्यादि । यद्यस्माद्धेतोः काणस्यापि दृग्द्वयमध्वियुगमेकत्र गोलकेऽस्त्यतस्तथैव पूर्वोक्तसममेव प्रतिबिम्बभानं आयत इति योजना ॥ १५ ॥

तत्रापि पुनः शङ्कते -नन्वित्यादिप्रहर्षिण्या—

नन्वेतन्नभसि न युज्यते यतस्त-
न्नो चक्षुः कलयति साक्षिमात्रभास्यम् ।
चक्षुर्वद्विषयसमीपमेव गत्वा
श्रोत्रं संकलयति तत्कथं तथा न ॥ १६ ॥

एवमाकाशप्रतिबिम्बेऽव्याप्तिमुक्त्वा तद्गुणशब्दप्रतिबिम्बे चक्षुर्वद्ग्राहकश्रोत्रे गत्वा ग्राहकत्वसत्त्वेऽपि कथं न वैपरीत्यमहानुभव इत्याक्षिपति- चक्षुर्वदित्याद्युत्तरा-र्धेन ॥ १६ ॥

तत्राऽऽद्यशङ्कां शमयति--बाढमित्यादिस्वागतया--

बाढमक्षिविषयप्रतिबिम्बे
प्राक्तनोऽस्ति नियमो न परस्मिन् ।
वैपरीत्यविरहात्किल तत्र
तादृशस्तु नभसः प्रतिबिम्बः ॥ १७ ॥

परस्मिन्नन्यस्मिन्प्रतिबिम्बे विषय इत्यर्थः । तत्र हेतुः--वैपरीत्येत्यादिना । तादृ-शोऽनादिविषयप्रतियोगिकः ॥ १७ ॥

एवं द्वितीयामपि तां प्रत्याचष्टे- शब्दस्येत्यादिस्रग्धरया--

शब्दस्याऽऽकाशमध्ये प्रतिफलनमलं दृश्यते तत्समाप्त्याऽ-
पीदं सर्वत्र लोके प्रतिनिनद इति स्यात्तथैव त्वमूर्ते ।

अज्ञानाच्चेत्कथितोऽपि प्रतिफलनमिदं श्रीप्रकाशात्ममुख्यैः
पूर्वैराचार्यवर्यैर्निगदितमुचितं किं न भूयाच्छ्रुतीष्टम् ॥ १८ ॥

प्रतिफलनशब्देन प्रतिबिम्बने हेतुं द्योतयति--तदित्यादिना। प्रतिनिनादः प्रतिध्वनिः। एवं च शब्दस्य प्रतिबिम्बसत्त्वेऽपि चाक्षुषप्रतिबिम्बे यथा निरुक्तमामदर्पणादिवैपरीत्यं प्रतीयते न तथाऽत्र तत्प्रतीयत इति पूर्वोक्तशङ्कानवकाश एवेति प्राक्तनपद्यादैपरीत्यविरहादिति हेतुमनुकृष्योक्ताक्षेपः प्रतिक्षेप्य इत्याशयः। उपसंहरति--इतीत्यादिशेषेण। इतिशब्दोऽयं देहलीदीपन्यायेन काकाक्षिगोलकन्यायेन वाऽत्राप्यन्वेति। निरुक्तशब्दप्रतिबिम्बप्रतिपादनाद्धेतोरित्यर्थः। तथैव तु शब्दतुल्यमेव तु। अमूर्तेऽपि आकाशवत्। अज्ञानादावित्याद्युत्तरार्धं तु निगदव्याख्यातमेवान्वेति। श्रीति। विवरणकारादिभिः ॥ १८ ॥

तत्रापि पुनराक्षिपति--नन्वित्यादीन्द्रवज्रादित्रयेण—

ननु ध्वनेर्यः प्रतिबिम्ब उक्तो
नीरूप आकाश इह त्वयाऽसौ।
पञ्चीकृतिप्रक्रिययाऽयमिष्टो
गुणस्तु तस्यैव ततोऽस्ति नतत् ॥ १९ ॥

तस्यैवाऽऽकाशस्यैव। एतन्निरुक्तमाकाशे शब्दप्रतिबिम्बनम् ॥ १९ ॥

तत्रापि सिद्धान्तिशङ्कामुत्पादयति--न चेत्यादिपूर्वार्धेन--

न चास्तु तस्यैव गुणस्तथाऽपि कुतो न भूयात्प्रतिबिम्ब एषः।
बिम्बात्स भिन्नोऽस्त्युत नेति तत्र द्वितीय एष क्व गुणोऽम्बरस्य ॥२०॥

तान्दूषयितुं प्रतिवादी विकल्पयति--बिम्बादित्यादिना। द्वितीयं प्रत्याह--तत्रेत्यादिशेषेण ॥ २० ॥

प्रथममपि प्रत्याचष्टे—आद्य इत्यादिना--

आद्येऽपि कुत्रास्य नभोगुणत्वं मिथ्यात्मनः स्यादिति दोषयोगः।
तस्मान्न नीरूपवियत्यविद्या चित्तादिषु स्यात्प्रतिबिम्ब उक्तः ॥२१॥

मिथ्येत्यादि। फलितमाह--तस्मादित्याद्युत्तरार्धेन ॥ २१ ॥

तत्र किं नीरूपप्रतियोगिकः प्रतिबिम्बो न संभवति किंवा तदनुयोगिको यद्वोभयात्मक इति विकल्प्य नाऽऽद्य इत्याह--नीरूपस्यापीत्यादिस्रग्धरापद्येन—

नीरूपस्यापि संख्याप्रभृतिगुणगणस्येष्ट एवैष तेऽपि
द्रव्यत्वं चेदभीष्टं तव सरणिरियं नैव सिद्धान्त इष्टा।

नीरूपेऽप्ययेष दृष्टः प्रतिरव इति विद्वत्समाख्यान्वितोऽपि
व्योम्न्यस्यैतद्गुणत्वं किमिति न हि भवदन्त्यपक्षे विचारे॥२२॥

द्वाविमौ पुनर्वस्वोः प्रानीये प्रतिबिम्बावामलकपरिमाणौ द्वाविमौ जीवकाविमति- बिम्बौ स्वाश्रपरिमाणावित्यनुभूत्या स्फटिकादौ लौहित्यमिति प्रतीत्या च संख्याप- रिमाणादिगुणगणस्य नीरूपस्यापि जलादौ तेऽपि प्रतिवादिनस्तवाप्येष प्रतिबिम्ब एव एवेत्यन्वयः। तत्र तदभिप्रायमाशङ्क्य शमयति- द्रव्यत्वं चेदित्यादिद्वितीयपादेन। द्रव्यत्वमित्यत्र शाकपार्थिवादिवन्मध्यमपदलोपाद्द्रव्यसमवेतत्वमित्यर्थः। कुतो नेदे- ति चेदनभिरूपणादेवेति भावः।

तत्र व्योकाभियुक्तैः--निरुक्तावभिमानं ये दधते तार्किकादयः। रूपिमाविदिमित्ते तु सम्भवनादो सुविदिता इति। नापि द्वितीयतृतीयावित्याह्--नीरूपेऽपीत्यादिना व्योमीत्यन्तेन। ननु तव दोष उक्त इत्यत्राऽऽह--अस्येत्यादिशेषेण। अस्य शब्दस्य। एतद्गुणत्वं प्रकृताकाशगुणत्वम्। अन्त्यपक्षे बिम्बादभिन्नः प्रतिबिम्ब- इति पक्षे। विचारे कृते सति किमिति नहि भवेदिति संबन्धः। अपि तु भवेदेव। सिद्धान्ते गुणगुणिनोरभेदादिति भावः॥ २२॥

तमेव विचारं प्रपञ्चयति--उपादानेत्यादिभुजंगप्रयातेन--

उपादाननिष्ठा गुणाः कार्यवर्गे
नवीनान्गुणानारभन्ते परेषाम्।
श्रुतेर्नैतदिष्टं भवेत्किंतु सिद्धा
उपादानगा ये गुणास्ते तु कार्ये॥ २३॥

परेषां तार्किकाणाम्। ते त्विति। त एव तु गुणाः कार्यवर्गे सिद्धाः सन्तीति योजना। एवं च गुणगुण्यभेदः सूपपाद एवेत्याशयः। अपरं तु सरलमेव॥२३॥

फलितमाह--तेनेत्यादिवसन्ततिलकापूर्वार्धेन--

तेनास्ति भूधप्रतिकार्यकुलेऽपि दृष्टः
शब्दो गुणो नभस एव ततः क्व दोषः।
एतेन युक्तमिह भूतविवेकवाक्यं
स्पष्टं प्रतिध्वनिरितिप्रभृति त्ववेक्ष्यम्॥ २४॥

अयमभिप्रायः। सिद्धान्तबिन्दावविद्यां प्रकृत्य। सा च स्वयं जडाऽप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्म-

कानि आकाशवायुतेजोजलपृथिव्याख्यानि पञ्च महाभूतानि जनयतीत्युक्तेरपञ्चीकृतदशायां शब्दगुणरूपमेवाऽऽकाशमिति पृथ्व्याद्यखिलकार्यगतः शब्दो गुणो नभस एव पञ्चीकरणोत्तरमपीति । एतेन गुणगुण्यभेदोऽपि व्याख्यातः ।

उक्तेऽर्थे पूर्वाचार्यसंमतिं प्रतिपादयति--एतेनेत्याद्युत्तरार्धेन । एतेन निरुक्तोपपादनेन । इह प्रतिध्वन्याख्यशब्दप्रतिबिम्बस्य प्रतिज्ञात आकाशगुणत्वांश इत्यर्थः । प्रतिध्वनिरिति । प्रतिध्वनिर्वियच्छब्द इति । भूतेति । तुरवधारणे । युक्तं योग्यमेव स्पष्टमवेक्ष्यमित्यन्वयः ॥ २४ ॥

तत्रापि सिद्धान्त्येव प्रतिवादिशङ्कां व्युद्भाव्य व्युदस्यति--न चेत्यादिप्रबोधितपा-

न च तर्ह्यत एव वाक्यतो नभसोऽसौ गुण इत्यपीर्यताम् ।
जनदृष्टित एव तैस्तथा कथनात्कारणताऽपि तत्र यत् ॥२५॥

अत एव निरुक्तभूतविवेकगादेव । वाक्यतः प्रतिध्वनिर्वियच्छब्द इति वचनादेव । तर्हि । असौ शब्दः प्रतिध्वनिरूपः । नभस आकाशस्य । गुण इत्यपि गुण एवेत्यपि । न च ईर्यतां नैवोच्यतामिति संबन्धः । कुत इत्यत्राऽऽह--जनेत्यादिना । तैर्भूतविवेककृद्भिः । जनेति । लोकदृशैव । तथा प्रतिध्वनिर्वियच्छब्द इति कथनाद्धेतोरित्यर्थः । तत्रापि हेतुमाह--कारणताऽपीत्यादिशेषेण । तत्र वियति । यद्यस्माद्धेतोः । कारणताऽपि शब्दोपादानताऽप्यस्तीति प्रसिद्धमेव तस्मादिति योजना ॥ २५ ॥

उपसंहरति -नीरूप इत्यादिशार्दूलविक्रीडितेन—

नीरूपेऽपि च खे ध्वनिप्रभृति नस्तच्छब्दवृन्दस्य ते
संसिद्धं प्रतिबिम्बनं बत यथा रूपादिहीनात्मनः ।
मायादौ न तथा कुतोऽत्र भविता ब्रह्मात्मनस्तत्ततः
को दोषः प्रतिबिम्बवाद इह वः श्रुत्यादिभिः स्वीकृते ॥२६॥

प्रभृतिग्रहणं वर्णाद्यर्थम् । तन्निरुक्तोपपत्तेर्हेतोः । ते प्रतिवादिनः । तत् प्रतिबिम्बनम् । निगमनव्याजेन पृच्छति--तत इत्यादिशेषेण । नोऽद्वैतिनाम् । श्रुत्यादीत्यादिपदेन सूत्रतद्भाष्यादेः संग्रहः । शिष्टं तु स्पष्टमेव ॥ २६ ॥

तत्रापि शङ्कते नन्वित्यादिद्रुतविलम्बितेन—

ननु विभोर्घटते न विहायसो
व्यवधिशून्यतया प्रतिबिम्बनम् ।

उपगमेऽपि कथं चिदमुष्य नो
घटगतस्य च तद्गजलेऽस्ति सः ॥ २७ ॥

अमुष्य महताकाशप्रतिबिम्बनस्य। कथंचित् श्रद्धाजाड्यैकनिर्बन्धेन। घटेति। घटनिविष्टाकाशस्य। तदिति। घटगतजल एव। स प्रतिबिम्बः। नो प्रत्यक्षेण नैवोपलभ्यते व्यवधिशून्यतयैवेत्याद्यनुकृष्यान्वयः॥ २७ ॥

एवं युक्तिविरोधमुक्त्वा श्रुतिविरोधमप्याह—नेत्यादिशालिन्या—

नान्तर्यामिब्राह्मणं संगतं त-
ज्जीवे तस्यावस्थितेरप्ययोगात्।
इत्युक्तिश्चेन्न द्विरूपत्वतोऽस्य
कुम्भाकाशस्यापि तत्र स्फुटत्वात् ॥ २८ ॥

तद्विमोरपि प्रतिबिम्बाङ्गीकारपक्षे। अपिः प्रागुक्तयुक्तिसमुच्चये। अथोक्ताश-ङ्कामनूद्य समाधत्ते—इतीत्यादितदुत्तरार्धेन। तत्र हेतुः। द्विरूपेति। अस्य कुम्भ-गतजले आकाशप्रतिबिम्बस्य। द्विरूपत्वतः। महाकाशकुम्भाकाशप्रतियोगिकत्वाभ्या-मुभयात्मकत्वादित्यर्थः। तत्रापि हेतुः। कुम्भेत्यादिशेषेण॥ २८ ॥

नन्वेवं चेत् कुतोऽसौ द्विविधो नोपलभ्यते। यद्यपि एकविधो महाकाशस्य कुम्भगतजलादौ प्रतिबिम्ब उपलभ्यते तथाऽपि स एवाद्यापि संदिग्धः प्रतीतिस्तु तदीया भ्रमिकत्वेनापि उपपद्यते इत्यत्राऽऽह—अनुमित इत्यादिद्रुतविलम्बितेन—

अनुमितोऽनुपलब्धिपराहतो न भवति प्रतिबिम्ब इह क्वचित्।
स तु रवेर्मुकुरेऽनवलोकितोऽप्युपगतो गृहवृत्तितमःक्षयात् ॥२९॥

इह लोके। प्रतिबिम्बः। अनुमितोऽपि। क्वचित्कस्मिंश्चिद्देशे कालेऽपि। अनु-पलब्धीति। उपलभ्यभावमात्रेण खण्डित इत्यर्थः। न भवति नैवास्तीति संबन्धः। तत्रान्यथानुपपत्तिमनुग्राहयति—स तु इत्याद्युत्तरार्धेन। स तु प्रतिबिम्बस्तु रवेः सूर्यस्य। मुकुरे गवाक्षादिसंमुखसद्मगादर्शे। अनवलोकितोऽप्यदृष्टोऽपि। गृहेति। गवाक्षा-गततदालोकेन गृहगतान्धकारध्वंसात्। उपगतः स्वीकृतो भवति यतस्तदन्यथानु-पपत्त्या नैवानुपलब्धिरभावैकग्राहिकानुमितभावबाधिकाऽस्तीति योजना॥ २९ ॥

यद्विधिश्लोके श्रुत्यादिभिरित्यत्राऽऽदिपदेन सूत्रादेः सूचनात्तद्दर्शयति—बाद इत्या-दिप्रहर्षिण्या—

वादेऽस्मिन्पुनरत एव चोपमेति
सूत्रादेः स्फुटमनुकूलताऽपि भूयात् ।
साऽन्यत्र त्वगतिगतिस्ततोऽपि युक्तो
विज्ञेयः प्रतिफलितात्मवाद एषः ॥ ३० ॥

अत एव चोपमा सूर्यकादिवदित्यादिसूत्रतद्भाष्यादेरित्यर्थः । प्रतिफलितेति । प्रतिबिम्बितात्मवादः ॥ ३० ॥

अत्रैवाऽऽभासवादिसूत्रान्तरमप्यनुकूलयति—आभास एव चेत्यार्यया—

आभास एव चेति च सूत्रान्तरमपि सहायमत्रैव ।
नैवावच्छेदमते तयोस्तु तत्र स्वरसभङ्गात् ॥ ३१ ॥

तयोरुक्तसूत्रतद्भाष्ययोः ॥ ३१ ॥

अत्र विरोधिसूत्राद्युपन्यस्य तत्तात्पर्यमाह—यस्त्वित्यादिनार्यया—

यत्त्वम्बुवदग्रहणादित्यादौ सूत्रभाष्ययोर्दृष्टम् ।
प्रतिबिम्बवादखण्डनमिदमपि परिणामवादकर्तृकमेयम् ॥३२॥

परिणामेति । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रसिद्धपरिणामवादस्था-येस्य कारणानतिरिक्तसत्त्वाभिप्रायवदवास्तविकप्रतिबिम्बत्वेनेत्यर्थः ॥ ३२ ॥

तत्रार्थापत्तिं प्रमाणयति--नो चेदित्यादिप्रहर्षिण्या—

नो चेत्स्यात्कथमिह वृद्धिह्रासभाक्त्व-
मित्यादावुपरिगसूत्रभाष्ययोर्यत् ।
दृष्टान्तीकृतमुपलब्धमस्ति तोये
सूर्यस्य प्रतिफलनं तदञ्जसा ते ॥ ३३ ॥

वृद्धिह्रासेत्यत्र प्रह्राभ्यां चेति च्छन्दःसूत्रेण पूर्ववर्णस्य संयुक्तावत्वेऽपि गुरुत्वविकल्पान्न च्छन्दोभङ्गः । तत्प्रतिफलनं सूर्यस्य तोये ते प्रतिवादिन इह प्रकृते सम्बन्धे नो चेदेवं तत्तात्पर्याकल्पने । अञ्जसा साक्षात्कथं स्यादिति संबन्धः ॥३३॥

एवमवच्छिन्नवादमपि प्रकृतेऽनुकूलयति—अंश इत्यार्याभ्याम्—

अंशो नानाव्यपदेशादिति सूत्रे तदीयभाष्यादौ
घटसंवृतमित्यादिश्रुतावविच्छिन्नवादो यः ॥ ३४ ॥
प्रतिबिम्बवादिनामपि स तु संमत एव यद्विना तमसौ ।
नो संभवति न दृष्टः प्रतिबिम्बो यद्विना परिच्छेदम् ॥३५॥

एवमत्र श्रुतिमेव प्रमाणयति—यथा हीत्यादिनेन्द्रवज्रया—

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिभिः क्रियते भिन्नरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ ३६ ॥

॥ ३६ ॥

एवं रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति श्रुतिमेक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् । इति श्रुतिमप्यर्थतः पठति—रूपं रूपमित्याद्युक्तवृत्तेनैव—

रूपं रूपं प्रतिरूपो बभूव तदात्मैव व्यवहारस्य दृष्ट्या ।
आत्माऽद्वयो जलचन्द्रोपमोऽयं भूते भूते बहुधैकोऽपि दृष्टिः ॥३७॥

॥ ३७ ॥

निगमयति—इत्यादीत्यादिप्रहर्षिण्या—

इत्यादिश्रुतितदनुस्मृतीरितत्वा-
त्सर्वज्ञात्मगुरुवरैरपीप्सितत्वात् ।
युक्तोऽयं किल परपोषितद्विजानां
सौरभ्ये प्रतिकृतिवाद एव नित्यम् ॥ ३८ ॥

परेति । परमहंसानां, पक्षे पिकानाम् । प्रतीति । प्रतिबिम्बवादः, पक्षे प्रतिकृतवादः ॥ ३८ ॥

इह कूटस्थदीपमप्यवच्छेदवादखण्डकं संवादयति—एवमिति शार्दूलविक्रीडितेन—

एवं कूटस्थदीपे गगनरविसमं प्रोच्य कूटस्थमग्रे
जीवं स्वादर्शबिम्बप्रभमथ किमतः प्राच्य एवास्तु जीवः ।
इत्याशङ्क्योक्तमात्मा यदि भवति परिच्छेदमात्रेण जीवः
कुड्यादेर्जीवता स्याद्विमलमपि मनः कांस्यवत्तच्छमेव॥३९॥

स्वेति । निर्मलादर्शप्रतिबिम्बसमम् । कांस्यवत् तत्पात्रवत् ॥ ३९ ॥

उपसंहरति--तस्मादितीन्द्रवज्रया--

तस्मादलं संभवतो बहूनां सबाधकानामपि सत्त्वतश्च ।
अबाधकादप्यविरोधतश्च संसिद्ध एष प्रतिबिम्बवादः ॥ ४० ॥

॥ ४० ॥

इति बिम्बेश्वरवादतदुपयुक्तनीरूपप्रतिबिम्बसंभवाद्युपपत्तिः ॥

---

अथैवमपि पुनः प्रकृत एव शिष्यः श्रीगुरुं प्रति नीरूपस्य ब्रह्मणः प्रतिबिम्बासंभवं मन्वानः प्रतिध्वन्युदाहरणं तु प्रकारान्तरेणैव व्यवस्थापयति—व्यज्यन्ते यदपीत्यादिशार्दूलविक्रीडितेन—

व्यज्यन्ते यदपि ध्वनौ तु निखिला वर्णास्तथाऽन्यत्र ते
नोच्यन्ते प्रतिबिम्बिता इति तथाऽऽलोकस्य तोयादिषु ।
स्पष्टं संप्रतिबिम्बितत्ववशतस्तत्ताभ्रमः खेऽपि त-
द्व्याप्तत्वादिति रूपहीनवपुषो न ब्रह्मणो मे मतः ॥ १ ॥

अपि मधुरो ध्वनौ—एतन्नामके सूक्ष्मेऽव्यक्ते शब्दे निषादादिपञ्चमान्तसप्तस्वरात्मके परैककरणके इत्यर्थः । यदपि यद्यपि । तुशब्दः पूर्वोक्तस्याऽऽकाशे प्रतिध्वन्यात्मना नीरूपस्यापि शब्दस्य नीरूपेऽप्यधिकरणे प्रतिबिम्बत्वस्य निराकरणार्थः । निखिला त्रिषष्टिश्चतुःषष्टिर्वा वर्णा शंभुमते मता इति पाणिनिशिक्षोक्तेरकारादयः संपूर्णा इत्यर्थः । वर्णा व्यज्यन्ते तदवच्छेदेनैवाभिव्यक्ता भवन्ति ।

तथाऽपि, एवं सत्यपि । अत्र ध्वनौ । ते वर्णा प्रतिबिम्बिता इति नोच्यन्ते नैव कथ्यन्त इत्यन्वयः । एवं चैतद्दृष्टान्तेन प्रतिध्वनिरपि मुखाद्यवच्छिन्ननभःसंजातशब्दादन्य एव गुहाद्यवच्छिन्नभःसंजातः शब्दो न तु तत्प्रतिबिम्बः प्रतिध्वनिरिति । समाख्या तु प्रतिमेव ध्वनिरिति शाकपार्थिवाद्याश्रयणेनाप्युपपद्यतेत्याशयः ।

एवं प्रतिबिम्बवादे दृष्टान्तीकृतस्य प्रतिध्वनेः प्रकारान्तरेणोपपत्तिमुक्त्वा नभःप्रतिबिम्बस्यापि तामह तथेत्यादिनेतीत्यन्तेन । तथेति प्रागुक्तयुक्तिसमुच्चयेऽव्ययम् । एवं तोयादिषु । आदिना दर्पणादि । आलोकस्य सूर्यादिप्रकाशस्य । स्पष्टम् । समिति । खेऽपि नभस्यपि । तत्तेति । प्रतिबिम्बितत्वभ्रान्तिः । तदिति । आलोकव्याप्तत्वाद्भवतीति संबन्धः । ततः किं तत्राऽऽह- इतीत्यादिशेषेण । प्रतिबिम्ब इति शेषः । १ ॥

ततः प्रकृतश्रीगुरुर्भोः शिष्य भवादृगमेवाऽऽशङ्कमानं कंचिन्मुमुक्षुं प्रति भगवन्तो वाचस्पतिमिश्राः समाधातुं भामत्याख्यायाः श्रीमच्छारीरकभाष्यटीकायाः स्वरसेनावच्छेदवादमेवाऽऽहुरिति समाधत्ते—इतीत्यादिप्रहर्षिण्या—

इति मत्तमतिं भयाद्दधाना
व्यादिशन्भिश्रवरास्तु भामतीतः ।
घटसंवृतमित्यनेकभाग-
स्तमवच्छेदसमारुदमेव वादम् ॥ २ ॥

अथ मत्तपदेन निरुक्तव्यवस्थायां विचारास्थिरत्वं व्यज्यते । व्यदिशन् कथयामासुरित्यर्थः ॥ २ ॥

नन्वेवं, घटसंवृतमाकाशं नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशस्तद्वज्जीवो नभोपम इति श्रुतेरंशो नानाव्यपदेशादित्यादिसूत्राच्च योऽयमुपन्यस्तोऽवच्छिन्नवादः कथं तत्प्रकार इत्यतस्तं प्रपञ्चयति–नानेत्यादिमत्तमयूरेण—

नानाऽविद्यास्तत्तदविद्याश्रयताभि-
र्येऽवच्छिन्नास्ते तु चिदंशाः किल जीवाः ।
ईशस्तासां यो विषयः सोऽत्र चिदात्मा
तत्तज्जीवे संसृतिभेदस्तदुपाधेः ॥ ३ ॥

अस्मिन्भामतीकृतां मत इत्यार्थिकम् । अविद्यास्तु नाना असंख्याः सन्तीति संबन्धः । ततः किं तत्राह—तत्तादित्यादिना । एवं चाविद्याश्रयतावच्छिन्नचिदंशत्वं जीवत्वमिति वाचस्पतिमते जीवलक्षणं पर्यवसितमित्याकूतम् । नन्वस्त्वेवं जीवलक्षणं परं त्वीश्वरः कोऽसावित्यत आऽऽह–ईश इत्यादितृतीयपादेन । तासामुक्तरूपानन्ताविद्यानामित्यर्थः ।

नन्वेवं चेत्तर्हि तत्तज्जीवं प्रति ईश्वरकर्तृकस्तत्तत्कर्मफलदानार्थमेक एव प्रपञ्च आकाशादिश्चेत्तर्हि ततः सुखादिवैषम्यं तत्तज्जीवानां कथं स्यादिति चेन्न । तत्तज्जीवोपाधिभूततत्तदविद्याविरचितैकरज्ज्वधिष्ठानकानेकतत्तद्द्रष्टृज्ञानपरिणामीभूतसर्पवल्लीभूछिद्रबलीवर्दमूत्रादिभ्रमसमानेकप्रकारकदृष्टिसृष्टिचमत्कारादित्याशयेन समाधत्ते—तत्तज्जीव इत्यादिचरमचरणेन । तदुपाधेस्तत्तदज्ञानाद्धेतोः ॥ ३ ॥

ननु–इन्द्रो मायाभिः पुरुरूप ईयत इति श्रुतेरविद्यानानात्वमुक्तरूपं सर्वानुभवसध्रीचीनमपि, अजामेकां लोहितशुक्लकृष्णामित्याद्यया तदेकत्वाभिधायिन्या श्रुत्या लाघवयुक्त्यनुगृहीतयोक्तश्रुतेस्तूलाज्ञानपरत्वेनापि सांगत्यसंभव इति चेद्बाढमित्याह–अजामेकामित्यादिशिखरिण्या—

अजामेकामेवं श्रुतिवचस एका यदि भवे-
दविद्या तर्ह्यन्तःकरणानि परास्तत्परिणताः ।
अवच्छिन्दन्त्वेते चितिमपि तथाऽपि क्षतिलवो
न कोऽप्यस्मिन्वादे भवति बत वाचस्पतिमते ॥ ४ ॥

श्रुतीति हेतुपञ्चमी । तदिति । तस्या एकाविद्यायाः संबन्धिपरिणतिं मायां इत्यर्थः । एतादृशाः । अन्तःकरणेति । एत इति साक्षिप्रत्यक्षा इति यावत् । वतेति खस्यभावजन्यहर्षे । शिष्टं तु स्पष्टमेव ॥ ४ ॥

तत्रापि शङ्कते- अनन्तेत्याद्युक्तवृत्तेनैव—

अनन्ताविद्याभिः किल निखिलजीवाश्रिततया
प्रपञ्चे प्रत्येकं सति सपदि भिन्ने विरचिते ।
विधात्रण्डे मेशो ननु तदनवच्छिन्नचिदतो
भवेदन्तर्यामी कथमथ स भूयादिति तु न ॥ ५ ॥

पूर्वार्धस्त्वयमुक्तसिद्धान्तानुवाद्येव । तर्हि कोऽत्र शङ्कांशस्तमाह—विधात्रण्ड इत्युत्तरार्धेन । नन्वेवं पूर्वोक्तः सिद्धान्तश्चेत्तर्हि । विधात्रण्डे ब्रह्माण्डे । तदिति । अज्ञानावच्छिन्नचिद्रूपः । ईश ईश्वरः । न भवेत्—अज्ञानानन्त्यादित्यन्वयः । ततः किं तत्राऽऽह—अत इत्यादिशेषेण । अतः स ईशोऽन्तर्यामी कथं भूयादिति तु नेति ॥ ५ ॥

यच्चेदं पूर्वपक्षोत्तरार्धे भामतीकृन्मते अनन्ताज्ञानावच्छिन्नचिदंशा एव जीवास्तर्हि ब्रह्माण्डमण्डलेऽस्मिन्नज्ञानावच्छिन्नचिद्रूपः परमेश्वरस्तावत्तदानन्त्यान्नैव सिध्येदतो यः पृथिव्यां तिष्ठन्नित्याद्यन्तर्यामिब्राह्मणोपपादितोऽन्तर्यामिस्वरूप ईश्वर एव जीवेष्वपि व्यापकत्वेनोक्तो बाध्येतेति तु न वाच्यमिति प्रतिज्ञातं तत्र हेतुं व्युत्पादयति—यस्मादित्यादीन्द्रवज्रया—

यस्मादविद्याविषयीकृतस्य सत्यप्यवच्छेदगणेऽपि सत्त्वम् ।
ईशस्य चिन्मात्रतनोरिहापि सर्वत्र वर्वर्ति सदेति तत्त्वम् ॥६॥

यस्माद्धेतोः । अविद्येति । आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेति न्यायात् । चिन्मात्रेति । एतादृशस्य ईशस्येश्वरस्य । अवच्छेदेति । अनन्ताज्ञानकृतानन्तचिदंशपरिच्छेदसंदोह सत्यपीत्यर्थः । इहानन्तजीवेष्वपि । सर्वत्र विभुत्वात्सर्वस्वरूपावच्छेदेनेति यावत् । सत्त्वं विद्यमानत्वम् । सदा निरन्तरम् । न तु क्षणमात्रम् । वर्वर्ति, अनन्तेषु जीवेषु ज्ञानात्कैवल्यं प्राप्तेषु सत्स्वपि पुनः पुनरनन्तेष्वस्मदादिषु तेषु तादृगज्ञानावच्छिन्नेषु वर्तत एवेति तत्त्वं हेतुभूतं रहस्यमस्त्येव । अतो निरुक्तशङ्का नैव कार्येति पूर्वपक्षोत्तरार्धेन सह संबन्धः ॥ ६ ॥

एवमप्यत्रानुपपत्तिमाशङ्कते प्रकृतश्लिष्य एव नानाविधेत्यादिप्रकृतमस्किपाम-
तुनामि—मालेविशुद्धिपद्यम—

त्यादि । जीवेऽधिकरणे वास्तवैक्यं योऽविद्याप्रतिबिम्बितो बुद्धिप्रतिबिम्बितो वा चिदात्मा जीवः कर्मकर्ता भुवि स एव दिवि सुखभोक्तेति व्यावहारिकसत्यत्वापन्नश्रौतैकरूपत्वमित्यर्थः । अपरं तु सरलमेव ॥ ८ ॥

एवं चेत्तर्हि किमित्यवच्छिन्नवादोऽयमित्यत्राऽऽह—एवमित्यार्यया—

एवं तौल्येऽप्यनयोर्बिम्बावच्छेदपक्षयोर्हित्वा ।
गौरवत आद्यमन्त्यः स्वी क्रियतेंऽशादिसूत्रगदितत्वात् ॥ ९ ॥

बिम्बेति । प्रतिबिम्बावच्छिन्नवादयोरित्यर्थः । आद्यं प्रतिबिम्बवादम् । गौरवतः । किंचिदवच्छेदमन्तरा दर्पणादौ मुखादिप्रतिबिम्बासंभवात्तेनैव निर्वाहे प्रतिबिम्बस्वीकारलक्षणगौरवादिति यावत् । अंशादीति । अंशो नानाव्यपदेशादिति सूत्रोक्तत्वादित्यर्थः ॥ ९ ॥

नन्वेमप्यवच्छिन्नवादेऽत्राविद्यानानात्वं तदैक्येऽप्यन्तःकरणनानात्वमिति पक्षद्वयं कथं सिध्यतीत्यत आह—तत्रापीतीन्द्रवज्रया—

तत्रापि चाऽऽद्यः कथितो विशेषः
सिद्धान्तबिन्दौ हि सरस्वतीभिः ।
सिद्धान्तलेशेऽन्त्य उदीरितोऽस्ति
स दीक्षितैरित्यवधार्यमार्यैः ॥ १० ॥

इत्यवच्छेदवादोपपत्तिः ॥ ६ ॥

---

आद्योऽविद्यानानात्वाख्यः । अन्त्यस्तदैक्येऽप्यनेकान्तःकरणस्वीकरणलक्षणः । शिष्टं तु स्पष्टमेव ॥ १० ॥

इत्यवच्छिन्नवादोपपत्तिः ॥ ६ ॥

---

अथ शिष्यः प्रकृतमेव श्रीगुरुं प्रति पूर्वोक्तोपादानमतैक्योपपत्तिप्रकरणे जीवैक्यवादो य उक्तस्तेन सह प्रकृतनानात्ववादाविरोधं व्युत्क्राम्य तत्र संदिहानः पृच्छति—प्रागित्यादिवसन्ततिलकया—

प्रागेक एष कथितो ननु जीव एव
स्वप्नोपमः प्रकृतिरस्य जगद्भ्रमस्य ।
नानैव तेऽत्र कथिता इति तत्र जीवः
सिद्धान्त इष्टतम एक उतामिता वः ॥ १ ॥

ननु भोः श्रीगुरो मागुपादानमतैक्योपपत्तिप्रकरणाख्ये पूर्वग्रन्थ इत्यर्थः। एक एव न तु नाना। एतादृशः। जीव एव न तु ईश्वरः। अस्य साक्षात्परम्परया वा साक्षिप्रत्यक्षस्येति यावत्। ईदृशस्य। जगदिति। जायत इति जगदिति व्युत्पत्त्याऽऽ-काशादिसादिदृश्याभासस्येत्यर्थः। प्रकृतिरभिन्ननिमित्तोपादानम्। स्वप्नोपमः स्वप्नं प्रति यथाऽविद्योपहिताचिद्रूपो जीव एवाभिन्ननिमित्तोपादानं तद्वदिति यावत्।

तदुक्तं सिद्धान्तबिन्दौ—तत्रान्तःकरणगतवासनानिमित्त इन्द्रियवृत्त्यभावकाली-नोऽर्थोपलम्भः स्वप्नः। तत्र मन एव गजतुरगाद्याकारेण विवर्तते। अविद्यावृत्त्या च ज्ञायत इति केचित्। अविद्यैव शुक्तिरजतादिवत्स्वप्नाद्यर्थाकारेण परिणमते ज्ञायते चाविद्यावृत्त्येत्यन्ये। कः पक्षः श्रेयानुत्तरः। अविद्याया एव सर्वत्रार्थाध्या-सज्ञानाध्यासोपादानत्वेन कल्पितत्वान्मनोगतवासनानिमित्तत्वेन क्वचिन्मनःपरिणाम-त्वव्यपदेशादिति। कथित उपपादितोऽस्तीति संबन्धः।

किं ततस्तत्राऽऽह–नानैवेत्यादिना। अत्रानुपदोक्तावच्छिन्नवादिवाचस्पतिमते। ते जीवाः। नानैव कथिताः सन्ति। तत्र तयोः पक्षयोर्मध्ये। सिद्धान्ते जीवः। यो युष्माकं सांप्रदायिकानामाचार्याणाम्। एक इष्टतमोऽस्त्युतामिता अनन्ताः सन्तीति वक्तव्यमित्यन्वयः॥ १॥

अथासौ समाधत्ते—अजत्वेत्यादिभुजंगप्रयातेन—

अजत्वश्रुतेरेक एवास्ति जीव-
स्ततः कः स इत्यादिमंदिग्धबुद्धिम्।
त्वमेव स्वमोहात्सगुर्वीशविश्व-
भ्रमं पश्यसीत्याहुरेके मुनीन्द्राः॥ २॥

अजत्वस्य प्रतिपादिका या अजो ह्येको जुषमाणोऽनुशेते इत्यादिश्रुतिः। तस्या हेतो-रित्यर्थः। तत्र तदेकत्वोक्तेरिति यावत्। तदुक्तं संक्षेपशारीरकद्वितीयाध्याये—मुक्तामुक्तौ विद्वदज्ञौ त्वदन्यावाकाशादि क्ष्मावसानं च विश्वम्। स्वाविद्योत्थस्वान्तनिष्पन्दनं तद्विज्ञातव्यं मा ग्रहीरन्यथैतदिति। विस्तरस्त्वग्रे स्यात्॥ २॥

ननु कथमयमेक एव जीवः स्वाज्ञानात्सगुर्वीशविश्वभ्रमं पश्येदित्यत्राऽऽह— स्वाज्ञानादित्यार्यया—

स्वाज्ञानात्कौन्तेयो राधेयोऽभूद्यथा तथैवात्र।
ब्रह्मैवाऽऽसीज्जीवो न प्रतिबिम्बो न वाऽप्यवच्छिन्नः॥३॥

ननु कौन्तेयपदवाच्यः प्रकृते कर्ण एव। स तु न स्वाज्ञाने प्रतिबिम्बितो नापि

तेनावच्छिन्नः । तथा च विषम एवायं तद्दृष्टान्त इत्यत आह—नेत्यादिचरमचरणेन ॥ ३ ॥

नन्वेवं चेत्तर्हि भवत्वाभास एव इत्याशङ्क्य वादत्रयस्याप्यनादरे हेतुं द्योतयति—आभास इत्यादितयैव—

आभासे प्रतिबिम्बेऽप्यनेकसामग्र्यवच्छिन्ने ।

सत्यां तिम्मितेति गौरवदुष्टास्तेऽपि त्रयो वादाः ॥ ४ ॥

अवच्छिन्नेऽपि । अनेकेति । तद्गुणाभिन्नत्वसंबन्धाविलक्षणेत्यर्थः । समिति । अस्तीत्यार्थिकम् । अपरं तु सरलमेव ॥ ४ ॥

ननु कथमन्येक एव जीवः सकलजडाजडजगत्कल्पकः स्यामित्याशङ्कां शमयति—स्वप्न इत्यादिशार्दूलविक्रीडितेन—

स्वप्ने यद्वदवेक्षितृवपुः स्यादेकमेवान्वितं

जीवेनान्यवपूंषि जीवरहितान्यन्यच्च दृष्टं यथा ।

एतस्मिन्नपि दृष्टिसृष्टिसमये तद्वत्सजीवं वपु-

र्भूयात्तावकमन्यदेहनिचयो निर्जीव एवेष्यताम् ॥ ५ ॥

यथा स्वप्ने सति प्रमातरि बाह्येऽवस्थाविशेष इत्यर्थः । अवेक्षितृति । गजतुरगादिदृष्टृराजादिशरीरमिति यावत् । कल्पितमपि एकमेव जीवेनान्वितं युक्तं स्यात् । एवकारस्योक्तमन्ययोगव्यवच्छेदार्थत्वं विशेषणाऽऽह—अन्येत्यादिना । जीवरहितान्येव कल्पितानि सन्ति तथा । चोऽप्यर्थे । अन्यदपि कल्पितमेवास्ति दृष्टम् । तद्वत्तथा । एतस्मिन्नपि प्रकृतेऽपि । दृष्टीति । दृष्टिः—चित्तवृत्तिः, एव सृष्टिः । आकाशादिप्रपञ्चकरणमिति तस्य समयः । समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरात्सिद्धान्तः । तस्मिन्नित्यर्थः । तावकं त्वत्संबन्धि । सजीवं वपुर्भूयात् ।

ननु—अन्येऽपि देहाः सजीवा एव प्रतीयन्त इति चेन्न । उक्तस्वप्नदृष्टान्तेन तेषां निर्जीवत्वादित्याशयं विशदयति—अन्यदेहेत्यादिशेषेण । त्वद्देहभिन्नसजीवत्वेन प्रतीयमानदेहसंघः । निर्जीवः । त्वदहंतानास्पदत्वात् । स्वाप्निकत्वद्देहभिन्नदेहसंदोहवदित्यनुमानमेवोन्नेयम् । स्वाप्नकतद्दृष्टृदेहेतरदेहानामपि तत्काले प्रातिभासिकत्वदहंतास्पदत्वेन दृष्टान्तासिद्धिवारणाय हेतौ त्वदिति । अत्र कल्पितमपीत्यवेक्षितृवपुषो विशेषणादेव भिन्नः सत्यत्वं सूच्यते साक्षित्वादिति ॥ ५ ॥

ननु—ऐन्द्रजालिकनिर्मितनगरादिगगननगरादिसर्वाणि शरीराणि निर्जीवान्येव केवल-मैन्द्रजालिकशरीरमेकमेव सजीवमिति स एवात्र एकशरीरैकजीववादेऽस्तु दृष्टान्त इति चेन्न। वैषम्यात्। तत्र ह्यैन्द्रजालिककल्पितनगरादिगगननगरादिभिन्नानि व्यावहारिकसत्तापन्नानि ऐन्द्रजालिकशरीरवत् । अस्मदादिशरीराण्यपि सजीवान्येव वर्तन्ते। प्रकृते तु नैव तथेति। तस्मादत्र स्वप्नदृष्टान्त एव सर्वेष्टपुष्टिकर इति स्पष्टयति—एतेनेति प्रसिद्धेनेन्द्रवज्रावृत्तेन—

एतेन दृष्टान्तसुधाम्भसाऽत्र
संभावितानेककुतर्कपङ्कः।
संक्षालनीयो भवताऽऽत्मनिष्ठा-
काष्ठाप्रतिष्ठासनसंनिविष्ट्यै ॥ ६ ॥

अयि शिष्येत्यार्थिकम्। भवता त्वया। एतेन मामीपतरवार्ते चैतद्धो रूपम्, इति वचनात्पूर्वपद्योक्तेनेत्यर्थः। दृष्टान्तेति। दृष्टान्ताभिधामृतरूपोदकेनेति यावत्। अत्र निरुक्तवादे विषये। संभावितेति। योऽयमनन्तानन्तदुरनुमानादिकर्दम इत्येतत्। आत्मेति। आत्मन्यद्वैतप्रतीचि या नितरां चेतसस्तदाकारतया स्थितिस्तस्या या काष्ठा अवधिभूमिः पुनःसंदेहाभावावस्था सैव प्रतिष्ठासनं रत्नसिंहासनं तत्र या संनिविष्टिः सुखेनैवावस्थितिस्तस्या इत्यर्थः।

इयं हि तादर्थ्य एव चतुर्थी। तेनाद्वैतात्मैकात्म्यमात्रानुसंधानसातत्यपरिपक्त्यर्थ-मिति फलति। संक्षालनीयः सम्यक्पुनः कस्मिंश्चिदपि काले दृश्यमिथ्यात्वविषयक-संशयानुदयपूर्वकमेव न तु क्षणमात्रं क्षालनीयः प्रशमनीय एवास्तीत्यन्वयः।

यद्यहमेव सेश्वराखिलद्वैतकल्पकः स्यां चेद्गुरुशास्त्रयोरपि कल्पितत्वे तथा तदुप-दिष्टबोधस्यापि तत्कैमुत्ये तत कथमविद्याध्वंसलक्षणा मुक्तिः स्यादित्याद्यनन्तसं-भावितकुतर्कास्तु यथा स्वप्ने व्याघ्रभीत्या पलायमानः प्ररुदन्देवदत्तस्तत्रैवाकस्मादृष्टे नरे देवदत्त त्वं स्वप्नमिमं पश्यसि व्युत्तिष्ठ प्रबुद्धो भवेति केनचित्परमाप्तेनोपदिष्टः सद्य एवोत्तिष्ठन्न किंचिदपि व्याघ्रादिकं पश्यति निरुक्ताप्तादिकं च तद्वत्कल्पितादपि गुर्वादेः स्वसत्यस्वरूपप्राप्तौ को बाधो भवेदिति भावः ॥ ६ ॥

अयि आचार्या अहमनेकश्रुत्यादिप्रमाणसिद्धानाद्यनन्तेश्वरस्य कथं वा कल्पकः स्यामिति शङ्काकुलं प्रकृतमुमुक्षुं प्रति मधुसूदनाचार्योक्तसिद्धान्तेन समाधत्ते—नन्वि-त्यादिहरिण्या—

ननु कथमहं स्यामीशस्य प्रकल्पक ईदृशो
विशति विशयो यस्यान्तस्तं जगुर्मधुसूदनाः ।
अकलिततमस्तत्कार्या चित्सितैव महेश्वर-
स्तमउपहिता जीवस्तेन व्यकल्प्यखिलं जगत् ॥ ७ ॥

तदुक्तं सिद्धान्तबिन्दौ—अज्ञानानुपहितं शुद्धं चैतन्यमीश्वरः । अज्ञानोपहितं च जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः । इममेव च दृष्टिसृष्टिवादमाचक्षत इति । अत्र टीका न्यायरत्नावली—अज्ञानानुपहितमिति । अज्ञानोपहिताद्भिन्नमित्यर्थः । ननु—ईशस्याज्ञानानुपहितत्वे प्रपञ्चमध्येऽवस्थानं न स्यात् । तथा च यः पृथिव्यां तिष्ठन्नित्यादिश्रुतिविरोधः स्यादिति बिम्बप्रतिबिम्बरूपेशजीववादिभिर्विवरणकारैरवच्छेदवादे दूषणमुक्तं तत्राऽऽह—शुद्धमिति ।

तथा चोपहिते जीवचैतन्येऽधिष्ठानतया केवलचैतन्यस्य तादात्म्यमवश्यं वाच्यमिति प्रपञ्चमध्ये तदवस्थाने न कोऽपि दोष इति भाव इति । विशयः संशयः । जगुर्वक्ष्यमाणलक्षणमेव सिद्धान्तं तमधिकारिणं प्रत्यूचिरे । अपरं स्वतिसरलमेव । जीवस्येशकल्पकत्वे प्रमाणाभाव इति भावः । ननु भवत्वेवं ब्रह्मानन्दसंमतं मधुसूदनाचार्याशयजातं भवतस्तु कथं तदभिप्रेतमित्यत आह—अकलितेत्याद्युत्तरार्धेन । कार्येत्युपलक्षणं व्याप्यस्याप्यविद्याचित्संबन्धादेरवाशिष्टस्यानादिषट्कस्य । स्पष्टमेवान्यत् ॥ ७ ॥

ननु भामतीकृतां मतेऽप्यस्ति दृष्टिसृष्टिरेव । तथा च कोऽत्र विशेष इति चेत्तमभिधत्ते—वाचस्पतेस्त्वित्यादिवसन्ततिलकया—

वाचस्पतेस्तु समये यदपीह दृष्टि-
सृष्टिः सुसंभवति जीवविकल्पितत्वात् ।
तत्रापि नैक्यमुदितं किल तेन जीवे
तेनायमेव बत मुख्यतमोऽस्ति वादः ॥ ८ ॥

विशेषावद्योती तुशब्दोऽयम् । समये समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरात्सिद्धान्त इत्यर्थः । यदपि प्रतिजीवं तन्मते प्रपञ्चभेदादिह जगति जीवविकल्पितत्वाद्दृष्टिसृष्टिः सुसंभवतीति संबन्धः । किं तदाह—तत्रापीत्याद्युत्तरार्धेन । तेन भामतीकृता । जीवे विषये । ऐक्यं नोदितं नैवोक्तम् । तेन हेतुना । बतेति हर्षे । तदुक्तं सिद्धान्तबिन्दौ प्रकृतवादवाक्यशेषेण—मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः । इममेव च दृष्टिसृष्टिवादमाचक्षत इति ॥ ८ ॥

ननु भवत्स्वयमुक्तरीत्यैकजीववाद एव मुख्यो वेदान्तसिद्धान्तस्तथाऽपि शुको मुक्तो वामदेवो मुक्त इत्यादिश्रुतेर्नानाजीववादं विना का गतिरित्यत्राऽऽह—शुकादेरित्यादिभुजंगप्रयातेन—

शुकादेर्विमुक्तिस्त्विहास्त्यर्थवादः
प्रतीत्यात्मकं सर्वमेवास्ति दृश्यम् ।
गुरुत्वेन संकल्पितादेव बोधः
फणित्वेन संकाल्पितान्मृत्युवत्स्यात् ॥ ९ ॥

अर्थवादः । गुणवाद एव । विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति वचनात्प्रकृते हि यजमानः प्रस्तर इत्यत्र प्रत्यक्षेण सहेव, अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेत इति श्रुत्या सह नानाजीववादिशुकादिमुक्तिप्रतिपादकश्रुतिर्विरुद्धेति परमपूज्येयं मुक्तिदत्त्वादद्वैतविद्येति गुणवादादन्येवेत्यवश्याङ्गीकार्यत्वात् ।

नन्वेवं यदि तर्हि यत्राग्निर्हिमस्य भेषजमित्यत्रेव प्रत्यक्षादिनाऽवधारितत्वमप्यनुवादत्वमप्रयोजकं नास्ति तत्र वज्रहस्तः पुरंदर इत्यादौ भूतार्थवादत्वमेव । तथा च घट्टकुटीप्रभातन्यायेन व्यावहारिकसत्तयाऽनेकजीवोज्जीविकयेत्यत्राऽऽह--प्रतीत्यात्मकमित्यादिद्वितीयपादेन । निरुक्तार्थवादत्वाङ्गीकरणमिदमुपलक्षणमस्मिन्मते निखिलद्वैतनिष्ठप्रातिभासिकत्वाङ्गीकरणस्यापि । तेन क्वोक्तापत्तिरिति तत्त्वम् ।

एवं तर्हि ब्रह्मविदो गुरुत्वाभावात्तमन्तरा कथं तत्त्वप्रमेत्याशङ्क्य समाधत्ते—गुरुत्वेनेत्याद्युत्तरार्धेन । तदुक्तं श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः—परिकल्पितोऽपि सकलज्ञतया गुरुरेव तत्त्वमवबोधयति । परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभोनलिनमिति ॥ ९ ॥

ननु कोऽयमेतावानाग्रहोऽस्मिन्वाद एव भवत इति चेन्न । निसर्गतः सर्वपूर्वाचार्याणामप्यस्यैवेष्टतरत्वात् । तथैव तद्ग्रन्थेष्वनुभूतत्वाच्चेत्याह—आ श्रीमदित्यादि स्रग्धरया—

आ श्रीमद्गौडपादाद्गुरुवरनृसुरादा च साधस्ककाल-
स्थाद्याचार्येभ्य एतत्प्रकटितमखिलैर्ब्रह्मविद्यानवद्यैः ।
जीवैक्यं दृष्टिसृष्टिर्विगतभवभयं शुद्धचैतन्यमीशः
सोऽपि स्यात्कल्पितो वेत्यत इह विमतिः कस्य वा स्यादवश्या ॥ १० ॥

साद्यस्केति । वर्तमानेत्यर्थः । ब्रह्मेति । अद्वैतात्मरूपैः । एतादृशैः प्राचीनाचार्यैरिति शेषः । अवश्या दुर्निरस्येति यावत् । अपरं तु सरलमेव ॥ १० ॥

एवमप्यत्र शिष्यः पुनः शङ्कते—नन्वत्रेत्यादित्रिभिरिन्द्रवज्रावसन्ततिलकाभिः—

नन्वत्र मानं किमुदीरितं य-
दाचार्यवर्यार्यवचोऽमृतं तत् ।
प्रतीतिमात्रं रशनोरगाभं
कथं तथा स्याद्भवतात्तथाऽपि ॥ ११ ॥

न चोक्तमेवात्र मानं सर्वपूर्वाचार्यवच एव पूर्वपद्येनेति वाच्यम् । तस्याप्युक्तरीत्या प्रातीतिकत्वेन रज्जूरगादिवत्प्रमाणत्वाभावादित्याह—आचार्येत्यादिना । उदीरितम् । पूर्वपद्ये कथितम् । आचार्येति । आचार्येषु, अद्वैतब्रह्मविद्यासंप्रदायप्रवर्तकेषु वर्याः श्रेष्ठास्तेषां श्रीमद्गौडपादादीनां यानि आर्याणि सैद्धान्तिकानि वचांसि तेषां मध्ये यदमृतं सारीभूतं वस्त्वित्यर्थः ।

तत्तु । प्रतीतीति । तत्रापि प्रतिबिम्बत्वादिसोपाधिकभ्रान्तिव्यावृत्तये । रशनेति । अत एव । तथा प्रमाणत्वेन गणनीयम् । कथं स्यात् । न कथमपि भूयादित्यन्वयः । एवमपि तुष्यतु दुर्जन इति न्यायेन प्रातिभासिकस्यापि, उक्ताचार्यवचोमृतस्यापि भवतु प्रामाण्यमथापि न विस्तरो भूयादित्याह—भवतादित्यादिना । आस्तामिदमेवम् । तथाऽपि ॥ ११ ॥

स्वप्ने यथा व्याघ्रभिया पलाय-
स्त्वं पश्यसि स्वप्नमिमं स्वमोहात् ।
भव प्रबुद्धः शयने रमण्या
सुखेन सुप्तोऽस्यपि विष्णुमित्र ॥ १२ ॥

रमण्येति सहार्थे तृतीया । अपरं तु निगदव्याख्यातमेव ॥ १२ ॥

इत्याकलय्य वचनं सुहृदः स सद्यो
जागर्ति यावदथ तावदमुं च तं च ।
नैवावलोकयति चानुभवत्यजस्रं
तेनोपदिष्टमखिलं न तथेह दृष्टम् ॥ १३ ॥

इति द्वादशश्लोकेनोक्तम् । सुहृदः स्वप्ने दृष्टस्य कस्यचिन्निजपरमाप्तस्येत्यर्थः । वचनं वाक्यम् । आकलय्य श्रुत्वा । स पूर्वोक्तविष्णुमित्रः । सद्यस्तत्कालमेव । याव-

स्वजागर्ति साकल्येन जागरूको भवति । अथ स्वप्नबाधाव्यवहितोर्ध्वक्षण एव । तावत्साकल्येन । अमुं निरुक्तोपदेष्टारम् । तं प्रागुक्तव्याघ्रं चापि । नैवावलोकयति नैवानुभवति । तथार्थे चकारः ।

तेनोक्तस्वामिकासेन । उपदिष्टं कथितम् । अखिलं स्वरमणीशयनादिकं सर्वमपि जाग्रत्कालिकं वस्तु । अजस्रं निरन्तरं न तु क्षणिकम् । अनुभवति प्रमिणोति । इह प्रकृतवादावबोधोर्ध्वम् । न दृष्टं नैव दृश्यानवभासपूर्वकं सततमद्वैतात्मैक्यमनुभूतमस्तीति संबन्धः । एतेन षष्ठश्लोकटीकोक्तस्वप्नदृष्टान्ते वैषम्यं स्पष्टीकृतं भवतीति भावः । अन्यथोक्तग्रन्थासंभवात् ॥ १३ ॥

अथ प्रकृतशिष्य एवाऽऽचार्यं प्रति तत्करिष्यमाणसमाधानमनूद्य दूषयति—न चेत्यादिशिखरिण्या—

न चेहाप्यद्वैतं कलयसि यदात्मानमनिशं
तदैतत्ते भूयात्सकलमपि दृश्यं तदुपमम् ।
न तावत्पर्यन्तं तदुपममिति व्याप्तिविरहा-
त्क्व वा व्याप्तिर्ग्राह्या सकलमपि दृश्यं किल मृषा ॥ १४ ॥

रे शिष्य त्वं यदा सकलसाधनपरिपाकावसरे । अद्वैतं यावद्दृश्यं शून्यत्वोपलक्षितम् । एतादृशमात्मानं प्रत्यञ्चं साक्षित्वोपलक्षितं चिन्मात्रमित्यर्थः । अनिशं निरन्तरम् । कलयसि विचारिततत्त्वमस्यादिमहावाक्यैकजन्यब्रह्मात्मैक्यविषयसाक्षात्कारेण समानाश्रयविषयकाविद्यानिवृत्त्युपलक्षितमनुभवसि तदा तस्मिन्नेव समये । ते तव । एतत्साक्ष्यादिप्रत्यक्षम् । सकलमपि न तु यत्किंचित् । दृश्यं द्वैतम् । तदुपमम् । जाग्रतः । स्वप्नवदभासमानं बाधितत्वेनाधिष्ठानैकरूपमिति यावत् । भूयात् स्यात् । तावत्पर्यन्तं तु नैव भूयात् ।

एवमिहापि निरुक्तप्रकृतैकशरीरैकजीववादेऽपि । तदुपमं स्वप्नदृष्टान्तसमानमेवेति न च वाच्यम् । नैव वक्तव्यमित्यन्वयः । कुत इति चेत्तत्राऽऽह—व्याप्तीति । निरुक्तसिद्धान्तेन यत्र यत्र स्वप्नवद्द्वैतमिथ्यात्वपूर्वकं संजातप्रबोधत्वं तत्राप्रतीयमानभ्रमत्वमिति व्याप्तिग्रहाभावादित्यर्थः । ननु कुतो व्याप्त्यभाव इत्यत आह—क्व वेति । तत्रापि हेतुं द्योतयति—सकलमपीत्यादिशेषेण । यतः सकलमपि संपूर्णमपि । दृश्यं साक्षिचिद्विषयीभूतं द्वैतमपि यावत् ।

मृषा किल प्रातिभासिकसत्तापन्नमेवास्तीति हेतोः क्व वा कस्मिन् वा निर्णीतोदाहरणे यत्र यत्र स्वप्नवत्द्वैतमिथ्यात्वपूर्वकं संजाताधिष्ठानविषयकापरोक्षप्रमाशालित्वं

तत्राप्रतिभासमानभ्रमत्वमिति व्याप्तिनिदर्शनीभूते स्थले । व्याप्तिरुक्तलक्षणसाहचर्य-नियतिः । ग्राह्या स्वीकार्या । न कुत्रापीति पूर्वेण संबन्धः । एकशरीरावच्छिन्नैक-जीवस्यैव व्याप्तिग्राहकस्य जीवान्तरनिदर्शनस्थलाभावान्नैवोक्तव्याप्तिग्रहः संभवतीति भावः । अत्र कलयिष्यसीत्यभिप्रेतेऽपि व्याप्तिविरहोपपादनवैयग्र्यादेव लट् ॥१४॥

शङ्कान्तरमप्युपन्यसति—किंचेत्यादिशार्दूलविक्रीडितेन—

किंच त्वं मदविद्ययाऽसि कलितोऽहं वा भवत्कल्पितः
शक्यं नो विनिगन्तुमत्र महसा केनापि कुत्रापि च ।
अप्येकेन मयैव कल्पितमिदं स्वप्नाभमित्यस्य चे-
न्मानत्वं न तदीदृशं नु तदृतेऽप्येतन्न वैतादृशम् ॥ १५ ॥

कलितः कल्पितः । ननु ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं सर्वं चैत-दविद्यया त्रिगुणया सेशं मया कल्पितमित्याचार्यचरणवचस एवोक्तशङ्काशामकप्र-माणत्वान्नैवमित्यत्राऽऽह—अपीत्याद्युत्तरार्धेन ।

ईदृशं प्रातिभासिकं त्वदुक्तानुभवजातं न नैव स्यादित्यन्वयः । न च वाच्यं निरुक्तानुभवस्य मानत्वेऽपि अस्तु नाम प्रातिभासिकत्वं का क्षतिरिति । मानत्वस्य व्यावहारिकसत्त्वव्याप्यत्वादित्याह- नु तदृतेऽपीत्यादिशेषेण । तदृते निरुक्तानुभवस्य प्रमाणत्वं विना । एतदुक्तानुभवजातमपि । नु इति वितर्के । तादृशं निखिलद्वै-तस्यैकशरीरैकजीवकल्पितत्वादिसाधकम् । न वै नैव भवेदिति योजना ॥ १५ ॥

पुनरपि शङ्कते—इदमित्यादिभुजंगप्रयातेन—

इदं प्रक्रियाकाल एवास्ति चिन्त्यं
स्वरूपं हि जीवेशयोस्तत्र चेत्स्यात् ।
प्रमाणस्य मिथ्यात्वमग्रे कथं मे
भवेत्त्वंपदार्थादिशुद्ध्यै प्रवृत्तिः ॥ १६ ॥

अयि सद्गुरो । इदं प्रकृतम् । जीवेशयोः स्वरूपम् । प्रक्रियेति । अथातो ब्रह्म-जिज्ञासेत्युत्तरकाण्डविचारावसर एवेत्यर्थः । हीति प्रसिद्धम् । चिन्त्यं विचार्यमस्ति । ततः किं तदाह—तत्रेत्यादिशेषेण । शिष्टं तु स्पष्टमेवाऽऽक्षेपादि ॥ १६ ॥

अस्मिन्वादेऽनिष्टापत्तिमपि स्पष्टयति—शुकादीनामित्यादिशिखरिण्या—

शुकादीनां नाऽऽसीच्छिव शिव विमुक्तिर्बत यदा
महायोगीन्द्राणां कथमथ ममाल्पस्य भविता ।

इति व्यर्थो यत्नः श्रवणमननादाविति धिया
परावृत्तिः शास्त्राद्यमनियमतः प्रत्युत भवेत् ॥ १७ ॥

बतेति खेदे । शिव शिवेति तदपनोदार्थं निरतिशयप्रमोदार्थं च भगवन्नामसमुच्चारणं बोध्यम् । विमुक्तिरित्यत्रानुषज्यते । भविष्यतीत्यर्थः । अथ किं तत्राऽऽह—इतीत्याद्युत्तरार्धेन । न केवलं शास्त्रादेव परावृत्तिर्भवेत्, किंतु यमनियमतोऽपि प्रत्युत परावृत्तिर्जिज्ञासोर्भवेदित्यध्याहृत्य योज्यम् । तस्मादस्मिन्वादे न केवलमिष्टानवाप्तिः किन्त्वनिष्टप्राप्तिरपीति स्पष्टमेवेति भावः ॥ १७ ॥

नन्वेवं यद्यस्मिन्नेकशरीरैकजीववादे बहुदोषप्रसक्तिस्तर्हि त्यज्यतामयं पक्ष इत्यत्राऽऽह—एवं चेदित्यादिशार्दूलविक्रीडितेन—

एवं चेद्यदि माऽस्त्वयं न मया पक्षस्तथाऽप्यस्ति मे
न त्याज्यः खलु यत्नतो वसिष्ठमुनिनाऽप्युद्बोधितो भूरिशः ।
संपूर्णैरपि तत्त्वकैः श्रुतिशिरश्चिन्तामणित्वेन त-
त्किं तत्त्वं तु विशेषतो गुरुवरैस्तन्मह्यमाज्ञाप्यताम् ॥ १८ ॥

कुत एतत्पक्षत्यागोऽपि स्वास्थ्याभाव इत्यपेक्षायां तत्र हेतुं द्योतयति—यदित्यादिना । बृहद्योगवासिष्ठ इति शेषः । अपिना तत्र महानुभावत्वं व्यज्यते । भूरिश इत्यनेन तत्र तदादरातिशयः सूच्यते । ननूक्तनिदर्शनस्याऽऽर्षत्वात्तत्रैव तत्तात्पर्ये किं मानमित्यत आह- संपूर्णैरपीत्यादिना । पूर्वपक्षत्वप्रतिक्षेपार्थं श्रुतीति । अथ किं तदाह—तत्त्वं विशेषेण । शिष्टं तु स्पष्टमेव ॥ १८ ॥

एवं शिष्यसंप्रार्थनायां सत्यां निरुक्तवादविषयकरहस्यकथनमाचार्यः प्रतिजानीते—सत्यमित्यादिना तनव—

सत्यं सर्वमिदं तथाऽपि कथये त्र्यन्तचिन्तोल्लस-
त्पूर्वाचार्यरहस्यमत्र भवता तत्संपरीक्ष्याऽऽप्यताम् ।
जीवन्मुक्तिनिजाऽज्जहत्स्ववशविधौ चाटूक्तिचिन्तामणि-
प्रख्यं स्वानुभवरत्नभान्तःतमस्तोमास्तविस्तारकम् ॥ १९ ॥

भो बुभुत्सो यद्भवतोपपादितं तत्सर्वमपीदं सत्यमेव तथाऽप्यत्र । त्र्यन्तेति । उपनिषद्भागमननाविर्भूतप्राचीनाचार्यतात्पर्यमित्यर्थः । यदहं कथये ब्रवीमि तद्भवता संपरीक्ष्य सुविचार्यैव । आप्यतामङ्गी क्रियतामिति संबन्धः ।

उक्तरीत्या तद्ग्रहणावश्यकत्वं व्यञ्जयंस्तद्विशिनष्टि—जीवन्मुक्तीत्याद्युत्तरार्धेन । जीवन्मुक्तिरेव स्वतः परतो व्युत्थानोभयव्युत्थानाभावरूपविचाराचित्तवृत्तिनिरोधान्यत-

रजन्यपञ्चम्यादित्रिभूमिकात्मकावस्थैव निजाब्जहृत्स्वकीयमृगाक्षीव। तद्यथा सर्वेषा-मानन्दानामुपस्थ एकायतनमिति श्रुतेरेतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजी-वन्तीतिश्रुत्यन्तराच्च सुखदत्वसाधर्म्येण यावत्स्त्रीगुणविशिष्टरमणी तस्या यो वशवि-धिर्वशीकारप्रकारस्तस्मिन्नित्यर्थः।

चाट्विति। चाटूक्तिषु प्रेमप्रचुरप्रस्तवेषु मध्ये चिन्तामणिवत्सद्यः सर्वेष्टदत्वेन प्रख्या प्रसिद्धिर्यस्य तत्तथेति यावत्। पुनः कीदृशमुक्तरहस्यम्। [तदाह—]म्येत्यादिविशेषण। आन्तरेति। हार्दान्धकारबाधकं स्वप्रकाशरत्नमिवेत्येतत्। एतेन सुप्त्यादिवदज्ञा-तसुखदत्वं व्युदस्तम्॥ १९॥

किं तद्रहस्यमित्यपेक्षायां तत्संक्षिपत्याचार्यः—ब्रह्मैवेत्यादिचतस्मिकशालिनीन्द्रव-ज्राशालिनीभिः—

ब्रह्मैवाहं संसराम्येक एव
स्वाविद्यातो जीवभावं प्रयातः।
एको देहो मामकः कल्पितोऽपि
जीवव्याप्तोऽन्ये तु सर्वेऽप्यजीवाः॥ २०॥

स्वेति। अजामेकामित्यादिश्रुतेर्ब्रह्मविदाप्नोति परमित्यादिश्रुत्यन्यथानुपपत्तिसि-द्धानादिभावरूपज्ञानमात्रानिवर्त्यात्मैकाश्रयविषयकाज्ञानाद्धेतोरित्यर्थः। ननु त्वद-न्येऽपि शतशः संसरन्त उपलभ्यन्ते तेन कथमेक एवेत्यवधारणमित्यत्राऽऽह—एको देह इत्याद्युत्तरार्धेन॥ २०॥

ननु किमत्र मानमिति चेदनुमानमेवेत्याह—स्वप्ने यथेत्यादिना—

स्वप्ने यथा मामक एव देहो
दृष्टः सजीवः किल कल्पितोऽपि।
अन्ये त्वजीवाः खलु जीववत्तां
विडम्बयन्तोऽपि तथैव चात्र॥ २१॥

जीववत्तां जीववैशिष्ट्यम्। विडम्बयन्तोऽपि—अनुकुर्वन्तोऽपि। यथा स्वप्ने मामक एव मदीय एव कल्पितोऽपि एक एव देहः सजीवो दृष्टः किलानुभूत एव साक्षिणा मयाऽभूत्। अन्ये देहास्तु। अजीवा निर्जीवा दृष्टाः सन्ति तथैव तद्वदत्र जागरेऽपि ज्ञेयमित्यन्वयः। तथा चात्रैवं प्रयोगः। जाग्रदवस्थायामिह मद्देहान्यदेहा निर्जीवाः। मद्देहान्यदेहत्वात्। स्वाप्निकमद्देहान्यदेहवदिति॥ २१॥

ननु भवत्वेवं स्वप्नदृष्टान्तेन त्वदन्यजीवासत्त्वमथापीशस्य का गतिरिति चेत्। सत्यम्। अज्ञानोपहितं बिम्बचैतन्यमीश्वर इति दृष्टिसृष्टिवाद एव सिद्धान्तबिन्दूक्तबिम्बेश्वरवादपक्षे तस्यापि तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यादिश्रुतेर्बुद्धिवृत्तिविशेषमात्रत्वेन कल्पितत्वमेवेत्याह—सेशमित्यादिपूर्वार्धेन—

सेशं दृश्यं भाति धीवृत्तिमात्र-

मज्ञानान्मे शुक्तिरूप्याभमेतत्।

अज्ञानात्। जीवन्मुक्तिस्तावदस्ति प्रतीतेर्द्वैतच्छाया तत्र चास्ति प्रतीतेः। द्वैतच्छायारक्षणायास्ति लेशस्तस्मिन्नर्थे स्वानुभूतिः प्रमाणमिति संक्षेपशारीरकोक्तबाधिताविद्यालेशादशिलनिमित्तोपादानाद्वेतोरिति यावत्। एतत्साक्षिप्रत्यक्षम्। अत एव मे साक्षिणः। भातीति योजना। नन्वेवमपि तत्रैवोक्तशुद्धेश्वरवादे किं समाधानमित्यत आह—शुद्धे त्वित्यादितृतीयपादेन—

शुद्धे त्वीशे तं विनाऽन्यत्तथेति

जीवन्मुक्ते व्युत्थिते त्वेव धीः स्यात्॥ २२॥

फलितमाह—जीवन्मुक्त इत्यादिचरमचरणेन। इतीयं धीस्तु व्युत्थिते एव जीवन्मुक्ते स्यादिति संबन्धः॥ २२॥

ननु जीवन्मुक्ते व्युत्थानदशायामेव पूर्वोक्तपद्यत्रयप्रपञ्चितप्रमितिर्भवतीत्यन्तिमपद्यचरमचरणेनोक्तं तदयुक्तम्। एकशरीरैकजीववादेऽत्र जीवान्तरस्यैवाभावादुक्तबुद्धेः सत्त्वे प्रमाणाभावादाम्नायस्याप्यस्मिन्नंशे विचार्यत्वाच्च।

न च प्राचीनाचार्यचरणैरेव तस्य निर्णीतार्थकत्वमेवेति सांप्रतम्। तत्रापि जीवकोटिनिविष्टत्वासंभवेन ईश्वरलीलावतारत्वेऽवश्यं वक्तव्ये तस्यापि सोपाधिकत्वपक्षे जीवकल्पितत्वोक्तेर्निरुपाधिकपरिशेषे तत्रापि शास्त्रकर्तृतायाः प्रातिभासिकलीलाविग्रहविशेषमन्तराऽसंभावितत्वेन तस्य जीवैककल्पितत्वावश्यकत्वादन्यथा गत्यन्तराभावाच्चेति चेन्न। वक्ष्यमाणरीत्या सकलविरोधाभावसंभवादित्याह—विद्यारण्यैरित्यादिश्लोकेन—

विद्यारण्यैः साऽनुभूतिप्रकाशे

स्पष्टं प्रोक्ता दृष्टिसृष्टिं प्रकृत्य।

अक्लिष्टैकात्यादरोक्त्यैव तस्या-

मेवं जातः सर्वशास्त्राविरोधः॥ २३॥

सा पूर्वपद्यचरमचरणान्तपद्यत्रयोक्तस्वानुभूत्यात्मकप्रमितिरित्यर्थः । अनुभूतीति । एतन्नामके ग्रन्थे । दृष्टिसृष्टिं प्रकृत्य । तस्यां दृष्टिसृष्टिविषये । त्वद्दिष्टेकेति । अद्वैतात्मानुभूतिनिष्णातमात्रपरमादरविषयतोक्तिमात्रेणेति यावत् । विद्यारण्यैः स्पष्टं प्रोक्ता प्रतिपादिताऽस्तीत्यन्वयः ।

तदुक्तमनुभूतिप्रकाशे—दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यत इति । फलितमाह—एवमित्यादिशेषेण । तथा च यावदद्वैतग्रन्थेषूक्तलक्षणैकशरीरैकजीववादाभिधदृष्टिसृष्ट्युपपादनं तु जीवन्मुक्तदृष्ट्यभिप्रायेणैव बुभुत्सोः सद्य एव तत्पदाधिरोहणसिद्ध्यर्थमिति सर्वशास्त्रीयतद्विषयकसांगत्यं संपन्नं भवतीति भावः ॥ २३ ॥

अथैवमप्याचार्यः शिष्यशङ्कामिङ्गितज्ञत्वेनोद्भाव्य प्रत्याचष्टे—न चेत्यादिहरिण्या—

न च समुचितं जीवन्मुक्ते कथं नु भवेदिदं
गतमिदमलं ब्रह्मेवाभूद्यतः स तु विद्यया ।
उदितसमये जीवाभासानुवर्तनसंभवा-
दुभयविधताभानादेव स्फुटाऽस्य तथाऽभिधा ॥ २४ ॥

इदं निरुक्तं श्रीमद्विद्यारण्याचार्यनिर्णीतार्थजातमित्यर्थः । जीवन्मुक्ते । नु इति वितर्के । कथं समुचितं युक्तं भवेत्क संभवेत् । तत्र हेतुं प्रतिपादयति—गतेत्यादिना । अद्वैतमत एवामलं शुद्धम् । एतादृशम् । ब्रह्मैव । स तु निरुक्तजीवन्मुक्तस्तु । विद्यया अपरोक्षाद्वैतात्मप्रमित्येति यावत् । यतो हेतोरभूदित्यर्थः । इति न च समुचितं नैव वक्तुं युक्तमास्ते इति समुचितपदावृत्त्या संबन्धः ।

ननु कुत इदमनुचितमित्यत्राऽऽह—उतेत्याद्युत्तरार्धेन । निरुक्तपक्षे इति यावत् । जीवेति स्पष्टमेव । उभयेति । जीवेति पञ्चमी उभयेत्यत्रैव योज्या । सजीवत्वनिर्जीवत्वाद्विप्रकारकप्रतीतेरेवास्य जीवन्मुक्तस्य तथा ब्रह्मैवाहमित्यादिश्लोकत्रयोक्तप्रकारिका । अभिधा स्वानुभवाख्या स्फुटा स्पष्टाऽस्तीत्येतत् ॥ २४ ॥

ननु दृष्टिसृष्टिसिद्धान्तानुभवार्थं न केवलमेकजीववाद एवास्ति अवश्यमपेक्षित इति नियतम् । प्रतिजीवं प्रपञ्चभेदमङ्गीकुर्वतां भामतीकृतां नानाजीववादिधुरंधराणामाचार्यवाचस्पतिमिश्राणां मतेऽप्यस्ति दृष्टिसृष्टिरेव । तैः प्रतिजीवं प्रपञ्चभेदाङ्गीकारादिति चेत्सत्यम् । तथाऽप्यत्रास्ति तदपेक्षया कश्चिद्विशेष इत्याशयेन तं विशदयति—इयमित्यादिशिखरिण्या—

इयं नानाजीवेऽप्यभिलसति वाचस्पतिमते
विना जीवैकत्वं तदपि तु परोक्षैव भविता ।

पुरा ब्रह्मात्मैक्यात्तदुपरि तु सा प्रोक्तसमये
भवेत्साक्षादेषा गुरुचरणसिद्धान्तसरणिः ॥ २५ ॥

इयं निरुक्तदृष्टिसृष्टिः । नानेति । नानाजीववादशालिन्यपीत्यर्थः । एतादृशे । वाक्पतीति । अवच्छिन्नवादिभामतीकृत्सिद्धान्त इति यावत् । जीवैकत्वं विना, इति तु व्यष्टिशरीरानन्त्याज्जीवनानात्वेऽपि समष्टिजीवैक्यवादिमतव्यावृत्त्यर्थमेव । तेनेह नैव पौनरुक्त्यम् । यद्यप्येवं तदपि तु सा परोक्षैव ब्रह्मैक्यात्पुरा भविता भविष्यतीत्यन्वयः ।

तत्र प्रतिजीवं प्रपञ्चभेदसिद्धान्तेऽभिहितेऽपि तस्य जीवानुभवाधिरूढत्वं तु विना ब्रह्मात्मैक्यानुभवं नैव संभवति । तदूर्ध्वं तु प्रकृतेऽपि सममेवेति नियमयति- तदुपरीत्यादिसाक्षादित्यन्तेन । प्रोक्तेति । एकशरीरैकजीववादसिद्धान्त इत्यर्थः । सा पूर्वोक्तदृष्टिसृष्टिः । ब्रह्मात्मैक्यसाक्षात्कारोर्ध्वं तु । साक्षादनुभवाधिरूढा भवेद् भूयादित्यर्थः । ननु किमत्र मानमित्यत्राऽऽह—एषेत्यादिविशेषेण । एषा प्रकृतप्रतिपादितरूपेति यावत् । गुर्विति । प्राचीनाचार्यचरणसिद्धान्तपद्धतिरस्तीति संबन्धः ॥२५॥

एवमप्यत्र चक्षाणीयाशङ्कामुन्नीय तत्खण्डनं प्रतिजानीते—न चेत्यादिप्रबोधितया—

न च तर्हि पुराऽऽत्मबोधनः कथमेषा गुरुभिः पुरातनैः ।
सरणिः स्फुटमीशजीवयोर्विवृतावेव समीरिता वद ॥२६॥

रे शिष्य । त्वम् । एवं तर्हि । पुरातनैः प्राचीनैः । गुरुभिराचार्यैः । आत्मेति । अद्वैतात्मसाक्षात्कृतेः । पुरा प्रागेव । एषा प्रकृतदृष्टिसृष्ट्यभिधा । सरणिः पद्धतिः । ईशेति । विवृतावेव तत्पदार्थादिशोधन एव । स्फुटं स्पष्टं । कथं समीरितेति न च वद नैव ब्रूहीत्यन्वयः । अनुभूतिप्रकाशीयाष्टमाध्याये नवमाध्याये च दृष्टिसृष्टिः स्पष्टैवेति भावः ॥ २६ ॥

अत्राऽऽचार्यः प्रतिज्ञातेऽर्थे हेतुं योतयति—राजानमित्यादिशार्दूलविक्रीडितेन—

राजानं सुदिदृक्षुरासनिकरैस्तस्यान्तरङ्गैर्जनः
कोऽप्यन्तःपुरमार्गतो द्रुतममुं लोके यथा नीयते ।
तद्वत्कोऽपि मुमुक्षुराडतितरां श्रद्धालुरल्पोद्यमा-
दद्वैते स्वमनिदर्शनाद्भ्रमतयाऽद्वैतं स्वमुद्बोध्यते ॥२७॥

यथा लोके कोऽपि । राजानम् । स्विति । सुतरामेकान्ते स्वेन सह चिरं प्रसादपूर्वकं भाषमाणं द्रष्टुमिच्छतीति तथेत्यर्थः । एतादृशः । जनो लाभेच्छुः पुरुषविशेष

इति यावत् । तस्य राज्ञः । अन्तरङ्गैः सभीहितसूचकैः । तत्रापि भृत्यादिक्षुद्रव्युदासार्थं पुनर्विशिनष्टि—आप्तेति । आप्ताः माप्तो नितरां कराः, बलिहस्तांशवः करा इत्यमरात्पूजोपहारा येस्ते तथा तैराजसमश्रीकैरमात्यादिभिरित्यर्थः । एवमपि लोकप्रसिद्धकार्यकारित्वव्यावृत्तये निष्कपदावृत्त्यैव विशेष्यमाह—आप्तेति । एतादृशैः प्रोक्तविशेषणद्वयविशिष्टैरेव । राज्ञः श्रीकृष्णस्योद्धवादिवत् संबन्धिसंबैरित्यर्थः ।

अन्तःपुरेति । मत एव । द्रुतं शीघ्रम् । अमुं राजानं प्रति । नीयते माप्यते । आनीयत इति वा च्छेदः । एवं दृष्टान्तं स्पष्टीकृत्य दार्ष्टान्तिकं स्फुटयति—तद्वदित्याद्युत्तरार्धेन । अत्र—आप्तेत्यादितृतीयान्तकर्तृपदद्वयं तथा राजानमित्यादिपदद्वयं च कर्मभूतमुमुक्षुविशेषणत्वेन ज्ञेयम् । तद्वन्निष्कराजसंदर्शनकामुकवदित्यर्थः । तस्य राजशब्देष्टस्वप्रकाशाद्वैतब्रह्मण इत्येतत् । अन्तरङ्गैः । ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः । ज्ञानी त्वात्मैव मे मतमिति स्मृतेश्च ।

तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुत्या, तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन इति स्मृत्या च शाब्दपरब्रह्मनिष्ठत्वेन शरणीकृतैः श्रीगुरुभिरिति यावत् । अत एव । आप्तेति । आप्तानां परमयथार्थवक्तृत्वेन वेदानां निकराः समयस्फूर्यमाणार्थकत्वादिना तत्तद्वेदवाक्यसंघाः सन्ति येषां ते तथा तैः । तथा सद्भिरित्यर्थः । राजानं राजते सकलद्वैतसत्ताप्रकाशप्रदातृत्वेन सर्वबाधावधित्वेन स्वप्रकाशत्वानन्दाधत्तसत्ताकत्वेन च शोभत इति तथा तमद्वैतपरमात्मानमिति यावत् ।

सुदिदृक्षुः सुतरामपरोक्षात्मत्वेन द्रष्टुं ज्ञातुमिच्छतीति तथा । एतादृशः । अत एव । कोऽपि कश्चिद्धीरः प्रत्यगात्मानमैक्षत्, इति श्रुतेः कश्चिन्मां वेत्ति तत्त्वत इति स्मृतेश्च परमदुर्लभ इत्यर्थः । एतादृशोऽत एव मुमुक्षुरिति । तत्रापि पाण्डित्याभिमानवांश्चेत् कथमनेकप्रमाणसिद्धनानाजीववादविरुद्धमेकशरीरैकजीववादमिमं श्रद्दधीतेत्याशङ्क्य पुनर्विशिनष्टि—अतितरामित्यादि ।

अत एव । द्वैते दृश्ये । स्वप्नेति । स्वप्नदृष्टान्तेनेति यावत् । अल्पेति । निरूकवादे स्वेतरयावच्चेतनस्य नामस्थानकस्य आकाशादेर्जडस्य च मृगजलादिवत् प्रातिभासिकैकरूपत्वाच्च सर्वबाधनायासेनैव रागद्वेषादिराहित्यरूपाल्पप्रयत्नेनैवेत्यर्थः । अद्वैतमेव स्वं सत्यज्ञानानन्तानन्दमत्यगभिन्नस्वप्रकाशात्मचैतन्यमस्तीति उद्बोध्यते ।

तत्त्वमस्याद्यखिलवेदान्तमहावाक्यस्वारस्यानुग्राहकोपक्रमादिनिखिलतात्पर्यनिर्णायकलिङ्गानुकूल्यलक्षणेनोत्कर्षेण ज्ञाप्यत इति योजना । तदुक्तमनुभूतिप्रकाशे श्रीमद्विद्यारण्यगुरुचरणैर्ब्रह्मण्याद्ये—

सर्वसाधारणः सर्ग एकः प्रातिस्विकोऽपरः ।
आकाशादिक्रमादाद्यः प्राणादिक्रमतोऽपरः ॥
सर्वेषां प्राणिनां कर्मक्षये स्यात्प्रलयो महान् ।
पुनः कर्मोद्भवे तेषां स्यान्महासृष्टिरीश्वरात् ॥
एकस्य कर्मणि क्षीणे प्रलयः सुषुप्तिनामभृत् ।
पुनः कर्मोद्भवे तस्य सृष्टिः स्याज्जागराभिधा ॥
अद्वैततत्त्वबोधाय सृष्टिः सर्वत्र कथ्यते ।
अल्पा सा महती वाऽस्तु सदद्वैतं विबुध्यते ॥
प्रौढस्य राजगेहस्य द्वारं स्यात्पुरतो महत् ।
पृष्ठतोऽन्तःपुरद्वारं चोरद्वाराख्यमल्पकम् ॥
महाद्वारेण सहसा दुर्लभं राजदर्शनम् ।
जनसंमर्दबाहुल्याद् द्वाराणां च बहुत्वतः ॥
अल्पद्वारे स्वामिभक्ते हठाद्राजानमीक्षते ।
दृष्टिसृष्ट्याऽनुभूत्यर्थी वेत्त्यात्मानं तथा हठात् ॥
महासृष्ट्या तत्पदार्थमादौ ज्ञात्वा तथा पुनः ।
त्वंपदार्थं शोधयित्वा वाक्याद्बोधो विलभ्यते ॥ इति ।

उपलक्षणमिदं मधुसूदनसरस्वतीनामपि । वेदान्तकल्पलतिकायां तथैवोक्तत्वात् । तद्यथा—पारमार्थिकादिसत्त्वत्रैविध्यं तदस्याभ्युपगमवादत्वमुक्त्वा । अधिष्ठानसत्त्वमेवाध्यस्ते भासते नान्यदस्यास्तीति मुख्यः सिद्धान्तः । अत एवोक्तं महद्भिः—अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् । तथा च सत्त्वमानन्दश्चैवं निरूपणीयं जगद्बाधितं तुच्छमनिर्वचनीयमित्यादिशब्दैः कथ्यते ।

अत एवेदं सर्वमयमात्मेत्यादि संगच्छते । सामानाधिकरण्येन जगद्ब्रह्मणोरभेदात् । रूपान्तरं तु नास्त्येवेति तेन सह न भेदो नाभेदो नापि भेदाभेद इति । तदेतद्बाधोत्तरं वाक्यप्रमाणम् । ततः पूर्वं तु सत्त्वादिरूपेणैव जगत्प्रतीयते । तथा च शुक्तिरजतस्याऽऽकाशादेर्जगतो न कश्चिद्विशेष इति । तदेवं सर्ववेदान्तैकमत्यं सिद्धमिति दिक् ॥ २७ ॥

एवं द्वैत इत्यादिना सूचितमेवाद्यां दृष्टिसृष्टिमध्यां शीघ्रमधिकार्यनुग्राहकत्वं प्रकटयति—मिथ्यात्वमित्यादिमहर्षिवाक्यपाठः—

मिथ्यात्वं झटिति मतौ प्रयाति दृश्ये
पद्धत्या दृढमनयाऽधिकारिणोऽलम् ।
अद्वैतप्रमितिरथो द्रुतं भवित्री
तन्मुख्यं विद इममेव वादमाहुः ॥ २८ ॥

विषयवासनादोषावमोषार्थमलमधिकारिण इति संबन्धनीयम् । फलितमाह—तदित्यादिचरमचरणेन । तदाहुः सिद्धान्तबिन्दुकाराः—अयमेव मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः । इममेव च दृष्टिसृष्टिवाद इत्याचक्षत इति ॥ २८ ॥

नन्वास्तामनया रीत्याऽस्य मुख्यत्वमथापि शुको मुक्तः, वामदेवो मुक्तः, इत्यादिश्रुतेस्तत्रार्थवादत्वोक्तिः कथं संगतेति चेन्न । तत्त्वज्ञदृष्ट्या यावद्द्वैतस्यापि मिथ्यात्वेन तत्कैमुत्यस्य तत्रापि संभवत्वादित्याशयं सूचयति—शुकादीनामित्यादिशिखरिण्या—

शुकादीनां मुक्तिः प्रकटितदृशैवं सति मृषा
कथं वा नो भूयान्निजदृगितरत्वात्कथय माम् ।
न चैवं ब्रह्मिष्ठो व्यवहृतिजसत्तां न कलये-
द्भवत्विष्टापत्तेर्दृढतरविरक्त्यैक्यभजनात् ॥ २९ ॥

रे शिष्य । एवं सति प्रागुक्तरीत्या दृष्टिसृष्ट्यविरोधे सतीत्यर्थः । शुकादीनां मुक्तिः प्रकटितेति । प्रतिबोधितजीवन्मुक्तदृष्ट्येति यावत् । निजेति । अद्वैतात्मचैतन्यभिन्नत्वादित्यर्थः । मृषा मिथ्या । कथं वा नो भूयादिति त्वं मां प्रति कथयेत्यन्वयः । तत्राप्याशङ्क्य समाधत्ते—न चैवमित्याद्युत्तरार्धेन । एवं तर्हि । ब्रह्मिष्ठो दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहु मन्यत इत्यादि प्रागुदाहृतानुभूतिप्रकाशस्वारस्यादद्वैत आत्मा परोक्षप्रमावान् । जीवन्मुक्त इत्यर्थः ।

व्यवहृतीति । व्यावहारिकसत्तां ब्रह्मज्ञानेतराबाध्यत्वावच्छिन्नाकाशादिमहासृष्टिसत्तामिति यावत् । न कलयेन्नैव जानीयादिति न च नैव वक्तव्यम् । कुत इति चेत्तत्र हेतुं प्रतिपादयति—भवत्वित्यादिना । कथमत्रेष्टापत्तिरित्यत्रापि हेतुं द्योतयति—दृढतरेत्यादिविशेषणेन । यावद्दृश्यविषयकमिथ्यात्वदार्ढ्यलक्षणप्रातिभासिकमात्रसत्त्वानुसंधानजन्यवैराग्यस्थैर्येण तदीयाधिष्ठानीभूताद्वैतसच्चिदानन्दात्मब्रह्माभेदानुभूतिसंपादनात्मकहेतोस्तत्त्वविदो दृश्यविषयकव्यावहारिकसत्ताानाकलनमपि गुण एवेति भावः ॥ २९ ॥

एवं सूत्रितैक्यभजनमेव विशदयिष्यंस्तदवस्थां शिष्यबुद्धिसौकर्याय संवर्णयति-दृश्येत्यादिशार्दूलविक्रीडितस्रग्धराभ्याम्—

इत्यादर्शगृहे तदेष विबुधः सर्वत्र सर्वात्मना
संपश्यन्विगतप्रपञ्चमनिशं स्वात्मानमेवाद्वयम् ।
जीवन्मुक्तिविलासिनीसहचरः स्वानन्दमात्रे रतिं
क्रीडां सन्मिथुनत्वमद्वयसुखं भुञ्जन्निजं राजते ॥ ३० ॥

इत्थं—तस्य तावदेव चिरमित्यादिश्रुतितः प्रतीयमानं प्रारब्धध्वंसावधिबाधितद्वै-तजालमित्यर्थः । तदेव-आदर्शगृहं सर्वत्र तद्गततद्वीक्षितुरात्मावभासहेतुत्वाद् दर्पणस-दनं तत्रेति यावत् । तदा—अद्वैतात्मानुसंधानसमये ; एतेन देशवत्कालोऽपि सूचितः । एष प्रकृतः । विबुधोऽद्वैतब्रह्मात्मैक्यविषयकाप्रतिबद्धसाक्षात्कार-वानित्यर्थः । सर्वत्र तत्तद्वस्त्ववच्छेदेन । सर्वेति । साकल्येन । विगतेति । द्वैतविधुरम् । तत्रापि क्षणिकत्वं योगादिजन्यं वारयितुमनिशमिति यावत् ।

स्वेति । प्रत्यक्स्वरूपमेव । अवधारणेन तत्त्वंपदार्थयोः शोधनसंदेहशून्यत्वेऽपि तदभे-दलक्षणं वाक्यार्थं प्रथयितुं विशिनष्टि—अद्वयमिति । क्रियाविशेषणमिदम् । संपश्यन् सम्यक् संशयादिशून्यत्वेनैवानुभवन् सन्नित्यर्थः । अत एव । जीवन्निति जीवन्मुक्ति-रूपस्वकीयविचारादिजन्यपञ्चम्यादित्रिभूमिकात्मकाविलासवतीसखश्च सन्निति यावत् । स्वानन्देति । अद्वैतात्मानन्दैकविषयकनिरतिशयानुरक्तिमित्यर्थः । तथा क्रीडां कुसुमकन्दुकादिखेलाम् । सदिति । रतौ क्रीडायां च स्वानन्दमात्रस्य विषयत्वसं-भवेऽपीह तु तदपि नास्तीति सत्पदेन द्योत्यते । एवं च सद्रूपं त्रिकालानवच्छिन्न-सत्तारूपं मिथुनत्वं संप्रज्ञातसमाधिजन्यद्वंद्वसुखमिति यावत् । अत एव । अद्वये-त्यादि । निजं प्रत्यगभिन्नम् । अद्वयसुखमद्वैतानन्दम् । भुञ्जन्सन्नित्यर्थः । राजते शोभत इति संबन्धः ॥ ३० ॥

दृश्य इत्यादि—

दृश्ये स्वैकामरत्नात्मकमुकुरमहामन्दिरे वासनाच्छि-
च्चेतोनाशात्मविद्याऽऽलिरचितसुमनःप्रोच्चतल्पे शयानः ।
जीवन्मुक्त्यात्मसत्या सह पुरुषवरः कोऽपि पूर्णोपरत्या
सर्वानाप्नोति कामानतुलसुखधनः सप्तमीं भूमिमाप्य ॥ ३१ ॥

द्रष्टुं योग्य इत्यर्थः । स्वैकेति । अनधीनभानत्वलक्षणस्वप्रकाशात्मकरत्नरूप-विचित्रादर्शात्मकापरिच्छिन्नरत्नालय इत्यर्थः । अत्र पूर्वपद्ये दृश्यादर्शगृह इत्यनेन तत्त्वज्ञानिनः पञ्चम्याद्यवस्थासु प्रातिभासिकद्वैतमपि सर्वत्राऽऽत्मैकसूचकमित्युक्तमेव । इह तु यौगिकपञ्चमादिभूमिकाद्वयमप्यतिक्रामतस्तस्य द्वैतं नैव स्फुरति बाधित-मपीति स्वैकेति विशेषणेन व्यज्यत इति ततो विशेषः ।

एवं च तास्तृप्तिदीपप्रसिद्धाः सप्त वैचारिकभूमिका एव विवक्षिताः सन्तीमास्तु योगवासिष्ठप्रसिद्धास्ताः सप्त योगभूमिका एवेति नाऽऽम्रेडितत्वगन्धोऽपि । विस्तरस्तु—अत्रैतद्विरोधपरिहारादिलक्षणेऽस्मदीये जीवन्मुक्तिविवेकटीकात्मके पूर्णानन्देन्दुकौमुद्याः षोडशप्रकाश एव ज्ञेयः ।

दृश्यपदं तु प्रकृते—दृश्यते त्वग्र्यया बुद्ध्येति श्रुत्यादिप्रसिद्धवृत्तिव्याप्तिस्वीकृत्यभिप्रायकमेव । अत एवाऽऽहुः श्रीमदाचार्यचरणाः—ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितमिति । एतेन यन्मनसा न मनुते मनसैवेदमाप्तव्यमित्यादिश्रुत्यविरोधो व्याख्यातः । उभयत्रापि पक्षे रूपकीकृतगृहविशेषे दृश्यपदेन रम्यत्वमेव व्यज्यते । तेन सुखहेतुत्वमपि । वासनेत्यादि । वासनाछित्—वासनाक्षयः ।

तथा चेतोनाशो मनोनाशश्च ताभ्यां संपूर्णाभ्यां विशिष्टा या आत्मविद्या अप्रतिबद्धब्रह्मात्मैक्यसाक्षात्कृतिः सैव आलिः, आलिः सखी वयस्या चेत्यमराच्चातुर्यसौहार्दातिशयविशिष्टा सखी तया रचितः सुनिर्मितो यः सुमनसां शोभनमनोवृत्तीनां संप्रज्ञातसमाधिकालिकानामहं ब्रह्मास्मीत्येकरसवृत्तीनाम् ।

पक्षे सुमना मालती जातिरित्यमरान्मधुमालत्यादिदिव्यपुष्पाणामित्यर्थः । तत्रापि प्रोच्चं समुन्नतम् । एतादृशं यत्तल्पं तल्पं तु शयनीयं स्यादित्यमराच्छयनीयं तस्मिन्निति यावत् । अत्र प्रोच्चपदेनासंप्रज्ञातसमाधिपरिणामाविलम्बासहिष्णुत्वं सूच्यते । सप्तमीं भूमिं स्वतः परतो वा व्युत्थानशून्यासंप्रज्ञातसमाधिरूपसप्तमभूमिकामित्यर्थः । पक्षे सप्तमतलस्थकोशगृहोदरवर्तिनीं विलासस्थलीमिति यावत् । आप्य प्राप्य । शयानो योगनिद्रापरवशः । जीवन्मुक्त्या, एतद्रूपया । स्वसत्या, अरुन्धत्यादिवन्निजसाध्व्या सह ।

एतादृशः सन् । कोऽपि पुरुषवरः । तस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्यः कश्चिदित्यादिश्रीमद्भागवतादोक्तेः परमदुर्लभः पुरुषश्रेष्ठ इत्यर्थः । पूर्णेति निःसीमपरमानन्दस्य । पक्षे निरवधिकामतृप्त्या । अतुलेति । निरुपमपरमानन्दैकरसश्च सन् । सर्वान्कामानाप्नोति । सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चितेतीति श्रुतेरेकस्मिन्नेवकालेऽखिलमनोरथाल्लभत इति योज्यम् ॥ २१ ॥

एवमपि प्रकृतांशे एव शङ्कते—नन्वित्यादिशिखरिण्या—

नु स्वर्भौपम्यं नहि भवति तत्रापि सुघटं
यतो जीवन्मुक्तः कलयति न वा द्वैतमखिलम् ।
न पूर्वो वैषम्यान्न लसति परो वृत्तिविरहा-
दपि चैतद्दृष्ट्याऽप्यपसरति वैमत्यमिह किम् ॥२२॥

अपि सद्गुरो । तत्रापि श्रीमद्भिर्विद्यारण्यवचनसंमत्या दृष्टिसृष्टिसांगत्यकथने कृतेऽपि । ननु द्वैते स्वप्नोपम्यम् । सुघटं संगतम् । नहि भवति नैव संभवति । कुत इति चेत्तत्र हेतुं वक्तुं विकल्प्य पृच्छति—यत इत्यादिद्वितीयपादेन । यतो हेतो· जीवन्मुक्तः प्रागुक्तः । दृष्टिसृष्टिमिमां प्रज्ञानुभवी बहु मन्यत इतिवचनेष्टस्तत्त्वनिष्ठ इत्यर्थः । अखिलं संपूर्णम् । द्वैतं दृश्यम् ।

किं कलयति जानाति किंवा न कलयति नैव जानाति । एवं विकल्प्य तत्राऽऽद्यं प्रत्याह—नेत्यादिना । पूर्वो जीवन्मुक्तः सर्वं द्वैतं जानातीति प्रथमः पक्षः । वैषम्यात् । ज्ञात्वा देवं मुच्यते सर्वपाशैरित्यादिश्रुतिशतैर्जीवन्मुक्तस्य सर्वद्वैतरूपबन्धबाधबोधना-सिसिद्धद्वैतज्ञानवत्त्वे जीवन्मुक्तत्वस्यैवासिद्धिरूपवैषम्याद्धेतोर्न नैव संभवतीति यावत् ।

अथ द्वितीयमपि निराचष्टे—न कलतीत्यादिना । जीवन्मुक्तः सकलं दृश्यं नैव कलयतीति परो द्वितीयः पक्षोऽपि वृत्तिविरहात्पूर्वपद्योक्तरीत्या वृत्तित्वावच्छेदकाव-च्छिन्नयावद्वृत्त्यभावरूपनिर्विकल्पसमाधौ संपूर्णद्वैतप्रतियोगिकाभावविषयकवृत्तेरप्य-संभवान्नैव कलति संभवतीत्यर्थः । ततः किमित्यपेक्षायां निगमयति—तथा चेत्यादि-चरमचरणेन । तथा चैवं विकल्पग्रासे सति । एतद्द्रष्टयाऽपि जीवन्मुक्तानुभू-त्याऽपि । इहाद्वैतवादे । वैमत्यं दृष्टिसृष्टिविषयकप्रागुपन्यस्ताविरोधजातमिति यावत् । अपसरति निरस्तं भवति किं, अपि तु नैव निर्गच्छतीत्यन्वयः ॥३२॥

अथाऽऽचार्यः प्रपूर्वपद्यनिगदितजीवन्मुक्तदृष्ट्या समाधत्ते—स्वप्नेत्यादीन्द्रव-ज्रया—

> स्वप्नोत्थितस्यापि किमु स्मार्ति न
>
> प्रचारयसौ स्वाप्नविलासदृष्टिः ।
>
> तथाऽस्य संस्कारवशात्प्रतीया-
>
> दारब्धभोगं किल दृश्यजालम् ॥ ६३ ॥

स्वप्नेति । स्वप्नानुभूतसुखादिसाक्षिताप्रयोजकाविद्यावृत्तिरित्यर्थः । दार्ष्टान्तिकं स्पष्टयति—तथेत्याद्युत्तरार्धेन । अस्य जीवन्मुक्तस्य । आ आरभ्येति च्छेदः । याव-दारब्धभोगपर्यन्तमिति यावत् ॥ ३३ ॥

तत्रापि प्रकृतेऽनुभवविरोधमाशङ्क्य शमयति—न चेत्यादीन्द्रवज्रयैव—

> न च स्मरामीत्यनुभूतिरत्र
>
> नैवेति वैषम्यमिहेति वाच्यम् ।

दृष्टान्तदार्ष्टान्तिकसर्वसाम्ये
दृष्टान्तदार्ष्टान्तिकतैव नो यत् ॥ १४ ॥

अत्र प्रकृते जीवन्मुक्तस्य प्रतीयमाने यावत्प्रारब्धपरिसमाप्तिपर्यन्ते द्वैतावभासे विषय इत्यर्थः । स्मरामीत्यनुभूतिः । दृष्टिसृष्टिपक्षे हि यदि सकलमपि दृश्यजातं स्वप्नवज्जीवकल्पितत्वेन प्रातिभासिकमेव तथात्वेन तदनुभवस्तु मूकाविचारत्वानादि-निद्रायाः समुत्थिते जीवन्मुक्त एव मिथ्यैव मे स्वप्नेऽयं रम्भासंभोगोऽभूद्यथापि तं स्मरामीत्यादिवदनादिकाजार्यमविभासमानस्य द्वैतस्वप्नस्य तदापरोक्षाद्वैतात्मतत्त्वसाक्षा-त्कारलक्षणजाग्रत्प्रबोधेन बाधे सत्यपि स्मृतिविषयी करोमीति साक्षिमत्यक्षाचितवृत्ति-रित्यर्थः ।

नैवेति हेतोः । अहं मनुरभवं सूर्यश्चेति वामदेवस्य गर्भ एव शयानस्य प्रत्यालीकत्व-साक्षात्काराव्यवहितसंस्कारप्रार्थात्म्यजन्यमन्वादितादात्म्यस्मृतिवन्नैव श्रुत्यादिषु कचि-त्प्रसिद्धाऽस्तीत्यर्थः । यतः कारणादिति यावत् । इह दृष्टिसृष्टौ स्वप्नदृष्टान्तस्य वैषम्य-मिति न च वाच्यं नैव वक्तुं युक्तमस्तीति शेषः । तत्र हेतुत्वेनान्यथानुपपत्तिं प्रति-पादयति—दृष्टान्तेत्याद्युत्तरार्धेन । दृष्टान्तत्वं हि पक्षभिन्नत्वे सति साध्यहेतूभयवत्त्वमि-त्येव महानसादौ लक्षणसमन्वयादावश्यकम् ।

तत्राभेदेऽनन्वयनामकालंकारविशेषस्य—उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वय इति प्रसिद्धस्य संभवेऽप्यनुमानासंभवात्त-त्यन्तं व्याप्तिग्रहनिर्वहनार्थं चोत्तरदलमिति संक्षेपः । निरञ्जनः परमं साम्यमुपैति दिव्यमिति श्रुतेस्त्रिविधभेदाविवाधोपलक्षिताचिन्मात्रत्वमन्तरा सर्वसाम्यस्यैवासंभव इति भावः ॥ १४ ॥

उपसंहरति—तस्मादेकेत्यादिशार्दूलविक्रीडितेन—

तस्मादेकवपुः सजीवमितरन्निर्जीवमेतन्मनः
संकल्पात्मकदृष्टिसृष्टिरिति रे जीवैक्यवादे स्थितम् ।
जीवन्मुक्तमुखाधिकारिविषयत्वेनैव तत्सौष्ठवं
अद्भुतत्वात्र तया वदस्व यदि चेत्संदेहलेशोऽपि तम् ॥ १५ ॥

एतच्छब्देनोपक्रान्तो जीव एव । रे इति नीचसंबोधनं शिष्यं प्रत्येव । मुखपदं तस्यैवानुभवाधिरूढत्वाभिमानकं न त्वादिपदपर्यायकम् । तद्भिन्नस्य तत्मानविकारा-द्वास्तविकजीवान्तरविरहाच्च । शिष्टं तु स्पष्टमेव ॥ १५ ॥

ततः किं तदाह—गुर्वित्यादिप्रबोधितया—

गुरुपादसरोजरेणुभिस्तमहं निर्मलयापि सत्वरम् ।
कुरु युक्तिसहस्रशाल्यपि प्रकटोपन्यसनं यथोचितम् ॥३६॥

रेणुभिर्हि पात्रादिकं निर्मलं भवतीति प्रसिद्धमेव । तत्रापि सत्वरं न तु दीर्घकालोत्तरम् । एतेन स्वस्मिन्नमानित्ववैपुल्यं व्यज्यते । तथा क्रमाद् यावदद्वैतशास्त्रदर्शानुभवविषयकान्ध्यगन्धस्यापि वैधुर्यं ध्वन्यते । अतः । रे शिष्य त्वम् । युक्तीति । अनेकतर्कसंकुलमित्यर्थः । अपिना तत्राप्यचलचित्तत्वं सूच्यते । परं तु यथोचितम् । तत्त्वबुभुत्सोः कथा वाद इति वादलक्षणात् । तदनुकूलसमयबन्धादिपद्धत्यनतिक्रमणं यथा स्यात्तथेति यावत् । प्रकटेति । स्पष्टस्वसंशयोद्घाटनपूर्वकपूर्वपक्षप्रश्नोपपादनमित्यर्थः । अनेन शिष्याश्वासनमूलीभूतं कारुण्यपौष्कल्यं द्योत्यते ॥ ३६ ॥

एवं श्रीगुरुवर्यवाक्यमाकर्ण्य सुप्रसन्नः प्रकृतशिष्यः प्रोक्तसिद्धान्तमनुमोदते—अपीत्यादिगीत्यार्यया—

अयि गुरुवर्याः प्रायोऽधिकारिभेदाद्भवद्भिरविरोधः ।
प्रागेव साधितोऽभूदियांस्तु शिष्टोऽधुना सुसिद्धोऽसौ ॥३७॥

अधिकारीति । यथा यथा भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रिया ज्ञेया साध्वी सा चाव्यवस्थितेति वार्तिकोक्तरीत्या तत्तत्प्रक्रियैकानुग्राह्यतावच्छिन्नतत्तन्मुमुक्षुभेदादित्यर्थः । प्रायो बाहुल्येन । इयान्—एकशरीरैकजीवाभिधदृष्टिसृष्टिवादमात्रविषयस्त्विहोक्तप्रकारक एतावानेवेति यावत् । तुशब्दोऽस्याविरोधस्यासाधारण्यसूचकः । शिष्टोऽवशिष्टः । अधुना निरुक्तसंदर्भप्रतिपादनसमये । असौ निरुक्ताविरोधः । सुसिद्धः सुतरां संपन्नोऽस्तीति संबन्धः ॥ ३७ ॥

निगमयति—इतीत्यादिगीत्यैव—

इति मतयोरैक्यमभूदेकशरीरैकजीववादेऽपि ।
सिद्धान्तलेशबिन्दुप्रकटितयोर्बुधदृशा यथा शिवयोः ॥३८॥

इत्येकशरीरैकजीववादमतैक्योपपत्तिः ॥

सिद्धान्तेति । सिद्धान्तपदं बिन्दुपदेऽप्यन्वेति । बुधदृशा निरुक्तजीवन्मुक्तदृष्टेत्यर्थः । पक्षेऽप्येवमेव । तत्रोपमानं वदन्प्रथमपरिच्छेदमध्येऽप्यत्र श्रीमद्गौरीहराभेदानुसंधानरूपं निरुपमं मङ्गलमातनुते यथेत्यादिशेषेण ॥ ३८ ॥

इत्येकशरीरैकजीववादमतैक्योपपत्तिः ॥

———

अथापि प्रकृताचार्यं प्रत्येव निरुक्तशिष्य एव पुनः प्रकृतसिद्धान्तमङ्गीकृत्यापि प्रसङ्गसंगत्यागतापरसिद्धान्तं प्रत्यपि पृच्छति—आस्तामित्यादिशालिन्या—

आस्तामेवं ह्येकदेहैकजीव-
वादे सर्वा सुव्यवस्था तथाऽपि ।
सा स्यान्नानादेहजीवैक्यवादे
कीदृश्येतद्देशिकेशैर्निरूप्यम् ॥ १ ॥

अयि श्रीगुरो इत्यार्थिकम् । एवं प्रागुक्तरीत्या । एकेति । तदुक्तं सिद्धान्तलेशसिद्धान्तसूक्तिमञ्जर्याम्—कौन्तेय इव राधेयो जीवः स्वाविद्यया परः । नाऽऽभासो नाप्यवच्छिन्न इत्याहुरपरे बुधाः। एको जीव उतानेकस्तत्रानुपदवादिनः। एकं देहं च तस्यैकमन्यत्स्वप्नसमं विदुरिति । एतादृशे वादे । सर्वा संपूर्णा । सुव्यवस्था । आस्ताम् । हिरवधारणे । भवत्वेव । तथाऽपीत्यादि । शिष्टं तु विस्पष्टमेव ॥ १ ॥

एवं प्रकृतशिष्याशयमालक्ष्याऽऽचार्यः कस्यचिन्मुमुक्षोः प्रकृतोक्तैकशरीरैकजीवसिद्धान्तवादेऽप्यत्र संजातशङ्कामनुवदति—ननु कथमित्यादिपुष्पिताग्रावसन्ततिलकाभ्याम् —

ननु कथमहमेव कल्पकः स्यां
सकलजगन्निचयस्य किंच सोऽयम् ।
घट इति मम भानमप्यबाध्यं
तदविदितेऽपि कथं न तत्र सत्त्वम् ॥ २ ॥

द्वैतविवेके हि जीवेश्वरोभयनिर्मितत्वं भवे प्रपञ्चितमेव तद्व्यावृत्त्यर्थमहमेवेत्यवधारणम् । एतेनोक्तग्रन्थविरोधो ध्वनितः पूर्वोक्तैकशरीरैकजीववादे । उपलक्षणमिदमुक्तवादेतरयावदद्वैतग्रन्थविरोधस्यापि । निचयपदेनैवानन्तस्थावरजंगमात्मकद्वैतसंग्रहेऽपि सकलपदं सकलानां सर्वेषां तत्तत्प्रमातॄणां प्रमितिविषयीभूतानि यानि जगन्ति तेषां यो निचयः संघ इति व्युत्पत्त्या तन्मात्रप्रातिभासमानस्वाप्नजगत्संघव्यावृत्त्यर्थमेव ।

शङ्कान्तरमप्युपन्यसति—किंचेत्यादिशेषेण । किंचेति निपातो शङ्कान्तरसमुच्चायकौ । ननु भवतूक्तप्रत्यभिज्ञानमपि स्वाप्नप्रत्यभिज्ञानवदेव तत्राऽऽह—अबाध्यमिति । अबाध्यमपीति संबन्धः । फलितमाह—तदित्यादिशेषेण । तत्तस्माद्धेतोः । अविदितेऽज्ञातेऽपि तत्र घटादौ सत्त्वं कथं नेति योजना । तस्माज्जगति ज्ञातैकसत्त्वाभावान्नैव दृष्टिसृष्टिर्युक्तेत्यभिप्रायः ॥ २ ॥

किंचेति—

किंचाहमेव जगतो यदि कल्पकः स्यां
सुप्तौ ममेदमखिलं विलयं प्रयायात् ।
यात्येव नित्यमिति चेन्न यतः पुनर्मे
सेयं प्रियेति मतिरुन्मिषति प्रबोधे ॥ ३ ॥

उक्तेऽर्थे तर्कसंग्राहकौ निपातावेतौ । तेनान्यथानुपपत्तिरपि प्रकृते । तत्रेष्टापत्तिमाशङ्क्य निराचष्टे—यात्येवेत्याद्युत्तरार्धेन । तस्माद्यदीयमपि प्रत्यभिज्ञा स्वाप्नप्रत्यभिज्ञावदेव तर्हि जितं बाह्यैरिति ॥ ३ ॥

एवं प्रश्ने प्राप्ते सति प्रकृत आचार्य एव प्रकृतशिष्यं प्रत्येव स्वादृशमेव कंचिदुक्तमत आक्षिपन्तं मुमुक्षुं प्रति केचित्प्राचीनाचार्यास्त्वेवं समादधुरिति तन्मतमनुवदन्समाधत्ते—इतीत्यादिपुष्पिताग्रया—

इति विमतिजुषं परे मुनीन्द्रा
निजगदुराद्यशरीरिणं तु मुख्यम् ।
जगदुदयकरं हिरण्यगर्भं
निखिलहृदम्बुजसूत्रमेव जीवम् ॥ ४ ॥

इतिशब्दोऽयं प्रोक्तविमत्यनुवाद्येव । अपरेऽन्ये । नन्वेवं चेत्तर्हि प्रागुक्तैकशरीरैकजीववादिसिद्धान्तबिन्द्वाद्युक्तमतसकाशादिदमपरं केषांचिदाचार्यवर्याणां मतं स्यात्तथा च पुनर्मतविरोधतादवस्थ्यमेवेत्यस्वरसादेवं व्याख्येयम् । परे अद्वैते ब्रह्मणि विषय इत्यर्थः । मुनीति । मननशीलसंक्रन्दनाः केचिदात्मनिष्ठा इति यावत् । इतीत्यादि । निरुक्तप्रकारकत्वतुल्यमेव वैमत्यशालिनं कंचिन्मुमुक्षुं प्रतीत्यर्थः ।

आद्येति । प्रथमोत्पन्नसमष्टिबुद्धिमूलीभूताविद्याप्रतिबिम्बमित्यर्थः । एवं च विद्याबिम्बीभूतेश्वरसृष्ट एव वियदादिप्रपञ्चः । सा च एकैवेति नोक्तशङ्कावकाश इत्याशयः । तु पुनः । मुख्यं समष्ट्युपाधित्वेन प्रधानमिति यावत् । एतेनान्ये व्यष्टिबुद्ध्युपाधयस्तु जीवाभासा एवेति व्यज्यते । अत एव । जगदिति । संकल्पमात्रेण विश्वकृताम् । ननु समष्टिलिङ्गशरीरोपहितचैतन्यरूपमुख्यजीवस्य । हिरण्यगर्भः समवर्तताग्र इति श्रुतेः । स वै शरीरी प्रथमः । स वै पुरुष ईश्वरः । आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्ततेति स्मृतेश्च हिरण्यगर्भत्वं प्रतीयते ।

तथा वायुर्वै गौतम तत्सूत्रं प्राणबन्धनं हि सौम्य मन इति च श्रुतेः सूत्रात्मत्वमपि प्रतीयते । तत्र किमिष्टं सिद्धान्त इति शङ्कायामुभयमपीत्याशयेन पुनस्तं विशि-

शब्दि—हिरण्येत्यादिपदाभ्याम् । बुद्धिप्राणाख्यज्ञानक्रियात्मकशक्तिद्वयप्राधान्यात्तस्य चन्द्रस्य सुधांशुहिमांशुवत्संज्ञाद्वयमप्युचितमेवेत्यभिप्रायः । अवधारणं तु स्थूलो-पाधिविशिष्टसमष्टिचैतन्यरूपविश्वरूपाख्यविराडादिव्यावृत्त्यर्थमेव । जीवमाहुरित्य-न्वयः ॥ ४ ॥

अथ मुख्यगदव्यन्यर्थं कथयति—तदित्यादिशिखरिण्या—

तदाभासा ह्येते त्वमहमितराद्यास्तु सकलाः
कृतं तैर्यत्पुण्यं तदतुलविपाके सति यदा ।
कश्चिज्जीवाभासे दृढतमविबोधेन निखिलं
तदज्ञानं नश्येदखिलममृतं स्यात्किल तदा ॥ ५ ॥

हेतुवचनमेतत् । तस्योक्तमुख्यजीवस्याऽऽभासा एव । एते साक्षिप्रत्यक्षास्त्वमहमादयः अन्येऽपि व्यष्टिजीवाः सन्तीति संबन्धः । अत्रेतराद्यपदाभ्यां तदादिपदशक्यानां ब्रह्मेतरजीवाभासानां च संग्रहः । तदज्ञानमिति । तदुक्तं सिद्धान्तबिन्दौ—अज्ञा-नोपहितं बिम्बचैतन्यमीश्वरः । अज्ञानप्रतिबिम्बितं जीव इति वेति । अत्र टीका न्यायरत्नावल्यां—अज्ञानोपहितमित्यादि । जीवोपाधौ मनो न निवेश्यते । हस्त-पादाद्यवच्छिन्नानामिव मनोवच्छिन्नानां भेदेऽपि जीवभेदास्वीकारात् । परं त्वज्ञानमे-वोपाधिस्तस्य चैकत्वमेव । लाघवात् । मायां तु प्रकृतिम्, अजामेकामित्यादिश्रुति-ष्वेकवचनादिति भाव इति । अखिलमद्वैतम् ॥ ५ ॥

ननु समुदायिनां मध्ये दैवात्कस्मिंश्चित्सामर्थ्यसमुदाये फलोपलब्धिपरदृष्टपूर्वे-ष्वाशङ्क्य तत्राऽऽदावुक्तादृष्टपरत्वं निरसयन्दृष्टान्तं संभावयति—कस्मिंश्चिदित्या-दिशार्दूलविक्रीडितेन—

कस्मिंश्चिद्भवने प्रसुप्तनृशते वह्निप्रवेशो यदि
स्याद्दैवात्सकलाः प्रबुध्य सहसाऽत्यन्तं यतन्ते द्रुतम् ।
द्वारोद्धाटन एव केनचिदयो तत्रेत्समुद्धाटितं
स्यात्तर्हि ततोऽखिलाः किल बहिस्ते यान्ति सद्यो यथा ॥६॥

यथा । कस्मिंश्चित्—अनियते । प्रसुप्तेति । प्रकर्षेण परमगाढत्वाल्पेन सुप्तं निद्रितं नृशतं मनुष्यशतकं यस्मिंस्तत्तथा तत्रेत्यर्थः । एतादृशे भवने गृहे भवना-गारमन्दिरमित्यमराद्धर्मशालादिसद्मनीत्यर्थः । यदि । दैवात्—अदृष्टवशात् । वह्नि-प्रवेशः स्याच्चेत्तर्हि । सकलाः सर्वेऽपि सुप्तनराः । सहसा प्रबुध्य जाग्रदवस्था-माप्येति यावत् । अत्यन्तं तत्रापि द्रुतं शीघ्रमेव । द्वारोद्धाटनमेव । यतन्ते प्रयत्नं कुर्वन्ति । अथो अनन्तरम् । केनचित्पुरुषेण । तन्निरुक्तगृहद्वारम् । समुद्धाटितं

मृषास्तर्हि ततो निरुक्तोद्घाटितद्वारेणैव । अखिलाः सर्वेऽपि तत्रत्यपुरुषास्ते मंक्ष किल तत्कालमेव । बहिर्यान्तीति योजना ॥ ६ ॥

अथैतद्दार्ष्टान्तिके योजयति—मुक्त्यर्थमित्यादिना तेनैव—

मुक्त्यर्थं प्रयतत्सु सत्सु निखिलेष्वाभासजीवेष्वलं
काप्यद्वैतविबोधतो विदलनं यास्यत्यविद्या यदा ।
सर्वद्वैतविनाशरूपममृतं ब्रह्मात्मना स्यात्तदा
सर्वेषामपि सद्य एव सहसा मुक्त्या समष्टेस्तथा ॥७॥

ब्रह्मात्मना—अद्वैतब्रह्मरूपत्वेन । तदा सर्वेषामपि । सद्य एव सहसा । समष्टेर्जीवस्य । मुक्त्या । सर्वेति । एतादृशम् । अमृतं कैवल्यम् । तथा तथा स्यादित्यन्वयः ॥ ७ ॥

फलितमाह—एतेनेत्यादिवसन्ततिलकया—

एतेन तर्हि मम मुक्तिपथाय यत्नो
व्यर्थोऽस्त्यतो विषयसौख्यभरैः कृतार्थः ।
स्यां कर्मणाऽहमिति रागिवरस्य शङ्का-
पङ्कोऽपि शुष्यति यदीरितयुक्तिदीप्तैः ॥ ८ ॥

एतेन निरुक्तयुक्त्युपपादनेन । अये श्रीगुरो यदि मुख्यजीवस्त्वेक एव निरुक्त-श्रुतियुक्तिभ्यां स तु यदा निरस्ताविद्यः स्यात्तदा सर्वेऽपि यूयं जीवाभासाः सद्य-मुक्तयो भविष्यथेति युक्तिसिद्धान्तस्तर्हि ममेत्याद्यहमित्यन्तं संबध्येति रागिवरस्य विषयलम्पटश्रेष्ठस्य शङ्कापङ्कोऽपि । यदीरितेति । कथितशारदादित्यदीप्तैः शुष्यतीति योजना । शिष्टं तु स्पष्टमेवेत्यलं पल्लवितेन ॥ ८ ॥

तत्रापि शङ्कते—लिङ्गेतिप्रभृतिगीत्या—

लिङ्गशरीरसमष्टिः सूत्रात्माऽपि प्रकल्पितो वाच्यः ।
तत्कल्पकः क इति हृदि समाकुलं प्राचुरपर आचार्याः ॥९॥

अथैवं शङ्कमानं प्रकृतशिष्यं प्रति प्रकृतश्रीगुरुरेवैवं शङ्काशालिनं कंचिन्मुमुक्षुं प्रति । अपरे आचार्यास्त्वेवमाहुरिति तदनुवादेन समाधत्ते—इतीत्यादिशेषेण । इतिशब्दोऽयं मोक्षशङ्कासमाप्त्यर्थः । कथ्यमानसमाधानप्रकारद्योतनार्थश्च काकाक्षिगोलकन्यायेन ज्ञेयः ॥ ९ ॥

तदेव समाधानं विशदयति—सर्वेषामित्यादिशार्दूलविक्रीडितेन—

सर्वेषामहमज्ञ इत्यनुभवादज्ञानतो जीवता
ब्रह्मैवाऽऽसमभूदितोऽन्यदखिलं पूर्वोक्तमेवेष्यताम् ।
ईशस्त्वत्र मतद्वयेऽपि कथितो बिम्बस्तमस्यन्तिमे
पक्षे यश्च पुरोक्तवाद इतरत्प्रोह्यं दिशैवानया ॥१०॥

अज्ञानतः । अज्ञानोपहितत्वादिति यावत् । तदुक्तं संक्षेपशारीरके—‘ ब्रह्मैव संसरति मुच्यत एतदेव दौवारिकं भवति संसरणं तु तस्य ’ इति । पूर्वोक्तमेव समष्टिलिङ्गशरीरोपहितचैतन्यमेव मुख्यो जीव इत्यनुपदोक्तपक्षस्थितमेवेत्यर्थः । इष्यतां स्वी क्रियतामिति यावत् ।

नन्वेवं चेत्तर्हि कोऽत्रानेकशरीरैकजीववादात्मके समष्टिलिङ्गशरीरावच्छिन्नचैतन्यमेव मुख्यो जीव इति कायव्यूहेषु योगी वाऽखिलशरीरेष्वहमज्ञ इत्यनुभवादज्ञानोपहितं ब्रह्मैव मुख्यो जीव इति च मतद्वयेऽपीश्वर इत्यतस्तमाह—ईशस्त्वत्रेत्याद्युत्तरार्धेन । तुशब्दः प्रोक्तशङ्काशामकः । अत्र मतद्वयेऽपि । ईशस्तु यः पुरा उक्तवादे, एकशरीरैकजीववादे, अन्तिमे चरमपक्षे तमसि, अज्ञाने विषये बिम्ब एव । चोऽवधारणे । पूर्वप्रकरणीयसप्तमपद्ये कथित उक्तः स एवास्ति ॥ १० ॥

एतन्मतप्रवृत्तिप्रयोजनमाह—जीवन्मुक्तीत्यादिस्रग्धरया—

जीवन्मुक्त्याख्यपक्षो न हृदि विजयते यस्य नष्टेऽपि मोहे
स्वोपादाने क्व मायाज्जगदिदमदृशोः शुक्तिरूप्यादिकेषु ।
इत्याद्यैस्तर्कजालैरुपादिदिशुरिमं वादमाचार्यवर्याः
सद्यो मुक्तीच्छुमेनं द्विविधमतयुतं भिन्नदेहैकजीवम् ॥ ११ ॥

अदृशेः— अदर्शनात् । इमं वादम् । एनमधिकारिणं प्रति आचार्यवर्या उपदिदिशुः ॥ ११ ॥

उपसंहरति—इतीत्यार्यया—

इत्यविरोधः सिद्धो नानादेहैकजीववादेऽपि ।
ऐक्यादुभयोर्मतयोः शुभयोर्यद्वद्वृषाकप्योः ॥ १२ ॥
इत्यनेकशरीरैकजीववादमतैक्योपपत्तिः ॥

वृषाकप्योः । हरविष्णू वृषाकपी इत्यमराद्धरिहरयोरित्यर्थः ॥ १२ ॥

———

अथैवं प्रकृतश्रीगुरुणा तावदनेकशरीरैकजीववादमतभेदाविरोधे समुपपादिते सति प्रकृतशिष्य एव तत्रापि तद्यो य इत्यादिश्रुत्यादिनिखिलप्रमाणसिद्धनानाजीववाद-विरोधमाशङ्कते—नन्वित्यादीन्द्रवज्रादिभिः सविस्तरम्—

नन्वत्र तद्यो य इतिप्रभृत्या श्रुत्यैव सार्धं सुविरुद्धमेतत् ।
न चानुवादोऽस्त्यमृतोक्तिबाधादङ्गीकृतौ किं न म एकजीवे ॥१॥

तदिदमाहुश्छन्दोगाः प्रजापतिविद्यायामद्वैतमुपक्रम्य—तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणां तथा मनुष्याणामिति । तत्राप्येकजीववादिनः शङ्कामुपन्यस्य प्रशमयति—न चेत्यादितृतीयपादेन। सर्वत्राज्ञातज्ञापकत्वेनैव प्रमाणसाधारणेनैव शास्त्रेऽपि प्रामाण्यं वक्तव्यम्। जीवनानात्वस्य तु प्रत्यक्षादिनैव क्लृप्तत्वात्। प्रकृते तदनुवादकत्वमेवेति तु नैव वाच्यम् । कुत इत्यत्राऽऽह—अमृतेति ।

स एव तदभवदिति ब्रह्माभेदेन कैवल्यकथनस्य बाधप्रसङ्गाद्धेतोरित्यर्थः । तत्रापि न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति श्रुत्यवष्टम्भेनेष्टापत्तिमाशङ्क्य निराचष्टे—अङ्गीकृतावित्यादिचरमचरणेन । प्रकृतश्रुतेः प्रत्यक्षादिप्रमाणसिद्धजीवनानात्वरूपसंख्याख्यधर्मस्यानुवादेन धर्मिणो जीवस्यैकस्यापि तत्त्वज्ञानान्मुक्तिर्निरुक्तश्रुत्या नैव सिध्येदित्यभिप्रायः ॥ १ ॥

ननु नायं दोषः । यतः सकलं शास्त्रं जीवमोक्षार्थमेव हि प्रवृत्तं भवति। तस्यापारमार्थिकत्वे निष्प्रयोजनतदनारम्भणीयत्वापत्तिरेव स्यात् । तस्मादानन्दरूपममृतं यद्विभाति एतावदरे खल्वमृतत्वमतोऽन्यदार्तम् । एष स आत्माऽन्तर्याम्यमृत इति च श्रुतिभ्यः संपूर्णद्वैतमूलीभूतानादिभावरूपाध्यस्ताविद्याध्वस्त्युपलक्षितनित्यसिद्धब्रह्मात्मैक्यस्थितिरेव मुक्तिः । समुदाहृतश्रुतिस्तु शिखी ध्वस्त इति न्यायेन जीवन्मुक्तत्वधर्मस्यैव लोकदृष्टिकल्पितत्वेनापारमार्थिकत्वाभिप्रायेति चेत्तर्हि इह नानाजीववादेऽपि प्रतिवादिनस्ते शास्त्रस्वरूपं महास्त्रं दण्डनिवारितं नैव भवेदित्याह—चेत्तत्रेत्यादीन्द्रवज्रापूर्वार्धेनैव—

चेत्तत्र शास्त्रत्वमहास्त्रमत्र न तद्भवेद्दण्डनिवारितं ते ।
जीवैक्यमज्ञातमतोऽस्य तत्र तात्पर्यमस्त्येति न यद्वदैतत् ॥२॥

नन्वज्ञाते:शास्त्रमर्थवदिति न्यायेनाज्ञाते जीवैक्य एव शास्त्रतात्पर्यं न तु ज्ञाते तन्नानात्व इति पुनरप्याशङ्क्य तत्रापि पृच्छति—जीवैक्यमित्याद्युत्तरार्धेन । यतो जीवैक्यमज्ञातम् । अतः । अस्य । अजो ह्येको जुषमाण इति जीवैकत्ववादिशास्त्रस्य । तत्र जीवैक्ये तात्पर्यमस्तीति यत् । एतद्वदेत्यन्वयः ॥ २ ॥

ननु किमत्र वक्तव्यमज्ञातत्वादेव जीवैक्य एव शास्त्रतात्पर्यमित्यतस्तत्र विकल्पयति—तदित्याद्युपेन्द्रवज्रया—

तदस्ति किं मुख्यमुतास्त्यमुख्य-
माद्येऽपसिद्धान्त उपैति दोषः।
अन्त्येऽपि संख्यात्मकधर्म एव
वाच्यं हि धर्मी स्फुट एव जीवः ॥३॥

तत् प्रत्यक्षादिप्रमाणागम्यजीवैक्ये शास्त्रतात्पर्यमित्यर्थः। तत्राऽऽद्यं प्रत्याह—आद्य इत्यादिद्वितीयपादेन। अद्वैतब्रह्मण्येव हि निखिलवेदान्तशास्त्रतात्पर्यमिति घण्टाघोषः। स च जीवैक्यस्य प्रत्यक्षाद्यगोचरत्वेन वेदान्तीयमुख्यतात्पर्यविषयकत्वेऽपकल्पितः स्यादित्याशयः। एवमन्त्यमपि निराकरोति—अन्त्येऽपीत्याद्युत्तरार्धेन।

ननु कुतः संख्यात्मक एकत्वसंख्यारूपे धर्मेऽखिलाद्वैतशास्त्रतात्पर्यं स्यादित्यत्राऽऽह—हीत्यादिविशेषणेन। हिर्हेतौ। यस्माद्धेतोः पारमार्थिकस्वप्रकाशत्वेनाहमस्मीत्याद्याबालकमलासनमनेकजीववादिवदेकजीववादिनोऽपि ते जीवः प्रत्यक्ष एव साधारण्याद्धर्म्यस्त्यतस्तत्राज्ञातत्वाभावादेकत्वसंख्याख्यधर्म एवाखिलवेदान्तशास्त्रतात्पर्यविषयत्वे परिशेषाद्विरुद्धापसिद्धान्तापातः पुनस्तदवस्थ एवेति भावः ॥३॥

नन्वेवं तर्हि कोऽस्य श्रुतेस्तात्पर्यं किं जीवनानात्वे किंवा जीवैक्ये। नाऽऽद्यः। अपसिद्धान्तात्। नान्त्य। त्वयाऽपैव निराकृतत्वात्। तत्राऽऽह—तय इत्यादीन्द्रवज्रया—

तयो य इत्यत्र तु मुक्तिरेव
ब्रह्मात्मरूपैक्यवपुः श्रुतीष्टा।
ज्ञानेन जीवस्य तु तस्य तस्य
ततोऽत्र तात्पर्यमिहोति मुख्यम् ॥ ४ ॥

अत्र स्वप्रकाशाद्वैतब्रह्मात्मैक्यविषयकाविद्याध्वंसोपलक्षिताचिन्मात्र इत्यर्थः। अपरं तु सरलमेव ॥ ४ ॥

तत्रापि शङ्कां समुत्थाप्य तत्खण्डनं प्रतिजानीते—न चेत्यादिभुजङ्गप्रयातेन—

न चोद्दिश्य तं तं श्रुतिर्जीवमस्य
स्वबोधेन कैवल्यमस्मिन्विधत्ते।
विधेयांश एव प्रधानं ततः स्या-
दिहैवं श्रुतेर्हार्दमेवं नु वाच्यम् ॥ ५ ॥

श्रुतिः—तथो य इत्यादिः। इह संसारे। तं तं देवादिशरीरावच्छिन्नचेतन्यस्व-पम्। जीवं चिदाभासमेव। उद्दिश्य। अस्य स्वेति। नैजवास्तवस्वरूपाद्वैतब्रह्मात्मैक्य-विषयकाप्रतिबद्धापरोक्षप्रमाविशेषेणेति यावत्। कैवल्यमस्मिन्प्रकृतवाक्ये। विधत्ते प्रतिपादयति। ततो हेतोः। विधेयांश एव प्रतिपाद्यकैवल्यलक्षणस्तदर्थविशेष एव। प्रधानं मुख्यं प्रतिपाद्यम्। भवेत्। एवमेव इत्थमेव। श्रुतेः श्रुत्यधिष्ठातृदे-वतात्मेश्वरस्य। हार्दं रहस्यम्। नु इति वितर्के। एवं—इति न च वाच्यं नैव वक्तव्यमिति संबन्धः॥ ५॥

तत्र हेतुं प्रतिपादयति—प्रत्यबुध्यतेत्यादिस्वागतया—

प्रत्यबुध्यत तथाऽभवदेवं लङ् भवेद्विफल एव तथात्वे।
तेन भूतशतजीवविमुक्तिः संमतैवमुररीकरणीयम्॥ ६॥

तथात्वे निरुक्तमुक्तिरूपविधेयांशमात्रविषयकनिरूपितश्रुतिमुख्यतात्पर्यकत्वे सती-त्यर्थः। प्रत्यबुध्यत। तथा तद्वत्। अभवत्। एवमुक्तरूपः। लङ् आख्यात-विशेषः प्रथमपुरुषैकवचनात्मकः। विफल एव निष्प्रयोजन एवेत्यर्थः। भवेद् भूयादिति योजना।

यदि भवदुक्तरीत्योदाहृतश्रुतेः कैवल्यमात्रविषयकं तात्पर्यं स्यात्तर्हि तत्प्रयुक्तमु-क्तरूपं भूतार्थकलङ्द्वयं निरर्थकमेव भवेदिति भावः। एतेनात्र तर्कोऽपि द्योत्यते। फलितमाह—तेनेत्याद्युत्तरार्धेन। तेन निरुक्तानुपपत्त्युपपादनेन। इह वाक्य इति आर्थिकम्। भूतेति। संजातासंख्यातजीवकैवल्यमिति यावत्। संमता मान्याऽस्ता-स्त्येवम्। उररीकरणीयं स्वीकर्तव्यमित्यन्वयः॥ ६॥

एवमप्यत्रैकजीववादिश्रुतिवाक्यनिरवकाशत्वमाशङ्क्य तत्समाधानमपि प्रति-जानीते—न चेतीत्याद्युपेन्द्रवज्रया—

न चेति जीवैक्यपरश्रुतीनां नैवावकाशस्तदमूभिरेव।
अनेकजीवानुवदच्छ्रुतीनामेवास्तु बाधस्त्वघुनेति वाच्यम्॥७॥

इति उक्तरीतिक एव। यदि सिद्धान्तस्तर्हि। जीवेति। अजो ह्येक इत्याद्येक-जीववादिश्रुतीनाम्। यतः। नैवावकाशस्ततस्तस्माद्धेतोः। अमूभिरेव—एकजीववादि-श्रुतिभिरेव। अनेकेति। अनुवादोऽवधारित इति वचनात्प्रत्यक्षादिप्रमाणसिद्धानेक-जीवाननुवदन्त्य एतादृश्यो याः श्रुतयः।

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीति। अन्धं तमः प्रविशन्ति ये संभूतिमुपासत इति।

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमित्यादयः शतशः प्रसिद्धा एव तासामेवेत्यर्थः । तु पुनः । अधुना लाघवादिविचारावसरे । बाधोऽस्त्विति न च वाच्यं नैव वक्तव्यमिति संबन्धः ॥ ७ ॥

अत्रापि हेतुं स्फुटयति—प्रागेवेत्यादीन्द्रवज्रया—

**प्रागेव तासामवकाशराशेः प्रदर्शितत्वादिति तद्य एषा ।**
**सिद्धा श्रुतिः स्वार्थवती ततोऽसौ मुक्तिः कथं ज्ञेऽज्ञचये च बन्धः ॥८॥**

पूर्वप्रकरण एव दृष्टिसृष्टिश्रुतिविचार एवेति यावत् । निगमयति—इतीत्यादिस्वार्थवतीत्यन्तेन । ननु भवत्वेवं, ततः किं प्रकृत इत्यत आह—तत इत्यादिशेषेण । अज्ञचय इति च्छेदः ॥ ८ ॥

एवं प्रकृतशिष्येण प्रकृतश्रीगुरुं प्रति प्रश्ने कृते सति तमनूद्य स तावत्प्राचीनगुरुशिष्यसंवादेन सादृश्यात्समाधातुं तं कथयति—इतीत्यादिप्रबोधितया—

**इति मुग्धदृशं भवादृशं**
**प्रति केचिद्विबुधाः समादधुः ।**
**अमृतार्पणतश्चकोरव-**
**त्परिपूर्णाद्विजराट्करा इव ॥ ९ ॥**

तत्रानुरूपमुपमानमाह—अमृतेत्याद्युत्तरार्धेन । चकोरेति । चकोरपक्षिणं प्रति यथा । परिपूर्णेति । संपूर्णचन्द्रकिरणाः । अमृतेति । तन्मुखं प्रति स्वसंचारतः । क्षुत्क्षपणलक्षणपरमशिशिरीकरणेन समादधति तथा । परीति । पूर्णशरत्कालिकामृतकिरणसमसबाह्याभ्यान्तरनैर्मल्यशौक्ल्यशान्तिशालित्ववन्तः ।

पक्षे सिद्धयोगीन्द्रवरदहस्ता इव । एतादृशः केचिद्विबुधाः पण्डिताः । चकोरेति । स हि सायं सततं प्राचीमेव संपूर्णचन्द्रोदयाकाङ्क्षया पश्यन्मूढदृष्टिर्भवति तद्वदुक्तसंदेहव्याहतबुद्धिं भवादृशं त्वत्सधर्माणमधिकारिणं प्रति । इति वक्ष्यमाणप्रकारेण । अमृतेति । कैवल्यप्रदप्रबोधप्रकाशेनेति यावत् । समादधुरिति संबध्यते ॥९॥

तमेव प्रकारं प्रकटयति—एकेत्यादिस्रग्धरया—

**एकाऽविद्या हि तस्यास्त्वपरिमितलवा ब्रह्मसंछादनेशा-**
**स्तांस्ताञ्जीवान्प्रतीति श्रुतिकवरभवादद्वितीयात्मबोधात् ।**
**तत्तज्जीवस्य तत्तल्लवविगमवशादेव बिम्बेशतात्मा**
**सर्वध्वंसे क्रमेणाद्वयविमलचिदात्मैव मुक्तिर्भवित्री ॥ १० ॥**

तांस्तान् स्वस्वप्रतिबिम्बत्वेन प्रसिद्धानित्यर्थः। इति हेतोः। श्रुतीति। वेदान्तमहावाक्यजादित्येतत्। बिम्बेशतेति। यावत्सर्वजीवविमुक्तिः स्यात्। प्रतिकल्पं तत्तज्जीवीयब्रह्मावरणाविद्यांशनिवृत्तिक्रमेण तावत्कालपर्यन्तमवशिष्टाविद्यालेशप्रतिबिम्बितजीवनिरूपितबिम्बेश्वरस्वस्वरूपेति यावत्। तदूर्ध्वं तु कथं मुक्तिः स्यादित्यत्राऽऽह—सर्वेत्यादिशेषेण। तदुक्तं सिद्धान्तलेशसिद्धान्तसूक्तिमञ्जर्युपान्त्यपद्येन—

आसर्वमुक्तिपरिकल्पितसत्यकामसंकल्पकल्पितजगत्स्थितिभङ्गसर्गम्। सत्यं स्वतस्तु सुखचिद्घनमद्वितीयं मुक्तोपसृप्यमहमस्मि विशुद्धतत्त्वमिति। अत्र पूर्वादिमतास्वरसपूर्वकमेवोत्तरोत्तरमतोपन्यसनमिति सकलयथाश्रुतसांप्रदायिकरीत्या त्विदं मध्यस्थमतमेव चरमपरमसिद्धान्ततामापाद्यते तत्त्वनुचितमेवातस्तत्तन्मुमुक्षुबुद्ध्यनुजिघृक्षयैव तत्तदाचार्यप्रवृत्तिर्न तु स्वस्वमतप्रतिष्ठापयिषयेत्येव निखिलाद्वैतिसिद्धान्ततत्त्वरहस्य श्रीगुरुचरणमात्रप्रसादस्फूर्यमाणमित्येव ध्येयं निर्मत्सरसूरिवरैः॥ १०॥

तत्रापि कश्चिन्मुमुक्षुः शङ्कमान एवेति तच्छङ्कामनूद्य तं प्रत्यन्य आचार्याः समादधिर इत्यभिप्रेत्य—हा रत्नगर्भेतिप्रभृत्युपजात्या—

हा रत्नगर्भापरमाणुतोऽधिका
हिरण्यगर्भा अभवन्भवेऽस्मिन्।
तथाऽप्यनन्ताः प्रतिभान्ति जीवाः
कथं व्यवस्थेत्यमुमाहुरन्ये॥ ११॥

इतीति। यदुक्तं पूर्वपक्षे अविद्या तावदेकैव यद्यप्यजामेकामित्यादिश्रवणाद्भाष्यादरणाच्च, तथाऽपि तस्याः सम्यक्संख्याः प्रत्येकं ब्रह्मावरणनिपुणाः सप्रतिबिम्बा एवांशास्तेन यस्य यस्य प्रतिबिम्बरूपस्य तत्त्वज्ञानेनोक्ताविद्यांशनाशः स तु स्वेतरप्रतिबिम्बदृष्टिनिरूपितबिम्बत्वावच्छिन्नचैतन्यरूपेश्वरैक्यलक्षणां मुक्तिमाप्नोत्येवं क्रमेण सर्वजीवाविद्यांशनाशे सर्वेशो शुद्धाद्वैतचिन्मात्रैक्यरूपा मुक्तिस्तदुत्तरं भविष्यतीति तदयुक्तम्। अनन्तहिरण्यगर्भाभिधजीवविमुक्तावप्यनन्तजीवोपलब्धेरिति शङ्काकुलम्। अमुं बुद्धिस्थं कंचिन्मुमुक्षुमित्यर्थः। अन्य इतरे आचार्याः। इति वक्ष्यमाणं व्यवस्थाप्रकारमाहुरितीतिशब्दस्त्राप्यनुकृष्यान्वयः। शिष्टं तु स्पष्टमेव॥ ११॥

इतीति किमित्यपेक्षायां तत्प्रपञ्चयति—अरे इत्यादिशिखरिणीस्वागताभ्याम्—

अरे प्रौढे हेतुर्भुवि भवति तर्कैकलवभा-
क्त्वतेऽत्यन्ताभावस्फुरणनियमे तत्प्रतिरिपोः।

**अभावः सांसर्गस्तदुपम इहाऽऽत्मन्यपि भवे-**
**दविद्यायाः सत्त्वे हृदयकृतसंबन्ध उदितः ॥ १२ ॥**

आत्मा वा अरे इत्यादिवच्छिष्यत्वान्नीचसंबोधनम् । यथा इति आर्थिकम् । यद्यपि न्यायैकदेशित्वेऽपि सद्युक्तियुक्तत्वात्प्राचीनाचार्यार्चनीय इत्यर्थः । एतादृशे । तर्कमते । न्यायैकदेशित्वभाङ्मत इति यावत् । भुवि भूतलावच्छेदेन । अत्यन्तेति । घटात्यन्ताभावविषयकप्रमानैयत्यविषय इत्येतत् । तदिति । घटात्यन्ताभावस्य प्रतियोगिनो घटस्येत्यर्थः ।

सांसर्गः संसर्गसंबन्धी प्रागभावादिलक्षणः संसर्गाभाव इति यावत् । हेतुः कारणं भवति । तदुपमस्तत्सदृशः । इह स्वप्रकाशे । आत्मन्यपि प्रतीच्यपि । अविद्यायाः सत्त्वे विषये । हृदयेति । तत्कार्यभूतान्तःकरणजनितसंसर्ग एवेत्यर्थः । उदितः प्रकाशमानः । हेतुर्भवतीति संबन्धः ॥ १२ ॥

ननु भवतु एवं तार्किकमते भूतले घटात्यन्ताभावमाननियमे तत्संसर्गाभावो यथा हेतुस्तद्वत् आत्मन्यपि अविद्यायाः सत्त्वेऽन्तःकरणतादात्म्याध्यास एवाहमज्ञ इत्यनुभवात्कारणं, अथापि कथं तन्निराकरणेन निर्वाणसिद्धिरित्यपेक्षायां तत्संक्षिपति—यस्य यस्येत्यादिना—

**यस्य यस्य हृदयस्य विनष्टो-**
**ग्रन्थिरात्ममितितः सुदृढायाः ।**
**तस्य तस्य बत तत्तदविद्या-**
**योगनाशवशतोऽत्र विमुक्तिः ॥ १३ ॥**

बद्धादिव्यवस्थामपि कथयति हृदयस्य, अहंकाराध्यासात्मकान्तःकरणस्येत्यर्थः । यस्य यस्य तत्प्रतिबिम्बात्मनो जीवस्येति शेषः । ग्रन्थिर्निरुक्ताहंकारात्मकः, चिज्जडाभेदाध्यास इत्येतत् । सुदृढायाः परमप्रबलायाः । एतेन विषयवासनाप्रमाणासंभावनाप्रमेयासंभावनासाधनविपरीतभावनाफलविपरीतभावनाभिधपञ्चविधप्रतिबन्धवैधुर्यं तत्र ध्वन्यते । आत्मेति । अद्वैतब्रह्मात्मैक्यसाक्षात्कृतेरिति यावत् । विनष्टः प्रध्वस्तः । बतेति हर्षे ।

अत्र लोके । तस्य तस्य जीवस्य । तत्तदित्यादि । तत्तदन्तःकरणकारणीभूताज्ञानतादात्म्याध्यासविध्वंसेनेत्यर्थः । विमुक्तिः, विशिष्टा निरुक्ताविद्याध्वस्तिरूपा विदेहकैवल्यलक्षणा यावत्प्रारब्धं बाधितद्वैतभानलक्षणा जीवन्मुक्तिश्च भवति इति योजना ।

तथा चानादिभावरूपाया अविद्यायाः कार्याण्यप्यन्तःकरणाख्यान्यद्वितीयब्रह्मप्रतिबिम्बग्रहणयोग्यानि तत्त्रैगुण्यान्वितान्यप्यनादिजीवोपाधिभूतान्यनादीन्येव तत्तत्त्वान्तर्गतनिरुक्ताद्वैतचित्प्रतिबिम्बीभूतजीवान्प्रति स्वोपादानीभूतोक्तरूपाविद्यासंबन्धद्वारा संसारहेतुभूतान्यनन्तान्येवेति पर्यवसितम् ।

अन्तःकरणैकतादात्म्यरूपाहंकाराध्यासतद्ध्वंसयोरेव बन्धमोक्षप्रयोजकतोक्तेः । एवं च द्रोणो बृहस्पतेरंश इत्यादिस्मृतौ लोके चेक्षुदूर्वादिकाण्डरुहेषु वटादिशाखारुहेष्वपि वृक्षेष्वंशभूतजीवान्तरस्याप्येकस्मादुत्पत्तिदर्शनं कथं बन्धादिव्यवस्था चेति चेच्छृणु । सर्वमिदं बृहद्योगवासिष्ठाभिधमहारामायणीयनिर्वाणप्रकरणोत्तरार्धगतपञ्चविंशत्युत्तरशततमसर्गस्थाष्टादशश्लोकटीकायामानन्दबोधेन्द्रसरस्वतीभिश्चिन्तितम् ।

तद्यथा । नन्विदमयुक्तम् । चतुर्ष्वपि शरीरेष्वेको हि विपश्चिज्जीवो योगी कायव्यूहेष्विव विभक्तः स्थितः । तस्य पश्चिमशरीरे विष्णुप्रसादाज्ज्ञानेन निर्वाणप्राप्तौ कोऽन्यः पुनः पूर्वविपश्चिच्छरीरे चन्द्रोपासनया चन्द्रलोकं यायात् । नहि एकस्य एव जीवस्य क्वचिन्मुक्तिः क्वचिद् बन्धश्च युगपत्समञ्जसौ । मुक्तिफलस्य पाक्षिकत्वपरिच्छिन्नत्वयोरापत्तेः ।

न चैकस्य देहचतुष्टयधारणेन जीवचतुष्टयभावो जीवान्तरोत्पत्तिर्वा युक्ता । आद्ये चतुर्धाविभागे पूर्वजीवस्य नाशापत्तेः । द्वितीयेऽप्यभिनवोत्पन्नानां कामकर्मवासनादिहीनाभावेन संसारानापत्तेः । नच भोगवैचित्र्यमिव बन्धमोक्षवैचित्र्यं कर्मभिर्मायया वाऽविरोधेन निर्वोढुं शक्यम् । मोक्षस्य कर्मतन्त्रत्वात्, विश्वमायानिवृत्तिश्रुतिविरोधाच्चेति चेत्सत्यम् ।

अयमत्राऽऽशयो भगवतो वसिष्ठस्य लक्ष्यते । न जीवो नाम ब्रह्माकाशादतिरिक्तः कश्चिदस्ति । ब्रह्मैवानाद्यन्तःकरणोपाधिषु मायया विभक्तं तत्तत्कामकर्मवासनानुसारेण संसरदिव विभाव्यमानं जीव इत्युच्यते । तत्रान्तःकरणानां दीपवद् बहूनां मेलने एकत्वमुपचयश्च भवति । एकस्य च योगदेवताप्रसादादिनिमित्तवशाद्युगपद्विरुद्धानेकदेशभोग्यकर्मोद्भवाच्चानेकभावोऽपि भवति ।

तत्र यदा बहूनां जीवानां तुल्यदेशकालभोग्यसमानकामकर्मवासनोद्भवस्तदा तद्भोगाय मेलने एकजीवत्वमेव भवति यावद्विरुद्धदेशभोगहेतुकर्मोद्भवं लाघवादेकमेव भोगायतनं शरीरं संपद्यते । यथा युधिष्ठिरजीवो धर्मस्येन्द्रस्य च मेलनेनैको जीवः । यथा वा अर्जुनजीवो द्वयोरिन्द्रयोर्नरस्य च मेलनेनैकः । यथा वा नकुलसहदेवयोरिन्द्रस्याश्विनोश्च मेलनेनैको जीवः । द्रौपद्याश्च नाडायनीलक्ष्मीगौरीशचीमेलनेनैको जीवः । पञ्चेन्द्रोपाख्यानादिपर्यालोचने प्रसिद्धः । यथा वा अग्निवाय्वोश्चन्द्रशापात्, अगस्त्यवतारे मेलनेनैको जीव इत्याद्यूह्यम् ।

एकस्य जीवस्यानेकोपाधिविभागेऽनेकजीवताऽपि । इन्द्रहन्तारं पुत्रं कश्यपाद्गर्भे प्राप्याशुचित्वेन सुप्ताया दितेरेकजीवैकशरीरकस्य गर्भस्येन्द्रेण प्रथमं सप्तधा छेदने सप्त जीवाः। तत एकैकस्य सप्तधा छेदने जातानामेकोनपञ्चाशन्मरुतामेकोनपञ्चाशज्जीवाः संपन्नाः । वटेक्षुदूर्वादीनां च शाखाकाण्डरुहां प्रतिशाखं प्रतिकाण्डं च प्ररोहेण जीवनदर्शनात् एकस्य नानाजीवात्मनौपाधिको विभागश्च प्रसिद्धतर एव ।

इत्थं च प्रकृतेऽपि चतुर्णां जीवानां यावत्समानकामकर्मोद्भवमेकदेहतया राज्यपरिपालनम् । विरुद्धभिन्नदेशभोग्यकर्माद्युद्भवे च देहादिविभागे च दिगन्तरप्रसर्पणमिति कल्पने वा एकस्यैव विपश्चिज्जीवस्योपाधिविभागेन मरुद्वच्चतुर्जीवभावोऽभूदिति कल्पने वा एकमुक्तौ न सर्वमुक्तिप्रसङ्गः ।

न च बहूनां मेलनेनैकजीवारम्भे तस्याभिनवस्य कर्माभावात्संसारानुपपत्तिः । आरम्भवादेनाभिनवजीवोत्पत्त्यनभ्युपगमात् । गङ्गायमुनयोर्मेलनेनैक्यापत्तावपि अभिनवगङ्गोत्पत्तिबुध्द्यभावेन सैवेयं गङ्गेति प्रत्यभिज्ञया द्वयोरप्येकगङ्गात्मनाऽवस्थानवदनादिजीवयोरैक्येनावस्थाने बाधकाभावात् ।

उपाधिद्वयस्य मेलनेनैक्य उपहितेऽपि मेलनैक्यस्य सर्वप्रत्ययसिद्धत्वात् । एकत्वेनापि प्राक्तनकर्मभोगसंभवात् । एवमेकस्य चतुर्जीवभावे प्रत्यभिज्ञया चतुर्णामपि प्राक्तनजीवादभेदेन तद्गतकामकर्मवासनाराशीनां चतुर्धा विभागेन व्यवस्थितेः संसारेणोपपत्तिः । तत्र एकस्य मुक्तावप्यपरस्य ज्ञानाभावात्संसरणोपपत्तिश्च ।

न चैव मुक्तिफलस्य पाक्षिकत्वपरिच्छिन्नत्वयोः प्रसङ्गः । व्यष्टिजीवामुक्तावपि समष्टिहिरण्यगर्भजीवस्याधिकारान्ते मुक्तिवदुपपत्तेः । नहि समष्ट्यात्मनो हिरण्यगर्भस्य तत्त्वज्ञाने व्यष्टीनां मुक्त्यभावे पाक्षिकपरिच्छिन्नं मोक्षफलम् । यत्र वर्तमानेऽपि व्यष्टिसमष्ट्यभेदेन मुक्तिसंकरस्तत्र सांप्रतिके जीवभेदे सति प्राक्तनतदभेदमात्रेण मुक्तिसंकरापादनस्यानवसर एव । भूयश्चान्ते विश्वमायानिवृत्तिः, इति श्रुतिरपि तत्तज्जीवोपाधिकृतस्वाविद्यानिवृत्तिपरा । अन्यथा एकमुक्त्यैव ज्ञानशून्यानामपि सर्वजीवानां मुक्त्यापत्तेः । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् । बहवो ज्ञानतपसा पूता मद्भावमागता इत्याद्यनेकश्रुतिस्मृतिवैयर्थ्यापत्तेश्च ।

न चेदानींतनमन्दाधिकारिणो भाविबहुतरजन्मलभ्यमोक्षप्रत्याशया साधनानुष्ठानं न स्यान्ममैकस्यानेकजीवभावे कचिन्मोक्षेऽपि कचिद्बन्धानुवृत्त्यनिवृत्तिः स्यादिति शङ्कयाऽनिर्मोक्षशङ्कानपायादिति वाच्यम् । मोक्षसाधनानुष्ठानप्रवृत्तेः स्वल्पमप्यस्य

धर्मस्य त्रायते महतो भयात्। नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति। अनेकजन्मसंसिद्धस्ततो याति परां गतिमित्यादिस्मृतिप्रामाण्यानुरोधेनोत्तरजन्मसु नानाजीवात्मना अविभागस्य विभागे वा सहैव साधनसंस्कारैर्विभागात्सर्वत्र क्रमेणावश्यं ज्ञानोदयस्य वाऽनुमानेन साधनानुष्ठाने प्रवृत्त्युपपत्तेः।

वर्णिता हि तथैव भिक्षुजीवटो(शतो)पाख्या भिक्षोः साधनानुष्ठानवतः प्रापणादिकसंकल्पप्राप्तनानाजीवभावस्यान्ते शतरुद्रभावे सर्वेषां तद्विभागजीवानां ज्ञानावाप्तिर्मुक्तिश्चेति। न चैव सर्वजीवमुक्त्यनापत्तिः। इष्टापत्तेः। मायादृष्ट्या मायानन्त्यस्य। न रूपमस्येह तथोपलभ्यते। नान्तो न चाऽऽदिर्न च संप्रतिष्ठा। नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततमित्यादिस्मृतिसिद्धत्वात्। तत्त्वदृष्ट्या तु जीव एव नास्ति कस्य मुक्त्यनापत्ति, न च अतोऽन्यदार्तमिति श्रुतिविरोधः। तस्याः श्रुतेर्व्यक्त्यार्तिमात्रेणाप्युपपत्तेः। प्रवाहानन्त्येऽप्यविरोधात्।

चरमव्यक्तिनाशस्यैव प्रवाहनाशतया सर्वजीवसंसारचरमव्यक्त्यसिद्धौ तन्नाशस्याप्रसिद्धेः। प्रकृते तु पश्चिमविपश्चित एकस्यैव भगवद्भक्तिपरिपाकोदितात्तवनुग्रहाज्ज्ञानलाभो नान्येषामिति तस्य एकस्यैव मुक्त्युपपत्तिरितीति। नचैवमपि संध्यावन्दनाग्निहोत्रादिनित्यकाम्यसाधारणकर्मण्येव निरुक्तरीत्या संभावितस्वनानात्वप्रयुक्तस्वनरकाविभीत्यवश्यंभावादिशङ्कया प्रवृत्त्यभाव इति वाच्यम्।

किं निरुक्तशास्त्रार्थज्ञानात्प्राक्कर्मप्रवृत्त्यभाव आपाद्यतेऽनन्तरं वा। नाऽऽद्यः। असंभवात्। नान्त्योऽपि। स्वल्पमप्यस्य धर्मस्येत्याद्युदाहृतस्मृतिभिरेवेश्वरार्पणैकबुद्ध्या कर्मणि प्रवृत्तेः संभवात्। तस्माद्दुरूहरहस्यानाकलनमूलिका एवेयमाशङ्का इति शान्तो भव। एतेनात्र एतदपि प्रत्युक्तम्। यत्कैश्चिदुच्यते सिद्धान्ते हि अविद्यारूपस्य कालस्यानादित्वात् प्रतिकल्पं तावत् हिरण्यगर्भाख्यसमष्टिजीवानां 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वमभवत्' इति श्रुतेस्तत्त्वज्ञत्वेन मुक्तेः संभवात्।

तथा तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामितिश्रुतेर्व्यष्टिजीवानामपि तत्त्वज्ञानेन बहवो ज्ञानतपसा पूता मद्भावमागता इति स्मृतेः शतशो मुक्तत्वाच्चाद्य स्वल्पा एव जीवाः समुपपद्येरंस्तत्तु प्रत्यक्षादिसकलप्रमाणविरुद्धमेव। जाग्रति सर्वत्र तदानन्त्यस्यैवोपलम्भादिति। निरुक्तरीत्या शाखाग्रहादिनिदर्शनेन जीवानन्त्यानुभूत्युपपत्तेरिति दिक्।

ननु अत्र यो यो धूमवान् सोऽग्निमान्, इत्यादिवत्तच्छब्दानावृत्त्यैव प्राप्तमिति

चेत् । न । तन्निमित्तभेदेन व्यवस्थायाः सूपपन्नत्वात् । तदुक्तं मदीयसाहित्यसारीय-षष्ठरत्ने वीप्सां प्रकृत्य—

किं चाऽऽकर्णय बीजं त्वं यत्पदे तत्पदेऽथवा ।
द्वित्वापन्नस्तु वीप्सायां यत्र साकल्यसूचकः ॥
आदेशो वर्तते तत्र नोत्तरत्र स युज्यते ।
यो यः साधुः स वन्द्यः स्यात् स स मुक्तो य आत्मवित् ॥
यत्रोभयत्र वीप्सैव क्रमभेदविवक्षया ।
तत्र रूपद्वयेनैव यत्तद्भ्यां सर्वसंग्रहः ॥
यं यं विषयमादत्ते बुद्धिर्बोधविभूषिता ।
तं तं तृणीकरोत्येव सतीव स्वपतीतरम् ॥
स सोऽवयव एवैति कान्तायाः स्वान्त आशु मे ।
श्रुत्यन्तं चिन्तये यं यं हन्त शान्तिः कुतोऽन्यतः ॥ इति ।

विस्तरस्त्वेतट्टीकायामेव सरसामोदाभिधायामनुसंधेय इत्यलं प्रसक्तानुप्रसक्त्या ॥ १३ ॥

अत्रापि प्रकृतशिष्य एवाऽऽशङ्कते-- एवमित्यादिस्रग्धरया—

एवं संबन्धनाशेऽप्युपरमति कदा केन वा स्वेति शङ्का-
पङ्कातङ्काङ्कमेके समभिजगदिरे बुद्धतत्त्वं ह्यविद्या ।
ध्वस्तां व्यक्तिं न जातिस्त्यजति किल यथा तद्वदेवोज्जहाति
प्रत्येकं जीवमेवं भवति समुचिता मुक्तिरित्यार्यवर्याः ॥ १४ ॥

समाधत्ते च प्रकृत एवाऽऽचार्यः प्रकृतसमानशङ्कं कंचिन्मुमुक्षुं प्रति केषांचिदाचार्याणां समाधानमनुवदन् । अयि सद्गुरो इत्यार्थिकम् । एवं प्राक्तनपद्योक्तरीत्या । संबन्धेति । अहमज्ञ इति सर्वसमनुभूयमानमूलाविद्याकार्यभूतान्तःकरणतादात्म्याध्यासध्वंसे सत्यपीत्यर्थः । सा मूलाविद्या निरुक्तसंबन्धकारणीभूतेति यावत् । केन करणेन । कदा कस्मिन्काले वा । तत्तज्जीवीयनिरुक्तान्तःकरणाध्यासलक्षणसंबन्धध्वंसहेतुषु तद्यो यो देवानां प्रत्यबुध्यतेत्यादिश्रुत्या बहवो ज्ञानतपसा पूता मद्भावमागता इति स्मृत्या चासंख्यातमुक्तिप्रयोजकेषु तत्त्वज्ञानेषु जातेषु सत्स्वप्येकस्यास्तदुपादानीभूतायास्तावदविद्यायास्त्वद्याप्यध्वस्तत्वात्कदा वेति प्रश्नः समुचित एवेति भावः ।

उपरमति विनश्यति । इति निरुक्तप्रकारेण । शङ्केति । शङ्कारूप एव पङ्कः कर्दमस्तेन लिप्तत्वाद्य आतङ्कः रुक्तापशङ्कास्वातङ्क इत्यभिधानात्संतापस्तेनाङ्को मुखका-

लिमलक्षणः कलङ्को यस्य तमित्यर्थः । कंचिद्बुभुत्सुं प्रति इत्यप्यार्थिकमेव । एके केचित् । आर्येति । पूज्यतमेज्यास्तत्त्वनिष्ठा इति यावत् । तु पुनः । यथा । जातिर्घटत्वादिसामान्यरूपा प्रसिद्धैव । सा तावत् । ध्वस्तां नष्टाम् । व्यक्तिं घटाद्याकृतिम् । त्यजति किल जहात्येव । तद्वत् । तत्तुल्यमेव ।

बुद्धेति । तत्त्वसाक्षात्कारिणमेव । हिरवधारणे । अविद्या । प्रत्येकं जीवं निरुक्ततत्त्वसाक्षात्कारक्षण एव । उज्जहाति पुनः संसर्गप्रतियोगिकत्रैकालिकाभावलक्षणोत्कर्षेणैव जहाति नतु घटादिज्ञानेन तदाश्रिताज्ञानविषयतावत्किंचित्कालम् । जहाति त्यजतीत्यर्थः । एवमनया रीत्या मुक्तिः समुचिता युक्ता । भवतीति । समभिजगदिरे श्रुतियुक्त्यनुभूतिपूर्वकं समादधिर इति संबन्धः ॥ १४ ॥

ननु एवमपि अविद्या तु ब्रह्मात्मैक्यविषयकतत्त्वसाक्षात्कारादविनाशं नैतावतापि प्रयासेन नाशमुपगताऽभूदिति तस्यां सत्यां पुनरज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः इति स्मृतेः संसारापत्तितादवस्थ्यमेवेति चेत् सत्यम् । एवमेव विदग्धमतिशास्त्रान्वेषणकुशलं कंचिन्मुमुक्षुं प्रति अन्ये अर्च्याः परमपूज्याः प्राचीनाचार्याः प्रतिजीवमविद्या भिन्नैवास्तीति हेतोस्ते जीवास्ता अविद्याश्चानन्ता एव सन्ति इति चोचुः, इति समुपदिशति—नैतावतेत्यादीन्द्रवज्रया—

नैतावता नाशमुपागताऽभू-
ज्ज्ञानादविद्येति विदग्धमन्य ।
भिन्नाऽस्त्यविद्या प्रतिजीवमेव
ते तास्त्वनन्ता इति चोचुरर्च्याः ॥ १५ ॥

ननु भवतु एवमज्ञाननानात्वं, इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतेः । तथाऽपि कथं बद्धमुक्तव्यवस्था तावताऽपीत्यत आह—तत्तद्धियेत्यादिमत्तमयूरेण—

तत्तद्धिया तत्तदविद्यामपहृत्य
तत्तन्मुक्तिं साधयतीति स्वरसेन ।
संसिद्धोऽयं संव्यवहारः सकलोऽपि
जीवानन्त्यात्कोऽपि विरोधो न मतेऽत्र ॥ १६ ॥

अत्र वृद्धसंमतिमप्याह—न कदाचिदित्यादिप्रबोधितया—

न कदाचिदनीदृशं जग-
द्भवतीत्येक उदीरयन्ति यत् ।
तदपीह समञ्जसं स्फुर-
त्यवशिष्टामितजीवदृष्टितः ॥ १७ ॥

इदं जगत् साक्षिप्रत्यक्षं द्वैतम् । कदाचित् कस्मिंश्चिदपि भूतादिकाले । अनीदृशम् । अनेवंभूतमस्ति किं तु यथाऽद्यासज्जडदुःखात्मकत्वेन प्रतीयते तथैव सर्वदा भवति इति एके शिष्टा यदुदीरयन्ति कथयन्ति । तदपि इह मते । अवशिष्टेति । मुक्तेभ्य उर्वरितानन्तजीवदृष्टेरित्यर्थः ॥ १७ ॥

उक्तमते संक्षेपशारीरकवाक्यमप्यनुकूलयति—इति सतीत्यादिद्रुतविलम्बितेन—

इति सतीदमपीह सुसंगतं
सकलवाङ्मनसातिगता चितिः ।
सकलवाङ्मनसव्यवहारभा-
गिति वचः सकलज्ञपदेरितम् ॥ १८ ॥

एवं सिद्धान्ते सति । इह सांप्रतिकाद्वैतशास्त्रीयसृष्टिदृष्टिपक्ष इत्यर्थः। इदं वक्ष्यमाणत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षम् । एतादृशम् । कथं तदित्यत्राऽऽह सकलेत्यादिना । तदुक्तं संक्षेपशारीरके—बहु निगद्य किमत्र वदामि वः शृणुत संग्रहमद्वयशासने । सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभागिति । इति ईदृशम् । सकलेति । श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैरितमित्यर्थः । वचोऽपि सुसंगतं भवतीत्यन्वयः ॥ १८ ॥

तदेव सुसांगत्यं विशदयति—जनेत्यादिनोक्तवृत्तेनैव—

जनदृशाऽखिलसंव्यवहारभाग्-
गतभिदेव विमुक्तदृशा चितिः ।
इति रहस्यमिहाद्वयशास्त्रगं
करुणया किल तैः प्रकटीकृतम् ॥ १९ ॥

इदमतिरहस्यमेवाद्वैतशास्त्रगतं निरुक्तवचने कृपयैवोक्ताचार्यैः स्फुटितमित्याह इतीति ॥ १९ ॥

अत्रापि संदिहानं कंचिन्मुमुक्षुं प्रति केऽपि आचार्याः प्रकान्तरेणैव समादधुरिति अभिधत्ते—एवं चेत्यादिप्रहर्षिण्या—

एवं चेज्जगदपि किं तनोरथविद्या-
काचिद्वाऽस्त्यथ नियतेति संदिहानम् ।
सर्वाभिर्विरचितमस्त्यदः पटोऽत्र-
नानातन्तुभिरिव चेति केऽप्यवोचन् ॥ २० ॥

एवं चेत्तर्हि नानाविधासु अनन्तानादिभावरूपाविद्यासु मध्ये काचित् अनियतै-

वाविद्या जगद्विश्वं तनोति विस्तारयति किंवाऽस्ति काऽपि अथ परमेश्वरीयविश्वकर्मकसिसृक्षाऽनन्तरं काचित् नियतैव जगत्कारणव्यक्तित्वेन निश्चितैव जगत्तनोतीति इति संदिहानं शिष्यं प्रति । केऽपि पूर्वाचार्याः । अत्र लोके नानातन्तुभिः पट इवाद इदं साक्षिप्रत्यक्षं विश्वं सर्वाभिरेवाविद्याभिर्विरचितमस्तीति अवोचन्निति योजना । एवं च नात्र विनिगमनाविरह इत्याशयः ॥ २० ॥

ननु यदि सर्वाभिरेवाविद्याभिरीश्वरेच्छया जगन्निर्मीयते चेत्तर्हि सर्वेषां जीवानां प्रत्यक्षप्रमायां घटादेर्विशेषः सूक्ष्मदृशाऽपि कोऽपि नैव भायात् स त्वनुभवसिद्ध एव । तथाहि । घटस्य पूर्वदिक्स्थेन देवदत्तेनासौ यथा निरीक्ष्यते न तथा तेनैव प्रतीचीगतेन । तथा यथा दिवा अवलोक्यते न तथा रात्रौ । तद्वद्यथा स्वेन गृह्यते न तथा अन्येन इति देशकालप्रमात्रादिभिदाऽत्र प्रतिप्रमेयं वैलक्षण्यमनुभूयते एव सूक्ष्मदृग्भिरन्वयव्यतिरेकादिनेत्याशङ्कमानं कंचिज्जिज्ञासुं प्रति भगवद्वाचस्पतिमतानुसारिण एवं समादधुरित्याह—मयेत्यादिपृथ्व्या—

मया घट उदीक्ष्यते बत यथा तथाऽन्येन नो
सुसूक्ष्मतमतन्मिताविह विशेष आलक्ष्यते ।
ततः कथमिदं भवेदिति विदग्धबुद्धिं परं
जगुः सपदि भामतीमतविदो व्यवस्थां बुधाः ॥ २१ ॥

इवेति । अतिशयेन सूक्ष्मेति सूक्ष्मतमा तथा तत्रापि सुतरामत्यन्तं तथा । एतादृशी या तन्मितिः घटप्रमा तस्यामित्यर्थः । अत्रोपसर्गतमब्भ्यां बाधविधुरत्वं प्रतिबद्धत्वं च बोध्यते । सूक्ष्मपदेन शुद्धसत्त्वकार्यत्वं च ॥ २१ ॥

का साऽत्र व्यवस्थेत्यत्राऽऽह—स्यादित्यादीन्द्रवज्रया—

स्यात्प्रत्यविद्यं जगतो विभेदस्तं तं तु जीवं प्रतिकल्पितत्वात् ।
तत्प्रत्यभिज्ञाऽप्यतुलं समत्वाद्भ्रान्तिः प्रदीपाङ्कुरवन्मतेति ॥२२॥

तदुक्तं सिद्धान्तबिन्दौ । अविद्याप्रतिबिम्बितं चैतन्यं जीवः । अविद्याविषयीभूतं चैतन्यमीश्वरः । अस्मिंश्च पक्षे अविद्यानानात्वाज्जीवनानात्वम् । प्रतिजीवं च प्रपञ्चभेदः । इममेव चावच्छेदवादमाचक्षत इति । नचैवं तर्हि यो यज्ञदत्तेन घटो दृष्टः स एवायं मया दृश्यत इति प्रत्यभिज्ञा कथमिति वाच्यम् । अत्रातिसादृश्यप्रयुक्तदीपज्वालाप्रत्यभिज्ञावद्भ्रान्तिमात्रमूलकत्वात् । एतेनेहापि दृष्टिसृष्टिरेव ज्ञेया ॥ २२ ॥

ननु प्रतिजीवं प्रपञ्चभेदाङ्गीकरणे कारणं तु देशादिभेदेन प्रतिप्रमायां(मं)प्रमेयैक्येऽपि विशेषोपलम्भो योऽयमुपन्यस्तः स तावत् निरस्यद्रव्यवृत्तयो विशेषास्तु अनन्ता एव

इति वदतां वैशेषिकाणां मते संभवन्नपि सिद्धान्ते तावत् 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुत्या निरवयवत्वेन ब्रह्मदृष्टान्तीकृत आकाशे निसर्गदुर्लभ एव । न चास्य साक्षिभास्यत्वात् प्रमाविषयत्वमेव नास्ति प्रकृते तु प्रमेयस्यैव विचार्यत्वादिति सांप्रतम् । एतदस्वरसादेव रूपादौ वा इति सवाशब्दमुदाहरणान्तरस्यैवोक्तत्वात् । तथा च नैवायं प्रतिजीवं प्रपञ्चभेदवादस्तेनानेकजीववादेऽपि दृष्टिसृष्टिवादश्च इत्याशङ्किनं प्रकृतशिष्यं प्रति प्राक्तनाचार्य एव एतादृशशङ्काद्यनुवदन्नाह—आकाशेति। मन्दाक्रान्तया—

आकाशादौ क्व निरवयवे स्याद्विशेषः प्रमायां
रूपादौ वेत्यनुचितमिदं व्यावहारिक्यलं तत् ।
सत्ता ग्राह्यत्यवशमवदन्केऽपि कर्मन्द्यधीशा
मायाविद्याभिदुपगमनात्साधु सर्वव्यवस्थाम् ॥ २३ ॥

तत्तस्मात् । अलं पर्याप्ता व्यावहारिकी निखिलव्यवहारनिर्वाहिकेश्वरसृष्टद्वैते सत्ता ग्राह्यत्यवशमाक्षिपन्तं कंचित् बुभुत्सुं प्रति केऽपि । कर्मन्दीति । भिक्षुः परिव्राट्कर्मन्दीत्यमरात्ते चतीन्द्राः पञ्चदश्यन्तर्गतद्वैतविवेककारादय इत्यर्थः । मायेति । मायाविद्ययोः भेदस्वीकाराद्धेतोः सर्वव्यवस्थां साधु सर्वशास्त्राद्यविरुद्धं यथा स्यात्तथा अवदन्नित्यन्वयः। तथा चोक्तं तत्त्वविवेके तैरेव । चिदानन्दमयब्रह्मप्रतिबिम्बसमन्विता । तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते इति । अत्राऽऽकाशादौ इत्यादिना धर्मादिसंस्कारा एव । शिष्टं तु स्पष्टमेव॥२३॥

ननु भवतु एवं मायाविद्ययोर्भेदस्तथाऽपि कथं तावता सर्वव्यवस्था इत्यत्राऽऽह–ईशेत्यादिवसन्ततिलकया—

ईशोपाधिः प्रकृतितामुपयाति माया
सांव्यावहारिकजगत्यपि जन्य एव ।
जीवोपाधिर्भवति तत्र तथा ह्यविद्या
सा प्रातिभासिक इहेत्यखिलं वलक्षम् ॥ २४ ॥

शुद्धाद्वैतचिन्मात्रस्य ब्रह्मणः सकलजन्यजगज्जन्माद्यभिन्ननिमित्तकारणत्वोपाधिरित्यर्थः । एतादृशी माया । सांव्यावहारिकेति । सम्यक् प्रत्यक्षादिप्रमाणसिद्धो यो व्यवहारः प्रमातृप्रमेयादिप्रपञ्चस्तत्र भवं तच्च तज्जगत् दृश्यं चेति तथा तत्रेति यावत् । जन्य एवेति जायतेऽस्तीत्यादिप्रसिद्धप्राथमिकविकारवत्येव न तु अनादौ । प्रकृतितां निरुक्तकारणताम् । उपयाति प्राप्नोति ।

तथा तद्वत् । सा मलिनसत्त्वप्रधाना मूलप्रकृतिः । जीवेति । जीवोपाधिः सती । प्रातिभासिक एव । हिरवधारणे । ब्रह्मज्ञानान्यबाध्य एवेत्यर्थः । एतादृशे । तत्र प्रियाप्रियोपेक्ष्यत्वादिलक्षणे जन्यजगतीति यावत् । तथेत्यत्रापि योज्यम् । निरुक्तकारणं भवतीत्येतत्सिद्धान्ते अखिलं संपूर्णं प्रक्रियाजातम् । वलक्षं ' वलक्षो धवल इत्यमराद्विमलमस्तीति संबन्धः । एवं च शुक्तिरजतादेस्तथात्वं कैमुत्येनैव ॥ २४ ॥

अथ प्रकृत एव प्राक्तनः शिष्यः स्वाचार्यं प्रति प्राचीनोक्तजीवेश्वरविषयकसर्वमताविरोधोपपादनमनूद्य निर्गलिततद्रूपनिरूपणं याचते–अज्ञान इत्यादिशार्दूलविक्रीडितेन—

अज्ञानप्रतिबिम्बबिम्बतदवच्छिन्नेशवादैरभे-
देकानेकशरीरभिद्व्यभिलमज्जीवैक्यवादेन च ।
मुक्तामुक्तनिरूपणेन मतभाक् सर्वाविरोधस्तथा-
प्येतन्निर्गलितैकरस्यवपुषौ जीवेश्वरावुच्यताम् ॥२५॥

अज्ञानपदं सर्वत्रान्वेति । तेनाज्ञानप्रतिबिम्बेशवादः । अज्ञानबिम्बेशवादश्च । तथा तच्छब्देन अज्ञानमेव । तेनावच्छिन्नेशवादश्च तैः श्रीमत्संक्षेपशारीरकाचार्यश्रीमद्विवरणाचार्यभगवद्भामतीकारोदीरितेश्वरवादैः सहेत्यर्थः । अज्ञानावच्छिन्नत्वं विषयतासंबन्धेनैवेति भावः । परस्परमिति शेषः सर्वत्र । तथा । एकेत्यादि । एकशरीरानेकशरीरभिदा यो द्विर्द्विविध एतादृशः । अत एवाभिलमन् श्रीमद्गौडपादाचार्यादिसर्वपूर्वगुरुवरसंमतत्वेन तत्तद्ग्रन्थेषु समन्तात् भासन एतादृशश्चासौ जीवैक्यवाद एकजीववादश्चेति तथा तेन सहापि परस्परमिति यावत् ।

चः समुच्चये । तथा । मुक्तेति । बद्धमुक्तव्यवस्थोपपादनेन चेत्येतत् । मतेति । तत्तन्मतेषु विषयतासंम्बन्धलक्षणस्ववर्तनरूपभजनशाली तेनेत्यर्थः । एवंविग्रहे यदि लक्षणागौरवास्वरसस्तर्ह्यविरोधान्तमेकमेव पदम् । तथाच एवमत्र व्युत्पत्तिः । मतानि अज्ञानप्रतिबिम्बितचैतन्यमीश्वर इत्यादीनि प्रतिपादितसिद्धान्तजातानि भजन्ति स्वीकुर्वन्तीति तथा । एतादृशा ये सर्वे संपूर्णपूर्वाचार्यास्तेषां योऽविरोध ऐकमत्यं सोऽप्यभूत् ।

भोः श्रीमत्सद्गुरो श्रीचरणैकप्रतिबोधितयुक्तिशतैरभवत् तथाऽपि । एतदित्यादि । एतस्मात् निरुक्ताविरोधसाधकयुक्तिशतान्निर्गलितं परमपचेलिममृद्वीकाविस्फुटनत्वस्वयमेव बहिः प्रकाशमानमेतादृशं यदैकरस्यमैकमत्यं तेन वपुः स्वरूपं ययोस्तौ

यथेति यावत् । एताद्दशौ । जीवेश्वरौ । उच्यतां मां प्रति श्रीचरणकमलैः प्रकटं यथा तौ भविष्यतस्तथा उपपाद्यतामिति योजना । यद्यपि तत्तन्मतभेदेन श्रुतं प्राक्का-बुध्का एव तथाऽपि सर्वैकमत्यतत्स्वरूपावित्वोत्कलिका मे नैव उपशाम्यतीत्यतस्तदेव मां प्रति कृपयोपदेश्यमेवेति भावः ॥ २५ ॥

एवं शिष्याभ्यर्थनानुकम्पितचेताः श्रीगुरुस्तदीप्सितं विवक्षुस्तदुपोद्घातत्वेनाऽऽदौ दृष्टान्तं स्पष्टयति—यथोर्ध्वमित्यादिशिखरिण्या—

यथोर्ध्वप्रामाण्यं भवति हि मुनीनामपि पदे
ततोऽस्मिन्वाक्यत्वात्तदमलधिया वाच्यमनघम् ।
अतोऽन्येषां पक्षाः सकलविबुधानामपि समुः
सुरेशानां पक्षे बत भगवतां वार्तिककृताम् ॥ २६ ॥

पदे पदशब्दवाच्ये व्याकरणे मुनीनामपि तत्प्रणेतृसूत्रकारादिपाणिन्यादिऋषी-णामपि । हिरवधारणे प्रसिद्धौ च । यथोर्ध्वमेव यथोत्तरं मुनीनां प्रामाण्यमिति तत्परिभाषया पूर्वपूर्वमुन्यपेक्षया उत्तरोत्तरमुनेरेव वचःप्रामाण्यप्राबल्यं भवतीति प्रसि-द्धमेव यथा वर्वर्तीत्यर्थः । ननु एवं भवतु दृष्टान्तः किमतः प्रकृत इत्यत्राऽऽह—तत इत्यादित्रिपाद्या । अस्मिन्प्रकृते उत्तरमीमांसाशास्त्रे । वाक्यत्वान्मीमांसत्वेन वेदवा-क्यार्थविचारैकप्रधानशास्त्रत्वादिति यावत् । तद्यथोत्तरमुनिप्रामाण्यम् । अमलधिया सर्वत्राऽऽग्रहगन्धविधुरेण बुधवरेण । अनघं निर्व्यलीकं यथा स्यात्तथा ।

वाच्यं पूर्वमीमांसायां जैमिनेः सूत्रकाराद्भगवतः शबरस्वामिनस्तदुत्तरमुनेर्भा-ष्यकारस्यैव प्राबल्यं ततोऽपि तद्वार्तिककारस्योत्तरमुनेः कुमारिलभट्टाचार्यस्यैव प्राबल्यमिति सर्वसूरिवराङ्गीकृतत्वमसिद्धेव वाक्यार्थव्युत्पत्तेः पदार्थव्युत्पत्त्येकायत्तत्व-प्रसिद्धेश्च वक्तव्यमेवेत्यन्वयः ।

एवं तटस्थं प्रति मध्यस्थरीत्या दृष्टान्तं स्पष्टीकृत्य ततः किं प्रकृत इत्याकाङ्क्षितं पूरयति—अत इत्याद्युत्तरार्धेन । अतः प्रतिपादितवैदिकैकशास्त्रीययथोत्तरमुनिप्रा-माण्यनियमाद्धेतोरित्यर्थः । सकलेति । पक्षाः सिद्धान्ताः । बतेति हर्षे । तत्र हेतुः वार्तिकेति । पूर्वतन्त्रवच्चरममुनित्वं यतो वार्तिकाचार्येषु एवातो हेतोः । अन्येषा-मित्यादि । पक्षे राद्धान्ते । समुरन्तर्बभूवुरिति संबन्धः ॥ २६ ॥

नन्वेवंतत्प्रकाराकाङ्क्षिणं शिष्यमाश्वासयति—विविच्येत्यादीन्द्रवज्रया—

विविच्य तत्सर्वमथो वदामः स्पष्टं यथावद्गुरुपादपद्मात् ।
आमोदमाप्यैव वयं मुमुक्षोस्तवैव कारुण्यवशाद्रहस्यम् ॥२७॥

अये इत्याश्वासनीयत्वेन कोमलसंबुद्धौ । आमोदमात्मैक्यानन्दम् । पक्षे परमरम्यं गन्धम् । अपरं तु सरलमेव ॥ २७ ॥

ननु किमादौ वार्तिकस्यैव लक्षणमित्यपेक्षायां तत्संक्षिपति—उक्तेत्यादिशार्दूलविक्रीडितेन—

उक्तानुक्तदुरुक्तचिन्तकतया ग्रन्थो भवेद्वार्तिकं
तत्तु व्याकरणे द्वितीयमुनिना वाक्ये तृतीयेन च ।
निर्मार्थीति तदत्र किं न बलवद्वाक्ये भवेद्वार्तिकं
तत्राप्यत्र सुरेश्वरः कलयिता तेनेदमेवामृतम् ॥ २८ ॥

तदुक्तं पाराशराख्योपपुराणे । उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥ इति । ननु भवतु एवं ततः किं प्रकृत इत्यत्राऽऽह । तत्तु इत्यादिना इतीत्यन्तेन । तुशब्दः शङ्काशामकः । तद्वार्तिकम् । द्वितीयेति । वाक्यकारं वररुचिमिति वचनात्कात्यायनापरनामकवररुच्यभिधेन सूत्रकारापेक्षया द्वितीयप्रवृत्तिमतर्षिणा । तथा । वाक्ये पूर्वकाण्डवेदवाक्यार्थविचारप्रधाने मीमांसाशास्त्रे । तृतीयेन सूत्रभाष्यकारोभयापेक्षया तृतीयतद्विवृतिप्रवृत्तिमता कुमारिलभट्टाचार्येणेति यावत् ।

मुनिनेत्यार्षिकम् । ग्रन्थकृतेः सामान्यतो मननशीलत्वैकायत्तत्वात् । निर्मार्थ्यकारीति हेतोरित्यर्थः । तद्वार्तिकम् । अत्र प्रकृते । वाक्ये उत्तरकाण्डात्मकवेदवाक्यविचारैकप्रधानत्वात्ताहश्युत्तरमीमांसाशास्त्र इत्येतत् । वार्तिकं बलवन्न भवेत् किमपितु भवेदेवेति फलितोक्त्याऽन्वयः । तत्रापि बृहद्वार्तिकस्य वार्तिकामृतमितिसमाख्यामपि हेतुं द्योतयन्विवृणोति । तत्रापीत्यादिचरमचरणेन । एवमपि । अत्र प्रकृतवार्तिके । सुरेश्वरः सुरेश्वराचार्यः । पक्षे इन्द्रः । कलयिता संपादयितेत्यर्थः । यतोऽस्तीति शेषः । तेन हेतुना । इदमेवामृतं पीयूषम् । पक्षे साध्यसाधनाभेदोपचारात्कैवल्यं भवतीति संबन्धः ॥ २८ ॥

अथोक्तरूपकमेव सपरिकरमाविष्करोति—इहेत्यादिमञ्जुभाषिण्या—

इह विश्वरूपधर एव विश्वतोऽ-
र्थितकृच्छ्रुतिद्वयसुरत्नकं मतः ।
सुमनःसुपेयमुदधेस्त्रयीमया-
दमृतं सुचारुतरमुद्धृतं व्यधात् ॥ २९ ॥

लोके । विश्वेति । अस्य भगवतः सुरेश्वराचार्यस्यैव पूर्वाश्रमे कुमारिलभट्टाचार्याख्यगुरुदत्तमण्डनमिश्राख्यपदवीनामवत् पित्रादिस्थापितं विश्वरूपधर इति नाम तावन्माधवीयशंकरविजये प्रसिद्धमेव । पक्षे पार्थं प्रति विश्वरूपप्रदर्शकत्वेन तथा भगवान् विष्णुः प्रसिद्ध एव । विश्वतो जगतः । सर्वांशेन च । अर्थितेति । अभिलषितकर्ता सन्नित्यर्थः । श्रुतीति । कर्णद्वयरूपदिव्यरत्नमयपानपात्रद्वारेति यावत् । कंसोऽस्त्री पानभाजनमित्यमरः ।

पक्षे । अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च । वेदान्तानां प्रवृत्तिः स्याद् द्विधेत्याचार्यभाषितमित्यभियुक्तोक्तेर्नेति नेति इत्यादिनिषेधात्मकतत्त्वमसीत्यादिविध्यात्मकवेदान्तवाक्यकोटिद्वयलक्षणेनोक्तभाजनविशेषणेत्यर्थः । सुमन इत्यादि । शुद्धबुद्धयेकास्वाद्यम् । पक्षे देवैकभोज्यम् । एतादृशम् । त्रय्यांति । वेदरूपात् । उदधेः समुद्रात् । सुचार्वीति । राहवनास्वादितत्वाद्विषाद्यसोदरत्वात्फलात्मना त्रिकालाक्षीणत्वाच्च निरतिशयरम्यतममिति यावत् । एतादृशममृतं वार्तिकामृतम् । उद्धृतं व्यधात् अकरोत् इति योजना ॥ २९ ॥

एवं च यथा त्रिमुनि व्याकरणं वेदाङ्गीभूतमुखत्वात्त्रिमुनिप्रणीतत्वाच्च निखिलास्तिकादिवादिवन्द्यं तथेदमद्वैतशास्त्रं तावत् त्रीश्वरमेव वेदशिरोरूपत्वात् विष्ण्वादित्रीश्वरप्रणीतत्वाच्च तथेति कैमुत्यसिद्धमेवेति प्रतिपादयति—निखिलेत्यादिप्रबोधितया—

> निखिलास्तिकनास्तिकादिभि-
> स्त्रिमुनि व्याकरणं यदिज्यते ।
> किमुतश्रुतिमौलिभूषणं
> भगवत्त्रीश्वरशास्त्रमद्वयम् ॥ ३० ॥

ईज्यते । पूज्यते । तदा तथा ईज्यत इति किमुतेत्यार्थिकोऽन्वयः । ननु किं तत्कुतश्चैतत् इति । शङ्कां शमयति । श्रुतीत्यादिशेषेण विशेष्येण विशेषणाभ्यां च । भगवदिति । भगवद्भिः षड्गुणैश्वर्यसंपन्नैरेतादृशैस्त्रिभिरीश्वरैर्हरिहरहिरण्यगर्भैः शास्यत इति तथेत्यर्थः ।

ननु प्रत्येकचतुःषष्टिसंख्याकागमरहस्ययामलतन्त्रोपतन्त्राणामपि प्रणेतारः पुराणादौ तत्प्रमुखा एवोपलभ्यन्त इत्यतस्तद्विशिनष्टि श्रुतीति । श्रुतिः प्रसिद्धैव त्रयी तस्या यो मौलिः किरीटे धमिल्ले इति विश्वात्स्त्रीत्वात्कचनिचय इव सौभाग्यसर्वस्वी-

भूत उपनिषद्भागस्तस्य भूषणं स्वप्रकाशमहामाणिक्यादिमयमाभरणमिति यावत् । तत्रापि आनन्दतीर्थीयादिभेदवादिव्युदस्तथेऽद्वयमिति ॥ ३० ॥

एवं प्रतिज्ञातमद्वैतशास्त्रस्य त्रीश्वरत्वमेव विशदयति—श्रीव्यास एवेत्यादिवसन्ततिलकया—

श्रीव्यास एव हरिरत्र चकार सूत्रं
श्रीमान्महेश इह शंकर एव भाष्यम् ।
श्रीमत्सुरेश्वरतनुश्चतुराननो यः
स त्वत्र वार्तिकमिति स्फुटमेव लोके ॥ ३१ ॥

तदुक्तम् । को वाऽन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदिति । चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यतीति वायुपुराणेऽपि । चत्वारस्तच्छिष्यास्तु श्रीपद्मपादसुरेश्वरहस्तामलकतोटकाचार्याख्याः प्रसिद्धा एव । एवं श्रीमत्सुरेश्वराचार्याणां चतुराननावतारत्वं तु महता प्रबन्धेन प्रपञ्चितं माधवीयशंकरविजय एव । स्पष्टमेवावशिष्टम् ॥ ३१ ॥

एवमद्वैतशास्त्रे वार्तिककारमतीयप्राबल्ये तावदभियुक्तवादमपि अनुकूलयति—स्यादित्यादीन्द्रवज्रया—

स्याद्ब्रह्मविद्या खलु वार्तिकान्ते-
त्याकारको योऽस्त्यभियुक्तवादः ।
सुरेश्वराचार्यपदाम्बुजानां
सुपूज्यताऽद्वैतमते ततोऽपि ॥ ३२ ॥

अद्वैतेति च्छेदः । तथा चाद्वैतं मतं श्रुत्यादिनिर्णीतं येन तस्मिन्प्रकृतशास्त्र इत्यर्थः ॥ ३२ ॥

ननु भवत्वेवमद्वैतशास्त्रे वार्तिककारमतप्राबल्यं पूर्वतन्त्रवदथापि किं तन्मतं केन वा सांप्रदायिकचक्रवर्तिना विनिर्णीतमित्यत्राऽऽह—तेषामित्यादिस्रग्धरया—

तेषां सिद्धान्तबिन्दौ मतमिदमुदितं ब्रह्मचिन्मात्रमासी-
दज्ञानोपाधि तत्र प्रतिफलनवशात्तेन तादात्म्यमाप्तः ।
यः स्वाभासोऽस्ति तेनाविवृतिमनु जगद्धेतुरन्तर्नियन्ता
साक्षीद्बुद्धौ तु तादृङ्मितिकृतिभुजिभाग्जीव इत्येव तत्र ॥ ३३ ॥

मधुसूदनसरस्वतीभिरित्यार्थिकम् । किं तदित्यत्राऽऽह ब्रह्मेत्यादिना । तद्धेदं तर्ह्यव्याकृतमासीत् । इत्यादिश्रुतेश्चिन्मात्रं ब्रह्मैवाज्ञानोपाधि प्रलयकाले तन्मात्रोपहितं

प्रागासीदिति संबन्धः। ततः किं तदाह–तत्रेत्यादि। तत्रानादिभावरूपेऽज्ञाने। प्रतीति प्रतिबिम्बनात्। तेनोक्ताज्ञानेन सहेत्यर्थः। तादात्म्यमहमज्ञ इत्याध्यासम्। एतादृशो यः स्वाभासोऽस्ति स्वरूपतोऽपि मिथ्यैव निरुक्तब्रह्मप्रतिबिम्बो भवति।

तेनाऽऽभासेनाविद्यातिमविवेकमनु पश्चात्। जगदित्यादि ईडन्तम्। ईदृगीश्वरो वर्तते। एवमीश्वरं तन्मतमभिधाय जीवमभिधत्ते बुद्धौ तु इत्यादिना। कार्योपाधित्वेन वैलक्षण्यार्थस्तुशब्दः। तादृग्बुद्धितादात्म्यापन्नोऽहमित्यनुभूयमानश्चिदाभास एवेति यावत्। मितीत्यादि। प्रमाता कर्ता भोक्ता चेदृश एव तत्र मते जीवोऽस्तीत्यन्वयः॥ ३३॥

अथोक्तमतोपपत्तिं दृष्टान्तेन प्रतिबोधयति—नानेत्यादिशार्दूलविक्रीडितेन—

नानापर्विंतकालकाचपुटिकाछन्नेऽच्छशुक्ले स्वभे
रत्ने लोकदृशा यथा विविधता चित्रेन्द्रनीलादिता।
स्वस्मिंस्तद्वदविद्ययेदमखिलं साक्षित्वमुख्यं भवे-
ज्जीवत्वाद्यपि तज्जबुद्धिनिवहैः सर्वं किल भ्रामिकम्॥३४॥

नाना असंख्यातानि पर्वाणि षाणनिघर्षणेनाऽऽभासितशकलानि संजातानि यस्यामेतादृशी या। कालेत्यादि। कृष्णकाचकरण्डिका। संभवत्यप्येतत्पदप्रयोगे तत्त्यागः सगुणादिब्रह्मव्यावृत्त्यर्थं कालपदप्रयोगश्च कालस्तु अविद्यैवेति बिन्दोः श्लेषेणाविद्याग्रहणार्थं चेति ध्येयम्।

तया आच्छन्ने समन्तादाच्छादिते। एतादृशे। अच्छेति। अच्छं निर्मलं तत्रापि शुक्लं शुभ्रं तस्मिन्। तत्रापि। स्वभे स्वप्रकाशे। ईदृशे रत्ने मणौ। यथा। लोकदृशा। विविधता अनेकता। चित्रेति। विचित्रेन्द्रनीलरूपता च स्फुरति इति शेषः। एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। स्वस्मिन्नित्याद्युत्तरार्धेन। तज्जेति। अनादिमूलाज्ञानजन्यबुद्धिसंघैरित्यर्थः। सर्वं दृश्यमिदं तद्वत्। भ्रामिकं मिथ्या किल मृषैव भवेदिति योजना॥ ३४॥

एवमपि अत्र शिष्यशङ्कामनूद्य निराकरोति–सिद्धान्तलेश इत्यादीन्द्रवज्रया—

सिद्धान्तलेशे ननु नेदमुक्तं जीवेश्वरप्रक्रमणे कुतो वा।
इत्यादिशङ्का भवता न कार्या दत्तोत्तरत्वाद्धत पूर्वमेव॥३५॥

ननु इदं वार्तिककारमतम्। सिद्धान्तलेशे। जीवेति। जीवेश्वरनिरूपणप्रकरण इत्यर्थः। कुतो वा हेतोर्नोक्तम्। इत्यादीति। तत्र हेतुं प्रतिपादयति। दत्तेत्यादिचरमचरणेन। हतेति शङ्कानवकाशजन्यहर्षे॥ ३५॥

तदेव दत्तमुत्तरं स्मारयति—विद्येत्यादिमालिन्या—

विद्यारण्यैश्चित्रदीपे यदुक्तं जीवेशादि प्रायशस्तत्किलेदम् ।
एतत्पूर्वं तन्मतोक्तौ मयाऽलं व्यद्योत्येवेत्यत्र तैर्नैतदुक्तम् ॥३६॥

व्यद्योत्येव प्रतिपादितमेव । इति हेतोः । अत्र त्वदाशङ्कितत्वेन साक्षिप्रत्यक्षे सिद्धान्तलेश इत्यर्थः । तैरप्पय्यदीक्षितैः । एतत् प्रतिपादितं प्रकृतं वार्तिककृन्मतम् । नोक्तं नैव पृथक्प्रपञ्चितमस्तीति संबन्धः ॥ ३६ ॥

ननु भवतु एवं सकलमपि प्रासङ्गिकमथापि यत् प्राक् प्रतिज्ञातं भवता षड्विंशतितमश्लोके वार्तिककारसंमतजीवेश्वरप्रक्रियायां सर्वपूर्वाचार्यवर्णितजीवेश्वरप्रक्रियास्तावदन्तर्भवन्तीति तदुत्तरश्लोके च विविच्य तत्सर्वमये वदाम इति तदेवाधुनाऽवसरप्राप्तत्वात् उपपादनीयमिति चेत् वाढमित्याशयेन प्राक्जीवेश्वरनिरूपणे प्रथमोपन्यस्तप्रकटार्थकृन्मतस्यात्रान्तर्भावप्रकारं प्रतिजानीते—

तत्राऽऽदावित्यादिशार्दूलविक्रीडितेन—

तत्राऽऽदौ प्रकटार्थकृन्मतमिहान्तर्भावयामो यथा
मायागः प्रतिबिम्ब ईश उदितो जीवस्त्वविद्यागतः ।
विश्वस्य प्रकृतिश्चिदेकनिलयाऽनादिश्च माया मता
विक्षेपावरणक्षमः समुदितोऽविद्यैकदेशोऽत्र तैः ॥ ३७ ॥

तदर्थं तन्मतमनुवदति यथेत्यादिशेषेण । यथाशब्दोऽत्र तन्मतप्रकारप्रदर्शनपरः। का साऽविद्येत्यपेक्षायामाऽऽह—विक्षेपेत्याद्यन्त्यपादेन । अत्र विक्षेपो जीवस्य सुखादितादात्म्याध्यास एव । एतादृशः । अत्रोक्तमायायाम् । एकदेश एवं सर्पाशीर्षवत् । तैः । अविद्यासमुदितोऽस्तीति योजना ॥ ३७ ॥

अथास्यात्रान्तर्भावं प्रबोधयति—विश्वस्येत्यादीन्द्रवज्रादिभिः—

विश्वस्य कारणमुदीरितमस्ति माया-
शब्देन तैरिह तु तत् स्फुटमस्त्यविद्या ।
नैतावता बत भिदा तरतीति वाक्ये
भीष्मस्तयोरभिदमेव यदञ्जसाऽऽह ॥ ३८ ॥

इह वार्तिककृन्मते तु तद्विश्वस्य कारणमविद्यैव स्फुटमस्ति । बतेति हर्षे । भिदा तद्भेदः । न । तत्र हेतुमाह । तरतीत्यादिशेषेण । तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै ज्ञानात्मने नम इति वचने ॥ ३८ ॥

ननु भवत्वेवं निरुक्तस्मृतिवशान्मायाविद्ययोरभेदस्तथाऽपि प्रकटार्थकृन्मते यो विक्षेपावरणक्षमोऽस्ति अविद्याभिधो जीवोपाधिः स तावद्वार्तिककृन्मते तयात्वेनेष्टा बुद्धिः कथं स्यात् इत्याशङ्क्य समाधत्ते-विक्षेपेत्यादिप्रहर्षिण्या-

विक्षेपावरणचणस्तदेकदेशोऽ-
विद्याऽसाविह न कथं नु बुद्धिरेव ।
नो चेत्तैः कथमुदितं भवेदविद्या-
ध्वंसः स्यादमृतमियं हि बन्ध एव ॥ ३९ ॥

विक्षेपावरणाभ्यां चणो विख्यात इत्यर्थः । इह वार्तिकमते । नु इति वितर्के । असौ मायैकदेशोऽविद्याख्यो बुद्धिरेव कथं न भवति अपि तु भवत्येवेत्यन्वयः । तत्र हेतुत्वेनान्यथानुपपत्तिं व्युत्पादयति नो चेत् इत्याद्युत्तरार्धेन । एवं नो चेत् तर्हि तैर्वार्तिककारैः । अविद्याध्वंसोऽमृतं कैवल्यं स्यादिति कथमुदितं भवेत् । अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृत इति वार्तिके कथितो भूयात् । तस्मात्तत्कथनान्यथानुपपत्त्याऽत्रस्था बुद्धिरेव तैरविद्याशब्देन विवृताऽस्तीति संबन्धः । तत्रापि हेतुः । इयमित्यादिशेषेण । हि यस्मात् इयमहंकारात्मना स्वमादौ परिणता बुद्धिरेव बन्धोऽस्तीति ॥ ३९ ॥

एवमपि अत्राऽऽशङ्क्य समाधत्ते-जीवोपाधिस्त्वित्यादिस्रग्धरया-

जीवोपाधिस्तु बुद्धिः खलु तदभिमताऽस्तीश्वरोपाध्यविद्या
ध्वस्ता चेद्बन्धनाशोऽमृतमुचितमथाप्याश्रयस्तस्य जीवः ।
वाच्यो नो नित्यमुक्तः शिव इति फलितो नैकदेशस्तदीयः
किं बुद्धिश्छादनादिक्षम इति सुघटा तन्निवृत्तिर्विमुक्तिः ॥४०॥

तदभिमता वार्तिककृत्संमता । ततः किं तदाह । ईश्वरेति । ईश्वरोपाधिश्चासौ अविद्या च इति कर्मधारयः । तेनापि किं तत्राऽऽह । अथापीत्यादिना क्षम इत्यन्तेन । अथापि एवमपि । तस्य बन्धस्य । आश्रयोऽवलम्बः । जीव एव अहमज्ञो बद्ध इत्यनुभवाद्वाच्यो नित्यमुक्त ईश्वरस्तु नो वाच्यो नैव वक्तव्यः । नित्यमुक्तत्वादिश्रुतेः । यतः शिव एव स इत्यर्थः । तथा च श्रूयते । प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति ।

इति हेतोः । तदीयः प्रकटार्थकृन्मते मायासंबन्धी । एतादृश एकदेशः छादनेति । आवरणविक्षेपदक्ष इत्येतत्, एतादृशः बुद्धिर्वार्तिकमते जीवोपाधित्वेन संमता अहंकारात्मना परिणता अन्तःकरणवृत्तिविशेष एव फलितो पर्यवसितो न

किमपि तु पर्यवसित एवेति तन्निवृत्तिरुक्तबुध्द्यात्मना परिणतमूलाविद्याध्वस्तिरेव विमुक्तिः, विशिष्टा विदेहमुक्तिपूर्वकाप्रतिबद्धज्ञानजन्यजीवन्मुक्तिरिति यावत् । सुघटा सुतरां घटत इति तथाऽस्तीति योजना । स्फुटमेवान्यत् ॥ ४० ॥

ननु एवमपि प्रकटार्थकृन्मते मायादौ चित्प्रतिबिम्बस्यैवेश्वरादित्वमुक्तं तत्कथं वार्तिकमत आभासवादेऽन्तर्भूयादित्याशङ्क्य समाधत्ते—आभास एवमित्याद्युपजात्या—

आभास एवं प्रतिबिम्ब एष
कथं ननु स्यादिति नैव यस्मात् ।
सिद्धान्तबिन्दौ कथिताऽग्र उच्चै-
राभासवादेऽपि च भागलक्षणा ॥ ४१ ॥

ननु एवं प्रागुक्तरीत्या प्रकटार्थकृन्मतस्य जीवादेर्वार्तिककारमतेऽन्तर्भावसंभवे सत्यपि । एष प्रकटार्थकृदिष्टत्वेन प्रकृतः प्रतिबिम्बः । एव वार्तिकेष्टत्वेन प्रस्तुतः । आभासः कथं स्यात् । उद्देश्यस्याऽऽद्यस्योपहितत्वेन मिथ्यात्वेऽपि स्वरूपतः सत्यत्वात् । विधेयस्यान्त्यस्योभयथाऽपि मिथ्यात्वात् कथंचिदपि नैव भवेत् इति नैव शङ्क्यमिति शेषः ।

तत्र हेतुं द्योतयति । यस्मात् इत्यादि शेषेण । यस्मात् हेतोः सिद्धान्तबिन्दौ । आभासवादे । अग्रे तदुपसंहारे । उच्चैः सप्रमाणम् । भागेति । जहदजहल्लक्षणा कथिताऽस्तीत्यन्वयः । एवं चाऽऽभासस्यापि सत्यमिथ्यावस्तुसंभेदात्मकत्वेन प्रतिबिम्बे तदभिन्नत्वमेवेति भावः ॥ ४१ ॥

तदेव विशदयति—गृहीत्वेत्यादीशिखरिण्या—

गृहीत्वाऽधिष्ठानं प्रभवति चिदाभास इह चे-
त्प्रतिच्छायावादः फलति नहि किं तेन तु तदा ।
तदन्तर्भावोऽस्मिन्प्रतिफलनवादस्य सुरसः
सुधीभिः संध्येयः किल बत मते वार्तिककृताम् ॥ ४२ ॥

प्रतिच्छायेति । प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छायेत्यमरात्प्रतिबिम्बवाद इत्यर्थः । प्रतिफलनेति । प्रतिबिम्बनवादस्येति यावत् । अपरं तु अतिरोहितमेव ॥ ४२ ॥

एवमपि अत्र विनिगमनाविरहात् । वैपरीत्यमाशङ्कते—विपरीतमित्यादिप्रबोधितया—

विपरीतमिदं कुतो न वा
भवतीति प्रतिपाद्यतां बुधैः ।
प्रकटार्थकृतां मते लयं
व्रजतां वार्तिककृन्मतं किल ॥ ४३ ॥

शिष्टं तु स्पष्टमेव ॥ ४३ ॥

सिद्धान्ती श्रीगुरुस्तत्रापि विनिगमकं साधयन्नेव समाधत्ते—अत्रेत्यादिवसन्ततिलकया—

अत्रोच्यते स भगवान् किलशास्त्रकार-
स्तत्रापि चान्तिममुनिर्न तथेतरेऽमी ।
तीर्थानि यान्ति सकलानि किल प्रयागं
नासावपि क्वचिदुपैति हि तीर्थराजः ॥ ४४ ॥

एवं शास्त्रीयमर्यादारूपं विनिगमकमभिधाय तदनुग्राहकं तदेकसंमतं लौकिकमपि तदर्थान्तरन्यासलक्षणं समनुगुणयति तीर्थानीत्याद्युत्तरार्धेन । तन्मूलं तु सितासिते सरिते इत्यादिश्रुत्याद्येव । इतरत्तु सरलमेव ॥ ४४ ॥

एवं प्रकटार्थकारमतस्य श्रीमद्वार्तिककारमतेऽन्तर्भावं प्रदर्श्य एतेन तत्त्वविवेके विद्यारण्योक्तमायाविद्ययोरपि अन्तर्भावं दर्शयति—विद्येत्यादिमत्तमयूरेण—

विद्यारण्यैस्तत्त्वविवेके कथिताऽभू-
न्मायानाम्नी निर्मलसत्त्वा प्रकृतिर्या ।
या चाविद्या तद्विपरीताऽत्र तु ते स्तः
स्वन्तर्भूते चारुतरोदाहृतरीत्या ॥ ४५ ॥

तदिति । मलिनसत्त्वा प्रकृतिरेवेत्यर्थः । तथात्वेनानुभवस्तु अहमज्ञ इति बुद्धिरूपेण परिणत्यवस्थायामेव संभवति । तस्या इति वार्तिकोक्तजीवोपाधिभूतबुद्धौ एव तत्त्वविवेकोक्ततदुपाधिभूताविद्यायाः सुकर एव भवत्यन्तर्भाव इति भावः ॥ ४५ ॥

एवमत्रैतेन मतान्तरान्तर्भावमपि अतिदिशति—निगदित इत्यादिमालिन्या—

निगदित इह कैश्चिद्यश्च विक्षेपशक्ते-
रधिकतरतयाऽऽत्मानन्दसंछादशक्तेः ।
प्रकृतिवपुषि मायाविद्ययो रूपभेदः
सपदि सुविवृतोऽभूत्सोऽपि चैतेन सर्वः ॥ ४६ ॥

इह प्रागुक्ते । प्रकृतीति । कैश्चित्पूर्वाचार्यैः । विक्षेपेति । अधिकेति । विक्षेपशक्त्याधिक्येनेत्यर्थः । तथा । आत्मेति । अद्वैतात्मैकरसानन्दावरणशक्त्याधिक्येन चेति यावत् । क्रमात् । यः । मायेति । रूपेति । निगदितः प्रतिपादितः । सोऽपि च । एतेन तत्त्वविवेकोक्तप्रायादेर्वार्तिकमतान्तर्भावप्रतिपादनेनेत्यर्थः । स सर्वोऽपि । तुभिवृतस्तदन्तर्भूतत्वेन सम्यग्व्याख्यातोऽभूदित्यन्वयः ॥ ४६ ॥

एवं संक्षेपशारीरकमतान्तर्भावं तु कैमुत्येनैवाऽऽह—कार्येति—

कार्योपाधिः कारणोपाधिरेवं
जीवेशानौ यौ तु संक्षेपकोक्तौ ।
कार्यं बुद्धिः कारणं चाप्यविद्ये-
त्येतत्पक्षोऽप्यत्र नान्तर्हितः किम् ॥ ४७ ॥

अपितु अन्तर्भवति एवेति योजना ॥ ४७ ॥

अथ चित्रदीपप्रक्रियायाः प्रायो वार्तिकैकमतरूपत्वेऽपि किंचिच्चित्रपटाकाशचतुष्टयदृष्टान्ताभ्यां वैषम्याभासात्तदैक्येन तन्निरासपूर्वकं प्रकृते तदन्तर्भावमपि व्याचिकीर्षुस्तदुपोद्घातत्वेन मायायां चित्रपटीत्वमीश्वरे कार्पटिकत्वं च रूपकालंकारेण वर्णयन्नद्भुतरसध्वनिना बद्धमुक्तव्यवस्थामपि व्यनक्ति—

मायेत्यादिशार्दूलविक्रीडितेन—

मायाचित्रपटीं मुहुर्मुहुरयं संवेष्टयत्येकतः
पश्चात्कार्पटिकश्च कोऽपि तु पुरः प्रोद्घाटयत्यन्वहम् ।
तां दृष्ट्वा यदि कोऽप्यलंमतिरिह स्याच्चेन्न तं प्रत्यहो
किंचित्क्वापि कदाऽपि दर्शयति तां नापि स्वमित्यद्भुतम् ॥४८॥

अयं साक्षित्वेन स्वप्रकाशापरोक्षः । कोऽप्यवाङ्मनसगम्यः । एतादृशः । कार्पटिको भिक्षुविशेषः प्रसिद्ध एव । पुरोऽग्रतः । अन्वहं प्रतिक्षणम् । प्रोद्घाटयति प्रकाशयति । तथा । मुहुर्मुहुः—वारं वारम् । पश्चात्, एकत एकदेशेन । संवेष्टयति चेति संबन्धः । ततः किं तदाह । तामित्याद्युत्तरार्धेन । कैवल्यादित्याशयः ॥ ४८ ॥

एवमुपोद्घातितचित्रदीपप्रक्रियाद्वयैक्येन तदिष्टजीवाद्यन्तर्भावं प्रकान्तवार्तिकप्रक्रियायां प्रकटयति—ब्रह्मेत्यादिस्रग्धरया—

ब्रह्मैकाशेकशाट्यां घनजलबिलसद्बिम्बसंघट्ट ईशः
कुम्भाम्भोबिम्बचित्रोल्लिखितनरपटाभासतुल्योऽस्ति जीवः ।

कूटस्थः कुम्भसंस्थां वरकथितपटाभासरेखामितोऽसा-
वित्येतच्चित्रदीपप्रकटितमतमप्यत्र नान्तर्भवेत्किम् ॥ ४९ ॥

ब्रह्मैवाऽऽकाशः स एव एकशाटी मुख्यपटी तस्याम् । घनेति । घनेषु मेघेषु यज्जलं तत्र विलसन्ननुमितत्वेन शोभमान एतादृशो यो बिम्ब आकाशप्रतिबिम्बः स एव संघट्टः संघटितावस्थाविशेष इत्यर्थः । एतादृशः । ईशो भवति । एवं कुम्भेति । कुम्भे घटे यदम्भ उदकं तत्र यो बिम्ब आकाशप्रतिबिम्बः स एव चित्रोल्लिखितनरपटाभासः । चित्रे प्रकृतपटचित्रे उल्लिखितः उत्कर्षेण लिखितो यो वरः पुरुषस्तस्य यः पटाभासः स तथेति यावत् ।

एतादृश एव जीवः । अस्तीति योजना । तद्वत् कूटस्थस्तु । कुम्भेति कुम्भे संस्थाऽवस्थानं यस्य तच्च कथितो यः पटाभासस्तयो रेखे च ताभ्यां मितः परिमित इत्येतत् । एतादृक् एव असौ भवति । इति अमुना प्रकारेण । एतत्कथितानुपूर्वकम् । चित्रेति । चित्रदीपे प्रकटितं यन्मतं तदपि अत्र वार्तिकमते नान्तर्भवेत्किमपितु अन्तर्भवेदेवेति भावः । जीवेश्वरयोराभासत्वस्य कूटस्थब्रह्मणोस्तदधिष्ठानत्वस्य च सत्त्वादेरिहापि स्फुटत्वादित्यभिप्रायः ॥ ४९ ॥

एवं कैश्चित्प्राचीनाचार्यैः कृते ब्रह्मानन्दनामके प्रकरणेऽभिहितजीवादिस्वरूपमपि प्रकृते वार्तिकमते प्रागवदेवान्तर्भवतीत्याह—अपीत्यादिशिखरिण्यादिचतुर्भिः—

अपि ब्रह्मानन्दे यदभिहितमध्यात्मप्रभृति
समष्ट्या व्यष्ट्या च प्रकटमपि जीवाः शरमिताः ।
अविद्येशोपाधिस्तदपि किमिहान्तर्न भविता
समत्वाज्जीवादेरधिकगुणसत्त्वेऽपि वपुषि ॥ ५० ॥

अध्यात्मेति । प्रभृतिग्रहणादाधिदैविकाधिभौतिकयोर्ग्रहः । अत्र ह्रस्वं लघु संयोगे गुरु संयोगे परे ह्रस्वं गुरु, स्यादिति शास्त्रात् त्मप्रेत्यग्रगसंयुक्तप्रकारवशात् त्मकारस्य गुरुत्वेन च्छन्दोभङ्गप्राप्तौ प्रह्राभ्यां चेति च्छन्दःसूत्रात्तद्विकल्पविधानात् सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रेति कुमारसंभववत् इहापवादः । शरेति । विश्वादिहिरण्यगर्भान्तपञ्चसंख्याका इत्यर्थः । प्रतिज्ञातेऽन्तर्भावे हेतुमाह—समेत्याद्यन्त्यपादेन । वपुषि उपाधिभूते स्थूलादिदेहे । अधिकेति । उत्तरोत्तरसौक्ष्म्यरूपगुणोत्कर्षेऽपीत्यर्थः । जीवेति । आदिनेशः ॥ ५० ॥

साम्यमेवाऽऽह जीव इत्यादिस्वागतया—

जीव इष्ट इह बुद्धिगता चिद्व्यष्टिमध्यमतया स हि तत्र ।
ईश्वरस्त्विह मताश्चिदविद्या बिम्बिता खलु स एव च तत्र ॥५१॥

॥ ५१ ॥

ननु वार्तिके बुद्धिप्रतिबिम्बितचित एव जीवत्वाद्विश्वादीनां पञ्चानां जीवत्ववादिना ब्रह्मानन्दकृता सह कथं तदैक्यमिति चेन्न । भावानवबोधात् । तथाहि । बुद्धिप्रतिबिम्ब एव वार्तिकेष्टो जीवः काकाक्षिगोलकन्यायेन विश्वादिरूपो भवति । इति निरुक्तान्तर्भावः समुचित एवेत्याह—काकाक्षीत्यादिवसन्ततिलकया—

काकाक्षिगोलविधयाऽपि च देहलीस्थ-
दीपप्रभाद्युपमयाऽयमुभावुपैति ।
व्यष्टौ हि तैजस इह क्रमणक्रमेण
प्राज्ञं च विश्वमपि कर्मविपाकयोगात् ॥ ५२ ॥

॥ ५२ ॥

ननु एवमपि समष्टिजीवद्वयं स्थूलसूक्ष्मोपाध्यवच्छिन्ने विराडादिकं तु अन्तर्भूतमेवेस्यत्राऽऽह——व्याख्यातमित्यादिकयेन्द्रवज्रया——

व्याख्यातमेतेन हिरण्यगर्भ
वैराजसंज्ञं तदुदीरितं यत् ।
समष्टिजीवद्वयमप्यतोऽत्र
पञ्चापि नैते पृथगुक्तजीवात् ॥ ५३ ॥

एते प्रागुक्तविश्वादिजीवाः । उक्तेति । वार्तिकोक्तबुद्धिप्रतिबिम्बितचैतन्यरूपात् । जीवादित्यर्थः ॥ ५३ ॥

एवं श्रीमद्गौडपादाचार्यचरणमतमप्युक्तदिशैवात्रान्तर्भूतमित्याह——श्रीत्यादिवसन्ततिलकया——

श्रीगौडपादमतमप्यत एव लीन-
मत्रैकदेशविकृताङ्गनयात्तुरीयः ।
तत्रेरितो भवति यः स इहास्ति साक्षी
प्राज्ञादिकं कथितयैव दिशाऽवबोध्यम् ॥ ५४ ॥

एकदेशेति । न खण्डादिगौर्गोत्वमतियातीति न्यायादिति यावत् ॥ ५४ ॥

तद्वत् श्रीभगवत्पादोक्तदृग्दृश्यविवेकप्रसिद्धजीवान्तर्भावमप्याह——यदित्यादिप्रहर्षिण्या——

यत्प्राहुर्गुरुवरभाष्यकारपादाः
कूटस्थं तदुपरि तैजसं च विश्वम् ।

वस्तुत्वात्प्रतिकलनाच्च जीवमन्यं
लोकादौ व्यवहरणाच्च तद्गतार्थम् ॥ ५५ ॥

दृग्दृश्यविवेके हि वस्तुत्वात् कूटस्थः पारमार्थिको जीव उक्तः सुषुप्तिसाक्षित्वोपलक्षितः स्वप्नाभिमानी तैजसस्तु प्रातिभासिकः स्थूलाभिमन्वा विश्वस्तु व्यावहारिक इत्युक्तं क्रमात्तत्र हेतुनाह । वस्तुत्वादित्यादिना । प्रतीति । प्रतिभासमात्रत्वात् । लोकेति । आदिपदेन ब्राह्मणो यजेतेत्यादिशास्त्रम् । एतादृशमन्यं जीवम् । गुरुवरेति । यत् ; प्राहुस्तदपि श्रीगौडपादमतान्तर्भावोक्त्यैवात्र गतार्थमस्तीति संबन्धः ॥ ५५ ॥

उपसंहरति—इतीत्यादिसुमुख्या—

इति वार्तिककृन्मतेऽभव-
त्प्रतिबिम्बेश्वरवादिनां मतम् ।
सकलं हि सुखे यथाऽद्वये
विषयाणां सुखमन्तराहितम् ॥ ५६ ॥

॥ ५६ ॥

अथ बिम्बेश्वरमतान्तर्भावं तत्र दर्शयन् आदौ विवरणीयं तमाह—अविद्येत्यादिशिखरिणीवसन्ततिलकाभ्यां—

अविद्यातादात्म्यादविवृतचिदाभासवशतो
य ईशो जीवो वा मतित उदितो वार्तिकमते ।
अविद्यायां बिम्बप्रतिफलनतस्तौ विवरणे
तदन्तर्भूतं स्याद्विवरणमतं वार्तिकमते ॥ ५७ ॥

प्रतिफलनं प्रतिबिम्बनम् ॥ ५७ ॥

सौरेश्वरे बत मते कथितो य ईशो
बिम्बोऽप्यसौ तमसि नैजचिदात्मभासात् ।
एवं च यो विवरणेऽभिहितोऽस्त्यविद्या-
बिम्बाचिदीश इति सोऽप्ययमेव जातः ॥ ५८ ॥

सौरेश्वर इति । तमसि अज्ञाने । नैजेति । स्वचिदाभासात्—हेतोः । असौ बिम्बोऽपि इत्यर्थः ॥ ५८ ॥

तत्रापि शङ्कते—नन्वित्यादीन्द्रवज्रया—

नन्वेवमप्यस्ति न तन्मतस्य
जीवस्य ते वार्तिकसंनिवेशः ।

जीवो ह्यविद्याप्रतिबिम्ब उक्त-
स्तैर्धीचिदाभास इहेषितोऽसौ ॥ ५९ ॥

तन्मतस्य विवरणसंमतस्य । एतादृशस्य । जीवस्य । तं वार्तिकाचार्यसिद्धान्ते सर्वपूर्वाचार्यसंमतजीवेश्वराद्यन्तर्भावेन सर्वाद्वैतशास्त्राविरोधसिद्धान्तिनस्तवेत्यर्थः । तदेवोपपादयति जीवो हीत्याद्युत्तरार्धेन । तैर्विवरणाचार्यैः । इह वार्तिके । असौ जीवः ॥ ५९ ॥

समाधत्ते—नैवमित्यादिस्रग्धरया—

मैवं सिद्धान्तलेशे विवरणमतयोर्जीवबिम्बेशयोश्च
प्राक्सामान्यं निरूप्य प्रकटित उपरि प्राणभृद्वा विशेषः ।
सौरालोकस्य यद्वन्मुकुर इह मता व्यक्तिवैतुल्यहेतु-
स्तद्वज्जीवस्य चान्तःकरणमिति ततः को विरोधोऽनयोः
स्यात् ॥ ६० ॥

सामान्यं साधारणस्वरूपम् । प्राणेति । जीव प्राणधारणे इति स्मरणात् जीवगत इति यावत् । ननु कोऽसौ विशेष इति चेत्तमाह सौरेत्यादिना । निगमयति तत इत्यादिशेषेण ॥ ६० ॥

तत्र सिद्धान्तबिन्दुमप्यनुकूलयति—निगदितेत्यादिमालिन्या—

निगदितमत एवं तत्तु सिद्धान्तबिन्दौ
विवरणमतजीवं संप्रकृत्यास्य रूपम् ।
तदिह विवरणेष्टश्चारुबिम्बेशवादोऽ-
प्यतुलमुपनतोऽभूद्वार्तिकाचार्यपक्षे ॥ ६१ ॥

उपसंहरति । तदिहेत्याद्युत्तरार्धेन ॥ ६१ ॥

अथ भामतीमतमप्येतन्मतान्तर्भावयति—अनन्तेत्यादिशिखरिण्या—

अनन्ताज्ञानानां विषय उदितस्त्वीश्वर इति
तथाऽऽधारा जीवा इति च खलु वाचस्पतिमतम् ।
इदं ह्यन्तर्भूतं किमिह न भवेद्वार्तिकमते
विनाऽज्ञानं बुद्धिः कथमपि न यन्मूलविरहात् ॥ ६२ ॥

एवं तन्मतमनूद्य प्रतिज्ञाते तदन्तर्भावे हेतुं प्रतिपादयति । विनेत्यादिचतुर्थपादेन ॥ ६२ ॥

ननु तन्मतेऽवच्छिन्नवादः स तु कथमत्र वार्तिकसंमताभासवादेऽन्तर्भावयितुं शक्य इत्याशङ्क्य समाधत्ते । अवच्छिन्नता त्वित्यादिभुजंगप्रयातेन—

अवच्छिन्नता त्वाश्रयत्वेन जीवे
भवेद्गोचरत्वेन मोहस्य चेशे ।
इहाप्यस्ति तत्सर्वमेव प्रसिद्धं
विना गोचरं चाऽऽश्रयं स क्व सिध्येत् ॥ ६३ ॥

जीवे मोहस्याऽऽश्रयत्वेन तु अवच्छिन्नता भवेत्तथा ईशे मोहस्य गोचरत्वेनावच्छिन्नता भामतीमते भवेदित्यन्वयः । ननु एवमपि ततः किं प्रकृत इत्यत आह—इहापीत्याद्युत्तरार्धेन । तत्र हेतुः । विनेत्यादिशेषेण ॥ ६३ ॥

तत्रापि पुनराशङ्क्य समाधत्ते—आभास इत्यादिशार्दूलविक्रीडितेन—

आभासः प्रतिबिम्ब एव ननु वा श्रीविश्वरूपेप्सितः
सोऽवच्छिन्न उदीरितो भवति वै वाचस्पतेर्भामतौ ।
तत्रान्तर्भवनं कथं नु सुघटं भूयादमुष्येति चे-
न्नावच्छेदमृते द्वयोरपि रवेस्तोयादिकेऽदर्शनात् ॥ ६४ ॥

ननु श्रीविश्वरूपेप्सितः श्रीमद्वार्तिककारसंमतो जीवादिश्चिद्वस्तुनोऽविद्यादावाभासः प्रतिबिम्ब एव वा सिद्धान्तबिन्दूक्तव्यवस्थया भवतु । परंतु स जीवादिः । भामतौ । वाचस्पतेः । अवच्छिन्न एवं बुद्ध्यादिपरिच्छिन्न एव । उदीरितः सोपपत्ति संप्रतिपादितो भवतीति योजना । ततः किं तदाह । तत्रेत्यादिना । तत्र वार्तिकसंमत आभासे प्रतिबिम्बे वा जीवादौ । अमुष्य भामतीष्टस्यावच्छिन्नस्य जीवादेः कथं नु सुघटं भूयादिति चैन्न । तोयादिके उदकादर्शादौ । रवेः सूर्यस्य । द्वयोरपि आभासे प्रतिबिम्बे वा । अवच्छेदमृते किंचिद्देशपरिच्छेदं विना । अदर्शनात्—अदृष्टत्वादिति संबन्धः ॥ ६४ ॥

फलितमाह—तत इत्यादिभुजंगप्रयातेनैव—

ततो वार्तिकाचार्यसिद्धान्तसिन्धा-
ववच्छिन्नवादोऽपि गङ्गातरङ्गः ।
अगादन्तरङ्गत्वमेवं च गङ्गाऽ-
भवद्भामती सा सहस्रप्रवाहा ॥ ६५ ॥

तत्र भामत्यां श्रीगङ्गातत्त्वे साधर्यहेतुं द्योतयंस्तां विशिनष्टि । सहस्त्रेति । पक्ष सहस्त्राधिकरणेन पूर्वतन्त्रेण सह दृष्टान्तादिना प्रवहतीति तथेत्यर्थः ॥ ६५ ॥

एवमेकजीवपक्षाद्दृष्टिसृष्टिभेदादिपूर्वोक्तवादान्तर्भावमप्याह-जीवन्मुक्तादीत्यार्यया—

जीवन्मुक्तादिदृशा त्वेकशरीरैकजीववादाद्याः ।
अन्तर्भवन्ति वार्तिकमते पुरोक्ताखिलव्यवस्थाश्च ॥६६॥

आदिना मन्दप्रज्ञग्रहः । तस्यैवानेकशरीरैकजीववादाधिकारित्वादित्यभिप्रायः । एवमाद्यपदेन नानाविद्यावादमायाविद्याभेदवादाश्च ॥ ६६ ॥

उपसंहरति—अनन्तेत्यादिशिखरिण्या—

अनन्ताविद्यानामितिविषयताया उपहित-
स्तदाभासैरैक्यं गत इव चिदात्मेश इति दिक् ।
तदाधारास्तज्जनितहृदयाभासवशगा-
स्तथा जीवास्तद्यो य उदितविदद्वैत इह सः ॥ ६७ ॥

विषयताया हेतोरित्यर्थः । एवं भामत्युक्तेश्वरान्तर्भावमत्र वार्तिकमत उक्त्वा, तत्संमतजीवान्तर्भावमपि स्फुटयति । तदाधारा इत्यादि । तत्पदेनोक्ताऽविद्या - एवं च तदाश्रया इत्यर्थः । अत एव । तत्तादिति । तत्तदविद्याजन्यबुद्धिगतिवि म्बतादात्म्यापन्ना इति यावत् । उदितेति । उत्पन्नज्ञानः ॥ ६७ ॥

अथोक्तशास्त्रार्थमङ्गीकृतमुपवर्ण्य याचते स्वेष्टं शिष्यः—लक्ष्मेत्यादिस्रग्धरया—

लक्ष्मोपोद्घातलब्धं भवति सुविवृतं द्रागुपादानमेवं
कीदृक्कर्तृत्वमीशे जगत इति निमित्ते ममाऽऽस्ते बुभुत्सा ।
आचार्यास्तां प्रबोधादनुपमकृपयाऽह्नाय शान्तिं नयन्तु
स्वानन्दामन्दकन्दैरमृतपरिलसन्निजपादारविन्दैः ॥ ६८ ॥

एवं शिष्येण प्रार्थितः प्राक्तनप्रकृत एवाऽऽचार्यस्तं प्रति यथा त्वं पृच्छसी- श्वरस्य जगत्कर्तृत्वं कीदृशमेवमेव प्रश्नं कुर्वाणं कंचिज्जिज्ञासुं प्रति केचिदाचार्याः कार्यानुकूलमिति कामकृतिपदवाच्यजन्यजगद्विषयकज्ञानतद्वचनेच्छातद्विषयकप्रयत्न- त्वमेव तदिति वदन्तीत्याह—कार्येत्यादिवसन्ततिलकया—

कार्यानुकूलमितिकामकृतित्वमेव
कर्तृत्वमीशगतमित्यपरे वदन्ति ।
जन्या इमा इति ततोऽप्यनवस्थयेदं
नेत्याकुलं स्वव्यपरीक्षणमाहुरन्ये ॥ ६९ ॥

ननु एवमपि निरुक्तधर्माणामपि मित्यादीनां जन्यत्वलक्षणकार्यत्वात्तत्रापि अन्यत् तदित्यनवस्थेत्याशङ्कमानमन्यं मुमुक्षुं प्रति स्वन्य आचार्याः स्वरूपचैतन्यमेव तद्वदन्तीत्यभिधत्त । जन्वा इत्याद्युत्तरार्धेन ॥ ६९ ॥

तत्रापि कश्चिद्बुमुत्सुः शङ्कते—एवं जीवोऽपीत्यादिस्रग्धरया—

एवं जीवोऽपि कर्ता जगत इह भवेत्स्वस्वरूपप्रबोधः

स्यादीशे कर्तृता चेत्स च जगति भवेत्स्वाम्निकेऽपीश एव ।

अध्यासैकानुकूलं स्ववपुरभिहितं यत्त्वधिष्ठानभूतं

ज्ञानं तद्वत्त्वमस्याप्युचितमिति यदीष्टं तदाऽऽकर्णनीयम् ॥ ७० ॥

एवमुक्तरीत्या । ईशे । स्वस्यरूपेति । कर्तृता स्यात् चेत्तर्हि । जीवोऽपि । इह संसारे । जगतः कर्ता भवेत्तथा स्वामिकेऽपि जगति स ईश एव कर्ता भवेदित्यन्वयः । तत्र हेतुं प्रतिपादयति । अध्यासैकेत्यादिना । यतः । अध्यासेति । आरोपमात्रानुरूपम् । एतादृशम् । स्ववपुः स्वस्यरूपम् । ईदृक् । यत्तु अधिष्ठानभूतं ज्ञानं चैतन्यमभिहितम् । भ्रमोपादानाज्ञानविषयत्वमधिष्ठानत्वमित्यद्वैतसिद्धावुक्तमित्यर्थः । तद्वत्त्वम् । अस्यापि जीवस्यापि । उचितं योग्यमिति हेतोरिति पूर्वत्र सम्बन्धः । ततः किं तत्राऽऽह -इतीत्यादिशेषेण । आकर्णनीयं शृणु । दूषणमिति शेषः ॥ ७० ॥

तदेवाऽऽह संध्ये इत्यादिशार्दूलविक्रीडितेन—

संध्ये सृष्टिरिति प्रभृत्यभिलसत्सूत्रे हि यद्भाष्यकृ-

त्पादाब्जैरुपपादितं वत भवेत्सार्धं विरोधस्ततः ।

इत्यन्तर्विशयाकुलं प्रतिजगुः काचिन्मुनीन्द्राः शिवे

तत्सर्गाद्यनुकूलसृज्यविषयं ज्ञानं हि नान्यत्त्विति ॥ ७१ ॥

संध्ये सृष्टिराह हीत्यधिकरणभाष्ये स्वमाख्यसंध्यस्थान एव जीवस्य सृष्टिकर्तृत्वं यदभिहितं तेन सह विरोधः प्रपञ्चं प्रति जीवस्य कर्तृत्वाङ्गीकारे स्वमं प्रतीश्वरस्य कर्तृत्वाङ्गीकृतौ च स्यादित्यर्थः । इतीत्यादि । एवं प्रकारेण । अन्तर्भवति । विशयेति संदिहानम् । तज्जगत्कर्तृत्वम् । अन्यद्विशदमेव ॥ ७१ ॥

उपसंहरति--इतीत्याद्यार्याभ्याम्--

इति बद्धमुक्तजीवव्यवस्थितिवार्तिकानुसारेण ।

जीवादिनिगलद्वपुरीशं कर्तृत्वमपि कथितम् ॥ ७२ ॥

परमात्मनीव हरिहरचतुराननरूपभेदेन।
जन्माद्यस्य यत इति द्वितीयसूत्रार्थकथनमभूत् ॥७३॥

इति बद्धमुक्तव्यवस्थोपपत्तिः-

प्रतिपादितार्थत्रयेऽनुरूपमुपमानमाह—परमात्मनीवेति। शास्त्रसांगत्यमप्यस्याऽऽह जन्मादीति ॥ ७३ ॥

इति बोधैक्यसि. टी. अद्वैता. बद्ध० वार्ति० जीवा० कर्तृत्वा० द्वितीयसूत्रार्थोपपत्तिः ॥ ९ ॥

अथ प्रकृत एव शिष्यः स्वाचार्यं प्रति तृतीयसूत्रार्थे प्रतिपित्सुर्नेजाधिकारितां द्योतयितुं सोपोद्घातं द्वितीयसूत्रार्थानन्तरं सर्वं तदुपदिष्टशास्त्रार्थमनुवदति—एवमित्यादिस्रग्धरया—

एवं जन्मादिसूत्रेऽभिहितमिदमभूद्ब्रह्मलक्ष्मादिसर्वं
जिज्ञासासूत्रसिद्धेप्सितमतिकृपया मह्यमाचार्यवर्यैः।
पूर्वाचार्यैकमत्यप्रकटनपटुभिस्तत्र या कर्तृतोक्ता-
जन्यस्येशे तदाप्ता कथमिह नु मता साऽथ सर्वज्ञताऽपि ॥१॥

तदाप्ता जन्यजगत्कर्तृतान्यथानुपपत्तिप्राप्तेत्यर्थः। नु इति वितर्के। अथेत्यनन्तरम्। सा निरुक्तार्थापत्तिसिद्धा सर्वज्ञताऽपि। इहाद्वैतशास्त्रे। कथं मता संमताऽस्तीति तन्मां प्रति उपदेष्टव्यमित्यध्याहृत्यान्वयः ॥ १ ॥

अथ वैधविस्मरणशीलत्वसंभावनामाशङ्क्य तदुपशमं प्रतिजानीते ननु इत्यादिपुष्पिताग्रया—

ननु चरममतेऽधुनैव योक्ता
चिति जगतः किल कर्तृतैव वाऽसौ।
इति वदितमशक्यमेव यस्मा-
न्न विदमृते खलु कामनाकृती स्तः ॥ २ ॥

ननु चिति ब्रह्मणि। अधुनैव। या जगतोऽनादिभिन्नदृश्यस्य। चरमेति किलेत्यवधारणे। कर्तृता उक्ता प्रतिपादिता। सैव। असौ। पारमेश्वरी सर्वज्ञताऽस्तीति वदितुं वक्तुमप्यशक्यमेव भवतीति संबन्धः। तत्र हेतुमभिधत्ते। यस्मादित्यादिशेषेण। यस्माद्धेतोः। विदमृते ज्ञानं विना। कामनेति। इच्छाप्रयत्नौ न स्तः खलु नैव भवेतामिति योजना।

जानाति इच्छति यतते इति क्रमस्य सर्वसंमतत्वात्तत्कार्यानुकूलस्य प्रवृत्तिविषयं ज्ञानमेव परमेश्वरस्य जन्यजगत्कर्तृतेति चरममतोक्तज्ञानस्येच्छाजनकत्वेऽपि कृत्याख्य-

प्रयत्नं प्रति घटं प्रति कुलालपितृवदन्यथासिद्धत्वात्कस्याश्रयस्यैव लोके साक्षात्कर्तृ-त्वाभिधानात् च नैव परमेश्वरे सर्गाद्यनुकूलसृज्यविषयकज्ञानरूपं प्राक्तनप्रकरणीयान्स्यमतोक्तं जन्यजगत्कर्तृत्वम् । अत्र तद्रूपं सार्वज्ञ्यमपि वक्तुमयुक्तमिति भावः ।

न च इच्छाकृत्योरपि जन्यत्वेन प्रकृते जगदन्तःप्रविष्टत्वात्तत्प्रतियोगिकं कर्तृत्वं तु पुनर्निरुक्तज्ञान एवेति लाघवात्तदेवोचितमिति वाच्यम् । सद्य एव दत्तोत्तरत्वात् । नाप्येवं तर्हि जन्यज्ञानादित्रयप्रतियोगिककर्तृत्वेन पुनः प्रागुक्तानवस्थावादवस्थ्यमेवेति सांप्रतम् । इष्टापत्तेः । एतेन कुड्यचित्रन्यायेन सार्वज्ञ्यमपि व्याख्यातम् । तस्मात् किमत्र तात्पर्यमित्याचार्यचरणैराज्ञाप्यमेवेत्यभिप्रायः ॥ २ ॥

ननु लोके तावज्ज्ञानेच्छाकृतीनां यावच्चेतनजन्यघटादिकार्यकारणसामग्रीरूपनैयत्यप्रायत्वेऽपि स्वप्नादिभ्रमे ज्ञानसमकालमेव सकलेष्टानिष्टकार्यस्यानुभविकत्वेन वेदैकगम्य ईश्वरे तु निरुक्तज्ञानस्यैव सामग्रीत्वं समुचितमेवेति चेत्सत्यम् । तथाऽपि श्रुतिविरोधान्नैव निस्तार इत्याशयेन शङ्कते--यद्गीत्यादि शार्दूलविक्रीडितेन--

यद्यङ्गीक्रियते न तत्र्यमिह स्यात्तर्हि तस्येक्षण-
श्रुत्यादेर्वत बाध एव सहसेत्याशङ्क्य तां साधितुम् ।
सूत्रं प्रोत्थितमाद्यवर्णकसरण्या वेदकर्तृत्वतः
शास्त्रेत्यादि तदेव नोचितमिहाऽऽस्ते वर्णकाभ्यामपि ॥३॥

तस्य ईश्वरस्य । वतेति खेदे । ईक्षणेति । सदेव सोम्येदमग्र आसीदित्युपक्रम्य तदैक्षत तत्तेजोऽसृजतेति छान्दोग्य ईक्षणश्रवणम् । आदिना तैत्तिरीयके तु सोऽकामयत बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजतेति कामादेरपि यच्छ्रवणं ततः कामादेः स्पष्टमेव प्रतीतस्य सहसा बाध एवेत्याशङ्क्य तां जगत्कर्तृतामूलीभूतां सर्वज्ञतां यत् । शास्त्रेत्यादि । शास्त्रयोनित्वादिति सूत्रम् ।

आद्येति । प्रथमवर्णकप्रकारेण । वेदेति । वेदनिर्मातृत्वेव । तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायतेति श्रुतिप्रसिद्धेनेत्यर्थः । साधितुं संपादयितुम् । प्रोत्थितं प्रकर्षेण सर्वपूर्वाचार्यविवेचितत्वाख्येनोत्कर्षेण उत्थितं प्रवृत्तं भवति इति यावत् । तदेव इह शास्त्रे । वर्णकाभ्यामपि पूर्वोत्तराभ्यामपि उचितं युक्तम् । नाऽऽस्ते नैव संपद्यत इति संबन्धः ॥३॥

यदेवोपपादयितुं सांप्रदायिकसंमते निरुक्तसूत्रवर्णकद्वयार्थं क्रमेण कथयति--नो इत्यादिना तेनैव--

नो सार्वज्ञ्यमृते प्रतीचि जगतः स्यात्कर्तृतेतीरितं
तत्तत्र श्रुतिकर्तृकत्ववशतः प्रोच्याऽऽदिमे वर्णके ।
एतादृक् परवस्तु न श्रुतिमृते विज्ञायतेऽन्यैरिति
प्रोक्तं चान्तिमवर्णकेन सकलैराचार्यवर्यैः खलु ॥ ४ ॥

ईरितमर्थसमाजग्रस्तमित्यर्थः । एतादृशम् । तत्सार्वज्ञ्यम् । तत्र प्रतीचि । श्रुतीति । आदिमे वर्णके प्रोच्य एतादृगित्यादि । प्रोक्तं खल्विति योज्यम् ॥४॥

एवं वर्णकद्वयार्थं क्रमेण यथासंप्रदायमुपवर्ण्य तस्यान्तर्भावं पूर्वोत्तरसूत्रयोः प्रतिजानीते—अन्तरित्यादिशालिनीपूर्वार्धेन—

अन्तर्भूते वर्णके द्वे अपीमे
सूत्रद्वंद्वे प्राक्परागात्मके स्तः ।
यावज्जन्ये कारणं चेत्परेश-
स्तादृग्वेदेऽप्येव तेनैव तत्स्यात् ॥ ५ ॥

तत्र आद्यान्तर्भावे हेतुं प्रतिपादयति—यावदित्याद्युत्तरार्धेन ॥ ५ ॥

अन्त्यस्यापि तं स्फुटयति—एवमित्यादिशार्दूलविक्रीडितपूर्वार्धेनैव—

एवं तत्तु समन्वयादिति महासूत्रादिमे वर्णके
वेदैकप्रतिबोध्यमद्वयमिति स्पष्टं गतार्थं न किंनु ।
तेनेदं किल सूत्रमेव विफलं पाठे यथोक्ते ततः
सर्वज्ञात्मगुरुस्तु मङ्गलविधौ तद्व्यत्ययं व्यादिशत् ॥६॥

महत्त्वं सकलाद्वैतशास्त्रार्थसंसूचकत्वादेव । निगमयति तेनेत्यादिना । किलेति वाक्यालंकारे । यथोक्ते पाठे इत्यस्य कृत्यं द्योतयति तत इत्यादिशेषेण । संक्षेपशारीरकमङ्गलाचरणच्छलेन हि अथातो ब्रह्मजिज्ञासा इत्यादिचतुःसूत्र्यर्थकथकचतुःश्लोक्या तत्र तृतीयश्लोकेन प्रत्यक्प्रमाणकमित्यादिना समन्वयसूत्रार्थं संगृह्य शास्त्रयोनिसूत्रस्य चतुर्थ एव तमाह ॥ ६ ॥

एवं सूत्रस्य वैयर्थ्ये प्रकारान्तरयोजनया तत्सार्थक्यमाशङ्क्य निराकरोति—न चैवमित्यादिशिखरिण्या—

न चैवं वैयर्थ्येऽप्यभिनवविवृत्त्याऽस्य हितता
जगद्धेतुर्नोचेद्यदिह खलु नित्योऽस्ति निगमः ।
इति प्रत्याख्यातुं प्रथमत इदं सूत्रमिति य-
न्न तेनान्तर्भावोऽपसरति निरुक्तस्तदपि ते ॥ ७ ॥

अभिनवेति । उक्तेतरव्याख्यानेनेत्यर्थः । अस्य प्रकृतसूत्रस्य । हितता सार्थ-कतेति यावत् । तामेवाभिनवविवृतिं व्युत्पादयति जगदित्यादिना । चिद्ब्रह्म । जगद्धेतुर्जन्यजगदभिन्ननिमित्तोपादानम् । नो भविष्यति । कुत इति चेत्तत्राऽऽह—यदित्याद्द्वितीयपादेन । यत् यस्मात् हेतोः । इह संसारे । निगमो वेदः । नित्योऽस्ति । वाचा विरूपनित्ययेति श्रुतेः प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रति-योगित्वमस्ति भवतीत्यर्थः । अत एव । स्मर्यते अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय इति ।

ततः किं तदाह इत्यादि । ननु एवं चेत् तर्हि कुतोऽस्य सूत्रस्य सार्थक्य-मित्यत आह—इतीत्यादिशेषेण । इति न च वाच्यमिति प्रश्नारम्भेण संबन्धः । तत्र हेतुमाह । यदित्यादिना । यत् यस्मात् कारणात् । तदपि एवं सत्यपि । ते तवोक्तव्याख्यया सूत्रसाफल्यवादिनः । निरुक्तः प्राङ्मया प्रतिपादितः । अन्त-र्भावः । प्रकृतसूत्रे यवर्णकद्वयप्रतियोगिकः क्रमात् । एतत्सूत्राव्यवहितपूर्वोत्तरसू-त्रानुयोगिकः । एतादृशः । अन्तर्भावः । नापसरति ॥ ७ ॥

अथैवं पूर्वपक्षे प्राप्ते प्रकृत एवाऽऽचार्यः समाधत्तुपक्रमते—बाढं वत्सेत्यादि-मन्दाक्रान्तया—

बाढं वत्साऽऽशृणु हितमिदं दर्शनारम्भसूत्रे
ब्रह्मान्वेष्टुं श्रुतिमुकुटतस्तत्त्वजिज्ञासुनेति ।
प्रोक्तं कीदृग्भवति तदिति प्रोत्थितायां तृषीदं
जन्माद्यस्येत्यभिहितमभूत्तस्य लक्ष्मावबोद्धुम् ॥ ८ ॥

आशृणिवति च्छेदः । वत्सेति कारुण्यातुप्रेमप्रचुरं सूचकं संबोधनम् । इह बाढमित्यर्थं प्रश्नमभिनवत्वेनाङ्गीकृत्वाऽऽशृणिवति समन्ततः श्रवणाय साश्वासनं सावधानीकृतं शिष्ये प्रति शास्त्रारम्भसूत्रार्थमनूद्य तस्य जन्मादिसूत्रसांगत्यमाह दर्शनेत्यादिशेषेण । तृषि जीवनेच्छावत्तीव्रतमजिज्ञासायां सत्यामित्यर्थः । शिष्टं तु स्पष्टमेव ॥ ८ ॥

ननु किं जन्मादिसूत्रेण धूमहेतुत्वं वह्नित्वमित्यादिवज्जगज्जनकत्वमेव लक्षण-मुच्यते किंवा दाहकत्वे सति प्रकाशत्वं तदितिवत्स्वरूपलक्षणमित्याशङ्क्योभयवि-धमपि इति सोदाहरणं समाधत्ते । शाखाग्रमित्यादिशार्दूलविक्रीडितेन—

शाखाग्रं शशिनः प्रकृष्टरुगपीत्यादीव तल्लक्षणं
ताटस्थ्याद्उपलक्षणत्वविधया स्वात्मत्वतोऽपीरितम् ।
वेदेनेति च तत्र निश्चितमभूत्तेन प्रमाणं श्रुति-
स्तत्रेतीष्टमतोऽत्र मेयत इयं ह्यन्यूनसत्ताक्षिवत् ॥ ९ ॥

यथा लोके क चन्द्र इति शुक्लद्वितीयाचन्द्रादिदृक्षुणा पृष्टः कश्चिदाप्तः शाखाग्र इति तद्वत् आद्यं तद्भवतीत्यर्थः । प्रकृष्टेति । कोऽत्र ज्योतिर्गणे चन्द्र इति पृच्छन्तं पोतं प्रति माता वक्ति प्रकृष्टप्रकाश इति तद्वत् अन्त्यमपि तदिति यावत् । तत्र क्रमेण कारणे। ताटस्थ्यादित्यादिना ।अद उक्तं स्वाराज्यसिद्धिद्वितीयपरिच्छेदाद्यपद्यव्याख्यायां सप्तपञ्चम् । ताटस्थ्यादिति । तटे तिष्ठतीति तटस्थः । तद्भावस्ताटस्थ्यं तस्मादिव ताटस्थ्यात् । यथा पिपासितपुरुषेण क नदीति पृष्टः कश्चित् दूरं निम्नदेशस्थां नदीं साक्षात् प्रदर्शयितुमशक्नुवन् नदीतटस्थं वृक्षं दर्शयति यत्राद्य वटः पिप्पलो वा इति तन्मूलमुपसृप्तोऽयं नदीं द्रक्ष्यतीति ।

तत्र यथा नद्यसंबद्धोऽपि वृक्षो नदीताटस्थ्यान्नदीप्रतिपत्त्युपाय इति तथा लक्षकत्वात् लक्षणं तद्वज्जगत्कारणत्वं ब्रह्मलक्षणमित्यर्थ इति । असंबद्धत्वं हि अत्र साक्षादेव । एवं काकवन्तो देवदत्तस्य गृहा इत्यादौ आकस्मिकसंयोगादिसंबन्धवत्यपि काकादावुपलक्षणे स्वलक्ष्यस्वरूपभिन्नत्वान्नाव्याप्तिः । तस्मात्ताटस्थ्यात् उदासीनधर्मत्वाद्धेतोरुपलक्षणत्वविषया । यतो वा इमानि भूतानीत्यादिश्रुत्यभिहितजगज्जन्मादिकारणत्वस्योपलक्षणत्वप्रकारेणेति संबन्धः । तथाचोपलक्षणमेव तटस्थलक्षणमिति ध्येयम् । एवं द्वितीयमपि तदाह । स्वेति । चोऽवधारणे । एवं च तत्र जन्मादिसूत्रे शास्त्रेत्यादिपूर्वार्धम् । वेदेनेव तल्लक्षणमीरितं सत्यमित्यादिनोक्तमिति निश्चितमभूदित्यन्वयः । तत्र द्वैतापत्तिं शङ्कते तेनेत्यादिशेषेण । मेयत्नः ब्रह्मणः ॥ ९ ॥

एवं च वेदो ब्रह्मसमसत्ताकः । तत्प्रमाणत्वात् । यो यत्प्रमाणं स तत्समानसत्ताकः । यथा रूपत्वप्रमाणं चक्षुरिति पर्यवसितं शङ्काशयमनूद्य शमयति—नन्वेत्याद्यार्यया—

इत्याशङ्क्यमादिमवर्णकनष्टं चमेतद्बाधकरणम् ।

न ब्रह्म स्वकमापकमसमसत्ताकं हि वेदजनकत्वात् ॥ १० ॥

ननु कथं शास्त्रयोनित्वाधिकरणादिमवर्णके निरुक्तशङ्कानिवारकत्वमित्यत आह नेत्याद्युत्तरार्धेन । ब्रह्म । स्वकेत्यादि । स्वप्रमाणसमसत्ताकम् । नहि हिरवधारणे । नैव भवति । तत्र हेतुः । वेदेति ॥ १० ॥

तत्र हेत्वसिद्धिं समुद्धरति—महत इत्याद्यार्यात्रिपाद्या—

महतो भूतस्यास्य तु निःश्वसितं सर्ववेदवृन्दमिति ।

श्रुतिरेव तत्र मानं नहि पुष्पं वृक्षतुल्यसत्ताकम् ॥ ११ ॥

अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इत्यादिबृहदारण्यकवाक्यमेवात्र मूलमित्यभिप्रायः । नन्वेवमप्यत्र वेदे ब्रह्मप्रमाणत्वेन तन्न्यूनसत्ताकत्वशमने तस्य वेदजनकत्वेऽपि किमायातमित्यत्राऽऽह—नहीत्यादि चरमचरणेन । तत्समानसत्ताकत्वे तज्जन्यत्वमेव वेदस्य व्याहन्येतेत्याशयः ॥ ११ ॥

नन्वेवं यदि वेदो ब्रह्मजन्यस्तर्हि स तत्र प्रमाणं न स्यादित्यत आह । वृक्षेत्यादिमन्दाक्रान्तात्रिपाद्या—

वृक्षज्ञानं कुसुमत इति स्पष्टमेवास्ति लोके
धूमाद्वह्नेरनुमितिकरं नास्ति किं वाऽनुमानम् ।
नैतत्स्वस्वप्रमितिविषयैस्तुल्यसत्ताकमिष्टं
यत्त चक्षुर्मतमिदमपि स्वीयवृत्त्यात्मताद्दक् ॥ १२ ॥

पारिजातादिवृक्षज्ञानं तस्य कुसुमत इति प्रसिद्धमेवेति भावः । उपलक्षणमेव तत्तदीयपत्रफलादेरपि । तेन न्यग्रोधौदुम्बरादीनां वनस्पतीनां नैसर्गिककुसुमाभावेऽपि न क्षतिः । एवं तज्जन्यस्यापि तत्प्रत्यक्षप्रमापकत्वं समुदाहृत्य तदनुमापकत्वमप्याह । धूमादित्यादिद्वितीयपादेन । एतेन प्रागुक्तेन ब्रह्मेत्यादिप्रयोगे दृष्टान्तः स्पष्टीकृतः ।

तथाचात्र एवं प्रयोगः पर्यवसितः । वेदः स्वमेयब्रह्मन्यूनसत्ताकः । तज्जन्यत्वात् । पुष्पादिवद्धूमादिवच्चेति । अत्राऽऽदिना घनगर्जितादि । एतदेवाऽऽह नैतत् इति तृतीयपादेन । एतत् पुष्पादि धूमादि च । अथ प्रतिवादिनिदर्शनमपि अनुकूलयति । यदित्यादिचरमचरणेन । स्वीयेति । स्वजन्यवृत्तिरूपं ताद्दक् स्वप्रमेयाल्पसत्ताकमित्यर्थः । वक्ष्याम एवैतदग्रे प्रतिकर्मव्यवस्थायामित्युपरम्यते ॥ १२ ॥

निगमयति—तदित्यादिप्रहर्षिण्या—

तन्माने नहि नियता समानसत्ता
मेयैरित्यनुचितभुक्तशङ्कितं तैः ।
तेनास्मिन्नधिकरणे तु वर्णकं त-
त्प्राथमिकं न भजति चारुवैदिकानाम् ॥ १३ ॥

[illegible] स्थानाद्धेतोरित्यर्थः । माने प्रमाणे । मेयैः प्रमेयैः सह । [illegible]ति । नियता निश्चिता । न हि हिरवधारणे । नैवास्तीत्यन्वयः । फलितमाह । तेनेत्यादिना । इति हेतोः । तत्प्राथमिकम् । चारुपदेन पूर्वमीमांसकव्युदासः ॥१३॥

एवमुत्तरवर्णकसार्थक्यमपि उपपादयितुं तन्निरस्याशङ्कामादावाह—जन्माद्यस्ये- स्यादिस्रग्धरया—

जन्माद्यस्येति सूत्रे जगदुदयलयस्थित्युपादानभूतं
यत्तद्ब्रह्मैव बाधावधि भवनवशाद्रज्जुवत्स्पष्टमेवम् ।
संप्रोक्तं नानुमानं किमिह भगवता सत्यवत्याः सुतेन
तेनैतन्नैव मेयं श्रुतिशिखरगिरः क्वोक्तशङ्कादिकं तत् ॥ १४ ॥

जगदित्यादि । जन्यद्वैताभिन्ननिमित्तोपादानम् । यत्तद्ब्रह्मैव । तत्र हेतुः । बा- धेति । रज्जुवदितिदृष्टान्तः । एवमनेन प्रकारेण । भगवता । सत्येति । श्रीम- द्व्यासेन । इह जगत्कारणे विषये । अनुमानं संप्रोक्तं किं, अपि तु संप्रोक्तमेवास्तीति संबन्धः। ततः किं तदाह तेनेत्यादिशेषेण । श्रुतीति उपनिषद्वाचः । तत्त्वमस्यादेरिति यावत्। उक्तेति । तृतीयसूत्रं नैव कर्तव्यमित्यादिपूर्वपक्षप्रभृतीत्येतत् ॥ १४ ॥

अथोक्तशङ्कां परामृश्य तन्निरासेनोक्तसूत्रीयद्वितीयवर्णकसाफल्यमाह—इतीत्या- दिपृथ्व्या—

इति प्रबलशङ्कितं शमयितुं पुनर्वर्णकं-
द्वितीयमरचि स्फुटं सपदि भाष्यकाराङ्घ्रिभिः ।
सदौपनिषदं मतं श्रुतिशिरोऽपरानीक्षणा-
दिति स्फुटति सार्थकं किमु न सूत्रमेतद्वद ॥ १५ ॥

तदेव विशदयति । सदित्याद्युत्तरार्धेन । सत्सदेव सोम्येदमग्र आसीदित्यादिश्रुत्यु- पक्रान्तमद्वैतं ब्रह्म । औपनिषदं वेदान्तमहावाक्यगम्यं मतं संमतं भवति । तत्र हेतुः। श्रुतीति । तदितरागोचरत्वात् । व्यतिरेके घटादिवदित्यर्थः । न चात्र हेतुसाध्ययो- रभेदः शङ्क्यः । वेदान्तमहावाक्यगम्यत्वं साध्यतावच्छेदकम् । तद्भिन्नागम्यत्वं तु हेतुतावच्छेदकमिति भेदात् । नापि हेतोः पक्षावृत्तित्वम् । नावेदविन्मनुते तं बृहन्तमित्यादिश्रुतिभिरेव तत्सिद्धेः । उपसंहरति । इतीत्यादिचरमचरणेन ॥ १५॥

एवं शास्त्रयोनित्वसूत्रसार्थक्येऽपि समन्वयसूत्रस्यैव तर्हि वैफल्यं स्यादेव तदुक्तस्या- द्वैतब्रह्मणि वेदकगम्यत्वस्य पूर्वपद्योक्तरीत्या शास्त्रयोनिसूत्रीयद्वितीयवर्णकेनैव गता- र्थत्वादित्याशङ्क्य समाधत्ते—नन्वेवमित्यादिप्रहर्षिण्या—

नन्वेवं यदि न समन्वयाख्यसूत्रं
युक्तं स्याद्यदिह ततस्तु वेदमौलेः ।

सर्वस्याप्यतुलसमन्वयोऽद्वये यः
सिद्धोऽसावित इति चेन्न चिन्त्यभेदात् ॥ १६ ॥

तत्र हेतुः--यदित्यादिना। यद्यस्माद्धेतोः। इह अद्वैतशास्त्रे। तुरवधारणे। तत एव समन्वयसूत्रादेव। सर्वस्यापि निखिलस्यापि। एतेन कासांचित्सगुणब्रह्मपराणामाथर्वणादिप्रसिद्धानां श्रीमद्भगवत्पूज्यपादपादारविन्दैर्व्याख्यातानामप्युपनिषदां मन्दाधिकारिचेतसः स्थिरीकरणैकप्रयोजनत्वेन तृतीयाध्यायोक्तरीत्या नृसिंहपूर्वतापिनियिभाष्यविष्णुसहस्रनामभाष्योक्तप्रकारेणैव क्रममुक्तिद्वारा वाऽद्वैतब्रह्मात्मैक्य एव व्याख्यातः समन्वयः।

एवमेवोक्तं कल्पतरौ। निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैरिति। अद्वये प्रत्यगभिन्ने। ईदृशे। ब्रह्मणि। अखण्डचिन्मात्रे वस्तुनि। यः। अतुलेति। निरुपमतात्पर्यविशेषः। असौ। इत एव। शास्त्रयोनिसूत्रान्तिमवर्णकेनैव। सिद्ध इति चेन्न। तत्र हेतुः। चिन्त्येति। विचार्यवैलक्षण्यादित्यर्थः ॥ १६ ॥

तमेव प्रतिबोधयति--उपक्रमेत्याद्युपजात्या--

उपक्रमाद्यैरखिलैस्तु लिङ्गै-
स्तात्पर्यमेव श्रुतिशेखराणाम्।
अद्वैतचिन्मात्रगमे विनिश्चितं
चतुर्थसूत्रादिमवर्णकेन ॥ १७ ॥

तानि तु आहुः प्राचीनाचार्याः। उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इति ॥ १७ ॥

ननु किं तावल्लोके वेदे च यस्य शब्दस्योपक्रमादिलिङ्गैर्यत्र तात्पर्यं तस्य वस्तुनस्तदेकशब्दगम्यत्वं भारतरामायणादिषु पूर्वकाण्डे च प्रसिद्धमेवेति चेद्बाढम्। समन्वयसूत्रादिमवर्णकेनोत्तरकाण्डस्य उपक्रमादिलिङ्गैस्तात्पर्यमेवाद्वैतब्रह्मात्मनि विनिर्णीतं पूर्वसूत्रान्तिमवर्णकविनिर्णीतस्य तत्र वेदान्तमहावाक्येतरागम्यत्वे सति तदेकगम्यत्वस्य त्वपेक्षयैवेत्याशयेन समाधत्ते--नेत्यादिवंशस्थेन--

नैतावता तस्य तदेकगम्यता
सिध्यत्यतो नास्य ततो गतार्थता।
फलस्य संकीर्तनमन्त्यवर्णके
सर्वं ततः सिद्धमतीव निर्मलम् ॥ १८ ॥

एतावता उपक्रमादिलिङ्गविचारमात्रेण । तस्य ब्रह्मात्मैक्यस्य । तत्त्वेकेति । निरुक्तरीतिकमहावाक्यैकगम्यत । न सिध्यति । अतो हेतोः । अस्य तृतीयसूत्रीयवर्णकोक्तप्रकृतौपनिषदत्वरूपार्थस्य उपकारकोपक्रमादिलिङ्गविचारस्य । ततस्तृतीयसूत्रद्वितीयवर्णकोक्तविचारेण । गतार्थता न चाग्रिमार्थ्यं नैव भवति इत्यन्वयः। नहि साध्यकथनमात्रेण हेतुचिन्तावैयर्थ्यम् । नन्वेवमपि चतुर्थसूत्रीयवर्णकेतरवैयर्थ्यं तादवस्थ्यमेवेत्यत आह । फलस्येत्याद्युत्तरार्धेन । फलस्य । अविद्याध्वस्तिलक्षणाचिन्मात्रमुक्तेः ॥ १८ ॥

अथ प्रकृत एव शिष्यः पुनः स्वाचार्यं प्रति निरुक्तावान्तरशङ्कितसमाधानसिद्धान्तं सर्वाविरोधेनातिरमणीयतयाऽङ्गीकृत्य अथ प्राक्प्रकृतमीश्वरसर्वज्ञतामेव विचारयितुं पृच्छति—अस्तु इत्यादिवसन्ततिलकया—

अस्त्वेवमप्युदयभाति जगन्निदानं
सामान्यतः श्रुतिजनः सकलज्ञ इति ।
सा कीदृशीति न विशेषवचःसुमता मे
नो शान्तिमेति तदिमां गुरवो हरन्तु ॥ १९ ॥

अयि आचार्याः । इदमवान्तरशङ्काशामकं सिद्धान्तरहस्यमस्तु तथाऽपि । जगदिति । जगदभिन्ननिमित्तोपादाने ब्रह्मणि । सामान्यतः । श्रुतीति । प्रागुक्तवेदकारणत्वादित्यर्थः । या सकलेति । सर्वज्ञता । उदयभेति सर्वपुमर्थतत्साधनज्ञापकवेदकर्तृत्वान्यथानुपपत्तित एव सिद्धा भवतीति यावत् । सा कीदृशीत्याद्युत्तरार्धं तु निगदव्याख्यातम् ॥ १९ ॥

ननु कोऽत्र संदेहो भवति इति चेत् किमसौ स्वप्रकाशात्मरूपेण एव सर्वं दृश्यं प्रकाशयति उत मायया वा इति शिष्याशयं स देशिकेशः समनुमायेत्थमेव पृच्छन्तं जिज्ञासुं कंचित् समादधानानां श्रीभारतीतीर्थानां सिद्धान्तबोधनतः समाधत्ते । आस्तामित्यादिस्रग्धरया—

आस्तां सर्वज्ञ ईशः श्रुतिजनकतयाऽथापि किं सोऽपि सर्वं
जानाति स्वात्मभासाऽनवरतवशया मायया वेति कंचित् ।
संदेहग्रस्तमाहुस्तदुपशमकृते भारतीतीर्थसंज्ञा
आचार्याः सर्वबुद्धिस्थितनिखिलजगद्वासनासाक्षितां ताम् ॥ २० ॥

अनवरतेति । अखण्डस्वाधीनयेत्यर्थः । एतादृश्या । मायया वा जानाति इति

संदेहग्रस्तं कंचित् मुमुक्षुं प्रति । तदुपेति । निरुक्तसंशयशान्त्यर्थमिति यावत् । भारतीत्यादि साक्षितामित्यन्तं यथाश्रुतमेव योजयित्वा तां सर्वज्ञताम् । आहुरिति संबन्धः । ननु कूटस्थब्रह्मजीवेशावित्येवं चिच्चतुर्विधा । घटाकाशमहाकाशजलाकाशाभ्रखे यथा इत्यादिना चित्रदीपे विद्यारण्यगुरुभिरेव चिचातुर्विध्यवादमुपक्रम्य मेघाकाशदृष्टान्तासिद्धमाशङ्क्य समर्थ्यैव ईश्वरत्वं स्पष्टमुक्तं तत्त्वेन सर्वबुद्धिस्थितनिखिलजगद्वासनासाक्षितारूपतदीयसार्वज्ञ्यस्य तन्मात्रसंमतत्वात्तद्गुरूणां भारतीतीर्थश्रीचरणानां प्रकृते तत्संमतत्वकथनमनुचितमेव इति चेन्न ।

तृप्तिदीपाद्यवशिष्टनवप्रकरणीकर्तॄणां तद्गुरूणां भारतीतीर्थश्रीचरणानामपि कूटस्थदीपे निरुक्तवादस्यैव संमतत्वेन तथैवेष्टत्वात् । तद्यथा । कूटस्थदीपे तावत् । घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः । विज्ञातो घट इत्युक्तिर्ब्रह्मानुग्रहतो भवेदित्याभासवादमेवोपन्यस्य आभासब्रह्मणी देहाद्बहिर्यद्वद्विवेचिते । तद्वदाभासकूटस्थौ विविच्येतां वपुष्यपीत्यग्रिमपद्येन चिच्चातुर्विध्यमपि उक्त्वा मायाऽऽभासेन जीवेशौ करोतीति श्रुतत्वतः । मायिकावेव जीवेशौ स्वच्छौ तौ काचकुम्भवदिति तत्रैवाग्रे स्थलान्तरे जीवेशस्वरूपं निरूप्य । माया मेघो जगन्नीरं वर्षत्वेष यथा तथेति मायाया मेघत्वोक्तेर्निरुक्तेश सार्वज्ञ्यं ध्वनितमिति ॥ २० ॥

तत्रापि कश्चिच्छङ्कते—नित्येत्यादिशार्दूलविक्रीडितेन—

नित्यातीन्द्रियधर्ममुख्यविषया बुद्धिः परोक्षैव त-
त्संस्कारोऽपि तथेति तस्य विषयोऽप्यज्ञात एवांशतः ।
भास्यस्तत्प्रतिबिम्बितेन तु मतेऽस्मिन्साक्षिणेशेन चे-
त्साक्षात्सर्वविदीश्वरोऽपि न भवेत्तर्ह्यस्मदाद्यैः समः ॥ २१ ॥

नित्यं सर्वदा येऽतीन्द्रिया इन्द्रिया गोचरा एव ते धर्ममुख्या धर्मादयस्ते विषया यस्याः सा तथेत्यर्थः । तथा नित्यातीन्द्रिय एवेत्येतत् । यस्य संस्कारस्य विषयोऽपि बुद्धेर्नित्यमतीन्द्रियधर्मादिविषयत्वेन परोक्षत्वे तत्संस्कारस्य निसर्गपरोक्षस्य विषये बुद्ध्यादावंशतः परोक्षज्ञाने तावदसदावरणैकनाशत्वेनाभानावरणानाशकत्वाद्वृत्तेः साक्ष्येकप्रत्यक्षत्वादज्ञातत्वे साक्षिभास्यत्वरूपं परोक्षत्वं कैमुत्यसिद्धमेवेति भावः ।

ततः किं तदाह । तत्प्रतिबिम्बितेनेत्यादिना । अस्मिन् उपक्रान्तभारतीतीर्थमते तु । तदिति । निरुक्तरूपसंस्कारप्रतिबिम्बितेन साक्षिणा । एतादृशेन । ईशेन भावप्रधाननिर्देशाद्घटो नित्य इत्यादिवदीशत्वेनेति यावत् । यदि साक्षात्सर्ववि-

दीश्वरो भवेत्तर्हि अस्मदाद्यैः समो न भवेत्किम् । अज्ञातत्वेन साक्षिभास्यसर्वविषयकज्ञानवत्त्वलक्षणं सार्वज्ञ्यं तु सर्वजीवसाधारण्येन विद्यत एवेति तदविशेषस्तत्र भूयादेवेति भावः ॥ २१ ॥

तत्समाधत्ते प्रकृत एव श्रीगुरुस्तथा शङ्ककं मुमुक्षुं प्रति प्रकटार्थकृत्सिद्धान्तमनुवदन्—इतीत्यादिप्रबोधितया—

इति विह्वलमानसं यतिं-
प्रतिबोद्धुं प्रकटार्थकृज्जगौ ।
इह मायिकवृत्तिभेदतोऽ-
स्त्यपरोक्षत्वमदोऽखिलेष्विति ॥ २२ ॥

यतिं जिज्ञासुम् । इह संसारे विषये । मायिकेति । चित्प्रतिबिम्बविशिष्टैः त्रैकालिकयावद्दृश्यविषयकमायिकवृत्तिभेदैरित्यर्थः । अखिलेषु सर्वद्वैतवस्तुविषयकमिति यावत् । अपरोक्षत्वमेव । अद ईश्वरनिष्ठं सर्वज्ञत्वम् । अस्तीति प्रकटार्थकृज्जगौ इति पूर्वेणान्वयः ॥ २२ ॥

तत्राप्याशङ्कायां समाधत्ते—भूतेत्यादिस्वागतया—

भूतभाविविषया ननु माया-
वृत्तिरप्युदयमेतु कथं वा ।
इत्थमुन्मनसमाह स तत्र-
तत्त्वशुद्धिकृदलं स्मृतितर्कौ ॥ २३ ॥

ननु भूतेति । कालस्तु सामान्यतो ह्यविद्याचित्संबन्ध एवानादिस्तत्र भूतादिः क्षणात्मा खण्डकाल एव तदवयवविशेष एवं तदवच्छिन्नवस्तुविषया मायावृत्तिरेव तस्या वर्तमानित्वात्कथं स्यादित्याशयः । इत्थमुक्तप्रकारेण । उन्मनसं विकलचित्तं मुमुक्षुं प्रति । स सुप्रसिद्धः । तत्र भूतादिविषये । तत्त्वेति । अलं निरतिशयं याथार्थ्यपर्याप्तौ । एतादृशौ ।

स्मृतीति । क्रमेण भूतभव्याविषयौ मायिकस्मृतितर्कावेवेश्वरे सार्वज्ञ्यप्रयोजकौ वर्तेते इत्याहेति संबन्धः । वर्तमाने तु मायावृत्तिः सिद्धैवेति भावः । उपलक्षणमिदं विवरणकाराणामपि । तदुक्तं न्यायरत्नावल्याम् । विवरणकारमते तु विद्यमानविषयेषु प्रत्यक्षरूपा भाविष्वनुमितिरूपाऽतीते स्मृतिरूपा मायावृत्तिः स्वीक्रियत इति ताभिरेवेश्वरस्य सर्वज्ञत्वं सदेति तत्रोक्तमिति ॥ २३ ॥

एतदव्यवहितपूर्वोक्तं सार्वज्ञ्यम्। चारु न भवति। तत्र हेतुः। अनीक्षितत्वादित्यादिना। साक्षिणा सर्वविषयकं भानं तु ज्ञातत्वाज्ञातत्वाभ्यामेव वाच्यम्। तदेव यदि सार्वज्ञ्यं तर्हि अज्ञातत्वांशेनार्धं सार्वज्ञ्यं जीवेऽपि स्यात्। नहि अर्धदर्शने समग्रदर्शनव्यवहारः संभवति उपरकसूर्यादौ। एवं ज्ञा अवबोधन इति, भूवादयो धातवः। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः, इति च सूत्रात् ज्ञाधातुसंबन्धिक्रियार्थतादेरपि बाधो भवेदिति भावः। आदिना जानातीत्यादिसर्वलडादितिङ्प्रत्ययाः ॥ २६ ॥

तदेव विशदयति दृश्येत्याद्यार्यया—

दृश्यावच्छिन्नतया चितोऽपि कार्यत्वसंभवात्सुवचा।
ईशेऽपि सर्वविषयज्ञानं प्रति कर्तृतैवेति ॥ २७ ॥

॥ २७ ॥

उपसंहरति कथितमित्यादिमुरल्या। तत्रानुरूपमुपमानमुपादिशति—निगमैरित्याद्युत्तरार्धेन—

कथितं किल पञ्चभिर्मतैरपि सार्वज्ञ्यमितीश्वरस्य ते।
निगमैः सपुराणपञ्चभिर्निजमद्वैतसुखामृतं यथा ॥ २८ ॥

॥ २८ ॥

इतीश्वरसार्वज्ञ्यमतैक्योपपत्तिः ॥

---

ननु भवत्वेवमेशसार्वज्ञ्यविषयकप्राचीनाचार्यमतैक्योपपत्तिः। तथाऽपि कात्र प्रकृतग्रन्थसंगतिरित्यतस्तां प्रकटयति—अथेत्यादिमालभारिण्या—

अथ तत्तु समन्वयादितीह
श्रुतिमौलिव्रजवाक्समन्वयो यः।
स्फुटितः परजीवयोरभेदे
स्वविदे पृच्छति चारु तत्र शिष्यः ॥ १ ॥

अथोक्तरीत्या तृतीयाधिकरणार्थसार्थक्यकथनानन्तरम्। इह निरुक्तरूपचतुर्थाधिकरणे। यः। श्रुतीति। सकलवेदान्तमहावाक्यतात्पर्यपर्यवसानानुकूलोपक्रमादिलिङ्गानुग्रहविशेष इत्यर्थः। परेति। अभेदे ब्रह्मात्मैक्यविषय इति यावत्। स्फुटितः प्रकटितः। पूर्वाचार्यैरित्यार्थिकम्। तत्र विषये। शिष्यश्चारु सुन्दरम्। एतेन जल्पादिव्युदासो व्यज्यते। स्वेति। इति पृच्छतीत्याध्याहृत्यान्वयः ॥ १ ॥

एवं सूचितप्रश्नप्रकारमेव प्रकाशयति—ऐश इत्यादिस्रग्धरया—

ऐशे सार्वज्ञ्य एवं भवतु मतभिदामैकमत्यं तथाऽपि
तद्वज्जीवोऽपि जानात्वखिलमपि जगच्चित्तवृत्तिं विनैव ।
इत्याशङ्कोपशान्तिः समुदयतु गुरो श्रीमदङ्घ्रिप्रसादा-
दित्थं संप्रार्थयन्तं प्रति तु निजगदुः श्रीमदाचार्यवर्याः ॥ २ ॥

एतेन योगिसार्वज्ञ्यव्यावृत्तिः । तद्वदिति । यथा ईश्वरो मायावृत्तिभिः सूक्ष्मतमाभिः स्वचित्संबन्धरूपाखण्डानादिकालावयवभूतादिकालावच्छिन्नं सर्वं जानातीत्येवमेवेत्यर्थः । अपरं तु सरलमेव ॥ २ ॥

किं निजगदुः प्राचीनाचार्या इत्यपेक्षायां तद्विवरणाभिप्रायेण विवृणोति अविद्यायामिति—

अविद्यायां ब्रह्मप्रतिकृतितया सर्वगतता
सदा जीवस्याऽऽस्ते तदपि समतावेव विलसन् ।
यथा व्यक्तौ जातिः कलयति च तद्वृत्तिबलतः
पटादीनित्युक्तः खलु चिदुपरागो विवरणे ॥ ३ ॥

ब्रह्मेति । ब्रह्मप्रतिबिम्बत्वेन । जीवस्य । यदपि । सर्वेति । यावत्सादि-द्वैताधिष्ठानतेत्यर्थः । सदा आस्ते निरन्तरं वर्तत एव । तदपि स जीवो मता-वेव स्वाविद्यापरिणामीभूतबुद्धावेवेति यावत् । यथा व्यक्तौ जातिर्गोत्वादि-र्नित्या सर्वगतादिव्यक्त्यन्यदेशगताऽपि न भाति किं तु खण्डमुण्डादितत्तद्-गोव्यक्तिगतैव परिस्फुरति तद्वत् विलसन्नहमज्ञ इत्याद्यनुभवतः प्रतिभासमानः सन्नित्यर्थः ॥

तदिति । धीवृत्तिद्वारेण । पटादीन्प्रमेयान् । कलयति जानाति । इति हेतोर्विवरणे जीवस्य घटादिमानेऽपि बुद्धिवृत्तेः शास्त्रादौ स्वीकृतेः किं प्रयो-जनमित्याकाङ्क्षायाम् । चिदिति । घटाद्यवच्छिन्नचैतन्येन प्रमेयेण सह । प्रमातुरन्तःकरणाद्यवच्छिन्नचैतन्यस्य संबन्ध एव प्रयोजनमुक्तः कथितोऽस्तीति संबन्धः ॥ एवं चात्राऽऽवरणभङ्गस्त्वार्थिक एवेति भावः ॥ ३ ॥

उपलक्षणमिदं प्रकटार्थकराद्यन्यवादिनामपीत्याह—प्रकटार्थेत्यादिप्रबोधितया—

प्रकटार्थकृतोऽपि चेतरेऽप्यपरे तत्त्वविवेककारिणः ।
उपलक्षणतोऽत्र संमता यदविद्याप्रतिबिम्बजीविनः ॥ ४ ॥

इतरे सूत्रात्मजीववादिनः । अत्रापिशब्दद्वयं प्रत्येकसमुच्चायकमेव । ननु

भवतु इतरपदेनैवं तथापि अपरपदेष्टः क इत्यत आह तस्येति । ननु एवमपि शब्दद्वयसाफल्येऽपि चकारसाफल्याभावास्वारस्यान्नायं विशेष्यविशेषणभावः समुचित इति चेत्सत्यम् । तर्हि एवं व्याख्येयम् । अपरे अविद्यावरणशक्तिप्रतिबिम्बजीववादिन इति । निरुक्तोपलक्षणहेतुं संक्षिपति—यदित्यादिशेषेण । अविद्याप्रतिबिम्ब एव जीवः स विद्यते येषां मते ते तथेत्यर्थः ॥ ४ ॥

ततः किं तदाह जीव इत्यादिशार्दूलविक्रीडितेन——

जीवः सर्वगतत्वतः किल मतस्तेषामपीत्थं भवे-
न्नोपादानमनावृतो विवरणाचार्योपमस्तस्य तत् ।
धीवृत्तिर्विषयेष्वलं चिदुपरागार्थोन्मिता चाऽऽवृते-
र्भङ्गार्थाऽपि च बिन्दुकृन्निगदितेत्यत्रोभयं तत्फलम् ॥ ५ ॥

तेषामपि अनुपदोक्तप्रकटार्थकाराद्वितत्त्वविवेककाराभिधविद्यारण्यश्रीचरणान्ताचार्याणामपि । इत्थं प्रागुक्तविवरणमतप्रकारेण । जीवः सर्वगतत्वतो मतोऽस्ति किलेति संबन्धः । एव मुपादानमपि जगतो न मतः किल । तथा विवरणाचार्योपमस्तत्संमतजीववदनावृतश्च मतः किलेत्यादिपूर्वेणान्वयः । यत एवं तत् तस्मात् हेतोः । तस्य जीवस्य धीत्याद्यपिचेत्यन्तं सरलमेव । बिन्द्विति । तदुक्तं सिद्धान्तबिन्दौ । अत्र च यस्मिन्पक्षेऽन्तःकरणावच्छिन्नो जीवः, यस्मिंश्च पक्षे सर्वगतोऽसङ्गोऽविद्याप्रतिबिम्बोजीवस्तत्रोउभत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था च अन्तःकरणवृत्तिरिति । इति हेतोः । अत्र निरुक्तमतद्वये । उभयम् । तत्फलं तस्य वृत्तिनिर्गमस्य फलं भवतीति संबन्धः ॥ ५ ॥

एवं वाचस्पतिमतेऽपि जीवस्य चिदुपरागावरणभङ्गाख्यफलयुगं वृत्तिनिर्गमे समानमेवेति तदिष्टजीवस्वरूपकथनतः प्राह सिद्धान्तलेशेत्याद्युपजातितः—

सिद्धान्तलेशेरितभामतीकृतां मते मितोऽन्तःकरणेन जीवः ।
सिद्धान्तबिन्दूक्तमिदं प्रयोजनं द्विधाऽपि तत्रापि च बुद्धिवृत्तेः ॥ ६ ॥

मितः परिच्छिन्नः । ततः किं तदाह—सिद्धान्तबिन्द्वित्युत्तरार्धेन ॥ ६ ॥

ननु भवतु एवं चिदुपरागार्थबुद्धिवृत्तिनिर्गमवादिनामाचार्याणां संक्षेपेण संग्रहणमथापि अभेदाभिव्यक्त्यर्थं के वा तद्वादिन इत्याकाङ्क्षायां तान् संक्षिपंस्तद्धेतुमपि व्युत्पादयति—संक्षेपेत्यादितद्युग्मेनैव——

संक्षेपशारीरकचित्रदीपात्मानन्दमाण्डूक्यगकारिकाकृताम् ।
तथैव दृग्दृश्यविवेककारिणां मतोऽस्ति बुद्धिप्रतिबिम्ब एव ॥ ७ ॥

**जीवस्ततस्तत्परिमाण एवेत्यस्यास्ति नो सर्वगतेति तत्र ।**
**वृत्तिश्चिता सार्धमभेदसिद्ध्यै स्वगोचराधारवपुष्टवमाप्तया ॥ ८ ॥**

जीव इति । मतोऽस्ति इति पूर्वेणान्वयः । ततः किं तदाह—तत इत्यादिना । इति निरुक्ततत्परिमाणत्वलक्षणात् हेतोः । अस्य जीवस्य सर्वगता नो नैवा-स्तीत्यतस्तत्र जीवे । स्वेति । स्वशब्दितजीवविषयतापन्नशब्दादिप्रमेयाधिष्ठानी-भूतयेत्यर्थः । एतादृश्या चिता सार्धमभेदसिद्ध्यै वृत्तिः संमता भवतीति पूर्वपद्य-स्थषष्ठ्यन्तमत्रापि अनुकृष्य योज्यम् ॥ ८ ॥

को वाऽत्र विभिन्नदेशगतचितोरभेदाभिव्यक्तिप्रकार इत्यत्राऽऽह—कासारे-त्यादिशार्दूलविक्रीडितेन—

**कासाराम्बु सुकुल्ययैति च यथा केदारमेवं मनो-**
**वृत्तिः श्रोत्रमुखैः स्वनादिविषयान्व्याप्नोति बाह्येन्द्रियैः ।**
**कासारादिगताम्बरैक्यमिव धीबिम्बस्य चैक्यं भवे-**
**त्साकं गोचरधीद्भिरित्युपगता वृत्तिर्धियः सूरिभिः ॥९॥**

यथा कासाराम्बु सरोवरोदकम् । सुकुल्ययाऽप्रतिबद्धकृत्रिमसरितैव द्वारे-त्यर्थः । चोऽवधारणे । केदारं प्रति । एति गच्छति । एवं मनोवृत्तिः । श्रोत्रे-ति । श्रोत्रादिकरणद्वारा । स्वनादीति । शब्दादिविषयान् प्रतीति यावत् । बाह्येति । बाह्येन्द्रियैर्ग्राह्यान् एतादृशान् । अत एव व्याप्नोति इत्यन्वयः । अत्राध्याहारगौरवास्वरसतः सहार्थिकयैवेयं तृतीया । एवं च इह बुद्धिवृत्ति-वत्श्रोत्रादिज्ञानेन्द्रियाणामपि वृत्तयः सात्त्विकत्वेनोक्ततत्तद्बुद्धिवृत्तितादात्म्येन विषयान् प्रतिगृह्णन्ति । तत्र श्रोत्रचक्षुषोस्तु गत्वा ग्राहकत्वमेव दूरे शब्दो दूरे रूपमिति प्रतीतेः सिद्धान्तबिन्दावुक्तम् । त्वग्रसनघ्राणानां तु स्वगोलका-वच्छेदे तद्विषयसंयोग एव ज्ञापकत्वं स्वाभाव्यादेव बोध्यम् ।

ननु बुद्धिवृत्तिं प्रति श्रोत्रादेर्विषयदेशगमने द्वारत्वमेव न तु साहचर्यमिति-चेत् । न । अबाधितानुभूत्येत्थमेवामननुमितेः । तदुक्तं मदीयाद्वैतामृतमञ्जर्याम् । सितरक्तपीतहरितासितकाचैकोपनेत्रतादात्म्यात् । दृगवच्छ्रोत्राद्यैः सह धीवृत्ति-भिरेति स इह शब्दादीन् । तत्र वपुरन्तचेतोवच्छिन्ना चिद्भवेत् प्रमातैव । आविषयं सा मानं मितिस्तदाकृतिरिदं तनुर्मेयमिति । फलितमाह कासारादी-त्याद्युत्तरार्धेन । अम्बरमाकाशम् । बिम्बः प्रतिबिम्बः । गोचरेति । विषयचै-तन्यैः सहेत्यर्थः ॥ ९ ॥

ननु अभेदाभिव्यक्त्यर्थत्वपक्षे किंचिदुपरागादिप्रयोजनद्वयस्यानुपयोग एव नेत्याह—अभेद इत्यादिशिखरिण्या—

अभेदाभिव्यक्तिर्न भवति विनाऽऽवृत्त्यभिभवं
न सोऽपि स्यान्नूनं सति चिदुपरागस्य विरहे।
अतस्तद्वादे तु द्वितयमपि चेदं किल यथाऽ-
विनाभावाद्भङ्गः खलु चिदुपरागेऽस्ति तमसः ॥ १० ॥

आवृतीति च्छेदः। ननु भवतु एवं कार्यकारणभावस्तथाऽपि किं प्रकृत इत्यत आह। अत इत्याद्युत्तरार्धेन। तद्वादेऽभेदाभिव्यक्तिवादे। यथा चिदुपरागे सति तमस आवरणस्य भङ्गोऽविनाभावात्नान्तरीयकत्वेनैव भवति तद्वत् अभेदाभिव्यक्तिवादे तदुभयमपि उक्तविधयैव भवति इति भावः ॥१०॥

ननु एवमपि आवरणभङ्गार्थबुद्धिवृत्तिस्वीकारवादः केषामाचार्याणां संमत इत्यत्राऽऽह—स्वेत्यादिशार्दूलविक्रीडितेन—

स्वाज्ञानोपहितं तु जीव उदितो ब्रह्मैव येषां मते
देहव्यूहगयोगिवत्तदुदितो नानाशरीरेषु यैः।
किंचोक्तः खलु भामतीप्रमिततया सिद्धान्तबिन्दौ स यैः
सर्वत्रापि च तत्र मोहविलयादन्यन्न वृत्तेः फलम् ॥ ११ ॥

येषां मते स्वाज्ञानोपहितं ब्रह्मैव जीव उदितः प्रतिपादितोऽस्ति तथा यैः। देहेत्यादि। कायव्यूहनिष्ठयोगिसदृशानन्तशरीरव्यवहारानुसंधातेत्यर्थः। एतादृशः। नाना इति। अविद्याकल्पितानन्तदेहेषु इति यावत्। तत्अविद्योपहितं ब्रह्मैव। उदितो जीवः कथितोऽस्तीत्यर्थः। चः समुच्चये।

किंच यैः स जीवः। भामतीति। सिद्धान्तेति। अविद्याश्रयीभूतं चैतन्यं जीव इति सिद्धान्तबिन्दौ भगवद्वाचस्पतिमतं प्रकृत्य जीव उक्तोऽस्ति तत्र सर्वत्र पक्षत्रयेऽपि मोहविलयादावरणभङ्गात्। अन्यदपरं वृत्तेर्बुद्धिवृत्तेः फलं प्रयोजनं न इति योजना। तदुक्तं सिद्धान्तबिन्दावेव। यस्मिंश्च पक्षे अविद्यावच्छिन्नः सर्वगतो जीव आवृतस्तस्मिन्पक्षे जीवस्यैव जगदुपादानत्वेन सर्वसंबद्धत्वादावरणभङ्गार्था वृत्तिरिति विवेक इति ॥ ११ ॥

अत्र हेत्वपेक्षायां तं विशदयति—अविद्येत्यादिभुजंगप्रयाताभ्याम्—

अविद्यावृतः सर्वगोऽप्यत्र जीवोऽस्त्युपादानमस्य प्रपञ्चस्य साक्षात्।
अतः सर्वसंबद्ध एवोत्ति तस्य मनोभिन्नदेशेष्वखण्डावृतत्वम् ॥ १२ ॥

अथ ब्रह्मैव संसरति । मुच्यते एतदेव दौवारिकं भवति संसरणं तु तस्य इति संक्षेपशारीरमूलकासिद्धान्तबिन्दूकस्वाज्ञानोपहितचैतन्यात्मकैकशरीरैकजीवाख्ये दृष्टिसृष्टिवादे तथा योगिकायव्यूहवदनेकशरीरैकजीवाख्ये च तद्वदनेकाज्ञानाश्रयीभूतचैतन्यात्मकप्रतिजीवप्रपञ्चभेदाभिधे च तत्र भामतीष्टत्वेन तदुक्तेऽपीत्यर्थः । अपरं तु सरलमेव ॥ १२ ॥

अत एव—

तदीयैकभङ्गे तु धीवृतिजाते न किंचित्प्रकाशार्थमस्येप्सितं स्यात् ।
अतस्तत्र तत्तत्तमोभङ्ग एव प्रमायाः फलं संमतं चारु तेषाम् ॥ १३॥

तदीयेकेति । अस्य निरुक्तजीवस्य ॥ १३ ॥

तत्रापि प्रथमे पक्षे प्रमाया एवानुपपत्त्योक्तव्यवस्थामाक्षिपति—ननु इत्यादिहरिण्या—

ननु कथमिहाद्ये पक्षेऽपि व्यवस्थितिरीरिता
यदिह नहि विभ्रान्तेरन्यत्प्रमाद्यपि किंचन ।
सकलमपि च द्वैतं स्वप्नोपमं परिकल्पितं
तमउपहितब्रह्माद्वैतात्मनाऽनुभृता यतः ॥ १४ ॥

आद्ये स्वाज्ञानोपहितं ब्रह्मैव जीव इति प्रथमेऽपीत्यर्थः ॥ तत्र हेतुः—यदित्यादिशेषेण । अनुभृता जीवेन । शिष्टं तु स्पष्टमेव ॥ १४ ॥

समाधत्ते स्वप्नेऽपीत्यादीन्द्रवज्रया—

स्वप्नेऽपि दृष्टे सुघटप्रमादे स्वत्रापि तद्वत्तदभीप्सितत्वात् ।
मैवं ततः कोऽपि न दोषलेशः प्रयोजनेषु त्रिविधेषु वृत्तेः ॥ १५ ॥

फलितमाह । तत इत्यादिनोर्वरितेन ॥ १५ ॥

ननु स्वप्रमाऽपि जीवश्चिदेवं विषयानुभवार्थं कथं बुद्धिवृत्तिमपेक्षत इत्याकाङ्क्षं सदृष्टान्तं प्रतिक्षिपति—अभेदेत्यादि शिखरिण्या—

अभेदाभिव्यक्त्या उत चिदुपरागार्थमथवा
वृतेर्ध्वंसस्यै वृत्तिं समभिलषति स्वात्मचिदपि ।
क्रमान्मुग्धा मध्याऽनुपमितविदग्धेव तु सखीं
प्रियेण स्वाभेनापि च सततभासाऽपि सहसा ॥ १६ ॥

ननु शृङ्गारघटितोऽद्वैतशास्त्रे दृष्टान्तोऽपि अयमयुक्त एवेति चेत् न । दृष्टान्ते दोषाभावात् । तथैव सांप्रदायिकत्वाच्च । तदुक्तं वार्तिके । भावनाजं फलं यत् स्यात् यच्च स्यात् कर्मणः फलम् । न तत्स्थास्नित्वति विज्ञेयं पण्यस्त्री-

संगतं यथा इति । उपस्थकुष्ठिनी वेश्या विलासेषु विलज्जति इति पञ्चद-श्यामपि । विश्वेश्वरस्तु सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीयः । प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चेलाञ्चलव्यवहितो हि निरीक्षणीय इति बोधसारेपि तथा दृष्टत्वाच्चेति दिक् ॥

पक्षे अङ्कुरितयौवना मुग्धेति लज्जामयपराधीनरतिर्नवोढेति च तल्लक्ष-णात्प्रथमप्रयोजकपरस्परनिरतिशयानुरागाभावनिरसनकारणीभूतान्योन्यसंघटनार्थ-मित्यर्थः । एवं समानलज्जामदना मध्येति तल्लक्षणाच्चित्सुशब्दितालिङ्गनादि-ज्ञानद्वारकोपरागपदवाच्यनिरतिशयसुरतसुखविषयकप्रेमप्राचुर्यार्थमिति यावत् । तद्वत्पतिमात्रकेलिकलापकोविदा प्रगल्भेत्यपि तल्लक्षणात् अनुपमविदग्धाया-स्तस्यास्तावत् रत्यागारे रात्रौ तिमिरावरणस्य प्रदीपप्रज्वालनेन प्रध्वंसार्थमेवे-त्येतत् । सा प्रकृता । स्वात्मेति । जीवचितिरपीत्यर्थः । प्रियेणेत्यादिप्रागुक्ते-त्यन्तं सहेत्यत्रान्वेति ॥ १६ ॥

अथ क्रमात्त्रिविधमपि उक्तबुद्धिवृत्तिनिर्गमनप्रयोजनमङ्गीकृत्य तत्स्वरूपं पृच्छति—एवमित्यादिवसन्ततिलकया—

एवं क्रमाच्चिदुपरागफलाऽपि वृत्ति-
रास्तामभेदघटनैकफलाऽपि तद्वत् ।
श्रोत्रादिनाऽऽवरणभङ्गफलाऽपि तत्त-
त्सिद्धान्ततः परमिमानि कथं फलानि ॥ १७ ॥

अक्षरार्थस्तु स्फुट एव ॥ १७ ॥

ननु किमत्र चिदुपरागादिफलत्रयेऽपि तिरोहितमित्यत आह—विभिन्नतरे-त्यादिपृथ्व्या—

विभिन्नतरदेशयोर्विषयजीवचैतन्ययोः
क्रियाविधुरयोः स्वतः स उपराग एवास्ति कः ।
चितेर्न स तदात्मता भवति नापि संसर्गकः
कृपालुभिरपास्यतामिति गुरुधुरन्धरैस्तमः ॥ १८ ॥

विभिन्नतरौ अतिशयितभेदावच्छिन्नौ देशौ ययोस्तौ तथा इत्यर्थः । तत्र तादात्म्यं प्रत्याह । चितेरित्यादिना चितेर्जीवचैतन्यस्य तदात्मता घटादिविष-यतादात्म्यं स चिदुपरागो न । एवं संसर्गमपि दूषयति नापीत्यादिना । गुर्विति । श्रीगुरुलक्षणदिनमणिभिः ॥ १८ ॥

अथ प्रकृत एवाऽऽचार्यः समाधत्ते—इहेत्यादिमालिन्या—

इह भवति मुमुक्षुस्तर्कपारंगतो यो-
विषयविषयिभावं केचिदूचुस्तमेनम् ।
ननु किमिह न वृत्तेर्निर्गमो व्यर्थ एवे-
त्युदितविमतिमन्ये द्वारतां प्राहुरस्याः ॥ १९ ॥

इह लोके यस्तर्कपारंगतो मुमुक्षुर्भवति । तं प्रति केचित् प्राचीनाचार्याः । एनं प्रागुपन्यस्तं चिदुपरागम् । विषयेति । भास्यभासकभावाख्यं संबन्धमेवाऽऽहुरित्यन्वयः । तत्रापि ननु एवं विषयविषयिभावसंबन्ध एव चिदुपरागश्चेत् तर्हि बुद्धिवृत्तेर्निर्गमः श्रोत्रादिद्वारा विषयदेशं प्रति संचारो व्यर्थ एवेति । उदितेति । आविर्भूतविप्रतिपत्तिं कंचित्जिज्ञासुं प्रति अन्ये आचार्या अस्या वृत्तेर्द्वारतामेव प्राहुरिति संबन्धः । एवं च वृत्तिद्वारक एव प्रमातृप्रमेययोर्विषयविषयिभावाख्यः चिदुपराग इति न विभिन्नदेशत्वेन भास्यभासकभावसंबन्धानुपपत्तिर्नापि निर्गमवैयर्थ्यापत्तिश्चेत्याकूतम् ॥ १९ ॥

अत्रापि आशङ्किनं कंचित् बुभुत्सुं प्रति परे गुरवः प्रकारान्तरेणैव समाधुरित्याह—व्यर्थेत्यादिशालिन्या—

व्यर्था वृत्तेर्द्वारताऽप्यत्र यस्मात्संबन्धः स्यान्नैव साक्षात्प्रमातुः ।
तेनैवेष्टं नः सुखाद्यापरोक्ष्यमित्याशङ्काशालिनं प्राहुरेके ॥२०॥

प्रमातुवृत्तेर्द्वारत्वे स्वीकृते साक्षात्संबन्धो न स्यात् । विषयेण सह इत्यार्थिकम् । इष्टापत्तिं निराचष्टे । तनैवेति । तेनैव साक्षात्संबन्धेनैव । न आनुभविकानामस्माकमित्यर्थः ॥ २० ॥

किं प्राहुस्तदाह—तरङ्गेति पृथ्व्या—

तरङ्गतरुसंगमात्स तु मतो द्रुनद्योर्यथा
तथा विषयवृत्तिगोऽप्ययमुदेति मातुर्न किम् ।
करैः स्पृशति भास्करे शरदि सारसानि क्षणा-
द्विकासमतिसुन्दरं किमु न तानि यान्ति स्फुटम् ॥२१॥

तथा । तरङ्गेण नद्याख्यप्रवहद्विपुलजलप्रवाहविशेषावयवीभूतबुद्बुदेन सह वेगादूर्ध्वगतेन तरोरश्वत्थादिवृक्षस्य यः संगमस्ततः संयोगात् हेतोरित्यर्थः । द्रुनद्योर्द्रुमापगा इत्यमरात् वृक्षसरितोः स तु संयोगः संमतः । तथा विषय-

वृत्तिगोऽप्ययं निरुक्तचिदुपरागः । मातुः प्रमातुर्जीवस्य न उदेतु न भवतु किमित्यन्वयः । अर्थान्तरन्यासमप्याह । करैरित्याद्युत्तरार्धेन ॥ २१ ॥

अत्रापि कस्यचिन्मुमुक्षोराशङ्कामपरगुरुसिद्धान्तमवतारयन्नाह—वृत्तीद्धेत्यादिवसन्ततिलकया—

**वृत्तीद्धजीवविषयेद्धपरात्मनोर्यन्नर्तेऽभिदं सुघटितं विषयापरोक्ष्यम् ।**
**व्यर्थैव तेन कथिताऽत्र परम्परेति संदेहिनं प्रति समादधुरेवमन्ये॥२२॥**

इद्धत्वं वैशिष्टचमेव । यद्यस्माद्धेतोः । अभिदामिति च्छेदः । ऋते अभेदं विना । विषयेति । न सुघटितं नैव युक्तं भवतीत्यर्थः ॥ २२ ॥

पूर्वं चिदुपरागार्थाऽन्तःकरणवृत्तिः केषांचित् आचार्याणां संमताऽन्येषामभेदाभिव्यक्त्यर्थाऽपरेषामावरणभङ्गार्था इत्युक्तम । तत्र कः चिदुपराग इति शिष्याशङ्कायां विषयविषयिभावः परम्परया विषयावच्छिन्नबुध्यवच्छिन्नचितोः संगमश्चेति तत्तदधिकारिणं प्रति तत्तदाचार्यमतानुसारेण समाहितम् । अधुना अनुपदोक्तपद्यरीत्या तत्रापि दोषदर्शिशिष्यं प्रति परेऽभ्युपेत्यवादेन एकदेशिमतमाश्रित्य एवं प्रबोधयन्तीत्याहअभेदेत्यादिशिखरिण्या—

**अभेदाभिव्यक्तिः किल चिदुपरागोऽस्तु न च त-**
**त्तयोः सांकर्यं स्यादिति परिहृतेः साऽत्र तु यथा ।**
**अविद्योपाधिश्चित्हृदयसमुपाधिश्चिदिति च**
**क्रमाज्जीवोऽत्राऽऽस्तेऽपि च सकलगोऽसर्वग इति ॥ २३ ॥**

किल अभेदाभिव्यक्तिरेवेत्यर्थः । तत्रापि चिदुपरागाभेदाभिव्यक्त्योः संकरमाशङ्क्य परिहरति न चेत्यादिना । तत् निरुक्तरीत्या चिदुपरागस्याभेदाभिव्यक्तिरूपत्वाङ्गीकारपक्ष इत्यर्थः । तत्र हेतुः—इतीति । तदेव व्याचष्टे । सा इत्यादिना सप्रतिज्ञम् । परिहृतिस्तच्छब्दार्थः । अत्र मते । तुशब्दः कथं सा परिहृतिरिति शङ्काशान्त्यर्थः । तत्प्रकारमेवाऽऽह अविद्येत्याद्युत्तरार्धेन । अत्र चिदुपरागार्थवृत्तिरिति मते अभेदाभिव्यक्त्यर्था वृत्तिरिति च मते । क्रमात् अनुक्रमेण अविद्येति । अतः सकलगो जीव आस्ते इति संबन्धः ॥

तथा हृदयेति । अत एवासर्वगो जीव आस्त इत्यन्वयः । एवं चाभेदाभिव्यक्तिरेव चिदुपराग इत्यङ्गीकारेऽपि चिदुपरागवादिमते जीवस्याविद्योपहितचैतन्यरूपत्वेन सर्वगतत्वात् नाभेदाभिव्यक्तिवादिमतसिद्धान्तःकरणोपहितचैतन्यरूपजीवस्य विषयावच्छिन्नब्रह्मचैतन्याभेदाभिव्यक्त्या सह चिदुपरागस्य सांक-

र्यशङ्कावकाशः अभेदतौल्येऽपि अभेदिनोर्जीवयोर्निरुक्तरीत्या भेदादिति भावः ॥ २३ ॥

निगमयति इतीत्यादीन्द्रवज्रया—

इत्यन्त्यपक्षस्य विभेदसत्त्वान्न संकरः कोऽपि च शङ्कनीयः।
इत्येकदेशीष्टमतं गृहीत्वाऽप्यत्र व्यवस्था सकलाऽमलेति ॥२४॥

अन्त्यपक्षस्य । अन्तःकरणावच्छिन्नचैतन्यजीवत्ववादस्येत्यर्थः । किमयं सिद्धान्त इत्याशङ्क्यास्तु पद्द्योतितस्वाशयेन परिहरति—इतीत्याद्युत्तरार्धेन । अन्त्य इतिशब्द उपसंहारकः ॥ २४ ॥

अथोक्तमङ्गीकृत्य पृच्छति भवत्वित्यादिशिखरिण्या—

भवत्वित्याचार्येश्वरचिदुपरागस्य विवृतिर्मता-
नामैक्याच्छ्रीचरणकृपयाऽथापि च कथम् ।
अभेदाभिव्यक्तिर्न च विषयजीवाभिधचितो-
रभेदः सोऽहं गौरिति नहि कुतो धीर्वद गुरो ॥ २५ ॥

ननु कोऽत्र संशय इत्यत्राऽऽह न चेत्यादिना । सा अभेदाभिव्यक्तिः । विषयेति । अभेदो नैव । नत्र हेतुरहमित्यादिशेषेण । गौर्धेनुः ॥ २५ ॥

अथोक्ताशङ्कां प्रकृतशिष्यस्य प्रकृताचार्य एवाऽऽकर्ण्यैवमेव पृच्छन्तं कंचिन्मुमुक्षुं समादधतां समाधानमभिवक्ति शृण्वेवमेवेत्यादीन्द्रवज्रया—

शृण्वेवमेवाऽऽशयमाहुरेके कासारकेदारगपुष्करैक्ये ।
जाते प्रणाड्याऽपि न धीरुदेति कासारकेदारभिदं हरन्ती ॥२६॥

किमाहुः केचिदाचार्या इत्यत आह । कासेत्यादित्रिपाद्या । कासारकेदारयोः सरःशाल्यादिक्षेत्रयोः गच्छति वर्तत इति तथा एतादृशं यत्पुष्करं व्योमपुस्करमिति पुष्करं सर्वतोमुखमिति चामरादाकाशस्य जलस्य च यदैक्यमभिन्नत्वं तस्मिन्सत्यपीत्यर्थः । ननु पुष्करपदेष्टाकाशस्य तयोर्निसर्गसत्त्वेऽपि तत्पदेष्टजलस्य कुल्यां विना केदारे संचार एव नास्ति क्व पुनः स्वभावसत्वेन ऐक्यमित्यत आह । प्रणाड्येत्यादिना । प्रणाड्या कुल्याद्वारा जाते सत्यपीति यावत् । ततः किं तदाह । कासारेति । कासारादिभेदहरेत्यर्थः । एतादृशी । धीर्न उदेति नैवाऽऽविर्भवतीत्यन्वयः ॥ २६ ॥

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकं प्रकटयति—एवमित्यादिमन्दाक्रान्तया—

एवं वृत्त्या विषयगतचिज्जीवनिष्ठचिदैक्ये-
जातेऽपि स्यात्कामिति विषयप्राणभृद्भेदभङ्गः ।

नैवेक्षि क्वाप्यलमुपाहितैक्येऽप्युपाध्यैक्यमद्वि-
नांचेद्भूयात् किल घटमठैक्यं प्रमैक्येऽपि खस्य ॥ २७ ॥

विषयगतेत्यादि । जीवेत्यादि । विषयगतचित् घटाद्यधिष्ठानचित्तथा जीवे तिष्ठन्ती या चित्तत्तयोरैक्येऽभिन्नत्वे इत्यर्थः । वृत्त्या । घटादिविषयकप्रत्यक्षादिप्रमित्येति यावत् । जाते प्राक्दृष्टान्तरीत्याऽवबुद्धे सतीत्यर्थः । अपिनोपध्यैक्यस्फूर्त्याऽपि यावदुपाधितद्विशिष्टभेदसत्त्वान्नैव तद्विशिष्टभेदनाश इति व्यज्यते । एतेनाहं गौरित्यापत्तिः प्रागुक्ता परास्ता । अत एव । किमितीत्यादि ॥ २७ ॥

फलितमाह—तस्मादित्यार्यया—

तस्माज्जीवचितो यद्विषयचितैक्यं भवेद्वृत्त्या ।
तेनास्य तत्त्वमेवाभेदव्यक्तिर्न काऽप्यन्या ॥ २८ ॥

॥ २८ ॥

तत्रापि कश्चिन्मुमुक्षुराक्षिपति । नैतदित्यादिशार्दूलविक्रीडितेन—

नैतत्सारमुपाधिरूपमुकुरे जागर्ति सत्यैकता-
नो बिम्बप्रतिबिम्बयोर्व्यवहृता चेद्गोचरोपाधिचित् ।
जीवाभेदमुपैति तर्हि न भवेदीशस्य तद्धीः क्वचि-
त्सोऽधिष्ठानमिहाखिलस्य तदवच्छिन्नो यदैक्यं गतः ॥ २९ ॥

तत्र हेतुः । उपाधीत्यादिना । बिम्बेति । ततः किं प्रकृते तदाह । चेदित्यादिशेषेण । गोचरेति । विषयचित् । जीवेति । तद्धीः, विषयज्ञानम् । तत्रापि हेतुः । स इत्यादि । स ईश्वरः । इह संसारे । अखिलस्य यावद्द्वैतस्य अधिष्ठानमपि । यत् यतः । तदवच्छिन्नोऽधिष्ठानत्वावच्छिन्नोऽपि । ऐक्यं जीवेन सहाभेदं गतः प्राप्तोऽस्तीत्यर्थः ॥ २९ ॥

ननु भवतु एवमाक्षेपस्तथापि किमत्र समाधानमित्यत आह—एवमित्यार्यया—

एवं विमतिग्रस्तं प्राचुः केचित्तु विषयचैतन्यम् ।
विषयस्वप्रतिबिम्बं वृत्त्यग्रे यत्समर्पयति तस्मा ॥ ३० ॥

किं प्रोचुरित्यत्र तदाह । विषयेत्यादिना । तुशब्दः प्रोक्तशङ्काशामकः । यत् । वृत्तीति । श्रोत्रादिद्वारा तद्वृत्तिभिः सह विषयदेशपर्यन्तमागतबुद्धिवृत्त्यग्रभाग इत्यर्थः । विषयेति । विषयश्च स्वं चानयोर्यत् प्रतिबिम्बं वत्तथा । समर्पयति । तदेव सा अभेदाभिव्यक्तिरस्तीत्यन्वयः ॥ ३० ॥

तत्रापि गौरवदोषदर्शिनं कंचिन्मुमुक्षुं प्रति अपर आचार्याः प्रकारान्तरेणैव समादधिर इत्याह—ननु इत्यादिमालभारिण्या—

**ननु गौरवमेवमित्यतोषं प्रति चान्ये प्रतिभाषिरे मुनीन्द्राः।**
**विषयप्रथनं करोतु वृत्तावपि विम्बत्वयुतेशतो विभिन्ना ॥३१॥**

तदेवाऽऽह। विषयेत्याद्युत्तरार्धेन। वृत्तावपि अयं घट इत्याद्युक्तवृत्त्यव-च्छेदेनापि। विषयेति। विषयप्रकाशनं विम्बत्वेति। बिम्बत्वविशिष्टेश्वरादि-त्यर्थः। विभिन्ना अतिरिक्ता साक्षिचिदेव करोतु इत्यध्याहृत्यैव संबन्धः ॥३२॥

एतदेव विशदयति—इहेत्यादितयैव——

**इह बिम्बचिदेव बिम्बतादीश्वरधर्मैरुपलक्षिता न भिन्ना।**
**प्रतिबिम्बतनोस्तु जीवतोऽसौ तदभिद्गोचरचिच्च सेत्यदोषः ॥३२॥**

इहाद्वैतशास्त्रे। बिम्बेति। बिम्बतादीति प्रतीति। जीवादिति यावत्। ततः किं तदाह। असौ इत्यादिशेषेण। अत एवासौ निरुक्तचिदेव तदभिदभेदाभिव्य-क्तिस्तथा गोचरचित् विषयचिदपि सैव इत्यदोष इति योज्यम् ॥ ३२ ॥

अथ प्रकृतशिष्यः प्रोक्तव्यवस्थामादृत्य आवरण भङ्गे पृच्छति—इतीत्या-दिशिखरिण्या——

**इति स्थाने श्रीमद्गुरुवर भवत्वेकमतताऽ-**
**प्यभेदाभिव्यक्तावथ कथमिहाऽऽवृत्यभिभवः।**
**अविद्याध्वंसश्चेत्तु घटविदपि मुक्तः किमिति नो**
**न चैकस्मिन् जीवे बहुविधमिहाज्ञानमुचितम् ॥ ३३ ॥**

स्थान इति युक्तत्ववाच्यव्ययम्। तत्राविद्याध्वंसपक्षं प्रतिक्षिपति। अवि-द्येति। ननु अनेकान्येवाज्ञानानीत्यदोष इति चेन्न। एकजीववादे तदसंभ-वात् इत्याह। न चेत्यादिना। प्रतिजीवं प्रपञ्चभेदवादेऽत्राज्ञानबाहुल्येऽपि तद्व्यक्त्यवच्छिन्नजीवे तन्नानात्वासंभवाच्च ॥ ३३ ॥

समाधत्ते एवमित्यादिशार्दूलविक्रीडितेन——

**एवं संशयिनं तु केऽपि तमसः प्राहुः सुषिं ज्ञानतः**
**खद्योतेन यथा कटस्य यदि वा संवेष्टनं वा यथा।**
**भीतस्येव पलायनं विषयगस्याऽऽत्मैक्यमोहस्य य-**
**त्स्यादत्राऽऽवरणस्य भङ्ग इति नो मुक्तिर्घटज्ञानतः ॥३४॥**

॥ ३४ ॥

तत्रापि शङ्कते—नन्वितिहरिण्या——

**ननु पुनरपि प्रेक्ष्य ज्ञातः स एव तु गोचरः**
**कथमिदमविद्यानाशे स्यात् तथाऽत्र न च क्रिया।**

अपि न घटते मूर्तिश्छिद्रं तथा परिवेष्टनं
समुचितमिदं न स्यात्तस्मात्पलायनमप्यदः ॥ ३५ ॥

एवं सशयिनं कंश्चित्जिज्ञासुं प्रति केचिदाचार्यास्तु इत्थं समादधुरित्याह—इतीत्यादिप्रहर्षिण्या——

इत्यन्तर्विमतिजुषं जगुः परेऽत्रयावद्वृत्त्यापि न समावृणोति मोहः।
अज्ञोऽस्मीत्यनुभवनात्तदीयसत्त्वेऽप्यात्मावृत्यकलनतस्तदेव भङ्गः।

जगुः समाधानं प्रोचुरित्यर्थः। कीदृशं तदित्यत आह। यावदित्यादि। एवं च घटाद्याकारप्रमाप्रध्वंसितमपि तद्विषयकमज्ञानं पल्लवाद्यपरनामकमत एव। पुनः कालान्तरे तमेव घटं समावृणोत्यवेति न काऽप्यत्रानुपपत्तिरिति भावः। ननु अज्ञानसत्त्वे तावदावरणावश्यकत्वमेव तथा च प्रमेयविषयकवृत्तिरपि कथमुदियादितिचेन्न। अहमज्ञ इत्यज्ञानविषयकानुभवस्याज्ञानसत्त्व एव दृष्टत्वादित्याह। अज्ञोऽस्मीत्यादि। तदीयेत्यादि। अज्ञानसत्त्वेऽपि साक्ष्यज्ञानयोरननुभूतेरित्यर्थः। फलितमाह। तदेवेत्यादिशेषेण। यद्यावत्प्रमाणवृत्तिमोहसत्त्वेऽपि तदीयप्रमेयानावरणं तदेव भङ्ग आवरणभङ्गः स्यादित्यन्वयः ॥ ३६ ॥

अत्रापि अपरमुमुक्षोराकाङ्क्षामुन्नाप्य तत्समाधानमवतारयति—अज्ञोऽस्मीत्यादिशार्दूलविक्रीडितेन——

अज्ञोऽस्मीत्यनुभूतिरद्वयपरब्रह्मात्मतामेव तु
प्रच्छाद्याऽऽत्मचितिं न छादयति नाप्यज्ञानमेतत्परा।
नो चेन्नैतदपि स्फुरेन्नहि तथा दृष्टं घटादौ ततो
नैतत्साध्विति शङ्ककं प्रति समादध्युर्मुदाऽन्ये बुधाः।

आत्मेति। साक्षिचैतन्यं न च्छादयति नैवाऽऽवृणोति। अत्र नकारस्य ह्रस्वत्वेनाग्रे छकारसत्त्वात्तुगागमप्राप्तावपि तस्यवैकल्पिकत्वान्नैव तदभावो दोषः। तत्रान्यथानुपपत्तिं प्रमाणयति। नो चेत् इत्यादिना। अपरं तु सरलमेव ॥ ३७ ॥

तदेव आह—घटादीत्याद्युपजात्या——

घटाद्यवच्छिन्नचिदावृतिक्षमाण्यज्ञानवृन्दानि बहूनि सन्ति।
तूलाभिधान्यत्र तु मूलसंज्ञादन्यानि तस्मादिति तद्विनाशः ॥ ३८ ॥

अत्र वृन्दानि इति बहुवचनं तु त्रित्वपर्यवसायित्वात् जगज्जीवेशविषयकत्वेनाज्ञानेषु उपपन्नमेवं वृन्दपदमपि तूलादिसमुदायाभिप्रायकमेव। पुनर्बहुपदमपि अनन्तजीवरूपाश्रयबाहुल्यादेव बोध्यम्। इति निरुक्तप्रकारकावरणभङ्गरूपः ॥ ३८ ॥

अपरे तु आचार्याः प्रकारान्तरेण तद्रूपस्थामाहुरित्याह यावन्तीत्यार्यया—

यावन्ति ज्ञानानि प्रमात्मकान्येवमेव सर्वाणि ।
अज्ञानान्यज्ञानं नष्टमिति स्वानुभूत्यैव ॥ ३९ ॥

तत्रापि विकल्पयति—अवस्थेत्यादिशिखरिण्या——

अवस्थाज्ञानं किं ननु भवति तूलाभिधमिदं
परब्रह्माज्ञानोपममलमनाद्येव किमु वा ।
भवेत्मादिस्वप्नं रचयदिह निद्राभिधमिव
सुषुप्त्याभं वा क्वाप्युदयति च नाज्ञासिषमिति ॥ ४० ॥

निद्रेति । व्यावहारिकजगज्जीवावृतितः प्रातिभासिकौ तौ विक्षिपन्निद्राभिधमिव । सुषुप्तीति । यथा । नाज्ञासिषमिति सुषुप्तिः क्वाप्युदयति तथा वेत्यर्थः ॥ ४० ॥

तत्राप्याद्यं विकल्पयति—आद्य इत्यादीन्द्रवज्रया——

आद्ये घटज्ञानवशेन किं तन्नामितात्मचिन्निष्ठमिदं विनाशम् ।
एकं प्रयायादखिलानि यद्वा तानि प्रयान्तीह तथेति नाऽऽद्यः ॥

घटेति । घटप्रमया ॥ ४१ ॥

प्रथमेहेतुः—विनिगमनेत्याद्यार्यैकदेशेन——

विनिगमनाविरहान्नाप्यन्त्योऽप्यावृत्यनापत्तेः ।
इति संशयिनं प्राहुः केचित्कृपया मुनिश्रेष्ठाः ॥ ४२ ॥

अन्त्यमपि प्रत्याह । नापीति । क्वाप्यन्यत्राऽऽवृतिरेव न स्यात् ॥ ४२ ॥

किं प्राहुरित्यपेक्षायां तदेव संक्षिपति—यद्वादित्यादिशार्दूलविक्रीडितेन——

यद्वन्न्यायनयेऽस्ति तद्विषयकभ्रान्त्यादिहेतुर्बलं
पूर्वाभावशतेषु सत्स्वपि भवेदेकस्य चैकेन वै ।
ज्ञानेन क्षपणं तु तस्य नियतं भूयः स्वभावादिति
स्यात्तद्वत्प्रकृतेऽपि तेन विमतिः काऽनादिपक्षेऽपि ते ॥

तद्विषयकेति । रज्वादिरेव तच्छब्दार्थः । पूर्वेति । प्रागभावशतेष्वित्यर्थः । अत्र भ्रान्त्यादीत्यादिना संशयः । स च तद्रूपदृष्टं यथा प्रकृते प्रसिद्धं रज्वादि तत्रापि सर्पोऽयमिति भ्रान्तिकारणस्य निरुक्तभ्रान्त्यात्मकज्ञानप्रागभावस्य एकस्य सर्पोऽयमिति ज्ञानेन एकेनैव नाशे सति अपि बहीयमिति भ्रान्त्यन्तरप्रागभावस्तिष्ठत्येव । तद्वत् सर्पो न वा इति संशयस्यापि उक्तसर्पज्ञानेन एकेन

नाशेऽपि पुनरियं वल्ली न वेति संशयकारणीभूत इयं वल्लीत्यादिज्ञानप्रागभावोऽपि अस्त्येव । एवं भूयः । एकैकभ्रमादिकारणस्य अनादेः, एकैकभ्रमादिज्ञानेन । तुशब्दोऽवधारणे । क्षपणं ध्वंसनमेव स्वभावादिति नियतम् । तद्वत्प्रकृतेऽप्ययं घट इत्येकज्ञानेनैकस्य तद्विषयकस्याज्ञानस्य नाशेऽपि अज्ञानान्तरमस्त्येव । तेन । अनादीति । पल्लवाद्यज्ञानस्यानादित्वपक्षेऽपि ते प्रतिवादिनस्तव । का विपतिः प्रोक्तप्रागभावदृष्टान्तेन नैव किमपि विप्रतिपत्तिरस्तीति संबन्धः ॥ ४३ ॥

तत्रापि निरुक्तप्रागभावदृष्टान्तवैषम्यं शङ्कते—स्थाणुर्वाऽयमित्यादिस्रग्धरया—

स्थाणुर्वाऽयं पुमान्वेति विमतिजनुषः कालिकं दृष्टमेव
लोके यावद्विशेषप्रमितिविनिवहाभावकूटं तु बीजम् ।
ज्ञानेनैकेन जाते सति तु विघटने तस्य कूटस्य पश्चात्
संदेहाद्यप्रसक्तेर्विषमभिदमिह प्रागभावस्य साम्यम् ॥४४॥

इतीति । निरुक्तप्रकारमिति यावत् । विमतीति । विप्रतिपत्त्युत्पत्तिसमकालिकमित्यर्थः । लोके । यावदित्यादि । सकलस्थाण्वादिनिष्ठविशेषप्रमासमूहाभाववृन्दं तु । स्थाणुर्वेत्यादिजनुष इत्यन्तमावृत्त्याऽत्रापि योज्यम् । तथाच निरुक्तसंदेहजन्मनो बीजकारणं दृष्टमेवेति अन्वयः । ततः किं तदाह । ज्ञानेनेत्यादिशिष्टेन । स्पष्टमेवेदम् ॥ ४४ ॥

एवं प्रागुक्तं प्रागभावदृष्टान्तं पिष्टीकृत्य शङ्कान्तरमपि तर्कयति—किं चेत्यादितदेकदेशेन—

किं चाज्ञानान्तरैरावरणमिह यदि स्यात्प्रकाशः कथं स्या-
देकेनैवाऽऽवृतत्वे सति किमितरतश्चेति संमूढमेके ।
तूलाज्ञानानि कुर्वन्त्यलमिह विषयस्याऽऽवृतिं वृत्तिनाशे
पर्यायेणेति वृत्त्या न किमु समुचितस्तद्विनाशस्तदेति ॥

उपसंहरत्योक्तशङ्कां तत्समाधानमवतारयति । इतीत्यादिशेषेण । इत्येक आहुरित्यध्याहारः । अपरं तु सकलं सरलमेव प्रतिस्फुरति ॥ ४५ ॥

अत्रापि कस्यचित् जिज्ञासोर्विमतौ केचिदाचार्यास्तामपि प्रकारान्तरेण समादधुरित्याह—मैवमित्यादिमन्दाक्रान्तया—

मैवं मुक्तावपि किमु तदाऽनावृणत्तूलसंज्ञा
ज्ञानानां स्यादपि न कियतामत्र शेषः प्रसक्तः ।

इत्थं मुग्धं प्रति निजगदुः केचिदाचार्यवर्या
मूलाज्ञानक्षतिमनुतदीयं विनाशं तदैव ॥ ४६ ॥

अनावृणदिति च्छेदः । अनावृणन्ति तत्तद्विषयावच्छिन्नचैतन्यान्यनाच्छादयन्ति एतादृशानि च तानि तूलसंज्ञानि अज्ञानानि तेषामित्यर्थः । कियतामनियतसंख्याकानाम् । अत्र पक्षे । यतो मुक्तावपि तदा शेषः प्रसक्तः किमु न स्यात् । अपितु स्यादेवेति योजना । इत्थमित्यादिसमाधानं त्वनान्ध्रमेव ॥ ४६ ॥

इहापि कस्यचिन्मुमुक्षोराक्षेपं संक्षिपति—ननु इत्यादिमालभारिण्या—

ननु तद्विषयत्वमेव तस्याऽऽवरकत्वं नहि तत्कदाचिदेव ।
सति नष्टजनिष्यमाणभूयोविषयाणां स्वनिदान एव सौक्ष्म्यम् ॥४७॥

तस्य तूलाज्ञानस्य । तद्विषयत्वमेव तत्तद्घटावच्छिन्नचैतन्यविषयतावच्छिन्नत्वमेवेत्यर्थः । ततः किं तदाह । नहीत्यादिना । हिर्हेतौ । यतस्तदुक्तलक्षणमावरकत्वं कादाचित्कमिति यावत् । एवं सति । नष्टेत्यादि । भूतभविष्यदनन्तघटादिविषयाणाम् । स्वेति । मूलाज्ञान एव सौक्ष्म्यं सूक्ष्मरूपेणावस्थानमस्त्येव ॥ ४७ ॥

अतः, इतीत्यादि—

इति तानि तदावृतिक्षमाणि प्रभवेयुः क्वचिदत्र तत्तु नेष्टम् ।
अमितेरिति मूढमाहुरन्ये छिदमेकस्य पराभवं परेषाम् ॥४८॥

तत्र हेतुः । अमितेर्निरुक्ततूलाज्ञानानामानन्त्यादित्यर्थः । शिष्टं तु स्पष्टमेव ॥ ४८ ॥

तत्राप्याशङ्क्यैव समाधत्ते—नचेत्यादीन्द्रवंशया —

न च क्रियामूर्तिविहीनतावशात्पराभवाद्यत्र तु नेत्युदीरितम् ।
यतो मतोऽसौ प्रतिबन्ध एव नस्तेषां तदा त्वावृतिशक्तिसन्ततेः॥४९॥

अत्रोक्तपराभवादिव्यवस्थाविषये । क्रियेत्यादि । तूलाज्ञानानामपि मूलाज्ञानवत् क्रियादिविरहात् । उदीरितपूर्वपद्ये प्रतिपादितमित्यर्थः । एतादृशं पराभवादि न तु नैव संभवति इति नच वाच्यं नैव वक्तव्यमिति यावत् । तत्र हेतुः । यत इत्याद्युत्तरार्धेन । तदा मुक्तौ । आवृतीति । आवरणशक्तिसंतानस्येत्येतत् ॥ ४९ ॥

तत्र दृष्टान्तं स्पष्टयति—यथेत्यादिभुजंगप्रयातेन—

यथा संनिपातप्रशान्त्यै गृहीतं करोत्येकदोषस्य नाशं परेषाम् ।
पराभूतिमेवौषधं तद्वदत्र प्रमातोऽस्त्वविद्यानिवृत्त्यादि सर्वम् ॥५०॥

प्रमातो ब्रह्मात्मैक्यसाक्षात्कारात् । आदिना तूलाज्ञानतापादरग्रा०कि- प्रतिबन्धः ॥ ५० ॥

एवमुक्तसिद्धान्तेऽपि धारावाहिकस्थले द्वितीयादिवृत्तिवैफल्यमाशङ्क्य तत्साफल्यं साधयति धारावाहिक इत्यादिना शार्दूलविक्रीडितेन—

धारावाहिक आद्यवृत्तिवशतो नाशाभिभूत्योः स्थिता-
वज्ञादेस्तमसः कथं नहि वृथावृत्तिव्रजोऽत्राग्रिमः ।
मैवं दीपतिरस्कृतं तम इव स्यादाविवृत्स्वेतद-
प्यज्ञानं तदुपक्षये पुनरिति क्षेमोऽन्यवृत्तेः फलम् ॥ ५१ ॥

अविवृत्स्विति । आवरितुमावरणं कर्तुमिच्छतीति तथेत्यर्थः । तदुपक्षये दीपनाशं इव वृत्त्यात्मकज्ञाननाशे सति । तम इवाज्ञानमपि पुनः स्यादिति हेतोः । क्षेमः प्राप्ततमःक्षयसंरक्षणलक्षण इत्यर्थः । अन्यवृत्तेरग्रिमज्ञानस्य । फलमस्तीत्यन्वयः ॥ ५१ ॥

तत्रापि कस्यचित्तु बुभुत्सोरनुपपत्तिं न्यायचन्द्रिकाकृतां मतेन निराकरोति—ननु इत्यादिस्रग्धरया—

नन्वाद्यज्ञानमेकावरणमपहरत्प्रोदितं च स्थितं च
नष्टं यस्मिन्क्षणेऽत्राऽऽवरणमपरमप्येत्यवश्यं कथं न ।
इत्याशङ्काग्र्यशान्तिं सपदि वितनुते चन्द्रिकान्यायपूर्वा-
पर्यायेणाऽऽवृतिस्तैः क्षतिरपि च धिया स्वस्वकालेऽथ तेषाम् ॥ ५२ ॥

कथं न एति अपितु एत्येवेति संबन्धः । पर्यायेणेत्यादि । आद्यज्ञाने घटादिविषयमात्रावरणध्वंसो धारावाहिके जायते द्वितीयादिज्ञानैस्तु पर्यायेण तूलाज्ञानैरावरणं यथा भवति तथा । धिया प्रमात्वेन । स्वस्वेति । तत्तत्क्षणविशिष्टविषयकत्वात्तेषामुक्तावरणानां क्षतिरपि च तदनन्तरं ततो भवतीति योजना ॥ ५२

एतदेव सदृष्टान्तं स्पष्टयति—कारीरीत्यादिमहर्षिणया—

कारीरी निकटमवग्रहं विहन्यादासन्नां हरति तथाऽऽवृतिं न वृत्तिः ।
धारावाहिक इति सार्थकं विबोधे वृत्तीनां भवनमिहाग्रिमोत्तरा-
साम् ॥ ५३ ॥

धारेति । एतादृशे । विबोधे ज्ञाने । यथा कारीरी निकटावग्रहं वृष्टिप्रतिबन्धं विहन्यात् । तथा वृत्तिः । आसन्नाम् । तुरवधारणे । निकटामेव । आवृतिं हरति । इति अनेन प्रकारेण । उत्तरासामग्रिमाणां वृत्तीनां भवनमुत्पत्तिम् । इह लोके सार्थकमेव भवतीति संबन्धः ॥ ५३ ॥

तत्रापि कस्यचिन्मुमुक्षोराकाङ्क्षायां तामन्य आचार्याः प्रकारान्तरेणैव प्रशमयन्तीति विवृणोति—कारीर्येत्यादिस्रग्धरया——

कारीर्याऽवग्रहो यः क्षपित इह भवेद्वृष्टिकार्यानुमाना-
त्पुण्यद्वारैव सिद्धः स भवति न पुनस्तत्र प्रत्यक्षमस्ति ।
वैषम्यं तेन धारावह इति विमतिव्याकुलं केचिदूचु-
राद्यज्ञानादविद्या ह्रसति घटगताऽन्यैस्तु कालादिमद्वा ॥ ५४ ॥

तत्र प्रत्यक्षमस्तीत्यत्र च्छन्दोभङ्गः संयोगे गुरुः इत्यादिशास्त्रतः प्रकारस्य ह्रस्वात्रकारादग्रे संयोगादगुरुत्वेन प्रतिभात्यथापि प्रह्राभ्यां च इति च्छन्दः सूत्रेण विकल्पोक्तेः सा मङ्गलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रेति कुमारसंभवप्रयोगात् न इति ध्येयम् । तत्समाधानमेव विशदयति । आद्येत्यादिचरमचरणेन । घटेति । घटावच्छिन्नचैतन्यविषयिणीत्यर्थः । ईदृशी । अविद्या ह्रसति क्षीयते । अन्यैरग्रिमघटः । ज्ञानैः । कालादीति । तत्तत्कालतत्संबन्धावच्छिन्नघटविषयिण्येवाविद्या नश्यतीत्यन्वयः ॥ ५४ ॥

अत्रापि जिज्ञास्वन्तराशङ्कां व्युदस्यन्त्याऽऽचार्यान्तरोक्ततत्समाधानमभिधत्ते—नन्वित्यादिशार्दूलविक्रीडितेन——

नन्वेतन्न यतो विशिष्टविषया नो वृत्तिरेवास्तिय-
त्कालोऽतीन्द्रिय एव साक्षिविषयोऽविद्याविशेषात्मकः ।
एवं मुग्धमबोधयन् मुनिवराः केचित्तु वृत्त्यैकयतः
स्थूलानेहसि वृत्तितोऽग्रिम उपास्त्याभाऽप्रमातोऽपि वा ॥ ५५ ॥

तदेव बोधनं द्विविधेनाऽऽह वृत्तीत्यादिना । धारावाहिके यावदन्यविषयादिष्वदवृत्त्यन्तरनेकैव वृत्तिरित्यङ्गीकारैः स्थूलेति । सूक्ष्मकालस्योक्तरूपस्यातीन्द्रियत्वेऽपीदानीं घटं पश्यामीति स्थूलकालावच्छिन्नतत्तदर्थविषयकवृत्तिन इत्यर्थः । अग्रिम इति । प्रथमज्ञानपुरोगाग्रिमज्ञानवृन्द इत्यर्थः । उपास्तिज्ञानस्थल इवाप्रमारूपज्ञानत्वादिति यावत् । सा च सूर्ये ब्रह्मधीर्वैधी । आदित्यो ब्रह्मेत्यादेश इति श्रुतेः ॥ ५५ ॥

अथ प्रकृत एव शिष्यः स्वाचार्यं प्रति एवं धारावाहिकैकप्रत्ययमुक्तमङ्गीकृत्य परोक्षज्ञानादज्ञानं निवर्तते न वा इति पृच्छन्प्रार्थयते—धारेत्यादिशार्दूलविक्रीडितेन——

धारावाहिक एवमस्तु रुचिरा सर्वैकप्रत्यस्थिति-
स्तत्राप्यस्ति नवा परोक्षमितितोऽज्ञानक्षयो नाऽऽदिमः ।

भ्रान्त्यादेरवलोकनान्न चरमः शाब्दानुमित्योः क्षते-
रित्यन्तस्तिमिरं हरन्तु घृणया श्रीदेशिकेशाङ्घ्रिभाः ॥ ५६ ॥

ननु काऽनुपपत्तिः परोक्षज्ञानादज्ञानक्षय इत्यत आह नेत्यादिना। कुतः परोक्षज्ञानादज्ञानक्षयोऽस्ति इति पक्षो न इति प्रतिज्ञायते तत्राऽऽह भ्रान्त्यादेरिति। परोक्षं हि ज्ञानं स्वर्गे सुधाऽस्ति इत्याप्तवाक्यजन्यशाब्दमेकमपरं धूमादिलिङ्गकं वह्निमान् इत्यादि आनुमानिकं च। तत्रोभयत्रापि सुधा तावद्भास्वरशुक्लरूपैवास्ति इति भ्रान्तिः। किंवा भास्वरशुक्लरूपाऽथवा तथेत्यादिपदृष्टसंशयश्च। तद्वत् वन्हौ बाष्पे धूमभ्रमेण ह्रदो वन्हिमान् इति भ्रान्तेस्तथा किं धूमलिङ्गेन वन्हिमान् उत बाष्पेण तदभाववानिति संशयश्च दृष्ट एव तस्मात् इत्यर्थः। ननु एवं चेत्तर्हि परोक्षज्ञानं मास्तु अज्ञानक्षय इत्यत आह न चरम इति। तत्र हेतुमाह शाब्देत्यादिना। प्रकृतमाह इतीत्यादिशेषेण। कारुण्यं करुणा घृणेत्यमरात्कृपयेत्यर्थः। श्रीति। सद्गुरुवरचरणारुणप्रभा इत्यर्थः ॥ ५६ ॥

ततः स एवमेव शङ्कमानं मुमुक्षुविशेषं प्रसमादधतां केषांचित् आचार्याणां तदनुवक्ति आकर्णयेत्यादिवसन्ततिलकया—

**आकर्णयैवमपरं प्रति केचिदूचुर्द्वेधा किलास्ति विषयावरणं प्रसिद्धम्।**
**अर्थस्थितं पुरुषनिष्ठमिति द्वितीयं साक्ष्येकभास्यमपरं भ्रममात्रतर्क्यम् ॥**

द्वितीयं पुरुषनिष्ठम्। अहं ब्रह्म न जानामीति साक्षिमात्रप्रत्यक्षम्। अपरमर्थस्थितम्। अज्ञातब्रह्मात्मवस्तुगतम्। अत एव। भ्रमेति। द्वैतभ्रमैकोन्नेयमस्तीत्यर्थः ॥ ५७ ॥

ततः किं तदाह—परोक्षेतीन्द्रवज्रया—

परोक्षवृत्त्या पुरुषस्थनाशो वन्ह्यादि वेद्मीत्यचलानुभूतेः।
न विप्रकर्षाद्विषयस्थनाशस्तेन भ्रमादेरपि संभवोऽत्र ॥ ५८ ॥

विप्रकर्षादिन्द्रियसंनिकर्षविरहादित्यर्थः ॥ ५८ ॥

अत्रापि आशङ्क्य समाधत्ते प्राग्वदेव—नन्वित्यादिस्रग्धरया—

नन्वज्ञानस्वभावस्तमस इव किलायं हि यत्र स्थितं त-
त्संछाद्यान्यत्तनोतीत्युचितमिह कथं वाऽऽवृतिद्वित्वमेतत्।
इत्याशङ्काजुषं केऽप्युपदिदिशुरिदं जीवमात्रस्थमेक-
मज्ञानं दृष्टिनिष्ठं पटलमिव समाछाद्य चान्यत्तनोति ॥ ५९ ॥

जीवेति । यावत् जीवनिष्ठमित्यर्थः । तत्र दृष्टान्तं प्रकटयति । पटलमिवेति । पटलं प्रसिद्धमेव । तत् हि चन्द्रैकत्वमाच्छाद्य तत्र द्वित्वं तनोति यथा तद्वत् इति यावत् ॥ ५९ ॥

ततः किं प्रकृत इत्यत आह—परोक्षेत्यादीन्द्रवज्रया—

परोक्षवृत्त्याऽऽवरणांशमात्रनाशेऽपि विक्षेपलवस्य सत्त्वात् ।
चन्द्रद्वयत्वाद्यवभासिसिद्धिस्तदेकतादेर्मितिरप्यखण्डा ॥ ६० ॥

तदेकतेति । अपरोक्षवृत्त्येति शेषः । मितिरग्रे स्फूर्तिरपीति यावत् ॥ ६० ॥

तत्राप्याशङ्क्य प्राग्वदेव समाधत्ते—तादात्म्येनैवेत्यादिस्रग्धरया—

तादात्म्येनैव शुक्त्या रजतकलनतो गोचरैकाश्रयं त-
दज्ञानं कारणं स्यात्तदिदमसदिति भ्रान्तमन्येऽभिदध्युः ।
मूलाज्ञानांशरूपं विषयगमभिदोऽशाशिनोः साक्षिभास्यं
तूलाज्ञानं परोक्षात्तदभिभवनतस्तत्क्षयस्त्वापरोक्ष्ये ॥ ६१ ॥

शुक्त्येति । सह तादात्म्येनैव तदीयेदमंशसामानाधिकरण्येनैव । अभिदो हेतोः । तदभीति । सार्वविभक्तिकस्तसिः । तेन तदभिभवनमित्यर्थः । आपरोक्ष्ये सतीत्याधिकम् ॥ ६१ ॥

अत्रापि आशङ्कमानस्य कस्य चित्जिज्ञासोः समाधानं भारतीतीर्थास्तथैवं चक्रिर इत्याह—आस्तामित्यादिमन्दाक्रान्तया—

आस्तामेवं विषयनिलयो मोह एतावता किं
नष्टं तत्रानुपदमतवच्चेत्परोक्षव्यवस्था ।
भायात्तर्हि स्व इव विषयस्तेन साक्षात्स्वरादिः
शाब्दादाविरयमुदमवदन्भारतीतीर्थपादाः ॥ ६२ ॥

स्व इव आत्मेव । स्वरादिः स्वर्गादिरित्यर्थः । स्वरव्ययमित्याद्यमरः । एतादृगो विषयोऽपि । शब्दादौ आच्छेदन्तं सप्तम्यर्थः आदिनाऽनुमानम् । तेन विषयावरणनाशेन । साक्षाद्भायादिति संबन्धः । इति अनया । आस्था । अमुदमसंतोषम् ॥ ६२ ॥

किमवदंस्तदाह—असदित्यादिमुरल्या—

असदावरणं भवेद्यथा वद भानावरणं च गोचरे ।
प्रथमक्षपणं परोक्षतश्चरमस्यापि वचापरोक्षतः ॥ ६३ ॥

गोचरे विषये । वचेति साक्षात्कारजं हर्षं ॥ ६३ ॥

ननु एवमपि एतदावरणं प्रमातरि केन संबन्धेन तिष्ठति तथा विषयेऽपी-त्यत्राऽऽह—विषयेत्वित्याद्यार्यया—

**विषये तु विषयताभिधसंबन्धेनैव तास्स्थितिं याति।**
**आश्रयतयैव चाऽऽत्मन्यक्षिणि काचादिवत्सततम्॥ ६४॥**

तत्र दृष्टान्तं स्पष्टयति। अक्षिणीत्यादिविशेषेण। आदिना कामलाख्यं रोगान्तरम्॥ ६४॥

ननु एतत्सिद्धान्तलेश एतत्प्रकरणे तावन्नैवोपलभ्यते इति चेत्सत्यम्। तथाऽपि तैः प्राङ्गमत एवोपलक्षणत्वेनोक्तप्रायमेवेति। यथा तृप्तिदीपं विविच्यैव श्रीमद्भारतीतीर्थीयमिदं मतं निष्कृष्टरेन बालबोधार्थमेव इह प्रपश्चितमित्याह—सिद्धान्तलेश इत्यादीन्द्रवज्रया—

**सिद्धान्तलेशे तु न दीक्षितैरिदं प्रपञ्चितं प्रागुपलक्षणत्वतः।**
**मयैव तेनाद्य तु तृप्तिदीपमवेक्ष्य सम्यक्प्रकृते निरूपितम्॥६५॥**

अत्र सिद्धान्तलेशाविचारितत्वात्तृप्तिदीपस्य तु तात्पर्यान्तरतयाऽपि व्याख्या-तुं शक्यत्वाच्चेदमसांप्रदायिकमेव इत्याशङ्कां प्रत्याचष्टे—अद्वैतेतिप्रभृत्यु-पजात्या—

**अद्वैतमिथ्यादिषु तस्य विस्तरः स्पष्टस्ततो नेदमसांप्रदायिकम्।**
**सद्भानयोस्तत्प्रतियोगिताऽपि विशिष्टयोरेव न तद्द्विराश्रः॥६६॥**

आदिना तट्टीका॥ सदित्यादि। सत्ताप्रकाशयोरित्यर्थः। तत्प्रतियोगि-ताऽपि। असदावरणाभानावरणविरोधिताऽपीत्यर्थः। विशिष्टयोरेव घटावच्छि-न्नचैतन्यसत्तैव घटासदावरणविरोधिनी घटावच्छिन्नचैतन्यभानमेव तद्विषयका-भानावरणविरोधीति च स्वीकाराच्चैव तद्विरोधोऽप्यद्वैतसाक्षिचिन्मात्रेऽधिष्ठानव-स्तुनि असदावरणादिस्वीकारविरोधोऽप्यस्तीति योजना। अत्राद्वैतसिद्ध्यादिग्रन्थो यथा। तदयमत्र निष्कर्षः। यद्यपि विषयप्रकाशकं विषयाधिष्ठानभूतं प्रमेयं चैतन्यम्। अन्तःकरणावच्छिन्नं तु तस्य प्रमातृ। अन्तःकरणवृत्त्यवच्छिन्नं तु प्रमाणम्। तथाऽपि यदीयान्तःकरणवृत्त्या विषयपर्यन्तं चक्षुरादिद्वारा निःसृ-तया यत्प्रकाशकं चैतन्यं यत्प्रमातृचैतन्याभेदेनाभिव्यज्यते तमेव स एव जा-नाति। नान्यं नान्यो वा। अत एव एकवृत्त्युपारूढत्वलक्षणैकलोलीभावापन्नं प्रमातृप्रमाणप्रमेयचैतन्यं भवति ततस्तदवच्छेदेनाज्ञाननिवृत्त्या भासमानं प्रमेयचै-तन्यमपरोक्षं फलमित्युच्यते। ततस्स्वयंभासमानं सत् स्वाध्यस्तं घटाद्यपि भासय-

तीति तदुक्तव्याप्यमभ्युपेयते । यन्निष्ठा च यदाकारा वृत्तिर्भवति तन्निष्ठं तदाकारमज्ञानं नाशयतीति नियमात् । प्रमातृप्रमेयोभयव्यापिन्यपि परोक्षवृत्तिः स्वावच्छेदेनाऽऽवरणमपसारयति प्रकाशस्य स्वावच्छेदेनाऽऽवरणापसारकत्वदर्शनात् । अतः प्रमात्रवच्छिन्नस्यासत्त्वावरणस्य प्रमेयावच्छिन्नस्याभानावरणस्य च युगपदपसरणात् घटोऽयं मे स्फुरतीत्याद्यपरोक्षव्यवहारः । परोक्षस्थले तु इन्द्रियसंनिकर्षलक्षणद्वाराभावादन्तःकरणनिःसरणाभावेन विषयपर्यन्तं वृत्तेरगमनात् । विषयावच्छिन्नप्रमेयचैतन्येन सह प्रमातृचैतन्यस्यैकवृत्त्युपारूढत्वाभावेनापरोक्षतयाऽभिव्यक्त्यभावेऽपि प्रमातृप्रमाणचैतन्ययोरेकलोलीभावापत्त्या प्रमात्रवच्छिन्नमसत्त्वावरणमात्रं निवर्तते । तावन्मात्रस्य वृत्त्यवच्छिन्नाभानावरणतत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्याऽनुमानादौ व्यवहारोपपत्तिः । अत एव जानाम्यहं पर्वते वह्निरस्ति इति स तु कीदृश इति मे न भातीत्यादिव्यवहारः । त्रयाणामेकलोलीभावेऽपरोक्षत्वं द्वयोरेकलोलीभावे तु परोक्षत्वमिति न संकरः । वृत्तेश्च विषयेण समं साक्षादेवापरोक्षस्थले संबन्धः । परोक्षस्थले तु अनुमितेरनुमेयेन तद्व्याप्यज्ञानजन्यत्वम् । शाब्दाः संसर्गेण सह पदार्थबोधकपदजन्यत्वं स्मृतेर्येन सह तद्विषयानुभवजन्यत्वम् । एवमन्यत्रापि परम्परासंबन्ध एवेति परोक्षापरोक्षविभागः । विस्तरेण च व्युत्पादिताऽस्माभिरियं प्रक्रिया सिद्धान्तबिन्दौ तस्माद्विषयस्य मिथ्यात्वेऽपि प्रतिकर्मव्यवस्थोपपन्नेति दिगिति । सिद्धान्तबिन्दुरपि यथा । द्विविधमावरणम् । एकमसत्त्वापादकमन्तःकरणावच्छिन्नसाक्षिचैतन्यनिष्ठम् । अन्यदभानापादकं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठम् । घटमहं न जानामीत्युभयावच्छेदानुभवात् । तत्राऽऽद्यं परोक्षापरोक्षसाधारणप्रमामात्रेण निवर्तते । अनुमितेरपि वह्न्यादौ नास्तीति प्रतीत्यनुदयात् । द्वितीयं तु साक्षात्कारेणैव निवर्तते । यदाश्रयं यदाकारं ज्ञानं तन्निष्ठं तदाकारमज्ञानं नाशयतीति नियमात् । परोक्षज्ञानस्य विषयेन्द्रियसंनिकर्षाभावेन अन्तःकरणमात्राश्रयत्वादपरोक्षज्ञानस्यैव विषयेन्द्रियसंनिकर्षजन्यत्वेन विषयान्तःकरणोभयनिष्ठत्वात् । तदुक्तम् । परोक्षज्ञानतो नश्येदसत्त्वावृत्तिहेतुता । अपरोक्षधिया नश्येदभानावृत्तिहेतुतेति । तेन अनुमानादौ असत्त्वावरणनाशात्तद्व्यवहारः । अभानावरणानिवृत्त्या च सोपाधिकसाक्षात्कारभ्रमानिवृत्तिरिति ॥ ६६ ॥

एवं सति सच्चित्पदार्थावरणानङ्गीकुर्वाणानां स्वात्मानुभवादर्शकाराणामपि सिद्धान्तेन सहाविरोध इति अभिधत्ते । तच्चेत्यादितत्पद्यत्रिपादीपाठपूर्वकमुक्तवृत्तेनैव—

सत्ता स्फुरत्ता परमात्मनो या नाऽऽच्छाद्यते सा ह्युपजीव्यभावात् ।
आनन्दमाच्छादयतीव मायेत्यादर्शवा वाऽपि सहेति मङ्गलम् ॥

तत्र हेतुः । हीत्यादिना । प्रकृतमाह । इतीत्यादिना । निरुक्तादर्शबाधा सहापि । न तद्विरोध इति पूर्वपद्यादाकृष्यात्रापि योज्यम् । तत्रानुपहितात्मचित्वस्तुनि तेनाऽऽवरणानङ्गीकारादिह तु घटाद्यवच्छिन्नचैतन्य एवासदावरणाद्यङ्गीकाराच्चेति संक्षेपः । फलितमाह । इतीत्यादिशेषेण । प्रकृतं रम्यम् ॥ ६७ ॥

ननु भवतु एवं परोक्षज्ञानव्यवस्था तथाऽपि स्मृतेः कथं सेत्यत आह । स्मृतिरित्यादिनोक्तवृत्तेनैव—

स्मृतिः परोक्षानुभवस्य संस्कृतेर्जाता परोक्षैव तथेतरस्य ।
आहार्यकर्यानुभवोपमेति भ्रान्ताविहात्रास्ति तमःक्षयो न ॥

इतरस्यापरोक्षानुभवस्य । संस्कृतेरित्यादीहाप्यार्थिकमेव । तथा अहं महात्मानमद्वैतमौपनिषदं स्मरामीत्यादिरूपापरोक्षैवास्तीत्यर्थः । तदाह भगवान् पतञ्जलिः । अनुभूतविषयाऽसंप्रमोषः स्मृतिरिति । नचैवं तर्हि अत्रापि परोक्षादिवदसदाद्यावरणनिवृत्त्यापत्तिरिति सांप्रतम् । आहार्यादिज्ञानवत् अत्राऽऽवरणस्यैवाननुभवात् इत्यभिप्रेत्य तां विशिनष्टि । आहार्येत्यादिना । मत्पुमः विश्वामणिः । योषा वाव गौतमाग्निः इति च । फलितमाह । भ्रान्ताविहेत्यादिशेषेण ॥ ६८ ॥

ननु एवं चेत्तर्हि प्रमाणजन्यान्यवृत्तिभ्यः क्वापि अज्ञाननिवृत्तिः*काऽपि नैव स्यात् । इष्टापत्तिरिति चेत् तथा प्रतीतेः का गतिः इत्याशङ्क्य तस्याः प्रतीतेर्भ्रान्तित्वान्नैवमित्याह । नाशादित्यादिशालिन्या—

नाशात्तत्तत्प्रागभावस्य तत्तद्वृत्त्या तत्तद्गोचरस्यावभासे ।
पुंसो जातेऽप्यप्रमारूपयाऽत्र तद्भासस्तु भ्रान्त एवेति बोध्यम् ॥

तत्तत् इति । तत्तदप्रमात्मकचित्तवृत्तिप्रागभावस्य तत्तद्वृत्त्यानाशात् हेतोरित्यर्थः । तत्तद्गोचरस्य स्मृत्याद्यप्रमारूपतत्तद्वृत्तिविषयस्यावभासे पुंसो जाते सत्यपि अप्रमारूपयोक्तवृत्त्या तद्भासस्तु भ्रान्त एवेति बोध्यमिति यथाश्रुत एवान्वयः ॥ ६९ ॥

संप्रज्ञातसमाधावपि उक्तनियमप्रतिदिदर्शयिषुः—विवृत इत्याद्यार्यया—

* तूलाविप्रतियोगिकाऽपीत्यर्थः ।

विवृतः संप्रज्ञातः सोऽपि परोक्षापरोक्षयोरमुना ।
धारावाहिक इव तद्व्यवस्थितेरिति न चापरं ज्ञानम् ॥७०॥

अमुना प्रकृतोक्तसिद्धान्तेन परोक्षेति । विषयीभूतशबलादिब्रह्मविषयक इत्यर्थः । सः प्रसिद्धः । योगसूत्रादौ इति यावत् । संप्रज्ञातः समाधिरपि विवृतः । तत्र हेतुः । धारेत्यादि । [illegible] संहारेणैव प्रकटयति । न चेत्यादिशेषेण ॥ ७० ॥

अत्र पुनरपि शङ्कते—नन्वित्यार्यापूर्वार्धेन—

नन्वेवमपि सुखादौ वृत्त्या नाज्ञानविध्वंसः ।
मैवं मोहसुखादेः सिद्धान्ते साक्षिमात्रवेद्यत्वात् ॥ ७१ ॥

नेति [illegible] सम्बध्यते । समाधत्ते । मैवमित्यादिनोत्तरार्धेन । यदि तत्र प्रमाणवृत्तिवेद्यत्वं स्यात् चेत् तर्हि अज्ञानविध्वंसोऽपि संभवेत् तदेव तु नास्ति तथा च कः शङ्कावकाश इत्याशयः ॥ ७१ ॥

ननु के केऽत्राऽऽदिना विवक्षिताः सिद्धान्ते साक्षिमात्रभास्या इत्यतस्तान् [illegible] कथयति । मायेत्यादिस्रग्धरया द्विकेन—

माया तद्योगजीवेश्वरतदुभयभित्स्वं तमो लिङ्गमेतद्
धर्मा भ्रान्त्यादिनंशान्यतिमिरगणतद्वृत्तिसंस्कारसूत्रम् ।
साभासाः साक्षिभास्या इति खरिखिमितास्तत्र धर्मोऽप्यधर्मः
संस्काराश्चावृतत्वाद्भ्रमकुलमखिलं मोहतोऽन्ये तु साक्षात् ॥७२॥

माया मूलाविद्या प्रसिद्धैव । तद्योगः, अविद्याचित्संबन्धः । जीवः प्रसिद्ध एव । ईश्वरोऽन्तर्यामी । तदुभयभित् जीवेश्वरभेदः । खमाकाशम् । तमोऽन्धकारः । लिङ्गं लिङ्गशरीरम् । एतद्धर्माः, लिङ्गशरीरधर्माः कामादयः । भ्रान्तिर्भ्रमः । [illegible] । [illegible] अज्ञानसंघः । तदवान्तर[illegible] साधारणाज्ञानवृत्तिः [illegible] । [illegible] सूत्रं तन्नामकं लिङ्गशरीरम् । साभासाः [illegible] चिदाभासैः सहिताः सन्त इत्यर्थः । स्वेति । निखिलसंख्याकाः । [illegible] प्रकारेण । साक्षीति । सन्तीति शेषः । तत्रापि विशेषमाह धर्मेत्यादिना । पुण्यपापसंस्कारत्रिकमविद्यावृतत्वेन [illegible] भ्रमकुलमज्ञानकल्पितत्वेन [illegible] आवरणवशात् [illegible] अन्ये तु साक्षादेव साक्षिभास्यं भवन्तीति भावः ॥७२॥

अथोक्तप्रकरणानि संक्षेपेण निरूपयति इतीत्यादिना—

इति जीवज्ञातृत्वं सप्रतिकर्मव्यवस्थमपि कथितम् ।
वृत्तेस्तु चिदुपरागोऽभेदव्यक्तिस्तथाऽऽवरणभङ्गः ॥७३॥
विवरणकारादिमते सर्वज्ञात्मादिदेशिकेशमते ।
अपि दृष्टिसृष्टिवादे क्रमात्फलं तत्त्रयैक्यमप्युक्तम ॥ ७४ ॥

विवरणेति । क्रमात् । चिदुपरागादिक्रमात् ॥ ७४ ॥

चत्वारि त्रीणि सप्त क्रमश इह मतानीरितान्यैकमत्या-
न्मुक्तावज्ञाननाशे मतयुगमुदितं सैकमत्यं च तौले ।
धारावाहे त्रयाणां कथनमपि कृतं सैकमत्यं मतानां
तद्वत् ज्ञाने परोक्षेऽभिमितमतकथासाक्षिवेद्यं च सर्वम् ॥७५॥

चत्वारीति । तौले तूलाज्ञानसंबन्धिनि मुक्तिकालिकाज्ञाननाशे ॥ ७५ ॥

इति वादाष्टकमेतन्निरूपितं ह्यैकरस्येन ।
ऐशं रूपाष्टकमिव यथामति श्रीगुरोः कृपया ॥ ७६ ॥

इतीति । ऐशमीश्वरसंबन्धि ॥ ७६ ॥

इति सप्रतिकर्मव्यवस्थसवृत्तिफलकजीवगज्ञातृत्वं चिदुपरागाभेदाभिव्यक्त्या-वरणभङ्गमुक्तिकालिकतूलाज्ञाननाशधारावाहिकज्ञानपरोक्षज्ञानमतैक्यसाक्षिवेद्य-सर्वनिरूपणोपपत्तिः ॥

---

अथ पूर्वप्रकरणे निरूपितं साक्षिवेद्यदृश्यवृन्दं प्रकृत एव शिष्यः श्रुत्वा प्रकृतमेवाऽऽचार्यं प्रति तत्र तत्त्वजिज्ञासयैव शङ्कते नन्वित्यादिसग्धरया--

नन्वेवं साक्षिवेद्यं निगदितमधुनाऽव्याकृताद्यत्र साक्षी-
कः शुद्धो वेशजीवान्यतरचिदिह नाऽऽद्योऽत्र सापेक्षता यत् ।
नान्त्यः साक्ष्यत्वसत्त्वादपि च निजमते साक्षितायाश्च बाधा-
त्तत्साक्षित्वं न शुद्धे यदि न च शबले तर्हि निःसाक्षिकोऽसौ ॥१॥

अव्याकृतादीति च्छेदः । तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुतेः । जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादय इति अभियुक्तोक्तेश्च । अनादिदृश्यप्रपञ्चकारणमव्याकृतपदार्थः स आदिर्यस्य आकाशादेस्तत्तथेत्यर्थः । एवं साक्षिविषयं विकल्पमुक्त्वाऽऽद्यं दूषयति । नेति । तत्र हेतुः । अत्रेत्यादिना । अत्र शुद्धत्वपक्षे । यत् यस्माद्धेतोः सापेक्षता साक्ष्यनिरूपितत्वम् । तदुक्तं वार्तिकसारे । साक्षिसाक्ष्यादिसंबन्धः परमात्मनि कल्पितः ।

साक्ष्याभावे न साक्षित्वं केवलानुभवात्मनीति । अन्यं प्रत्याह । नान्य इत्यादिना । दूषणान्तरमाह । अपि चेत्यादिना । असौ बाधः । स चोक्तः सयुक्तिकमद्वैतमकरन्दे । चैत्योपरागरूपा मे साक्षिताऽपि न तात्त्विकी । उपलक्षणमेवेयं निस्तरङ्गचिदम्बुधेरिति । नहि निःसाक्षिकबाधसत्त्वे प्रमाणमस्तीत्याशयः ॥१॥

एवं संदेहमुपन्यस्य तद्ध्वंसं सविनयं याचते—इतीत्यादिमालभारिण्या—

**इति संशयशालिनं गुरो मां शरणं संशयशालिनं पदोस्ते ।**
**कुरु संशयशून्यमेव मधः कृपया शीर्ष्णि निधाय संशयं मे ॥२॥**

प्रच्छन्नप्रतिवादित्वं व्युदसितुमात्मानं विशिनष्टि । शरणमित्यादिद्वितीयचरणेन । ते तव पदोः पादपद्मयोराधारीभूतयोरित्यर्थः । संशयेति । सम्यक्कुशयाभ्यां पञ्चशाखः पाणिरित्यमरात्पाणिभ्यां शालतेऽसौ तथा मामिति यावत् । एतादृशं शरणमनन्यभावेन शरणागतमित्यर्थः । ननु वाञ्छान्तरेण । एतेन भक्त्यतिशयः सूच्यते । अत एव । कुर्वित्यादिरभ्यर्थनोत्तरार्धेन । मे मम । शीर्ष्णि मस्तके । संशयं दक्षिणपाणिपद्मम् । कृपया निधाय । सद्य एव । संशयेति । एतादृशं कुर्वित्यन्वयः ॥ २ ॥

ततः स एव श्रीगुरुरेतादृक्साक्षितत्त्वजिज्ञासुं प्रति भारतीतीर्थस्तु एवमकथयन्नित्याह—वत्सेत्यादिशार्दूलविक्रीडितेन—

**वत्साकर्णय कंचिदीदृशविजिज्ञासुं जगुर्भारती-**
**तीर्थाः सादरमत्र शीघ्रमतये कूटस्थदीपे स्वयम् ।**
**आत्माऽऽरोपितदेहयुग्मसुघटस्वान्तःस्थधर्माविलेः**
**साक्षाद्भासक एव साक्ष्यभिमतः कूटस्थ एवेत्यलम् ॥ ३ ॥**

अनया संबुद्ध्या शिष्ये कारुण्यं व्यज्यते । तदेव कूटस्थदीपीयं तत्समाधानमभिधत्ते । आत्मेत्याद्युत्तरार्धेन । ननु देहयुग्मशब्देनात्र स्थूलसूक्ष्मशरीरद्वयमेवावश्यं वाच्यम् । एवं सुघटस्वान्तस्थधर्मशब्देनापि धर्माधर्मादिनित्यानुमेयेतरत्वेन योग्यान्तःकरणसबन्धिसुखादिधर्मा एव । तत्र स्थूलदेहस्य पूर्वप्रकरणे मायेत्यादिसाक्षिमात्रभास्यसंग्रहश्लोकेऽनवगणनाद्गौरं मे शरीरमित्यादिप्रतीत्यन्यथानुपपत्त्या प्रमातृभास्यत्वाच्च कथं साक्षिभास्यत्वमिति चेत्सत्यम् । कूटस्थदीपेहि । खादित्यदीपिते कुड्ये दर्पणादित्यदीप्तिवत् । कूटस्थभासितो देहो धीस्थजीवेन भास्यत इति सदृष्टान्तं स्थूलदेहस्य सामान्यतः कूटस्थभास्यत्वं विशेषतः प्रमातृभास्यत्वं चोपपाद्य कूटस्थमञ्चितनिर्विकारासङ्गोदासीनब्रह्मभास्यत्वं घटकतस्य

सुघटमेवेतीष्टापत्तिवादिनं प्रति कूटस्थपदेनात्र विवक्षितं शोधितत्वंपदार्थं देहेन्द्रियादिद्रष्टुकस्य जीवाभासभ्रमस्य या अधिष्ठान चितिः। सैषा कूटस्थात्र विवक्षितेति प्रबोध्य यावत्तद्दृश्यारोपस्याधिष्ठानं तदुपलक्षितं दृश्यात्रं ब्रह्मेत्यद्वैतवादिसिद्धान्तेन विरोधमनुसंधाय । जगत्तदेकदेशाख्यसमारोप्यस्य भेदतः। ततुत्वंपदार्थौ भिन्नौ स्तो वस्तुतस्त्वेकता चितेरित्युक्तत्वान्नात्र विरोधगन्धोऽपि ॥ ३ ॥

एवं तैरेव नाटकदीपे रीत्यन्तरेण साक्षिस्वरूपमुक्तमिति वदंस्तत्संक्षिपति—उक्त इत्यादितद्वृत्तेनैव—

**उक्तो नाटकदीप एष उत तैरीत्यन्तरेणाहमं**
**भूपालं विषयान्सदस्यनिचयान्बुद्धिं नटीमप्यनु ।**
**श्रोत्रादीनपि तालधारिण इहोद्यन्नृत्यशालामम**
**देहे दीप इव प्रकाशयति यः साक्षी स आत्माऽद्वयः ॥ ४ ॥**

तदेव रीत्यन्तरमाह । अहममित्यादिशेषेण । अहममहंकारं भूपालं राजानम् । विषयान्शब्दादीन् । सदस्येति । सभ्यसंघानित्यर्थः । श्रोत्रेति । कर्णादिकरणाविशेषान् । तालेति । वाद्यवादकान् । इह प्रत्यक्षे । उद्यदिति । देहे नृशरीरे । फलितमाह । दीप इवेतिप्रभृतिशेषेण ॥ ४ ॥

तत्रापि कश्चिन्मुमुक्षुः शङ्कत इत्यवेक्ष्य तच्छङ्कामनुवदति—जीव इत्यादिशालिन्या—

**जीवो नायं नापि चेशोऽस्ति साक्षी तावाभासौ संमतो तत्र यस्मात् ।**
**जीवः शुद्धोऽसावितिव्यर्थमेव ब्रह्मापि स्यादीशसाक्षी तथात्वे ॥**

योऽयं भारतीतीर्थैः कूटस्थनाटकदीपयोस्तत्तन्मुमुक्षुबोधैकौपयिकत्वेन तत्तत्प्रक्रियामनुसृत्यैव स्वातन्त्र्येण स्वीययत्किंचिन्मताग्रहविरहे सत्यपि शोधितत्वंपदार्थाभिधः कूटस्थ एव साक्ष्युक्तोऽस्त्यसौ जीवो न भवति नापि चेशोऽस्ति । तत्र हेतुःतावित्यादिद्वितीयपादेन । यस्माद्धेतोः। तत्र कूटस्थद्वीपादौ तद्ग्रन्थे । तौ उक्तजीवेश्वरौ । आभासौ । जीवेशौ आभासेन करोतीति श्रुतेः। चिदाभासरूपावेव । संमतौ भवत इति संबन्धः । एवं च आभासस्य सार्वांशिकमिथ्याप्रतिबिम्बरूपत्वेन त्रैकालिकनिर्विकारचिद्रूपत्वमनुपपन्नमेवेति भावः । ननु एवमपि शुद्धः प्रत्यक्चिन्मात्रत्वेन पञ्चकोशेभ्यो विवेचितो जीव एव तत्र कूटस्थपदेष्ट इत्यत्राऽऽह । जीव इत्याद्युत्तरार्धेन । तत्र हेतुः । ब्रह्मापीत्यादिचरमचरणेन । तथात्वे कूटस्थे जीवसाक्षित्वे सति ब्रह्मापीशसाक्षी स्यात् ॥५॥

अत्र चित्सुखाचार्यास्तु अयं साक्षी ब्रह्मैव न जीवो नापीश्वर इति समा-दधुरित्यभिधत्ते-इतीत्याद्युक्तवृत्तेनैव-

**इत्याशङ्काशालिनं कंचिदाहुर्ब्रह्मैवैनं चित्सुखाचार्यवर्याः।**
**तक्षन्यायात्साक्षिताऽप्यस्य साक्ष्यादृत्ने यद्वद्भास्यतो भासकत्वम् ॥६॥**

जीवो नायमित्यादिपूर्वपद्ये साक्षिण एकस्यां क्रियायामुपात्तत्वेनेहान्वादे-शसत्त्वात् एनं साक्षिणं ब्रह्मैवाऽऽहुरित्यन्वयः। नच तथात्वे। अव्यावृत्तान-नुगतं वस्तु ब्रह्मेति भण्यते। ब्रह्मार्थो दुर्लभोऽत्र स्यातद्द्वितीये सति वस्तुनीति वार्तिकात्कथं ब्रह्मणः साक्ष्यापेक्षं साक्षित्वमिति वाच्यम्। यथा च तक्षोभय-थेति पारमर्षन्यायादित्याह। तक्षन्यायादित्यादिना। अस्य ब्रह्मणः साक्ष्यात्-दृश्यात्हेतोः साक्षिता दृष्टृताऽपि यथा वास्या काष्ठस्य तक्षणं कुर्वंस्तक्षा भवति तदभावे तु शुद्ध एव यथ वा स्वप्रकाशं रत्नं घटादिभास्यसांनिध्याद्भासकं तदभावे तु शुद्धमेव तद्वदित्यर्थः॥ ६॥

अत्रापि आशङ्कमानं कंश्चिन्मुमुक्षुं प्रति कौमुदीकृदेवं समादध इत्यभिधत्ते यदीत्यादिभुजंगप्रयातेन-

**यदि स्वप्रभे साक्षिणि ब्रह्मतैव स्थिता तर्हि तत्राऽऽवृतेः क्वाप्यभावात्।**
**कथं नो विमुक्तिर्ह्यभूज्जीवराशेरिति ध्वान्तखिन्नं जगौ कौमुदीकृत्॥७**

तत्रापि साक्षिणि। क्वापि कस्मिंश्चिद्देशकालेऽपि। आवृतेरावरणस्य। अभावात् हेतोः जीवराशेर्जीवसंघस्यास्येत्यर्थः। विमुक्तिः कथं नोअभूत्। हिखधारणे। नैवाद्याप्यभवत् इत्यर्थः। शिष्टं तु स्पष्टमेव॥ ७॥

किंमुक्तं कौमुदीकृतेत्याह-ईशस्येत्यादीन्द्रवज्रया-

**ईशस्य रूपान्तरमेव साक्षी जीवान्तरङ्गः सुतरामसङ्गः।**
**प्राज्ञाभिधः कारणताविहीनः श्रुत्योभयोरप्यनुषक्ततोक्तेः॥८॥**

कोऽसावित्यत्राऽऽह। जीवेति। तथात्वे कर्तृत्वाद्यापत्तिरित्यत आह। सुत-रामित्यादिना। तथा क्वानुभवनीयस्तत्राऽऽह। प्राज्ञेति। ननु एवं चेत् स्वप्नप्र-पञ्चयुक्तकारणत्वावच्छिन्नस्य तस्य कथं साक्षित्वं स्यादित्यत्राऽऽह। कारण-तेति। अत्र हेतुं द्योतयति। श्रुत्येत्यादिशेषेण। तद्यथा प्रियया स्त्रिया संपरि-ष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेन आत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्। प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्यातीति श्रुत्या तथा साक्षी चेता इत्यादिश्रुत्या चोभयोर्जीवेश्वरयोरपि तस्य अनुषक्ततोक्तेः संसृष्टत्वकथनादित्यर्थः॥ ८॥

तत्रापि आशङ्कमानं कंचिद्बुभुत्सुं तत्त्वशुद्धिरेवमबोधयदित्याह— साक्षी-त्यादिश्रुतिमेव पठन्शालिन्या—

**साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुत्या ब्रह्मकोटिर्हि साक्षी ।**
**भूयादेवं जीवकोटिः कथं स इत्याशङ्कामच्छिनत्तत्त्वशुद्धिः ॥९॥**

तत्त्वेति । एतन्नामकग्रन्थकारः कश्चित्प्राचीनाचार्य इत्यर्थः ॥ ९ ॥

तत्प्रकारमेव सदृष्टान्तं स्पष्टयति—शुक्तीत्यादीन्द्रवज्रया—

**शुक्तीदमंशः किल शुक्तिकोटिरथापि रूप्येऽप्यवभाति यद्वत् ।**
**तथैव साक्षी परमात्मकोटिरथापि जीवेऽपि विभात्यसङ्गः ॥१०॥**

अवभाति इदं रजतमिति तादात्म्याध्यासेन परिस्फुरतीत्यर्थः । ननु यावत्-दृश्येऽनुस्यूतत्वेन स्फूर्यमाण इदमंश एव क इति चेत्सत्यम् । सदेव सोम्ये-दमग्र आसीदिति तद्धेदं तर्हि अव्याकृतमासीदिति च श्रुत्येव कार्यकारणात्मक-यावद्दृश्यानुस्यूतत्वेनोक्तेः कश्चित् अविद्यापरिणाम एव वाच्यः । नचाना-दिसादिदृश्ययोः श्रुत्या क्वाप्यगणनात् तदङ्गीकारे गौरवाच्च किं तत्सत्त्वे मान-मिति सांप्रतम् । अन्धकारवदबाधितानुभूत्यन्यथानुपपत्तेरेव तत्र मानत्वात् । नापि, अहं वृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधा । विज्ञानं स्यादहंवृत्तिरिदंवृत्तिः र्मनो भवेदित्यभियुक्तोक्तेर्मन एव स इति वाच्यम् । वृत्तेस्तत्परिणामे तद्विषयी-भूतस्यार्थस्यावश्यातिरेकाच्च ॥ १० ॥

तत्रापि पूर्ववदेव कस्यचित्प्रतिपित्सोः संशयं केचिदेवमुपशमयन्तीत्याह—दृष्टान्त इत्यादिशार्दूलविक्रीडितेन—

**दृष्टान्तो विषमो यदत्र भवति व्याप्तः स शुक्त्यादिषु**
**प्रत्यक्षेष्विदमंश एष तु चितिं व्याप्तुं न शुद्धां क्षमः ।**
**साक्ष्यापेक्षतयेति विह्वलधियं केऽप्याहुरेनं पुनः ।**
**स्वाविद्योपहितात्मचिद्रसमतो नैवोक्तशङ्काकाङ्क्षनम् ॥ ११ ॥**

कुतः शुक्तीदमंशदृष्टान्तवैषम्यमित्यत्राऽऽह । यदित्यादिना । सः शुक्त्या-देरिदमंशः । एष साक्षी तु । शुक्त्यादिवत् भ्रमाधिष्ठानीभूतां शुद्धां चितिं व्याप्तुं क्षमो न भवतीत्यन्वयः । कुतः इति चेत्तत्र हेतुः । साक्ष्येति । निरुक्त-वैषम्यरूपशङ्कादूषणम् । नैवास्तीति योजना ॥ ११ ॥

तत्रापि कस्यचिन्मुमुक्षोः संदेहं तु केचिदाचार्याः प्रकारान्तरेणैव शमयन्ती-त्याह—एकेत्यादिस्रग्धरया—

एकाविद्यामतेऽसावपि भवति तथा स्यात्ततोऽन्यस्य दुःख-
प्रत्यक्षापत्तिरित्याकुलितमतिमिमं प्राहुरन्ये मुनीन्द्राः ।
जीवान्यं लिङ्गदेहैरुपहितमपि तत्सौक्ष्म्यतः स्वापकाले
जीवं जीवं विभिन्नं शशिनमिव तदा जातसौख्यानुभूत्यै ॥१२॥

असावपि साक्ष्यपि तथा भवति एकाज्ञानोपहित एव भवतीत्यर्थः । ततः किं तदाह । स्यादित्यादिना । तत एकाज्ञानोपहितचित एव साक्षित्वात् हेतोरित्यर्थः । अन्यस्येतरस्य जीवस्य । दुःखेति । सुखदुःखादेः साक्षिमात्रवेद्यत्वादविद्यैक्येऽपि अन्तःकरणभेदेन जीवभेदात् चैत्रीयदुःखादेर्मैत्रे प्रत्यक्षापत्तिः स्यादिति संबन्धः । फलितमाह । इतीत्यादिना । इमं निरुक्तजिज्ञासुं प्रति । एवमिमामिति काकाक्षिगोलकन्यायेन साक्षिणमाहुरित्यत्रापि योज्यम् । कीदृशमाहुरित्यपेक्षायां तं विशिनष्टि । जीवान्यमित्याद्युत्तरार्धेन । लिङ्गेति । लिङ्गदेहैरुपहितमत एव जीवान्यमित्यर्थः । उपहितविशिष्टयोर्भेदात् । यथा एकोऽपि स्फटिकः कुङ्कुमकस्तूर्याद्युपहितत्वेन रक्तासितादिप्रतीतिभेदाद्भिन्न एव भवति तद्वत् जाग्रदादौ भोगसांकर्यवारणार्थं जीवं जीवं प्रति विभिन्नम् । पक्षे चकोरं तं तं प्रतिविभिन्नं शशिनमिव । स्वापेति । सुप्तावपि । तदेति । लिङ्गशरीराणां संस्कारात्मकसूक्ष्मरूपेणावस्थानात् । तदा स्वापकाले । जातेति । संजातसुखानुभवार्थं विभिन्नमेव साक्षिणमाहुरिति पूर्वत्र संबन्धः । अत्र चन्द्रोपमयैकस्यापि द्रष्टृभेदादेव भिन्नत्वं न वस्तुत इति व्यज्यते ॥ १२ ॥

अथापि प्रकृतशिष्य एव प्रकृतस्वाचार्यं प्रति श्रुतिविरोधमेवोपन्यस्य स्वयमेव तदुक्तसिद्धान्ते स्वश्रीध्रौव्यध्वननार्थं तत्समाधानमपि स्मारयितुं प्रार्थयते—नन्वित्यादिहरिण्या——

ननु कथमसौ नानारूपः श्रुतावयमेकलो
बत निगदितः साक्षी यस्मादिति व्यथितं प्रति ।
गुरुभिरधुना स्मार्यः सौरेश्वरः परमेश्वर-
स्तमउपहितः साक्षी प्रोक्तः पुरा य इहाद्वयः ॥ १३ ॥

श्रुतौ । एको देवः सर्वभूतेषु गूढः सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः । साक्षी चेता केवलो निर्गुणश्च इति ब्रह्मोपनिषद्याथर्वण इत्यर्थः । सौरेश्वरः श्रीमत्सुरेश्वराचार्यसंमतत्वेन प्राक्प्रपञ्चित इति यावत् ॥ १३ ॥

एवं शिष्यमेधावित्वमवधार्य संतुष्टः प्रकृत एवाऽऽचार्यस्तत्सूचितसाक्षिस्वरू-

पमर्थादेवानुपोद्यंस्तत्कथनं सिद्धान्तलेशे किमिति न कृतमिति शङ्कां व्यु त्थाप्य समाधत्ते—सिद्धान्तलेश इत्यादीन्द्रवंशया—

**सिद्धान्तलेशे ननु दीक्षितैरयं कुतोऽत्र नोक्तस्त्विति नैव शङ्क्यम् ।**
**तैश्चित्रदीपेरिततन्मतेश्वरः प्रोक्तः स एवेह मतो यतोऽसौ ॥१४॥**

असौ साक्षी ॥ १४ ॥

अथोक्तरीत्या शिष्याधिकारवैरिपत्वेन स्वयमेव श्रीमद्वार्तिककारसिद्धान्ते प्रागुक्तजीवेश्वरमतान्तर्भाववन्नुसाक्षिमतान्तर्भावमपि अवबोधयंस्तमभिमुखयति—मतानीत्यादिशिखरिण्या—

**मतान्यन्तर्भावं ययुरुदितजीवेशवदिह**
**यथा साक्षिण्युक्तान्यपि च कथये शृण्वयि तथा ।**
**षडप्यद्वैतात्मन्युपरमणमायान्ति हि यथा**
**रहस्याच्छास्त्राणि स्फुटतरमथाङ्गीकुरु तथा ॥ १५ ॥**

अयि शिष्य । इह प्रकृतवार्तिककारमते । उदितेति । प्रागुक्तवत्तदाचार्येष्टजीवेशवादवदित्यर्थः । षडपि एतत्संख्यान्यपि मतानि साक्षिणि उक्तानि अन्तर्भावं यथा ययुस्तथा अहं त्वां प्रति कथये उपपादयामि । अतस्त्वं तत् शृणु अवधारयेत्यन्वयः । अत्र एव तत्रानुरूपमुपमानमाह । षडपीत्याद्युत्तरार्धेन । रहस्यात्तात्पर्यात् हेतोरित्यर्थः । यथा । षडपि कणादगौतमन्यायद्वयम् । सेश्वरनिरीश्वरभेदेन पातञ्जलकापिलाख्यसांख्यद्वयम् । पूर्वोत्तरभेदात् जैमिनीयबादरायणीयमीमांसाद्वयं चेति षट्संख्याकान्यपि वेदोपाङ्गीभूतानि शास्त्राणि । अद्वैतेति । द्वैतमिथ्यात्वोपलक्षिते ब्रह्मात्मैक्य इत्यर्थः । हिरवधारणे । उपेति । पर्यवसानमेव । स्फुटेति । स्पष्टतममेव आयान्ति । तथैव । अथ उक्तश्रवणोत्तरम् । अङ्गीकुरु स्वानुभूतिं नयेत्यर्थः ॥ १५ ॥

एवं प्रतिज्ञाते श्रीमद्वार्तिककारोक्तेश्वरलक्षणसाक्षिणि एव निरुक्तानां साक्षिविषयकाणां षण्णां मतानामन्तर्भावकथने प्रथमं भारतीतीर्थेष्टस्य साक्षिणस्तत्र तमाह—य इत्यादीन्द्रवंशया—

**यो भारतीतीर्थमुनीश्वरैरिह कूटस्थसन्नाटकदीपयोरपि ।**
**कूटस्थ एवाभिहितोऽस्ति साक्षी सोऽप्यत्र मायोपहितेऽन्तरेति ॥**

अयं भावः । अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नस्वाचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमिति च कथ्यते इति सिद्धान्तबिन्दौ अज्ञानशब्देष्टमायोपाहितात्मन एव वार्तिकमते साक्षित्वमुक्तमिति तु निर्विवादमेव ।

तत्र रक्तः स्फटिक इति प्रतीतिविषयीभूतः संनिहितजपाकुसुमोपहितः स्वयंम-सङ्गत्वेन शुद्धः स्फटिक एव यथा तथैव मायोपहित आत्मापि असङ्ग एव। तत्रान्तर्याम्यादिपदवाच्यत्वं तूक्ताविवेकमूलकमेव स्फटिके रक्तपदवाच्यत्ववत्। एवं च कूटस्थः कुतो नासङ्गत्वसाम्येन मायोपहित आत्मनि अन्तर्भूयादिति ॥१६॥

अथ चित्सुखाचार्येष्टसाक्ष्यपि ब्रह्माभिधोऽत्रान्तर्भवतीत्याह—तत्त्वेत्यार्यया—

तत्त्वप्रदीपिकायां चित्सुखगुरुभिर्निरूपितः साक्षी।
ब्रह्मैव सोऽपि तमसोपहितेऽस्मिन्नेति येन सापेक्षः ॥ १७ ॥

यत्र हेतुः। येनेत्यादिना। साक्ष्यपेक्ष इत्यर्थः। एवं च स्फटिके जपाकु-सुमसांनिध्यवत् प्रकृते तमआदिसाक्ष्यमेवोपाधिरिति ध्येयम् ॥ १७ ॥

एवं कौमुदीकाराभिमतसाक्षिणमपि अत्रैवान्तर्भावयति यः कौमुदीत्यादीन्द्रवज्रया—

यः कौमुदीकृद्भिरुदीरितोऽसावीशस्य रूपान्तरमात्मनिष्ठम्।
अन्तर्भवत्यत्र न किं निरुक्तरीत्येश्वरे साक्षिणि सर्वगेऽपि ॥

ईशस्येश्वरस्य। आत्मनिष्ठं य आत्मनि तिष्ठन्नित्यादिश्रुतेरन्तर्यामित्वेनाऽऽ-त्मशब्दितजीवनिष्ठमित्यर्थः। एतादृशं रूपान्तरं जन्यजगज्जन्माद्यभिन्ननिमित्तो-पादानत्वोपहितरूपात् अन्यत् असंगोदासीनचिन्मात्रलक्षणं रूपं स्वरूपमिति यावत्। एवंचात्र तदन्तर्भावः सुघट एवेत्याह। अन्तरित्याद्युत्तरार्धेन साक्षेपम् ॥ १८ ॥

एवं च शुक्तीदमंशवत्अधिष्ठानाध्यस्तानुस्यूतचिद्रूप एव साक्षीति तत्त्वशु-द्धिकारादिपक्षा अप्यन्तर्भूतत्वेन विवृता एवेत्याह—एतेनेत्याद्यार्यया—

एतेन व्याख्यातो विज्ञेयस्तत्त्वशुद्धिकृत्पक्षः।
अज्ञानोपाधिपक्षस्तथैव लिङ्गोपहितपक्षः ॥ १९ ॥

असङ्गत्वसंभवादिति भावः ॥ १९ ॥

एवं चापेक्षावन्मादृङ्मुमुक्षोरतीव लाभ इत्याह—एवं सतीत्यादिप्रहर्षिण्या—

एवं सत्यपि परमेश्वरः परोक्षो न स्यान्नाप्यहमुपलक्षितोऽल्पभूमा।
तेनानुग्रह उदियादतीव मोहप्रध्वंसात्द्वयविगमेऽखिलैकमत्यात् ॥२०॥

परमेश्वरोऽपीति संबन्धः। एवमहमुपलक्षितोऽहंकारोपलक्षितशोधितजीवोऽ-ल्पभूमा चिदाभासतादात्म्येन परिच्छिन्नोऽपि न स्यादित्यन्वयः। मोहेति। ब्रह्मात्मैक्यविषयकमूलाज्ञानध्वंसाद्धेतोरित्यर्थः, अपरं तु सरलमेव ॥ २० ॥

ननु एवमपि साक्षिताया अपि साक्ष्यप्रतियोगित्वेन सिद्धान्ते बाधोऽभिमत

एव परं तु असौ निःसाक्षिक एव इत्यादि पूर्वमुपन्यस्तापत्तेस्तादवस्थ्यमेवेत्याशङ्क्य स्वयमेव तामनूद्य समुद्धरति—यदित्यादिवसन्ततिलकया—

यच्छङ्कितं बत पुरापि च साक्षितायां
निःसाक्षिको भवति बाध इति त्वया तत् ।
तुच्छं यतश्चरमवृत्तिमते न बाध-
स्तस्याः स तु द्वितयमात्रनिषेध आत्मा ॥ २१ ॥

चरमेति । अन्तिमप्रमाख्याऽहं ब्रह्मास्मीति साक्षात्कृतिं विनेत्यर्थः । द्वितयमात्रेति । स एष नेति नेत्यात्मेत्यादिश्रुतेः स्वाध्यस्तकार्यकारणात्मकसकलदृश्यबाधावधिभूताधिष्ठानत्वोपलक्षित इति यावत् । एतादृशः आत्मा अद्वितीयप्रत्यङ्मात्र एव भवतीत्येतत् ॥ २१ ॥

ननु कथं बाधस्य प्रध्वंसात्मकभावरूपाद्वैतात्मत्वमित्याशङ्क्य मिथ्यार्थप्रतियोगिकप्रध्वंसस्यापि तदधिष्ठानैकरूपत्वादिति कल्पितप्रतियोगिकभावाभावयोरधिष्ठानैकसत्ताकत्वादिति सनिदर्शनमाह—अधिष्ठानेत्यादिभुजङ्गप्रयातेन—

अधिष्ठानबोधात्तदज्ञानतज्जप्रणाशोऽत्र यो यः स तन्मात्ररूपः ।
प्रसिद्धौ हि रज्जूरगे कल्पितैकप्रयुक्तत्वतस्तेन दृश्यस्य दृक्सः ॥२२॥

यो यः । अधिष्ठानेति । तदज्ञानेति । अधिष्ठानविषयकं यदावरणं तथा तज्जं निरुक्तावरणैककार्यमखिलविक्षेपजातं च तयोर्यः प्रकृष्टो नाशः किंचिदपि उपादानानवशेषस्वरूपो बाध एवेत्यर्थः । एतेन सव्याप्तिकं पक्षसाध्ययोर्बोधनं ध्वन्यते । तन्मात्रेति । अधिष्ठानत्वोपलक्षितचिन्मात्रत्वं मात्रजर्थः । अन्यथा भ्रमोपादानाज्ञानविषयत्वेन तस्य कज्जलक्षालनन्यायापत्तेः पुनस्तादवस्थ्यमेव । एतादृशः । स तु कुतः कथमिति हेत्वाद्यपेक्षायां तदाह । रज्जूरग इत्यादिना । अत्र लोके प्रसिद्ध एवास्तीत्यन्वयः । फलितमाह । तेनेत्यादिशेषेण २२॥

अथ वार्तिकेष्टेशे कर्तृत्वसार्वज्ञ्ये अपि पृच्छति । अन्येत्यादिशार्दूलविक्रीडितेन—

अन्याचार्यमतेश्वरोऽन्तरभवत्प्रागुक्तरीत्या यदा-
श्रीमद्वार्तिककृन्मतेश्वर इह स्यात्तर्हि तन्निष्ठयोः ।
कर्तृत्वाखिलवित्त्वयोरपि तथाऽन्तर्भावसिद्धिर्न किं
धर्म्यन्तर्भवमाऽविनाभवनतश्चेत् के मतेऽस्मिन्गुरो ॥ २३ ॥

धर्मीति । धर्मिण ईश्वरस्यान्तर्भावनान्तरीयकसिद्धिकत्वाद्धर्मान्तर्भावस्येत्यर्थः । के कीदृशे ॥ २३ ॥

अथाऽऽचार्यः शिष्यप्रार्थनया परितुष्टः श्रीमद्वार्तिककृदिष्टेशजगत्कर्तृत्व-सार्वज्ञ्ये अपि संक्षेपेण तं प्रतिबोधयति—यदित्यादितद्वृत्तेनैव—

यत्सर्गाद्यनुकूलसृज्यविषयं ज्ञानं किलाऽऽविद्यकं
यावद्धीगतवासनाप्रतिफलत्साक्षित्वमेवात्र ते ।
एवं चेह विशिष्टमप्युपहितं ब्रह्मेश्वराख्यं जग-
द्धेतुत्वेन तथोपलक्षितमपि स्यात्तत्पदे वाच्यकम् ॥ २४ ॥

सर्गादिर्जन्यजगदुत्पादादेरनुकूलमैन्द्रजालिकसंकल्पमन्त्रोच्चारणवद्विरचनीय-विश्वस्वरूपसाद्यस्कसिद्धिदक्षमेतादृशं सृज्यविषयं स्रष्टव्यपदार्थविषयकं ज्ञानमेवे-त्यर्थः । आविद्यकम् । अविद्यैकहेतुकम् । अत एव । यावदिति । सकलजी-वबुद्धिगतसंस्कारप्रतिबिम्बायमानरूपं साक्षित्वमेव ते वार्तिकसंमतेशनिष्ठसर्व-कर्तृत्वसर्वज्ञत्वे भवत इति योजना । ततः किं तदाह । एवं चेहेत्याद्युत्तरार्धेन । इह वार्तिकसिद्धान्ते । जगदिति । जन्माद्यस्येत्यादिन्यायेनोपपादितजन्यजगज्ज-न्माभिन्ननिमित्तोपादानकारणत्वेनेति यावत् । विशिष्टमप्युपहितमपीश्वराख्यं ब्रह्मैव तथा उपलक्षितमपि तत्पदे तत्त्वमस्यादिमहावाक्यीये । वाच्यकं वाच्या-र्थीभूतमेव स्यादिति संबन्धः ॥ २४ ॥

ननु अत्र वार्तिकेष्टसाक्षिलक्षणेश्वरे जगद्धेतुत्वेन विशिष्टे तथोपहिते तथो-पलक्षिते च कस्य कस्य प्राचीनाचार्यस्य संमतत्वमस्तीति भवताऽत्र पूर्वश्लोकेऽ-न्तर्भावः प्रतिपादित इत्याशङ्क्यं क्रमात् समादधानः प्रथमं जगद्धेतुत्वेन विशि-ष्टमेव ब्रह्म तत्पदवाच्येश इत्यभेदाभिव्यक्त्यर्थं बुद्धिवृत्तिविनिर्गमवादिनां संक्षे-पशारीरकाचार्याणां संमतमस्तीति प्रतिपादयति—संक्षेपेत्याद्युपजात्या—

संक्षेपशारीरकृदादिभिस्तद्विशिष्टमेवे[?]ितमास्ति तादृशम् ।
अभेदसिद्धौ किल वृत्तिवादिभिर्मते तदप्यत्र निमग्नमस्ति ॥२५॥

आदिपदेनाभेदाभिव्यक्त्यर्थवृत्तिवादिनः सर्वेऽपि तदनुयायिनः पूर्वाचार्याः संग्राह्याः । तदद्वैतं ब्रह्म । विशिष्टमेव जगत्कारणत्वेनेत्यार्थिकम् । तादृशमीश्वर-त्वतत्पदवाच्यत्वाभ्यां विशिष्टमित्यर्थः । इषितं स्वीकृतमस्तीति योजना । किमर्थं तैस्तथाङ्गीक्रियत इत्यतस्तान्विशिनष्टि । अभेदेत्यादिना । किमतः पर्यवसि-तमिति चेत् तत्साक्षेपं संक्षिपति स एव गूढाभिसंधिः सन् । मत इत्यादिशेषेण । ननु विश्वोद्भवस्थितिलयप्रकृतित्वमस्य चिद्वस्तुनो यदसहायपरिग्रहस्य । तद्व-र्णनीयमुपलक्षणमेव कस्माद्ब्रह्मेति लक्ष्यपदशक्त्यविरोधहेतोः । इति संक्षेपशा-

रीरक एव जगज्जन्मादिनिमित्ताभिन्नोपादानकारणत्वं ब्रह्मण उपलक्षणमेवोक्तम् । अत्र तु त्वया तदादिमते तद्विशिष्टमेव प्रतिजानता जगद्धेतुत्वे विशेषणत्वमेवाभिप्रेयत इति कथं न विरोध इति चेन्न । विभिन्नविषयत्वात् । तथाहि । तत्र तावत्जगज्जन्माद्यभिन्ननिमित्तोपादानकारणत्वं जिज्ञास्यस्य ब्रह्मणः एव लक्षणमुक्तमिति तु निर्विवादमेव । तद्यदि शबलस्येश्वरस्याच्यते चेत् । ब्रह्मपदशब्दितनिरतिशयवृद्धिध्वनितपरिच्छेदत्रयशून्याद्वैतात्मविषयकशब्दस्वारस्यभङ्गप्रसङ्ग इति तस्यैव तद्वाच्यम् । तथ च तस्य निर्धर्मकत्वान्निरुक्तलक्षणस्य तदुक्तमुपलक्षणत्वं शाखाचन्द्रन्यायेनोचितमेव । अत एवोक्तं तत्रैवाग्रे । इत्थं जगत्कारणवादिवाक्यं समन्वितं ब्रह्मणि तत्पदार्थे । तल्लक्षणं तस्य तटस्थभूतमानन्त्यसिद्धयै कथयत्यथोक्तमिति । अत्राऽऽनन्त्येति प्रयोजनकथनान्यथानुपपत्त्यैव पूर्वोदाहृतग्रन्थैकवाक्यतया लक्ष्ये तत्पदार्थ इति बोध्यम् । मया तु अत्र पूर्वश्लोके एवं चेत्याद्युत्तरार्धेन जगद्धेतुत्वेन विशिष्टं तथोपहितमपि तथोपलक्षितमपि तत्पदे वाच्यकं तत्पदनिष्ठवाच्यार्थभूतमेवेश्वराख्यं ब्रह्मेह वार्तिकाचार्याभिमतेश्वराभिधसाक्षिणि स्यादन्तर्भूतं भूयादिति तत्पदवाच्यार्थपतत्रयमुपन्यस्य क्रमात्तद्विवरणार्थं त्रिश्लोकीयं संक्षेपेत्यादिना प्रणीता । तत्र संक्षेपशारीरमतेऽविद्याप्रतिबिम्बस्येश्वरत्वाज्जगद्धेतुत्वेन विशिष्टत्वं तत्पदवाच्ये तस्मिन्नुचितमेवेति दिक् । एवमग्रेऽप्यूह्यम् ॥ २५ ॥

ननु भवत्वेवं जगत्कारणत्वविशिष्टव्यवस्था तथापि तदुपहिते कथं सेत्यत्राऽऽह–विवरणादीत्यादिद्रुतविलम्बितेन—

विवरणादिकृतां मत आदरादुपहितं तदभीप्सितमद्वयम् ।
चिदुपरागकृते तु समिच्छतां स्वमतिवृत्तिमिहान्तरुपैति तत ॥

आदिनाऽन्येपि तदनुयायिग्रन्थकाराः । उपहितं जगद्धेतुत्वेनेत्यार्थिकम् । तदीश्वरचैतन्यम् । एवं च तत्पदीयवाच्यत्वं तत्र सूच्यते । लक्ष्यं तदीयं द्योतयन्पुनर्विशिनष्टि । अद्वयमिति । कुतस्तेषामेवं तदीप्सितमिति शङ्कां शमयंस्तान्विशिनष्टि । चिदित्यादितृतीयपादेन किंचिदधिकेन । प्रकृतमाह । इहेत्यादिशेषेण ॥ २६ ॥

अथाप्युपलक्षितपक्षः केषां विवक्षित इत्याकाङ्क्षायां तान्संक्षिपति—अपीत्याद्यार्यया—

अप्येषामुपलक्षितमावृत्यभिभूतये स्ववृत्तिजुषाम् ।
कारणमद्वयमन्तर्भूतं तदपीह विश्वरूपमते ॥ २७ ॥

एषां प्रागुक्तदृष्टिसृष्टिवादिनाम् । अद्वयं ब्रह्मापि कारणं जगत्कारणत्वेनोपलक्षितं भवतीत्यर्थः । तत्रापि प्राग्वदेव हेतुः । आवृतीइत्यादिद्वितीयपादेन । आवरणभङ्गार्थमेव । स्वेति । नैजबुद्धिवृत्तिनिर्गतेवादिनामिति यावत् । फलितमाह । अन्तरित्यादिशेषेण । विभक्तेति । वार्तिककारसिद्धान्ते ॥ २७ ॥

अथ संक्षिप्य निरुक्तमतत्रयस्वारस्यं वाऽबुध्यनमहार्थं पिण्डीकृत्य कथयति—सर्वज्ञात्मेत्यादिस्रग्धरया—

सर्वज्ञात्मप्रकाशात्मभुखमतयुगे जीवसंज्ञे चिती स्त-
श्चेतोऽविद्योपधित्वाद्विषयविकसनं ब्रह्मणाऽत्राऽऽद्यपक्षे ।
अन्त्ये जीवे न तौ द्वावपिहितापिहितौ सृष्टिदृष्ट्यन्यथाऽर्हौ
भेदाभावोपरागावृतिहृतिमतिवृत्तिप्रियास्तेऽत्र सर्वे ॥२८॥

संक्षेपशारीरकाचार्यविवरणाचार्यादिसिद्धान्तयुगल इत्यर्थः । क्रमात् । चेतोऽविद्येति । अन्तःकरणमूलाज्ञानोपाधित्वादित्यर्थः । जीवसंज्ञे चिती । स्तो भवतः । अन्तःकरणप्रतिबिम्बितं चैतन्यं जीवः संक्षेपशारीरक आचार्यमते भवति । अविद्याप्रतिबिम्बितं चैतन्यं जीव इति विवरणाचार्यमते भवतीति यावत् । अत्रोक्तमतद्वितयमध्ये । आद्येति । संक्षेपशारीरपक्षे । ब्रह्मणा जगदधिष्ठानीभूतचैतन्येन । विषयेति । घटादिप्रमेयप्रकाशनम् । चक्षुरादिनिर्गतघटाद्याकारान्तःकरणवृत्त्यवच्छिन्नजीवचैतन्येन सह घटाद्यधिष्ठानीभूतब्रह्मचैतन्यस्याभेदाद्भवतीति भावः । अन्त्ये विवरणमते । जीवेन । तस्यैवाविद्याप्रतिबिम्बितत्वेन यावदविद्याकार्यभूतजगदधिष्ठानत्वादविद्याकार्यभूतमनोवच्छिन्नचित उपरागाभिधसंबन्धार्थं स्वीकृतबुद्धिवृत्तिद्वारैव संपद्यत इत्यर्थः । नन्वेवमप्यावरणभङ्गार्थवृत्तिपक्षोऽवशिष्ट इत्यत आह । तौ द्वावित्यादिना । तौ जीवावपि । अपिहितेति । अविद्यानावृतावृतत्वभेदात् द्वौ द्विप्रकारौ भवतः । अत एव । सृष्टीत्यादि । सृष्ट्यनुसारिणी दृष्टिर्बुद्धिवृत्तिस्ततोऽन्यथा दृष्टिर्बुद्धिवृत्तिरेव स्वप्नादिवद्या सृष्टिः प्रपञ्चरचना तयोरर्हौ योग्यावित्यर्थः । तत्राऽऽद्यपक्षे निरुक्ताचार्यद्वयाभिमते जीवोऽनावृत एवेति तत्राभेदाभिव्यक्त्यादिवृत्तिप्रयोजनमुक्तमेव । अन्त्ये तु दृष्टिसृष्टिवादिमतेऽविद्यावृतजीवस्यैव मनोद्वारा तत्कल्पितजगदधिष्ठानत्वात्स तावदावृत एवेति तत्रैव स्वाभिकप्रमाणप्रमेयादिचतुष्पुटीव्यवहारवत्तदावरणभङ्गार्थमेव बुद्धिवृत्तिनिर्गमाङ्गीकार इति निष्कर्षः । निगमयति । भेदेत्यादिचरमचरणेन । भेदाभावोऽभेदाभिव्यक्तिः । उपरागश्चिदुपरागः । आवृतिहृतिः, आवरणभङ्गः । एतदर्थं या मतिवृत्तिर्बुद्धिवृत्तिः सा प्रिया कणादाभिमता

येषां ते तथेत्यर्थः। क्रमेण ते सन्तीति संबन्धः। तदक्रमद्वैतसिद्धौ प्रतिकर्मव्यवस्थां प्रकृत्य। तत्र जीवचैतन्यमविद्योपाधिकं सत्सर्वगतमन्तःकरणोपाधिकं सत्परिच्छिन्नमिति मतद्वयम्। तत्राऽऽद्ये विषयप्रकाशकं जीवचैतन्यं द्वितीये ब्रह्मचैतन्यम्। आद्यपक्षेऽपि जीवचैतन्यमविद्याऽनावृतमावृतं च। तत्राऽऽद्ये वृत्तिर्जीवचैतन्यस्य विषयोपरागार्था। द्वितीये त्वावरणाभिभवार्था। परिच्छिन्नत्वपक्षे तु जीवचैतन्यस्य विषयप्रकाशकतदधिष्ठानचैतन्याभेदाभिव्यक्त्यर्था। अनावृतत्वपक्षेऽप्यनावृतं सर्वगतमपि जीवचैतन्यं तत्तदाकारवृत्त्यैवोपरज्यते न तु विषयैरसंगत्वात्। यथा गोत्वं सर्वगतमपि सास्नादिमव्द्यक्त्याऽभिव्यज्यते न तु केसरादिमव्द्यक्त्या। यथा वा प्रदीपप्रभा आकाशगन्धरसादिव्यापिन्यपि तानप्रकाशयन्ती रूपसंसर्गितया रूपमेव प्रकाशयति तद्वत्। केवलाग्नेरदाहकस्याप्ययःपिण्डादिसमारूढाग्निदाहकत्ववत्केवलचैतन्याप्रकाश्यस्यापि घटादेस्तत्तदाकारवृत्त्युपारूढचैतन्यप्रकाश्यत्वं युक्तमिति। विस्तरस्तु तत्रैवानुसंधेय इति। सिद्धान्तबिन्दावप्युक्तमस्मिन्नेव प्रकरणे। अत्र च यस्मिन्पक्षेऽन्तःकरणावच्छिन्नो जीवो यस्मिंश्च पक्षे सर्वगतोऽसंगोऽविद्याप्रतिबिम्बो जीवस्तत्रोभयत्रापि प्रमातृचैतन्योपरागार्था विषयगतचैतन्यावरणभङ्गार्था च अन्तःकरणवृत्तिः। यस्मिंश्च पक्षेऽविद्यावच्छिन्नः सर्वगतो जीव आवृतः, तस्मिन्पक्षे जीवस्यैव जगदुपादानत्वेन सर्वसंबद्धत्वादावरणभङ्गार्था वृत्तिरिति विवेक इति। अधिकं तु अस्मत्कृतटीकायां न्यायरत्नावल्यामवबोद्धव्यमित्युपरम्यते ॥ २८ ॥

उपसंहरति—इतीत्याद्यार्यया—

> इति सप्तभिर्मतैस्ते साक्ष्यात्माऽप्यद्वयोऽखिलैकरसात्।
> कथितो गोदावर्याः सप्तस्रोतोभिरम्बुपूर इव ॥ २९ ॥

॥ इति साक्षिस्वरूपनिरूपणाद्युपपत्तिः ॥

---

अये शिष्य। ते तव। इति निरुक्तप्रकारेण। मया॥ अखिलेति। भावप्रधानोऽयं निर्देशः सर्वपूर्वाचार्यैकरस्यादित्यर्थः। पक्षे। अखिलेषु कश्यपादिप्रार्थनया तत्तन्नाम्ना विख्यातेषु सप्तप्रवाहेषु एकोऽद्वितीय एतादृशो यो रस उदकविशेषस्तस्मात्सप्तर्षिप्रार्थनासंजातसप्तप्रवाहेषु अपि रूपरसादिगुणैरुदकैकरूप्यादिति यावत्। सप्तभिः सप्तसंख्याकैः। मतैरवान्तरप्रक्रियासिद्धान्तैः। साक्षी चिन्मात्रत्वेन साक्षात्सकलदृश्यप्रकाशकः। एतादृशोऽपि। आत्मा प्रत्यक्। अद्वयः। अद्वैतचिन्मात्रः। कथितः समुपदिष्टोऽस्तीति संबन्धः। तत्रा-

नुरूपमुपमानमाह । गोदेत्यादिशेषेण । एतेनात्र शुचित्वतरसत्वनिर्मलत्वसर्वेष्टप्रदत्वसरलत्वसंजीवनकारणत्वादि द्योत्यते ॥ २१ ॥

॥ इति श्री० अद्वैतात्मप्रबोधीयप्रथमपरिच्छेदे साक्षिस्वरूपनिरूपणाद्युपपत्तिः ॥ १२ ॥

अथासौ प्रकृत एव शिष्यः श्रीगुरुणा एवं साक्षिनिरूपणं कृतमाकर्ण्य श्रीमद्वार्तिककारसिद्धान्तैकसिद्धं तत्स्वरूपमनूद्य तत्स्वारस्याविष्करणार्थं तत्र संशयानस्तमेव शरणीकुर्वाणः परमकरुणावशादेवमेवमोहसंदिहानं कंचिज्जिज्ञासुं प्रति समादधता केषांचित्प्राचीनाचार्याणां सिद्धान्तानुवादेन प्रबोध्यते इत्याह–अज्ञानेत्यादिशार्दूलविक्रीडितेन–

अज्ञानोपहितात्मनः सह निजाज्ञानेन तादात्म्यभा-
गाभासाविवृतार्हि साक्षिण इहाविद्याऽऽवृतत्वात्कथम् ।
अज्ञानाद्यवभासकत्वमिति भोः श्रीमद्गुरो छिन्धि नः
शङ्कामित्युपसन्नमाह स तु तं केऽप्याहुरत्रेति च ॥ १ ॥

इतीति । निरुक्ताभ्यर्थनापूर्वकम् । उपेति । यथाविधि शरणागतमित्यर्थः । शिष्टं तु स्पष्टमेव ॥ १ ॥

किमाहुरित्यपेक्षायां तत्संक्षिपति–अज्ञानादिकमित्यार्यया–

अज्ञानादिकमखिलं प्रागुदितं साक्षिभास्यमेवेह ।
स्वावृतभास्यं नियतं राहुवदपि मेघपटलमिव ॥ २ ॥

स्वावृतेति । स्वेन अज्ञानादिना आवृत आच्छादितो यः साक्षी तेन भास्यते प्रकाश्यत इति तथा । नियतं निर्णीतमेवास्तीत्यर्थः । तत्र दृष्टान्तं स्पष्टयति । राहुवदिति । राहोस्तमोरूपत्वात्कथं स्वविरोधिचन्द्राद्याच्छादकत्वमित्यपरितोषे निदर्शनान्तरमाह । अपीत्यादिशेषेण । अपिः समुच्चये । निरुक्तापरितोषमूलान्तरं तु । छादयत्यर्कमिन्दुर्विधुं भूमिभेति ज्यौतिषमपि ॥ २ ॥

तत्रापि कश्चित् प्रेक्षावान्मुमुक्षुः शङ्कते–नन्वित्यादिस्रग्धरया–

नन्वज्ञानादिदृश्यं किमिति निगदितं साक्षिभास्यत्वमस्मि-
न्किं भूयात्तन्न चेत्स्यान्न च तदपि भवेदावृतं चेति वाच्यम् ।
तस्मिंस्तत्कार्यभूतभ्रमनिचयलसत्संशयादेरदृष्टे-
रेवं चेहैतदर्थादिति न परमतं राहुदृष्टान्ततो यत् ॥ ३ ॥

तत्साक्षिभास्यत्वम् । यद्यज्ञानाहंकारादि साक्षिभास्यं न स्यात् चेत्तर्हि तदपि आवृतं स्यात् इति न च वाच्यम् । कुत इति चेत्तत्र हेतुमाह । तस्मि-

न्नित्यादितृतीयपादेन । फलितमाह । एवं चेत्यादिना । इह संसारे । एतदवि-द्याहंकारादेरनावृतत्वम् । अर्थात् उक्ततद्विषयकावरणकार्यीभूतभ्रमसंशयाद्य-दर्शनान्यथानुपपत्तेरित्यर्थः । इति हेतोः । राहुदृष्टान्ततः । यत् । स्वभावेनाज्ञा-नाहंकारादेः स्वावृतभास्यत्वम् । परेति । स्वभाववादिसंमतम् । तन्नेत्यन्वयः ॥३॥

निगमयति—राहोरित्यार्ययार्यथा—

**राहोर्यथा स्वभावः स्वावृतभास्यत्वमेवमत्रापि ।**
**इति पृच्छन्तं केचित्प्रोचुस्तस्याऽऽवृतिं तादितरत्र ॥ ४ ॥**

अत्रापि अज्ञानाहंकारादावपि साक्षिभास्ये आवरणाभावः स्वभाव एव । ततः किं तदाह । इतीति । इति सार्धपद्येन । पृच्छन्तं प्रश्नं कुर्वन्तं मुमुक्षुं प-तीत्यर्थः । केचित्, पूर्वाचार्याः । तस्य साक्षिणः । आवृतिमावरणम् । तदि-तरत्र प्रागुक्तसाक्षिभास्यभिन्नवस्तुन्येव । प्रोचुः कथयामासुरिति सबन्धः । एवं च न काऽप्यनुपपत्तिरित्याकूतम् ॥ ४ ॥

तत्रापि आक्षिप्य समाधत्ते—नन्वित्यार्यजात्या—

**नन्वेवमन्तःकरणेऽस्त्यनावृतः साक्षी तदाऽस्मिन्सुखताऽपि भायात् ।**
**मैवं यतो वृत्तिविरामकाले भात्येव तृप्तिस्तु मितत्वतो न ॥ ५ ॥**

तदा स्वैकभास्यावच्छेदेनोक्तानावृतपक्ष इत्यर्थः । अस्मिन्प्रकृते साक्षिणि । सुखताऽपि सुखस्याऽऽत्मरूपत्वेन तत्र प्रतिबन्धाभावात्तत्स्वरूपताऽपि भायात्प-रिस्फुरेदित्यापत्तिरिति योजना । इष्टापत्त्या परिहरति । मैवमिति । तत्र हेतुः । यत इत्यादिना । नन्वेवं तर्हि सर्वेषां जीवानां निरङ्कुशतृप्तिः कुतो न संपद्यत इत्यत आह । तृप्तिस्त्विति । मितत्वतः, अब्रह्मत्वभ्रमलक्षणदेहादिपरिच्छिन्नव-स्तुतादात्म्याध्यासादेवेति यावत् ॥ ५ ॥

तत्राप्याशङ्कते—साक्ष्यानन्द इत्यादिमन्दाक्रान्ताभ्याम्—

**साक्ष्यानन्दे ननु भवति को वाऽपकर्षोऽद्वितीयात्**
**ब्रह्मानन्दात्किमु बत गवाक्षोष्णवत्फल्गुतेव ।**
**किंवा विक्षेपवशत इहास्पष्टतादीपकान्ते-**
**र्वातेनवोभयमपि न यन्निर्गुणत्वात्तु तस्य ॥ ६ ॥**

ननु साक्ष्यानन्दे विषये को वाऽपकर्षो भवेत् यद्वशात्तृप्तिर्नेति प्रागुक्तम् । किम् । अद्वितीयाद्ब्रह्मानन्दात्तदपेक्षयेत्यर्थः । बतेति खेदे । गवाक्षेति । गवा-क्षागतसौरातपवदित्यर्थः । फल्गुतेव स्वल्पपरिमाणतेव । किंवा । विक्षेपेति ।

इहान्तःकरणे । वातेन । दीपेति । अस्पष्टता । अस्फुटताऽस्त्वि । इति विकल्पद्वयं विधाय निराकरोति । उभयमपीत्यादिना ॥ ६ ॥

साकल्येनानवरतपरिस्फूर्त्यभावोऽपि नो य-
न्नित्यं भानान्निरतिशयसत्सौख्यतोऽसंभवाच्च ।
कैवल्यैकान्वयिन इह नो वै विशेषस्य वक्तुं
शक्यत्वं यत्सततसमतादेर्विभङ्गप्रसङ्गः ॥ ७ ॥

साकल्येनेति । संपूर्णत्वेन । अनवरतेति । अद्वैतानन्दस्येत्यार्थिकम् । अखण्डपरिस्फुरणाभावोऽपि साक्ष्यानन्देऽपकर्ष इत्यपि नो नैव युज्यत इत्यध्याहृत्य योज्यम् । कुत इति चेत्तत्र हेतुः । यदित्यादिना । यद्यस्माद्धेतोः, निरतिशयेति । कालत्रयातिशयशून्यमत एव सद्बाधितमेतादृशं यत्सौख्यमात्मसुखं तस्मादित्यर्थः । इदमुपलक्षणं चिन्मात्रात्मस्फुरणादिति यावत् । इहाद्वैतात्मनि । कैवल्येति । मोक्षैकानुस्यूतस्येत्यर्थः । एतादृशस्य । विशेषस्य असंभवाच्च । नित्यम् । कालत्रयेऽपि । विशेषस्य वक्तुं शक्यत्वं नो वै नैवास्तीत्यन्वयः । तत्र हेतुः । यदित्यादिशेषेण । यद्यस्माद्धेतोः । सततेति । आदिना कूटस्थत्वनिर्विकारत्वादि ॥ ७ ॥

अथ समाधत्ते--इत्थमित्यादिना तद्वृत्तेनैव कंचिद्बुभुत्सुं प्रति केषांचिदाचार्याणां वचनानुवादेन--

इत्थं कंचिद्विकलमनसं प्राहुरद्वैतविद्या-
चार्याश्चन्द्रप्रतिकृतिरिहादर्शमालिन्यराशेः ।
अध्यासेन स्फुरति मलिना तद्वदेवात्र साक्षि-
ण्याकैवल्यं सुकृतवशधीतारतम्येऽल्पसौख्यम् ॥ ८ ॥

प्रतिकृतिः प्रतिबिम्बम् ॥ ८ ॥

एवमप्यत्र कस्यचिन्मुमुक्षोः शङ्कां व्युद्भाव्य तत्समाधानमपि केषांचिदाचार्याणां युक्त्याऽभिधत्ते—ननु इत्यादिहरिण्या—

ननु सुकृतजा चेतोवृत्तिः सुखाकृतिरञ्जसा
भवतु विषमा साक्षी कस्मान्न भाति सुखाम्बुधिः ।
इति विमनसं केचित्प्रोचुः सुखांश इहाऽऽवृतः
सितकरगतौष्ण्याभो नान्यश्चिदादिकबाधिना ॥ ९ ॥

अयं स्वरूपभासा साक्षात्सुखाकृतिः स्वात्मसुखाकारेण परिणममानेति वाच्यम् । औपाधिके सुखांशमात्रावरणे दृष्टान्तं स्पष्टयति । सितेत्यादिना । तदुक्तं

स्वात्मानुभवादर्शे । यथा हिमांशुः खलु तैजसोऽपि प्रकाशकत्वान्नहि तत्प्रकाशम् । उपाधिराच्छादयतीति दृष्टं तदुष्णतांशः पिहितोऽनुभूयते । सत्तास्फुरता परमात्मनो या नाच्छाद्यते सा ह्युपजीव्यभावात् । आनन्दमाच्छादयतीव माया तन्नाशने तत्त्वमसीति वाक्यमिति ॥ ९ ॥

ननु एवमपि सुषुप्तावरिजा वृत्तिरेवाऽस्तु सुखं तदन्यकूटस्थात्मसुखं तदावरणादिकं च गौरवदूषितमित्यत आह—वृत्त्येत्यादिशार्दूलविक्रीडितेन—

वृत्त्या निर्मलयाऽन्तरेकमुखयाऽऽनन्दानुभूतिः स्फुटं
दृष्टेष्टाप्तिसमयेऽप्यनन्तरमथोदासीन्यदशायां च ।
प्रत्यूषादिषु भास्करस्य किरणाविर्भावनन्दैः प्रभा-
न्यूनाऽ कथमवेक्ष्यतेऽत्र तिमिरच्छित्तारतम्यैर्यथा ॥ १० ॥

दृष्टेति च्छेदः । तिमिरेति । अन्धकारध्वंसतारतम्यैरित्यर्थः ॥ १० ॥

एवमपि गुढाभिसन्धिः सुषुप्त्यवस्थानुभूताहंकारविषयकस्मृतिः साक्षिणा कदम्युपगमेन । स्मृतेर्हि नष्टानुभूतिसंस्कारजन्यत्वस्य सर्वसंमतत्वादहंकारविषयकवृत्त्यात्मकानुभवाभावेन तन्नाशासंभवात् साक्षिरूपस्य तदनुभवस्य तु नित्यसत्त्वाविकारकूटस्थरूपत्वेन विनाशप्रयुक्तसंस्कारासंभवात्तेन तज्जन्यस्मृतेर्दूरापास्तत्वाच्चेत्याह—नन्वित्यादिमन्दाक्रान्तया—

नन्वस्वाप्सं सुखमहमथ स्वप्नकालेऽहमासं
कान्ताऽऽश्लेषादतुलसुखितो जागरेऽप्यर्धरात्रे ।
एवं याऽत्र स्मृतिरुदयते साक्षिभास्येऽहमादौ
सा युक्ता स्यात्कथमयि गुरो यन्नहेतुस्तदीयः ॥ ११ ॥

अहमादावहंकारादौ विषये । आदिनाऽन्यदपि यत्साक्षिभास्यमवस्थाऽज्ञानादि स्मृतिविषयीभूतं तद्ग्राह्यम् ॥ ११ ॥

तदेवोपपादयति—सिद्धान्त इत्यादिस्रग्धरया नित्यत्वादित्यन्तेन—

सिद्धान्ते नष्टबोधानुपमतरमहासूक्ष्मरूपेतरस्य
संस्कारस्याभिरुक्तेः स तु न कथमपि स्वप्ने साक्षिणि स्यात् ।
नित्यत्वादुच्यतेऽत्राकलय स तु यथा संमितो ध्यादिवृत्त्या
यद्यत्संद्योतयेत्तद्विषयकमितता संस्कृतिं सैव धत्ते ॥ १२ ॥

अत्र अव्याकृते जगत्सत्त्वे छान्दोग्योक्तवटधानोपमाव्यावृत्त्यर्थमनुपमेत्यादि । समाधत्ते । उच्यत इत्यादिशेषेण ॥ स साक्षी तु । यथा । ध्यादीति ।

आदिना तूलाज्ञानवृत्तिः । संमितोऽवच्छिन्नः सन्नित्यर्थः । यत् यत् वस्तु । संद्योतयेत्साक्षात्परम्परया वा प्रकाशयेत् । तद्विषयकेति । तद्विषयकज्ञातता-संस्कारमिति यावत् । सैव वृत्तिरेव यत्र इति संबन्धः ॥ १२ ॥

एतत्समाधानमपि कश्चिन्मुमुक्षुः प्रतिक्षिपति—यदाकारेत्यादिशिखरिण्या—

**यदाकारा वृत्तिर्भवति नियतं तद्विषयको**
**भवेत्संस्कारोऽत्रेति बत सरणिर्नैव सुघटा ।**
**न वृत्त्याकाराऽन्याप्यभिमतिमितावृत्तिरनव-**
**स्थितेस्तस्मान्नो तस्याः स किल न ततस्तत्स्मृतिरपि ॥१३॥**

तदुपपादयति । नेत्याद्युत्तरार्धेन । अभिमतिं संमतिम् । वृत्त्याकारा एतादृशी अन्याऽपि वृत्तिर्न इता नैव प्राप्तेत्यन्वयः । तत्रापि हेतुः । अनवस्थितेरनवस्थेरित्यर्थः । फलितमाह । तदित्यादिशेषेण । तस्मात् कारणात् तस्याः वृत्तेः । सकाशात्स संस्कारः । नो किल नैव संभवतीति यावत् । अथ किं तदाह । न तत इत्यादि । ततः संस्काराभावात् । तत्स्मृतिरपि नैवेति प्राग्वत् ॥ १३ ॥

तत्रापि कश्चिन्मुमुक्षुः शङ्कते । नन्वेवमपीत्यादीन्द्रवज्रया—

**नन्वेवमप्यस्ति न सुव्यवस्था यज्ज्ञानता वृत्तिगता न मुख्या ।**
**तत्संस्कृतिः स्याद्ध्रुवं खल्वमुख्या ततः स्मृतेः स्यादपि तादृगेव ॥१४॥**

तत्र हेतुः । यदित्यादित्रिपाद्या । सत्यं ज्ञानमित्यादिश्रुतेः कूटस्थब्रह्मण्येव नित्यस्वप्रकाशत्वेन मुख्यज्ञानत्वं तत्प्रतिबिम्बपरम्परया बुद्धिवृत्तौ ज्ञानत्वं तु गौणमेव । तेन तज्ज्ञानजन्यः संस्कारोऽपि गौण एव । ततस्तज्जा स्मृतिरपि तादृग्गौण्येवेत्यन्वयः । एवं पूर्वार्धेऽहंकारस्य चित्तवृत्तिविशेषात्मकत्वेन तदाकार-वृत्त्यन्तरेऽनवस्थापत्तेस्तत्संस्कारादिराहित्यात् स्मृत्यभाव इत्युक्तं तदनुभवविरोधान्नैव सुव्यवस्थितं किंतु ज्ञानस्यैव मुख्यत्वेन तत्संस्कारादेरपि तथात्वमेव युक्तं भवतीति भावः ॥ १४ ॥

एवं पूर्वपक्षे प्राप्ते प्रागुक्तमेव समाधत्ते—इतीत्यादिशालिन्या—

**इत्युन्मुग्धं भारतीतीर्थमुख्याः प्राहुर्वृत्त्या गोचराकारयैव ।**
**साकं तत्स्थः साक्ष्यपि ध्वंसमेतीत्येवं संस्कारात्स्मृतिः संगतेति ॥१५॥**

गोचरो विषयः । तत्स्थस्तत्तद्वृत्त्यवच्छिन्न इत्यर्थः । ध्वंसमित्यादि । शिखी ध्वस्त इत्यादिवच्चिन्मात्रे साक्षित्वं हि साक्ष्यनिरूपितमेव । तत् यदि प्रकृते वृत्त्यात्मकं नष्टं चेत्सोऽपि साक्षी नष्ट इत्युपचर्यते । तथा चान्तःकरणादौ

वृत्त्युपादाने सूक्ष्मतयाऽवस्थानलक्षणसंस्कारसंभवात्स्मृतिसंभवः समुचित एवेति भावः ॥ १५ ॥

अत्रापि संदिहानः कश्चिज्जिज्ञासुः पूर्वं सिद्धान्तबिन्द्वादिसंमतं प्रमात्रादिस्वरूपमनुवदति—चक्षुरित्यादिस्रग्धराभ्याम्—

चक्षुर्द्वारा घटादीन्कलयति मनसो वृत्तिरत्र स्वदेह-
व्याप्ते भागे तु या चित्प्रतिफलति भवेन्मा प्रमाता च कर्ता।
चक्षुस्तद्गोचरान्तर्गतसरलतरैतद्विभागे तु मा स्या-
च्छास्त्रे मानं क्रिया च प्रमितिरपि तथा गोचराकारभागे ॥ १६ ॥

कलयति जानाति। चक्षुस्तद्गोचरेत्यादि॥ चक्षुस्तद्विषयमध्यगतातिसरलदण्डायमानचक्षुर्वृत्तिविशिष्टबुद्धिवृत्तिविभाग इत्यर्थः। सा प्रतीतिर्भवतीति। तथैवम्। गोचरेति। विषयाकारतदंश इति यावत्। प्रमितिरपि ॥ १६ ॥

तस्येति—

तस्य ज्ञानीयकर्मत्वघटनकृदभिव्यक्तियोग्यत्वनाम्नि
स्यादस्यास्तु प्रमेयं किल विषयगतं ब्रह्मचैतन्यमेव।
अज्ञातं चेत्तदेव प्रमितिफलमिति ज्ञातमेवोच्यतेऽतः
पश्चाप्येते न साक्षी विकृतिभजनतस्तस्य कौटस्थ्यतश्च ॥ १७॥

ज्ञानीयेत्यादि। वृत्तिज्ञानप्रयुक्तकर्मत्वसंपादकाभिव्यक्त्यर्हत्वाख्ये। स्यादिति पूर्वेणान्वयः। फलमाह। अत इत्यादिशेषेण। एते निरुक्तकर्त्रादयः पञ्चापि साक्षी न। तत्र हेतुः। विकृतीत्यादि ॥ १७ ॥

भवत्वेवं तेन प्रकृते किमित्यत आह—एवं चेत्यादिवसन्ततिलकया—

एवं च संस्कृतिभवस्मृतिसिद्धयेऽपि साक्षी कथं ननु मतिप्रतिबिम्ब एष्यः।
इत्याकुलं प्रतिसमादधिरेऽपरेऽसावज्ञानवृत्तिजनितः स्मरणस्य हेतुः १८

अयं भावः। पूर्वोक्ताहंकारादिवृत्तिसाक्षी तन्नाशेन नश्यतीत्यादिप्रक्रिया तावदेवं सत्यनुचितैव। वृत्तिनाशे नाशस्य स्वकीयतत्प्रतिबिम्बत्वमन्तराऽनुपपन्नत्वात्तदाङ्गीकृतावुक्तपञ्चकान्यतमत्वापत्तेश्चेति। समाधत्ते। इतीत्याद्युत्तरार्धेन। असौ संस्कारः। अज्ञानेति। अज्ञानवृत्तिनाशजन्य इत्यर्थः ॥ १८ ॥

तदेवोपपादयति—व्युत्थानो त्वित्यादिशार्दूलविक्रीडितेन—

व्युत्थाने त्वहमः सुखस्य च यथा स्मृत्यैतदा स्वीकृता
विद्यावृत्तिरिहापि सैव न कुतो हेतुः स्मृतेः साधने।

अन्यज्ञानवति क्षणेऽपि तमसो वृतेः परं संभवा
द्धारावाहिककालिकाहमि न किं भूयात्स्मृतेर्युक्तता ॥ १९ ॥

सुप्तेः सकाशादित्यार्थिकम् । अहमोऽहंकारस्य । स्मृत्यै सुखमहमस्वाप्समिति स्मृत्युपपत्त्या इत्यर्थः । तदा सुप्ति काले । स्वीकृता विवरणाचार्यैरङ्गीकृतेति सिद्धान्तचन्द्रादौ प्रसिद्धमेवेति भावः । ननु भवत्वेवं सुषुप्तौ अपरघटादिविषयकज्ञानाभावादुक्तस्मृत्युपपत्त्यर्थमज्ञानवृत्तिस्वीकृतिः परंतूदाहृतजाग्रदादिकालिककान्ताऽऽलिङ्गनादिजन्यसुखस्मृत्याषादिताहंकारस्मृत्यै कथमसौ उपपद्येतेति चेदत्र । बाधकाभावादितरज्ञानाभावस्य तत्राप्रयोजकत्वाच्चेत्याह । अन्येत्याद्युत्तरार्धेन । निरुक्तजाग्रदादिकाहंकारादिस्मृत्यन्यथानुपपत्तेरित्याशयः । उक्तन्यायं धारावाहिकाहंकारादिस्मृतावपि अतिदिशति । धारावाहिकेत्यादिविशेषेण । एतेनाहं ब्रह्मास्मीत्यादिसंप्रज्ञातादिसमाध्यहंग्रहोपासनादयो व्याख्याताः ॥ १९ ॥

तत्रापि मतान्तरानुपपत्तिं व्युद्भाव्य—समाधत्ते । येषामित्यादिप्रहर्षिण्या——

येषां नो भवति सुषप्तिकालिकी माऽविद्यावृत्तिरपि सुखावमर्शनार्थम् ।
तेषां स्यात्कथमहमः स्मृतिः सुयुक्ता प्रागुक्तेत्यतिविकलं जगुः परे तु ॥

न सुषुप्तगविज्ञानं नाज्ञासिषमिति स्मृतेः । कालाद्यव्यवधानत्वात्तत्रात्मस्थातीतभागितिवार्तिकानुयायिनामित्यर्थः ॥ २० ॥

किं समाधानं जगुरित्यत आह—अहमित्यादिहरिण्या——

अहमिति नो वृत्तिर्नैव प्रमाऽकरणान्मनो
न च परिणतेस्तद्धत्तस्मादुपास्तिसमेव सा ।
न च कथमियं साहं श्रीमानिति स्मृतिरुच्यते
यदिह खलु सा मत्तामात्रे स्मृतिर्मम न साऽहमि ॥ २१ ॥

अहमित्यहंकाराकारा मनोवृत्तिः प्रमा नैव भवति । कुतः । अकरणात्तस्याः प्रत्यक्षादिप्रमाणाजन्यत्वादित्यर्थः । नच तत्र मनः करणमिति सांप्रतम् । तादृक्परिणतेः अहमित्याकारेण मनस एव परिणामादिति यावत् । नहि परिणाम्युपादाने दध्यादेः करणत्वं दृश्यते । एवं तर्हि किंरूपाऽसावित्यत आह । तस्मादिना । साऽहमिति मनोवृत्तिः । उपास्तीति । मनो ब्रह्मेत्युपासीतेत्यादिविधिजन्या मनसि ब्रह्मत्वबुद्धिवत्प्रमाप्रमाविलक्षणैवास्तीति संबन्धः । तत्राप्याशङ्क्य समाधत्ते । न चेत्याद्युत्तरार्धेन । यद्यहमितिवृत्तेरुपास्तिसाम्यं तर्हि साहं यो दरिद्र आसं सोहमद्य श्रीमानिति स्मृतिः कथमुच्यत इति न च नैव

शङ्क्यम् । यत इह सा सत्तामात्रे एव स्मृतिः । नतु अहम्यस्तीति योजना ॥ २१ ॥

तथापि कश्चित् जिज्ञासुः शङ्कते—प्रमाणेत्यादिना पञ्चचामरेण—

प्रमाणवस्तुतन्त्रताहृतेर्विधिप्रयत्नयो-
र्धीनतावशाद्भवत्यभा(पा)स्तिरान्तरक्रिया ।
तमोहमादिगोचरा तु वृत्तिरस्तु सा कथं
हृदाऽपि चेन्द्रियत्वतोऽक्ष वस्तुमानतन्त्रता ॥ २२ ॥

हृतिर्विरहः । अन्तरेति । मान[illegible] ॥ २२ ॥

अत्रापि प्रागेव समाधत्ते—इतीत्य[illegible]—

इति संशयिनं गुरुर्जगु: परमेषा [illegible] मानसी ।
मन इन्द्रियमेव वृ[illegible] ब[illegible] तम: पराभव: ॥ २३ ॥

[illegible] आचार्या: । इति [illegible]जगुः [illegible] यथा स्यात्तथा बभा-
षिरे [illegible] । [illegible] अहं[illegible] सूचितम् । तदेव
समा[illegible] ए[illegible] अहमित्यादिरूपा । ननु यदि
मनसि [illegible] चेन्न व[illegible]वच्छेदेन
इ[illegible] । एवं च श्रोत्रादि तु द्वारमात्रमे-
वेति भाव: ॥ २३ ॥

तत्रा[illegible] शङ्कते—[illegible]त्वायुक्तवृत्तेनैव—

ननु नेदमपि प्रशस्यते तमसो नो यदिदं धिया क्षयः ।
यदि सोऽस्ति न शुक्तिरूप्यमप्यवभासादिह केचिदूचिरे ॥२४॥

तत्रान्यथानुपपत्तिं प्रमाणयति । यदित्यादिना । यदि बाह्यपदार्थविष-
यकमनोवृत्त्या अज्ञानध्वंसमङ्गीकरोषि चेत् । तर्हि तत्तादात्म्यापन्नाविद्यानिवृ-
त्तशुक्तिप्रमित्या रजतभ्रम एव न स्यादित्यर्थः । अत्र किं समाधानमतस्तदव-
तारयति । इहेत्यादिना शेषेण ॥ २४ ॥

किमूचिर इत्यत आह—इदमंशेत्यादिमालभारिण्या—

इदमंशपिधानकेऽत्र साक्षादिदमाकारधिया गतेऽपि मोहे ।
स तु शुक्तिमुखांशगोऽस्ति तेन स्फुटमेको रजतादिविभ्रमोऽभूत् ॥

अत्र इदं रजतमित्यादिभ्रमस्थले । इदमंशेति । साक्षात् इदमाकारवृत्त्या ।
मोहे अज्ञाने गते सत्यपीत्यर्थः । स तु मोहस्तु । शुक्तीति । शुक्त्यादिभागे

विषयतासंबन्धेन विद्यमानोऽस्ति । तेन एक इदं रजतमितीदमंशेन सह तादा-त्म्यमाप्त इत्यर्थः । स्फुटं रजतादिविभ्रमोऽभूदित्यन्वयः । आदिना रज्जूर-गादिः ॥ २५ ॥

फलितमाह । इत्येवेत्यादिन्द्रवज्रया—

**इत्येव विभ्रान्तिषु भासमान आधार एवेह सदेदमंशः ।**
**मतोऽस्त्यधिष्ठानतयैव शुक्त्याद्यंशः सकार्यस्वविमोहगोचरः ॥२६॥**

नन्विदमंशस्याऽऽधारत्वे किं मानमित्यत आह । मतोऽस्तीति । संक्षेपशारी-रकारादीनामिति शेषः । एवं तर्हि रजताद्यध्यासस्य किमधिष्ठानमत्राऽऽह । अधिष्ठानतयैवेत्यादिना । ननु किमधिष्ठानत्वमित्याकाङ्क्षायां शुक्त्यंशं विशिनष्टि । सकार्येति । कार्यं रजतादि तेन सहित एतादृशो यः स्वविषयकः शुक्त्यवच्छिन्नचैतन्यविषयको यस्तूलाज्ञानविशेषाख्यो विमोहस्तस्य गोचरो विषय इत्यर्थः। यदुक्तमद्वैतसिद्धौ । भ्रमोपादानाज्ञानविषयत्वमधिष्ठानत्वमिति ॥ २६ ॥

अत्राप्याशङ्क्य प्रागुक्तमेव समाधत्ते नष्टं चेदित्यादिशार्दूलविक्रीडितेन—

**नष्टं चेदिदमंशनिष्ठतिमिरं संभिन्नमेतेन किं**
**मायाद्रूप्यमहिर्विभाति न भुवा तादात्म्यमाप्तः क्वचित् ।**
**एवं शङ्कक्रमेक आहुरिदमो नष्टाऽपि चाऽऽविद्यकी-**
**शक्तिश्छादनकृज्ज्ञविश्वमिव तद्विक्षेपशक्त्याऽस्ति तत् ॥२७॥**

तिमिरमज्ञानम् । एतेनेदमंशेन । संभिन्नं मिश्रितमिदं रजतमिति तादात्म्यापन्नमित्यर्थः । एतादृशं रूप्यं किं मायात्कथं स्फुरेत् । इयं शुक्तिरिति प्रमावि-षयीभूतेदमंशावच्छिन्नशुक्तिविषयकं तूलाज्ञानमेवोक्तभ्रमसामग्री तन्मध्येऽधाया-स्तस्या नष्टत्वान्नैव तत्प्रमनीयादिति यावत् । नहि जलमेलनमन्तरा कुलालः के-वलमृदा कलशं कर्तुं कुशलः । तत्र व्यतिरेकेऽनुभवविरोधं बाधकमाह । अहि-रित्यादिपूर्वार्धशेषेण । अथैतत्समाधानं विशदयति । एवमित्याद्युत्तरार्धेन । इदम इदमंशस्य । आविद्यकी अविद्यासंबन्धिनी । छादनेति । आवरणका-रिणी । शक्तिर्यद्यपि नष्टा तथाऽपि । ज्ञेति । तत्त्वविदो यावत्प्रारब्धं भासमान-जगदिव । तद्रजतम् । विक्षेपशक्त्याऽस्तीति संबन्धः ॥ २७ ॥

तत्र दृष्टान्तवैषम्यं शङ्कते—नन्वित्यादिवसन्ततिलकया—

**नन्वीदृशं विषममेव निदर्शनं यत्र प्रातिभासिकमिदं स्वविदोऽ-**
**स्त विश्वम् ।**

न व्यावहारिकमपि प्रकृतं तु रूप्यमित्थं क्व साम्यमनयोरिह साध्यसिद्ध्यै ॥ २८ ॥

प्रातिभासिकत्वं हि ब्रह्मज्ञानेतरबाध्यत्वम् । ब्रह्मज्ञानेतराबाध्यत्वं तु व्यावहारिकत्वमिति शुक्तिहट्टरजतयोर्लक्षणसमन्वयः क्रमादिज्ञेयः ॥ २८ ॥

ननु एवं तर्हि किमत्र समाधानमित्यत आह—इतीत्यादि तथैव—

इत्याकुलं प्रति जगाद नृसिंहभट्टोपाध्याय उक्तरजतभ्रमतः पुरा तु।
नैवास्ति मानमिदमाकृतिवृत्तिसिद्धावध्यस्तमेव हि परिस्फुरति भ्रमे यत् ॥ २९ ॥

कुतोऽत्र मानाभाव इत्यत्राऽऽह । अध्यस्तमेव हीत्यादिशेषेण । एतन्मूलीभूतं तु संक्षेपशारीरकमपि । तद्यथा । अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत्कथंचन परिस्फुरति भ्रमेषु । रज्जुत्वशुक्तिशकलत्वमरुक्षितित्वचन्द्रैकताप्रभृतिकानुपलम्भनेनेति । यद्यस्माद्धेतोर्भ्रमे अध्यस्तमेव परिस्फुरतीति हि इति प्रसिद्धमेवेत्यन्वयः । शिष्टं तु स्पष्टमेव ॥ २९ ॥

तत्रापि शङ्कते—नन्वित्यादिस्वागतया—

नन्विदं रजतमित्यनुभूतौ प्रागिदंविषयिणी बत वृत्तिः ।
संस्फुटाऽपलपितुं कथमर्हा स्याद्विशिष्टविषयैकवृत्त्या ॥ ३० ॥

विशिष्टेति । इदंत्वप्रकारकरजतविशेष्यविषयकैकमात्रवृत्त्येत्यर्थः ॥ नन्वित्यादि स्यादित्यन्तं सरलमेव योज्यम् ॥ ३० ॥

अत्रापि समाधत्ते इतीत्यादिमिताक्षरया—

इति संदिहानमपरे समादधू रजताकृतिः किमिति वृत्तिरिष्यताम् ।
रजतं तु साक्षिपरिभास्यमित्यसाविदमाकृतिर्भवति वृत्तिरद्वया ॥३१॥

ननु रजताकारवृत्त्यभावे तज्ज्ञानं कथं समुपपद्येतेत्यत आह । रजतं त्वित्याद्युत्तरार्धेन । तुशब्दः पुनरर्थे । फलितमाह । इतीत्यादिशेषेण । इति हेतोः । असौ इदं रजतमिति भ्रमे प्रथममनुभूयमानेत्यर्थः । अद्वया केवला ॥ ३१ ॥

अत्राप्याशङ्क्य प्रागवदेव समाधत्ते—संभिन्नमित्यादिशार्दूलविक्रीडितेन—

संभिन्नं प्रतिभाति रूप्यमिदमा सार्धं तदेवं कथं
सिध्येदित्यतिसंकुलं प्रति समाधानं परे संजगुः ।
वृत्तिः प्रागिदमाकृतिर्भवति वै सामान्यतो मानसी
भ्रान्तिः स्यादथ सा त्विदं रजतमित्याविद्यकी चेतरा ॥३२॥

रूप्यं रजतम् । इदमा भ्रमस्थलीयशौक्तिकेदमंशेन । सार्धं समं संभिन्नं तादात्म्यापन्नमित्यर्थः । एतादृशं प्रतिभाति प्रतीयते यत्तदेवं रजतस्य साक्षिक-भास्यत्वेनेदमैकाकारवृत्त्यङ्गीकारपक्षे कथं कया रीत्या सिध्येत् समुपपद्यत इत्यनेन प्रकारेण । अतिसंकुलं संदिहानं जिज्ञासुं प्रति परेऽन्ये आचार्याः संजगुरेवं कथयामासुरिति संबन्धः । तदेव समाधानं स्पष्टयति । वृत्तिरित्याद्युत्तरार्धेन ॥३२॥

इहापि संदिहानं कंचित् जिज्ञासुं प्रत्यपर आचार्यास्त्वेवं समादधुरि[illegible]-मानस्यैवेत्यादिना पूर्ववृत्तेनैव—

मानस्यैव विभाति वृत्तिरिदमाद्याकारि[illegible]ऽविद्यकी
वाऽन्या काचिदिति भ्रमन्तमपर [illegible] ।
द्वौ मोहाविदमंशतत्त्वमनोवृत्तिस्थ[illegible]
कुर्वाते रजतं तदा[illegible] ॥ ३३ ॥

आदिना रूप्यम् [illegible]

इदमंशश्च तत्सम[illegible]

विद्येवे एतादृशे [illegible] गोचरे [illegible] । [illegible] । रजतम-निर्वचनीयं रूप्यम् । [illegible]

वमोवृत्तिरविद्यावृत्ति[illegible] । [illegible] कुर्वाते रचयत इत्यन्वयः ॥ ३३ ॥

एवं सर्वव्यवस्थायां श्रीगुरुणा [illegible] सत्यामपि शिष्यः किंचिदीशे वृत्तिनिर्गमप्रयोजनत्रयाख्ये पौनरुक्त्यं सिद्धान्तलेश एव स[illegible]करणानुवादमाश-ङ्क्य तदुपशमं संपादयते—नन्वित्यादिना शार्दूलविक्रीडितादित्रिभिः—

नन्वीशोपममेव जीव इह किं स्वात्मप्रकाशेन नो
जानात्येव घटादिकं किमिति तद्धानऽस्य वृत्तिर्मता ।
इत्याशङ्क्य पुरा समाहितमभूत्सिद्धान्तलेशे स्फुटं
वृत्तेर्निर्गमनप्रयोजनमलं त्रेधाऽथ तत्राग्रतः ॥ ३४ ॥

निरुक्तपौनरुक्त्यमेव विशदयति । ईशोपममेवेत्यादिना । सिद्धान्तलेशे इत्याशङ्क्य पुरा वृत्तेर्निर्गमनप्रयोजनं त्रेधा चिदुपरागादित्रिप्रकारकम् । समाहितमभूदित्यन्वयः । अथ अनन्तरम् । तत्र सिद्धान्तलेश एव । अग्रतः ॥३४॥

किं कृतं तदाह—जाते चेत्यादिमन्दाक्रान्तया—

जाते चेदं रजतमिति धीगोचरादेर्विचारे
ज्ञाने तत्तत्करणनियते स्तः परोक्षापरोक्षे ।

**एवं चान्त्ये प्रथम इव भागोचरे साक्षिणैवा-**
**स्त्वित्याशङ्क्य त्रितयमुदितं यत्तु वृत्तेर्निमित्तम् ॥ ३५॥**

इदं रजतमितिधीगोचरादेर्विचारे जाते सति । तत्तदिति । स्वस्वसामग्रीनिर्णीते । परोक्षापरोक्षे ज्ञाने अपि विचारिते स्तः । बभूवतुरिति संबन्धः। ततः किं प्रकृत इत्यत आह । एवं चेत्याद्युत्तरार्धेन । अन्त्ये अपरोक्षज्ञाने । प्रथम इव परोक्षज्ञान इव । गोचरे विषये । भा प्रमा । साक्षिणैव अस्तु इत्याशङ्क्य त्रितयं चिदुपरागादित्रयं तु यत्वृत्तेर्निर्गमनप्रयोजनमुदितं तत्पुनरुक्तमस्तीति योजना ॥ ३५ ॥

तदेव स्फुटयति—चिदुपरागेत्यादिद्रुतविलम्बितेन—

**चिदुपरागमुखं त्रितयं त्विदं बत गुरो पुनरुक्तमिवास्ति मे ।**
**तदपनोदय दीनदयानिधे तदभिसंधिविकाससमेधनैः ॥३६॥**

तत्पौनरुक्त्यम् । दीनेति । अत एव । भो गुरो त्वम् । तदित्यादि । तेषां ग्रन्थकृतां योऽभिसंधिस्तात्पर्यं तस्य यो विकासस्तस्य यानि समेधनानि अभिवर्धनानि तैरित्यर्थः । अपनोदय निरासयेति संबन्धः ॥ ३६ ॥

एवं संप्रार्थितः श्रीगुरुस्तद्व्यवस्थां कथयन् शिष्यमभिमुखयति—आकर्णयेत्यादीन्द्रवज्रया—

**आकर्णयात्र द्विविधा व्यवस्था श्रीदीक्षितोक्तेः प्रतिभाति मे तु ।**
**यत्त्वंपदार्थः फलभागितीज्यः पुनः पुनः संपरिबोध्यतेऽद्धा ॥ ३७ ॥**

अत्र त्वदुपन्यस्तपौनरुक्त्यदोषविषय इत्यर्थः । किं तत् द्वैविध्यमित्यत आह यदित्यादिसार्धेन । यद्यस्माद्धेतोः । त्वंपदार्थः प्रत्यगात्मा । फलेति । अविद्याध्वस्तिरूपमुक्तिफलभागित्यर्थः । इति हेतोः । ईज्यः पूज्यः । अत एव । अद्धा साक्षादेव । पुनः पुनः । वारं वारम् । संपरिबोध्यते सम्यक् प्राचीनाचार्यरहस्यानुरूपमेव परिबोध्यते बुभुत्सुबुद्धिसमधिरोहधौव्यार्थं सर्वाविरोधेनैवोपपाद्यते इति संबन्धः ॥ ३७ ॥

ननु भवत्वेवं प्रतिज्ञातद्विविधपौनरुक्त्यव्यवस्था मध्ये तावदयमेकस्तत्प्रकारः परं त्वपरः क इत्यपेक्षायां तं साक्षेपं संक्षिपति—किं स्थूणेत्यादिमहार्षिणीपूर्वार्धेन—

**किं स्थूणानिखननवच्छ्रुतिर्न भूयश्छान्दोग्यादिषु कथयत्यखण्डतत्त्वम् ।**
**यद्वा प्राङ्निगदितमेव चारु जीवन्मुक्त्यर्थं पुनरपि कथ्यतेऽनुकम्प्य ॥**

श्रुतिः । छान्दोग्येति । अत्र हि षष्ठे तावदुद्दालकेन पित्रा श्वेतकेतुं पुत्रं

प्रति तत्त्वमसीति महावाक्यस्य नवकृत्व उपदेश आम्नायत इति प्रसिद्धमेव । एवं तैत्तिरीयके तावद्वरुणेन पित्रा भृगुं पुत्रं प्रति पञ्चवारं तपःशब्दवाच्यो ब्रह्मविचार एव कर्तव्यत्वेनोक्तः । तथा बृहदारण्यके तावद्याज्ञवल्क्येन स्वपत्नीं मैत्रेयीं प्रति नवा अरे पत्युः कामाय पतिः प्रियो भवतीत्याद्यनेकपर्यायैस्तद्वदन्तर्यामिब्राह्मणे यः पृथिव्यां तिष्ठन्नित्याद्यनेकपर्यायैरद्वैत आत्मैवोपदिष्ट इति हेतोः स्थूणानिखननवत् । भूयः पुनः पुनः । अखण्डेति । ब्रह्मात्मैक्यं न कथयति किं तद्वदेवोक्तग्रन्थरहस्यमपीत्यभिप्रायः । आवृत्तिरसकृदुपदेशादिति सूत्रम् । पौरुषे श्रुतिसाम्यानौचित्यास्वरसादाह । यद्वेत्याद्युत्तरार्धेन ॥ ३८ ॥

उपसंहरति—इतीत्यार्यया—

**इति पञ्चदशमतानामैक्योक्त्या साक्षिभास्यमुख्यस्य ।**
**उपपत्तिरिह कलानामिन्दोरिव राकया कलङ्कादेः ॥ ३९ ॥**

इत्यज्ञानोपहितत्वेऽपि साक्षिणस्तदादिभासकत्वाद्युपपत्तिः ॥ १३ ॥

इत्युक्तरीत्या । इह ग्रन्थे पक्षे लोके । पञ्चदशेति । पक्षे तत्संख्यानाम् । ऐक्योक्त्या । साक्षीति । राकया । इन्दोः कलङ्कादेरिव । उपपत्तिरासीदन्वयः ३९॥

इति श्री० अज्ञानो० द्युपपत्तिः ॥ १३ ॥

अथ शिष्यः श्रीगुरुं प्रति तदुपदिष्टार्थस्य स्वेनावधारितत्वं ध्वनयन्नखिलप्रकरणानि सश्लोकसंख्यं यथाक्रमं समनुवदति—अयीत्यादिमालिनीप्रभृतित्रयोदशवृत्तैः—

**अयि गुरुवर तावच्छ्रीमदङ्घ्रिप्रसादा-**
**च्छ्रवणविधिविचारश्चन्द्रदृग्भूमिसंख्यैः ।**
**प्रथमत इह शास्त्रारम्भसूत्रीयवादे**
**मम समभवदारात्त्वंपदार्थस्य शुद्धिः ॥ १ ॥**

चन्द्रेति । अङ्कानां वामतो गतिरितिनियमात् एकविंशत्यधिकैकशतसंख्याकैरित्यर्थः । एतादृशैः पद्यैरित्यार्थिकम् । शास्त्रेति । अथातो ब्रह्मजिज्ञासेतिशास्त्रारम्भसूत्रसंबन्धितत्त्वबुभुत्सुकर्तृकविचारविशेष इति यावत् ॥ १ ॥

तदन्विति—

**तदनु निगदितं च ब्रह्मलक्ष्म द्वितीया-**
**धिकरणपरवादैरष्टभिस्तत्र चाऽऽद्ये ।**
**कथितमभवदेतच्चारु रामाक्षिसंख्यै-**
**र्जगदुदयनिमित्ताद्येकसाधारणं तत् ॥ २ ॥**

ब्रह्मेति स्वरूपतटस्थत्वभेदभिन्नत्वेन द्विविधं ब्रह्मलक्षणमित्यर्थः। अष्टभिः। द्वितीयेत्यादि। जन्माद्यस्य यत इति द्वितीयाधिकरणतात्पर्यपर्यालोचकोक्तविचारैरिति यावत्। निगदितं कथितम्। अभवादिति शेषः। एवं चेत्तर्ह्यष्टविधेषु तेषु किं किं विचारितमित्यत आह। तत्रेत्यादिना। जगदिति। आदिनोपादानम्। तत् ब्रह्मलक्ष्म। एतन्ममापरोक्षम्। अत एव चारु सुन्दरम्। रामेति। त्रयोविंशतिपद्यैः। कथितम्। अभवदित्यन्वयः॥ २॥

अथ द्वितीयपादादिप्रतिपाद्यमाह—उपादानेत्यादि भुजंगप्रयातेन—

**उपादानवादे द्वितीयेऽष्टदृग्भिर्लयादेरपि स्पष्टमुक्तं तदासीत्।**
**तृतीये तु तत्रेन्दुवेदैः स्फुटोक्ता प्रतिच्छायताऽपीश्वरस्येह पद्यैः॥३॥**

उपादानेति। अष्टेति। अष्टाविंशतिपद्यैः लयादेरपि। जन्यजगज्जन्मस्थितिप्रलयाख्यविकारत्रयस्यापीत्यर्थः॥ तदभिन्ननिमित्तोपादानं ब्रह्मेति यावत्। तृतीये त्विति। इन्द्विति। एकचत्वारिंशत्पद्यैरित्यर्थः। ईश्वरस्य। प्रतिच्छायता प्रतिबिम्बता। प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छायेत्यमरः॥३॥

एवं चतुर्थादावपि तदाह—बिम्बेशतेत्यादीन्द्रवज्रया—

**बिम्बेशतोक्ताऽस्ति चतुर्थ एव यत्राम्बराम्भोधिमितैस्तु पद्यैः।**
**दिक्संमितस्तैः किल पञ्चमेऽपि प्रोक्तोऽस्त्यवच्छेदपरोऽपि वादः॥४॥**

बिम्बेश्वरतेति यावत्। अम्बरेति। चत्वारिंशत्संख्यैः पद्यैरुक्ताऽस्तीति संबन्धः। दिगिति। दशसंख्याकैः। तैः पद्यैः। अवच्छेदपरः परिच्छेदैकप्रधान इत्यर्थः। अवच्छिन्नवादः प्रोक्तोऽस्तीत्यर्थः॥ ४॥

एवं षष्ठादौ किमुक्तमित्यत आह—उक्तेत्यादीन्द्रवज्रयैव—

**उक्तैकदेहाद्वयजीवताऽपि षष्ठेऽष्टरामैरथ सप्तमेऽपि।**
**अनेकदेहैककजीवतोक्ता श्रीदेशिकैः सूर्यमितैः सुपद्यैः॥५॥**

एकेति। एकशरीरैकजीववादतेत्यर्थः। अष्टेति। अष्टत्रिंशत्संख्याकैः पद्यैः। उक्ता प्रतिपादिताऽस्तीति संबन्धः। अथ तदूर्ध्वम्। श्रीति। श्रीमत्सद्गुरुभिः। सूर्येति। द्वादशसंख्याकैः। अनेकेति। अनेकशरीरकजीववादतेत्यर्थः। सप्तमे सुपद्यैरुक्ता कथिताऽभूदिति योजना॥ ५॥

अष्टमे किमुक्तं तदाह बद्धादीत्युक्तवृत्तेनैव—

**बद्धादिजीवानुभवव्यवस्थाऽन्त्येऽग्न्यश्वतस्तैस्तु तदर्थशुद्धिः।**
**षडेव वादा हि मता द्वितीयसूत्रे परौ द्वावनुषङ्गतस्तौ॥ ६॥**

अन्त्ये द्वितीयसूत्रीयेऽष्टमे वाद इत्यर्थः । अग्नीति । त्र्यधिकसप्ततिसंख्या-कपद्यैरिति यावत् । तैस्त्विति । निरुक्ताष्टसंख्याकैर्वादैरित्यर्थः । तदर्थेति । तत्त्वमसीति महावाक्यगततत्पदार्थस्येश्वरस्य स्वरूपविवेचनं भववीति शेषः । ननु किमेतेऽष्टावपि वादा ईश्वरस्वरूपविवेचका इत्यत आह ॥ षडेवेति । परावन्तिमौ ॥ ६ ॥

अथ शास्त्रयोनित्वादिति तृतीयाधिकरणस्य विचारः कतिवादैरित्यत्राऽऽह—तृतीयेति—

**तृतीयसूत्रस्य विचार आसीद्वादैश्चतुर्भिः खलु तत्र चाऽऽद्ये ।**
**ईशस्य सार्वज्ञ्यमिभाक्षिभिस्तदग्रे षडश्वैः प्रतिकर्मसिद्धिः ॥७॥**

एवं चेत्तत्र प्रथमे वादे किं प्रतिपाद्यत इत्यत आह । तत्र चाऽऽद्य इत्यादिना । इभेति । अष्टाविंशतिपद्यैरीशस्य सार्वज्ञ्यं सर्वज्ञत्वं विवेचितमस्तीत्यार्थिकेणान्वयः । अथ द्वितीये किं प्रतिपाद्यत इत्यत आह । तदग्र इत्यादिना । षट्सप्ततिसंख्याकैः पद्यैः। प्रतीति । प्रतिकर्मव्यवस्था प्रतिपादिताऽस्तीत्यर्थः ॥७॥

ततस्तृतीयादौ किं प्रतिपाद्यत इत्यतआह—साक्षित्यादिना—

**साक्षिस्वरूपं कथितं तृतीये नवाक्षिसंख्यैरपि पद्यमुख्यैः ।**
**तद्भास्यसिद्धिः समभूच्चतुर्थेऽङ्कपावकैस्ते प्रथमेऽन्तरङ्गम् ॥ ८ ॥**

नवेति । एकोनत्रिंशत्संख्याकैरित्यर्थः । एतादृशैः । पद्येति । कथितमासीदिति संबन्धः। तद्भास्येति । साक्षिभास्यनिर्णीतिरित्यर्थः। अङ्केति । एकोनचत्वारिंशत्पद्यैश्चतुर्थे समभूदित्यन्वयः । प्रथमेति । द्वितीये जन्मादिसूत्रे अङ्गं सार्वज्ञ्यविचारद्वारा निरुक्तकारणत्वापेक्षितसर्वविषयज्ञानकथकत्वेन साधनीभूतास्ते-चत्वारोऽपि वादाः सन्तीत्यर्थः । एवं च प्रथमे सूत्रेऽपेक्षितं द्वितीयेन पूरितं तत्र तत्तृतीयेन तत्र तच्चतुर्थेनेति क्रमात्शेषशेषिभावस्तेषामिति भावः । ८ ॥

ननु भवतु एवं त्रयोदशप्रकरणवादैः सूत्रत्रयार्थविचारस्तवावगतस्तथापि अथ किं पृच्छसीत्याकाङ्क्षायां तत्र प्रश्नमुपन्यसति सूत्र इत्यादिस्रग्धरया—

**सूत्रे वेदशिरःसमन्वयपरे तुर्येऽखिलाद्वैतिनां**
**जीवब्रह्मविभेदभञ्जनमलं यत्संमतं निर्द्वयम् ।**
**तत्किं स्याद्भत कार्यहेतुवपुषोर्जीवेशयोरम्भसां**
**निध्युर्म्यादिवदेव वोत कनकालंकारवत्संमतम् ॥ ९ ॥**

वेदेति । उपनिषन्मात्रतात्पर्यपर्यवसानपरायण इत्यर्थः । तुर्ये चतुर्थे । सूत्रे तत्तु समन्वयादित्यधिकरण इति यावत् । अखिलेत्यादि । अम्भसामित्यादि ।

अथ स्वाभाविकत्वेन कृत्यसाध्यत्वविवक्षया आद्यदृष्टान्तः, कृतिसाध्यत्वविवक्षयाऽन्तिमदृष्टान्त इत्याशयः । एवं च विकारवादत्वसाम्येऽपि किं समरसवादत्वेन समुद्रोर्मिवद्ब्रह्मात्मैक्यं नैसर्गिकं किंवा ज्ञानध्यानादिना कनकालंकारवत्कृतिसाध्यमिति प्रश्नद्वयाभिप्रायः ॥ ९ ॥

प्रश्नान्तरमपि अभिधत्ते तयोरित्यादीन्द्रवज्रया—

**तयोरनाद्योरथवा विभिन्नयोः क्षीराम्बुवद्वा जतुहिंगुलादिवत् ।**
**इत्याकुलं मां कृपया समुद्धर श्रीमत्कटाक्षैरिव संशयाम्बुधेः ॥ १० ॥**

तयोर्जीवब्रह्मणोरथवा द्वा सुपर्णेत्यादिश्रुत्या अनाद्योरेव विभिन्नयोः क्षीराम्बुवत्स्वल्पकृतिसाध्यमैकरस्यं यद्वा प्रचुरकृतिसाध्ये जतुहिङ्गुलादिवत्सामरस्यमेतदिति च संदेह इत्यर्थः । अतः प्रार्थयते । इतीत्याद्युत्तरार्धेन । श्रीरनुपमाऽनुकम्पैव ॥ १० ॥

अथ श्रीगुरुः समनुजिघृक्षुः प्रकृतमुमुक्षुं प्रति समाधत्ते—अद्वैतमित्यादिस्रग्धरया—

**अद्वैतं ब्रह्म तत्र द्वयमिदमखिलं कल्पितं मायनादि-**
**ध्यस्तं जीवस्य मोहे श्रुतिशिखरगिराज्ञानतस्तत्सुतुच्छम् ।**
**तेनैक्यं स्वस्वरूपात्मकमपि जनिताभं विमोक्षाभिधानं-**
**भात्यज्ञानैकनाशात्तदसि गतभयं सच्चिदेकं सुखं त्वम् ॥ ११ ॥**

कल्पितं शुक्तिरजतरज्जुसर्पसुप्तस्वप्नादिवदारोपितमित्यर्थः । श्रुतीति । सकलशुद्धवेदैकोक्तस्ववर्णाश्रमोचितयावत्काम्यनिषिद्धवर्जनपूर्वकान्तर्याम्येकपरितोषार्थानन्तजन्मानुष्ठितानित्यनैमित्तिकप्रायश्चित्तकर्मनिर्मलनिरर्गलभक्तिनिश्चलचित्तोत्पन्ननित्यानित्यविवेकजन्यसंपन्नैहिकाद्यखिलविषयविरागसमुपजातशमदमतितिक्षाश्रद्धासमाधानसंपन्नानुपमबुभुक्षासमकक्षमुमुक्षासादितशब्दपरब्रह्मनिष्ठश्रीगुरुचरणारुणनलिनोपसदनपूर्वकासंभावनाद्यखिलप्रतिबन्धप्रध्वंसफलकविचारितश्रीमद्भगवत्पादैकभाष्यशालिचतुर्लक्षणीउत्तरमीमांसानिर्णीतार्थपरमहंसपरिव्राजकवरसमुपदिष्टस्वशाखीयोपनिषन्महावाक्येनेत्यर्थः । ज्ञानतः ब्रह्माहमस्मीति साक्षात्कारात्हेतोः, इति यावत् । तन्निरुक्तद्वैतं सुतुच्छमखण्डबाधितमेवाऽऽकाशकार्ण्यवत् भवतीत्यार्थिकम् । फलितमाह । तेनेत्यादिना । अज्ञानैकेति । विमोक्षाभिधानं जनिताभं भाति यत्तदसीत्यादि सरलमेव ॥ ११ ॥

उपसंहरति एवमित्याद्यार्यया—

**एवं त्रयोदशमितैः पद्यैर्वादे चतुर्थसूत्रीये ।**
**उक्तैक्यासिद्धिरेते वादा विद्यामिताः सर्वे ॥ १२ ॥**

चतुर्थीति । समन्वयसूत्रसंबन्धिनीत्यर्थः । ऐक्येति । द्वैतस्य कल्पितत्वेन गगनकार्ष्ण्यवत् स्वतःसत्ताशून्यत्वलक्ष[ण]मिथ्यात्वपूर्वकाधिष्ठानीभूतानधीनभानलक्षणस्वप्रकाशप्रत्यगद्वैतब्रह्मात्मैक्यासिद्धिरिति यावत् । उक्तनिरूपितास्ती-त्यर्थः । एवं च वादसंख्यां वदंस्तान्ध्वनिनोपमिनोति । एत इत्यादिशेषेण ॥ १२॥

अथोक्तसंपूर्णप्रथमपरिच्छेदपद्यसंख्यां प्रख्यापयति श्लोका इत्याद्यार्ययैव—

श्लोकाः क्ष्माश्वशरामिताः ५७१ सर्वे बोधैक्यसिद्धिगेऽभूवन् ।
आद्यपरिच्छेदेऽस्मिन्समन्वयाख्ये गुरोः कृपया ॥ १३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानन्देन्द्रसरस्वतीपादपद्मश्रीमत्स्वरूपानन्दाख्याच्युताश्रमपादसरोजश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणश्रीमत्पष्ट्युपनामकजनस्थानक्षेत्रगोदावरीतीरवर्तिनारायणशास्त्रिचरणारुणनलिनषट्पदायमानान्तःकरणस्य मोडकोपाह्वयस्य श्रीपञ्चवटीनिवासिनोऽच्युतशर्मणः कृतौ बोधैक्यसिद्धावाद्योऽयमुत्सवः समन्वयाख्यः संपूर्णः ।

एकसप्तत्युत्तरपञ्चशतसंख्यकाः श्लोकाः सर्वे बोधैक्यसिद्धिगे । समन्वयाख्ये अस्मिन्नाद्यपरिच्छेदे । गुरोः श्रीमदाचार्यस्य । कृपया अभूवन्नित्यन्वयः ॥ १३॥

अद्वैतात्मप्रबोधोऽत्र गुरुवरपदाम्भोजमात्रप्रसादा-
त्स्वोद्यद्बोधैक्यसिद्धेर्विवृतिकृतिपटौ पूर्ण एषोऽद्य जातः ।
शाके बाणेषुवाजीन्दुमितविजयनाम्न्यब्द एवं प्रयत्ना-
द्वैशाखीयाद्यपक्षास्थितशशिदशमीदिग्यमध्यान्हकाले ॥ १ ॥
गोदावरीतीरविराजमानश्रीपञ्चवट्यां वसताऽच्युतेन ।
विद्यार्थिनाऽलभ्यपमात्मयन्तृश्रीमद्गुरूत्तंसदयावलम्बात् ॥ २ ॥
स्वकीयचेतःप्रशमैकसिध्यै यथामति प्रेरणयैव तस्य ।
बोधैक्यसिद्धेः स्वविनिर्मितायाः पूर्णोऽयमासीत्प्रथमो विलासः ॥३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदद्वैतसच्चिदानन्देन्द्रसरस्वतीपादपद्मश्रीमत्स्वरूपानन्दाख्याच्युताश्रमपादसरोजश्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणश्रीमत्पष्ट्युपनामकजनस्थानक्षेत्रगोदावरीतीरवासिश्रीमन्नारायणशास्त्रिहरहरिचतुराननावतारीभूतसद्गुरुत्रयीशिष्येणाच्युतशर्मणा विद्यार्थिना विरचिते स्वकृतबोधैक्यसिद्धिटीकाग्रन्थेऽद्वैतात्मप्रबोधाख्ये समन्वयाभिधः प्रथमोत्सवः पूर्वार्धश्च संपूर्णः ॥

———

